## अस्याष्टीकाया वैशिष्ट्यम्—

१

प्रथमाध्याये पूर्वं समागतस्य पारदस्य विस्तृत माहात्म्य जीवन्मुक्तिदायकत्वम्, उत्पत्ति, भेदा, पारदभेदानाञ्च परिचया निरुक्तिस्तथा पारदस्याष्टकर्मणा लक्षणानि, अष्टकर्मसम्पादनविधिश्चेति सर्वं विस्तृतं व्याख्यातम्।

२

सर्वेषामुपरसाना तथा लोहादिसप्तधातूनाञ्चोत्पत्ति, भेदा, लक्षणानि, नामानि, ग्राह्याग्राह्यस्वरूपाणि, सामान्यविशेषाभयशोधनविधि सरलविस्तृतव्याख्यया च वर्णितम्।

३

मूले सूत्ररूपेण निर्दिष्टाना कतिपयरत्नाना तथा ग्रन्थगौरवभिया नापवर्णितानाञ्च सर्वरत्नानां भेदा, पर्य्याया, लक्षणानि, ग्राह्याग्राह्यस्वरूपाणि, सरलरूपेण विस्तृतरूपेण च शोधनमारणविधिश्चेति सर्वमुपवर्णितम्।

४

विस्तृता विषोत्पत्ति, विषनामानि, विषभेदा, स्थावरविषस्याधिष्ठानानि, कन्दजविषस्याष्टादशभेदा, कन्दविषाणा तन्त्रोक्तानि लक्षणानि, भेदा, स्वरूपादिकं तथा जङ्गमविषाधिष्ठानानि, सर्वेषा परिचयादिकञ्च यथाशास्त्रानुसार विस्तृतरूपेण सम्बोधितम्।

५

विरेकाधिकारात्तथा ज्वरचिकित्सातश्च प्रारभ्य रसायन–वाजीकरणाधिकारपर्यन्त समागताना सर्वेषा रसाना टीकाया सरलविस्तृतनिर्माणविधि, रसनिर्माणद्रव्यमात्रानिर्देश, आधुनिकसमयानुसारेण लाभप्रयोगिमात्रोपदेशश्च सर्वं याथार्थ्येन वर्णितम्। रसनिर्माणे यथार्थोपदेशं विना यत्काठिन्यमासीत्तत्सर्वं टीकाया निरस्तम्।

६

ज्वरचिकित्सात प्रारभ्य विषचिकित्सापर्यन्त समागतेषु सर्वेषु रोगेषु सेवनोपदेश, अपथ्यपरित्यागोपदेशश्च महता विस्तारेण कृतो येन चि-

कित्सकाश्चिकित्साकरणसमये रोगिण कृते पथ्यापथ्ययोर्यथार्थोपदेशं ह्युपदिश्य पूर्णयशोधनयोर्भाजना भवितुं शक्नुवन्ति ।

७

यत्र कुत्रापि समागताना रोगाणा लक्षणानि, उत्पत्तिकारणं, निवृत्तिकारणश्चापि प्रदर्शितम् ।

८

सर्वेषा कुष्ठरोगाणा लक्षणानि, मसूरिकालक्षणं तस्या शमनार्थं प्रसिद्धा साध्या स्वानुभूताश्च सरलोपाया, शीतलास्वरूपं, शीतलानिवारणोपाया, शीतलास्तोत्र, चतुश्चत्वारिंशत्–क्षुद्ररोगाणा लक्षणानि, चिकित्सा तथा मुखरोगकारण, मुखगतदन्तजिह्वाताल्वादीना चिकित्सा तथा कर्णनासानेत्ररोगाणा विशेषचिकित्सा च सर्वं वैशिष्टयेन वर्णितम् ।

९

सर्वेषा योनिव्यापद्रोगाणा निदानपूर्वकनामानि, चिकित्सा तथा अकष्टप्रदा नष्टार्त्तवप्रवृत्तिकरणोपाया, आप्तोक्ता गर्भधारणोपाया, गर्भस्रावहरा मासानुमासिका प्रयोगा, मासानुमासिका क्षुद्रप्रयोगा, गर्भिण्या ज्वरातीसारयोश्चिकित्सा च सर्वमुपयुक्तं यथामति वर्णितम् ।

१०

बालभेद, बालकलङ्घनोपदेश, बालाना भेषजस्य तन्मात्रायाश्च निर्देश तथा बालस्य नाभिशोथ–नाभिपाक–गुदपाक–तालुपाक–मुखपाक–दन्तोद्भेद–ज्वरातीसार–च्छर्द्यतीसार–प्रवाहिका–ग्रहणी–मूत्रग्रहानाह–शूल–पूतिकर्ण–कास–श्वासातितृष्णा–नेत्र–पामादिरोगाणा संक्षेपेण सरला चिकित्सा चोपवर्णिता ।

११

स्थावरजङ्गमविषचिकित्सा तथा विषहरधूपप्रलेपोपदेशदूषीविषनखदन्तविषाऽऽखुविषवृश्चिकविषक्षुद्रजन्तुविषश्वादिविषचिकित्सोपदेशश्च संक्षेपेण प्रतिपादितः ।

१२

रसायनवाजीकरणविशेषलक्षणपूर्वककुटीप्रवेशविधिस्तथा मकरध्वजरसनिर्माणवैमत्यं स्वर्णसिन्दूरनिर्माणञ्चावश्यकं सर्वं वर्णितम् ।

१३

अन्ते परिशिष्टाधिकारे कतिपयरोगाणां विशिष्टचिकित्सा, प्रसिद्धरसनिर्माणविषय., मूषाप्रकरण, पुटप्रकरणं, सर्वसम्मतमागधमानानुसारेण मानपरिभाषायाश्च प्रदर्शन कृत येन चिकित्सकाना मानपरिज्ञाने कष्ट निरस्तम् ।

१४

सर्वेषा काष्ठौषधीना प्रथम हिन्दीनामानि, तथा वङ्गलागुर्जरातमारवाडमेवाडादिकदेशख्यातनामानि, आङ्ग्ललैटिनादिवैदेशिकभाषानामानि च अकारादिक्रमानुसारेण वर्णितानि येन तत्तद्रसौषधिनिर्माणार्थं समागताना द्रव्याणा परिज्ञाने महत्सौकर्यं सञ्जातम् ।

१५

सर्वेषा रसोपरसधातूपधातुविषोपविषरत्नादिकानामपि पूर्ववद् हिन्दीनामानि तथा वङ्गलागुर्जरातमारवाडमेवाडादिकदेशख्यातनामानि, आङ्ग्ललैटिनादिवैदेशिकभाषानामानि चाकारादिक्रमानुसारेण झटिति वस्तुप्राप्त्यर्थं निविष्टानि तथा मूलविषयानुक्रमणिका, टीकाविषयानुक्रमणिका, मूलटीकाभयविषयस्याकाराद्यनुक्रमणिका, अशुद्धशुद्धज्ञापनपत्रिका च लिखिता ।

अस्याष्टीकाया विलेखने बहूना चरकसुश्रुतवाग्भटभावप्रकाशभैषज्यरत्नावलीयोगरत्नाकररसतरङ्गिणीराजनिघण्टुमदनपालनिघण्टुपाराशरसंहितादीना ग्रन्थाना साहाय्य प्राप्त तस्मात्तेषा ग्रन्थाना निर्माणकर्तृणामुपकार सादर स्वीकरोमि तथा नास्ति मम सन्निधौ किमपि वस्तु यदुपायनीकृत्यानृणी भवेयम् ।

निम्नोद्दिष्टगुरुवर्य्याणा सकाशात् साहाय्याच्च तत्तच्छास्त्रपाण्डित्यमवगत्य विकसितविविधविज्ञानचक्षुरहमस्मिन् श्रेयस्करे कर्मणि प्रवृत्तोऽतस्तान् मानससन्दिरे सततमर्चयामि तथाऽन्यत् किमपि वस्तु नास्ति मम सन्निधौ यदुपायनीकृत्यानृणो भवितु शक्नोमि ।

काश्या भागीरथीतीरे जगद्विख्यात–हिन्दू–विश्वविद्यालयसस्थाया सस्थापका देशप्राणा सनातनधर्मपरिपालका जगन्नरपतिपूजितचरणारविन्दा मदनमोहनावताराः कुलपतिमहोदया **श्रीपण्डित मदनमोहनमालवीया** ।

हिन्दूविश्वविद्यालयीयसस्कृतविद्यामन्दिरव्याकरणप्रधानाध्यापका संस्कृतछात्राश्रमेशानसंरक्षका व्याकरणाचार्या गुरुवर्य्या **श्रीकालीप्रसादमिश्राः** ।

हिन्दूविश्वविद्यालयीयसंस्कृतविद्यामन्दिरव्याकरणप्रधानाध्यापका व्याकरणाचार्या पण्डितवरा गुरुवर्य्याः **श्रीअम्बिकाप्रसादोपाध्यायाः ।**

श्रीचन्द्रमहावि ालयमारवाडिसंस्कृतविद्यालयव्याकरणप्रधानाध्यापका व्याकरणाचार्याः व्याकरणपोस्टाचार्या गुरुवर्य्याः **श्रीनारायणदत्तत्रिपाठिनः ।**

हिन्दूविश्वविद्यालयीयसंस्कृतविद्यामन्दिरसाहित्यप्रधानाध्यापका गुरुवर्य्याः **श्रीवामदेवमिश्राः ।**

टीकमाणीसंस्कृतविद्यालयसाहित्यप्रधानाध्यापका गुरुवर्य्याः **श्रीताराचरण भट्टाचार्याः ।**

श्रीचन्द्रमहाविद्यालयसाहित्यप्रधानाध्यापका साहित्याचार्या खिस्तेइत्युपाधिधारिणो गुरुवर्य्या **श्रीमुकुन्दशास्त्रिणः ।**

नित्यानन्दवेदविद्यालयप्रधानाध्यापका –न्यायाचार्या गुरुवर्य्या **श्रीढुण्ढिराजशास्त्रिणः ।**

श्रीचन्द्रमहाविद्यालयाध्यक्षा वेदान्तकेसरिणः **श्रीदर्शनानन्दगुरुवर्याः ।**

हिन्दूविश्वविद्यालयीयायुर्वेदविद्यालयस्य भूतपूर्वप्रधानाध्यक्षा आयुर्वेदप्रखरपाण्डित्यविश्वविख्यातकीर्तयो वन्दनीयाः स्वर्गङ्गताश्चरकावतारा गुरुवर्य्या **श्रीधर्मदासाः ।**

हिन्दूविश्वविद्यालयीयायुर्वेदविद्यालयाध्यक्षा श्रीधन्वन्तरिप्रतिनिधयो मुकुन्दस्वरूपा **श्रीमुकुन्दस्वरूपवर्माणः** बी० एस० सी०, एम० बी० बी० एस० ।

हिन्दूविश्वविद्यालयीयायुर्वेदरसायनशास्त्राध्यापका रसायनाचार्या भूतपूर्वनिखिलभारतवर्षीयवैद्यसम्मेलनाध्यक्षा **श्रीकविराजप्रतापसिंहमहोदयाः ।**

हिन्दूविश्वविद्यालयीयायुर्वेदप्रधानाध्यापकाश्चिकित्सकचूडामणयः सत्यप्रिया गुरुवर्य्या **श्रीसत्यनारायणशास्त्रिणः ।**

हिन्दूविश्वविद्यालयीयायुर्वेदविद्यालयाध्यापका आयुर्वेदाचार्या गुरुवर्य्याः **श्रीजगन्नाथप्रसादशर्माणः** एम० ए० ।

हिन्दूविश्वविद्यालयीयायुर्वेदविद्यालयपाश्चात्यचिकित्सादिशास्त्राध्यापका आयुर्वेदाचार्याः **श्रीभास्करगोविन्द** घाणेकरमहोदया बी० एस० सी०, एम० बी० बी० एस० ।

हिन्दूविश्वविद्यालयीयायुर्वेदनिदानाध्यापका आयुर्वेदशास्त्राचार्या विद्यावागीशा **श्रीराजेश्वरदत्तशास्त्रिण** ।

हिन्दूविश्वविद्यालयीयायुर्वेदविद्यालयभौतिक-रसायनाध्यापका आयुर्वेदाचार्या **श्रीदत्तात्रेय अनन्त कुलकरणीमहोदयाः** एम० एस० सी० ।

जीवविद्याशिक्षका **श्रीरामस्वरूपसिंह** महोदया एम० एस० सी० ।

वनस्पतिविद्याशिक्षका **श्रीबलवन्तसिंह**महोदया एम० एस० सी० ।

यदि चानया टीकया आयुर्वेदपीयूषपानपरमोत्कण्ठिताना विदुषा स्वल्पोऽप्युपकारो भवेत्तदाऽऽत्मान कृतकृत्यमवैमि । ग्रन्थेऽस्मिन् वर्णयोजकदोषेण मदीयप्रमादतो वा कुत्रापि स्खलन जात चेत् सन्त संशोधयन्तु तथा चोक्तम्-

गच्छत स्खलनं क्वापि भवत्येव प्रमादत ।
हसन्ति दुर्जनास्तत्र समादधति सज्जना ॥

सारं ततो ग्राह्यमपास्य फल्गु हसो यथा क्षीरमिवाम्बुमध्यात् ।

गुरुपूर्णिमा संवत् १९९४
श्रीधन्वन्तरिकुटीर काशी
हिन्दूविश्वविद्यालय

इति निवेदयति—
विद्वदनुचर,
**अम्बिकादत्तशास्त्री** ।

# रसेन्द्रसारसंग्रहस्य मूलविषयानुक्रमणिका—

## प्रथमोऽध्यायः ।

## मूलविषयानुक्रमणिका

२

## अथ तृतीयोऽध्यायः ।



---

## अथ चतुर्थोऽध्यायः ।



---

## अथ पञ्चमोऽध्यायः ।



इति मूलविषयानुक्रमणिका ।

# अथ रसेन्द्रसारसङ्ग्रहस्य टीकाविषयानुक्रमणिका

## प्रथमोऽध्यायः ।

## द्वितीयोऽध्यायः।

## तृतीयोऽध्यायः ।

## चतुर्थोऽध्यायः ।



## पञ्चमोऽध्यायः ।



इति टीकाविषयानुक्रमणिका ।

# अथ रसेन्द्रसारसङ्ग्रहस्थपरिशिष्टविषयानुक्रमणिका ।



इति रसेन्द्रसारसंग्रहस्थपरिशिष्टविषयानुक्रमणिका ।

विवध्य सापधं सूतं सभूर्जे त्रिगुणाम्बरे । रसपोट्टलिकां काष्ठे दृढं वद्‌ध्वा गुणेन हि ॥
सन्धानपूर्णकुम्भान्त प्रलम्बनगतिस्थिताम् । अधस्ताज्ज्वालयेदग्नि तत्तदुक्तक्रमेण हि ॥
दोलायन्त्रमिदं प्रोक्तम् । रसेन्द्रचूडामणि ।

१ दोलायन्त्रम्



एकस्या मृण्मयहण्डिकाया अर्द्धभागं भागत्रयम्वा स्वदनार्हेण आर्द्रवनस्पति-स्वरसेन, शुष्कवनस्पतिक्वाथेन, काञ्जिकादियथोक्तद्रवद्रव्येण वा प्रपूर्य तस्या कन्धराप्रान्तद्वये ( ग्रीवौष्ठप्रान्तयोरित्यर्थ ) छिद्रद्वय कृत्वा तत्रैकं शुद्ध काष्ठदण्डं निधाय तन्मध्यभागे रसपोट्टलीं वद्‌ध्वा एवं लम्बयेद् यथा हण्डिकास्थद्रवे सा निमज्जयेत्, परन्तु हण्डिका न स्पृशेत् । ततो यन्त्रं चुल्यामारोप्य यथा प्रमाण वह्निं ज्वालयेत्। एतद्दोलायन्त्र स्मृतम् ।

सरसा गूढवक्त्रां मृद्वस्त्राङ्गुलवनावृताम् । शोषिता काचकलशीं त्रिषु भागेषु पूरयेत् ॥
भाण्डे वितस्तिगम्भीरे वालुकासु प्रतिष्ठितम् । तद्भाण्ड पूरयेत् त्रिभिरन्याभिरवगुण्ठयेत्॥

भाण्डवक्त्र मणिकया सन्धि लिम्पेन्मृदा पचेत् ।
चुल्ल्या तृणस्य चाऽऽदाहान्मणिकापृष्ठवर्तिन ॥
एतद्धि वालुकायन्त्रं तद्यन्त्र लवणाश्रयम् ।
पश्चाद्वालुकापूर्णं भाण्डे निक्षिप्य यत्नत ॥
पच्यते रसगोलाद्य वालुकायन्त्रमीरितम् ।
एव लवणनिक्षेपात् प्रोक्त लवणयन्त्रकम् ॥

अथवा—

अन्त कृतरसालेपताम्रपात्रमुखस्य च । लिप्त्वा मृल्लवणेनैव सन्धि भाण्डतलस्य च ॥
तद्भाण्डं पटुनाऽऽपूर्य्य क्षारैर्वा पूर्व्ववत् पचेत् । एव लवणयन्त्र स्याद् रसकर्म्मणि शस्यते॥

रसरत्नसमुच्चय

## २ वालुकायन्त्र लवणयन्त्रञ्च



सङ्कीर्णमुखलम्बनलिकोपेता काचकूपीं ( आतसीशीशी ) समादाय स्निग्ध-

मृत्तिकापङ्कलिप्तजीर्णवस्त्रपट्टिकाभिरङ्गुलोत्सेधमालिप्य ( अर्थात् सप्तवारं मृत्तिकापङ्कलिप्तवस्त्रपट्टिकाभिरावरणं कृत्वा ) सशोष्य च ( एकमावरणं कृत्वा संशोष्य द्वितीयावरणं कुर्यादेव क्रमेण सप्तावरण कार्यमिति निष्कर्ष ) तस्या भागत्रयं ( भागद्वय वरं ) कज्जल्यादिना ( पाकार्हद्रव्येणेत्यर्थ ) प्रपूरयेत् । तदनु वितस्तिगम्भीरं ( हस्तमितगम्भीरं ) लौहभाण्ड मृण्मयभाण्डं यस्य लोके नाद, जङ्गाल, टब इति च सज्ञा, समादाय तस्य त्रिभागं सूक्ष्मवालुकाभि. प्रपूर्य तन्मध्ये कण्ठपर्यन्तं कूपिका निधाय ( पूर्वं भाण्डे किञ्चिद् वालुका प्रपूर्य तदुपरि कूपिका सस्थाप्य तदनु कूपीकण्ठपर्यन्तं भाण्डावकाशं वालुकाभि पूरणीयमिति साधु पन्था ) चुल्या ( भट्ट्या ) यन्त्र स्थापयित्वा वह्निं यथाप्रमाण दद्यात् । रसपाकप्रक्रियाऽनुसारं पूर्वमेव गन्धकजारणानन्तर कूपीमुख खटिकयाऽवरुध्य गुडचूर्णपिष्टया सन्धिबन्धनं कुर्यात् । कुत्रापि कूपिकास्थापनानन्तरमेव भाण्डमुख शरावेणाच्छाद्य शरावोपरि स्थिततृणज्वलनपर्यन्तं पाककरणनिर्देश । कुत्रापि च भाण्डस्थपञ्चाटकमितवालुकामध्ये केवल रसादिगोलकमेव निधाय ( न तु कज्जलीपूर्णकूपी ) भाण्डमुखमवरुध्य तृणज्वलनपर्यन्तमवधिकालपर्यन्तम्वा पाककरणनिर्देश । एव वालुकास्थाने भाण्डे लवणप्रपूरणेन लवणयन्त्र कथ्यते ।

**अथ प्रकारान्तरेण लवणयन्त्रमाह** अन्त कृतेत्यादि—

अयमर्थ —कस्याश्चित्ताम्रकटोरिकाया आभ्यन्तरप्रदेश वनस्पतिस्वरसपिष्टपारदेन ( पारदादिपिष्टयेत्यर्थ ) लिप्त्वा सशोष्य च ता ताम्रकटोरिकामधोमुखीं कृत्वा तद्भाण्डान्तोऽध प्रदेशेन सयोज्य सन्धिबन्धनं कृत्वा तदुपरि कण्ठावधि भाण्डं लवणेन क्षारैर्वा यथोक्तया प्रपूर्य वह्नि प्रज्वालयेदित्यपि लवणयन्त्रमुच्यते ।

यन्त्र डमरवद्गाऽथ वाऽध पातनयन्त्रवत्। भूगर्त्ते तत् समाधाय चाद्र्ध्वमाकीर्य्यवह्निम्।

अथ स्थाल्यां जलं क्षिप्त्वा सूतकं तत्र पातयेत्।
एतद्भूधरयन्त्रं स्यात् सूतसंस्कारकर्म्मणि ॥ अत्रिसंहितायाम्।

तन्त्रान्तरेऽस्य 'अध पातनयन्त्रम्" इति सञ्ज्ञाऽन्तरं, यत भूधरयन्त्रे अध पातनमपि क्रियते। तत्र प्रमाण भावप्रकाशे रसशोधनविधौ यथा—

'त्रिफलाशिग्रुशिखिभिर्लवणासुरिमयुतैः । नष्टपिष्ट रस कृत्वा लेपयेदूर्ध्वभाजनम् ॥
त दीप्तैरध पातमुपलैस्तस्य कारयेत्। यन्त्रे भूधरसंज्ञे तु तत सूतो विशुध्यति॥'' इति

भूधरयन्त्रमपरम्—

वालुकागूढसर्वाङ्गा गर्ते मूषा रसान्विताम्। दीप्तोपलैः संवृणुयाद्यन्त्र तद्भूधराह्वयम् ॥
इति रसरत्नसमुच्चय।

## ३ भूधरयन्त्रम्



समानाकारहण्डिकाद्वय समादाय एकस्या हण्डिकाया निम्बुरसपिष्ट हिङ्गुलपङ्कं चाऽधस्तरमपिष्ट पारदमवा सलिप्य घर्मे नशोषयेत्। तदनु चैका हण्डिका शीतलजलेनापूर्य रसपङ्कलिप्तहण्डिकामधोमुखीं कृत्वा जलपूर्णहण्डिकया सह डमरु

वत् संयोज्य स्निग्धमृत्पङ्कलिप्तवस्त्रपट्टिकाभिस्तयोर्मुखसन्धिबन्धनं विधाय संशोष्य च भूतले यन्त्रसमावेशयोग्यं गर्तं कृत्वा तस्मिन् यन्त्र निवेश्य तदुपरि शुष्कवनोपलानि दत्वा वह्निं प्रज्वालयेत् । इत्थं तापयोगेनोर्ध्वपात्रलग्नपारदो निम्नहण्डिकाजले पतति शुद्धश्च जायते । यन्त्रमेतद्भूराख्य प्रोक्तम् ।

प्रकारान्तरमपि यथा—वालुकागूढसर्वाङ्गां गर्ते मूषा रसान्विताम् ।
दीप्तोत्पलै सन्नृणुयाद् यन्त्र तद्भूधराह्वयम् ॥

इति रसरत्नसमुच्चय ।

प्रकारान्तरं यथा—त्रिफलाशिग्रुशिखिभिर्लवणासुरिसयुतै ।
नष्टपिष्ट रस कृत्वा लेपयेदूर्ध्वभाजनम् ॥
ततो दीप्तैरध पातमुपलैस्तस्य कारयेत् ।
यन्त्रे भूधरसज्ञे तु तत सूतो विशुद्धयति ॥

इति भावप्रकाशे ।

क्षिपेद्रस घटे दीर्घनताधोनालसंयुते । तन्नालं निक्षिपेदन्य-घटकुक्ष्यन्तरे खलु ॥
तत्र रुद्ध्वा मृदा सम्यग्वदने घटयोरथ । अधस्ताद्रसकुम्भस्य ज्वालयेत् तीव्रपावकम्॥
इतरस्मिन् घटे तोयं प्रक्षिपेत्स्वादु शीतलम् । तिर्यक्पातनयन्त्रं हि वार्त्तिकैरभिधीयते ॥
रसेन्द्रचूडामणि. । ८

## ४ तिर्यक्पातनयन्त्रम्



एकस्मिन् मृण्मयघटे पारदं निधाय तस्योदरकण्ठयोर्मध्ये वेणुमयं धातुमयम्वा दीर्घमधोलम्बितं नालमेकं संयोज्य द्वितीयघटोदरस्थच्छिद्रे नालाग्रं प्रवेश्य कुट्टित-जीर्णवस्त्रस्निग्धमृत्तिकापङ्केन सन्धिबन्धनञ्च कृत्वा द्वितीयघटं स्वादुशीतलजलेनापूर्य उभयोर्मुखं शरावेणाछाद्य दृढं सन्धिबन्धनञ्च कृत्वा संशोष्य च वह्निं प्रज्वालयेत् । द्वितीयघटवाह्यभागोपरि शीतलजलसेचनमपि वह्निदानपर्यन्तं कार्यम् । इति ।

अष्टाङ्गुलपरीणाहमानाहेन दशाङ्गुलम् । चतुरङ्गुलकोत्सेधं तोयाधारं गलादधः ॥
अधोभाण्डमुखं तस्य भाण्डस्योपरिवर्त्तिन. । षोडशाङ्गुलविस्तीर्णं पृष्ठस्याऽऽस्ये प्रवेशयेत् ॥
पार्श्वयोर्महिषीक्षीरचूर्णमण्डूरफाणितैः । लिप्त्वा विशोषयेत् सन्धिं जलाधारे जलं क्षिपेत् ॥
चुल्ल्यामारोपयेदेतत् पातनायन्त्रमीरितम् । रसरत्नसमुच्चय. ।

## ५ ऊर्ध्वपातनार्थं पातनयन्त्रम्



अष्टाङ्गुलपरिधिविशिष्टं दशाङ्गुलदीर्घं चतुरङ्गुलस्थूलञ्च एकं मृण्मयभाण्डं समादाय तस्मिन् स्वादु शीतलजलं प्रपूरयेत् । तत षोडशाङ्गुलविस्तृतपृष्ठदेशं भाण्डमेकं समादाय तस्यान्तर्भागं पारदपिष्ट्या सलिप्य सशोष्य चाधोमुखं च कृत्वा पूर्वोक्तस्य जलपूर्णभाण्डस्य मुखे कण्ठदेशादध पर्य्यन्त प्रवेश्य महिषीक्षीरादिभि सन्धिं लिप्त्वा विशोष्य च चुल्ल्यां स्थापयित्वा वह्निं ज्वालयेत् । अनेन पारदस्याध पातन-संस्कारो भवति ।

इति पातनायन्त्रस्य प्रथमार्थः ।

एकं मृण्मयभाण्डमधोमुखं भूमौ संस्थाप्य तस्य पृष्ठभागे अष्टाङ्गुलविस्तृतं, दशाङ्गुलदीर्घं तथा चतुरङ्गुलस्थूलञ्चैकं मृत्तिकया माषचूर्णपिष्ट्या वाऽऽलवालं विरच्य शोषयेत्। तदनु षोडशाङ्गुलविस्तृतपृष्ठदेशमौषधलिप्तोदरं द्वितीयभाण्डं समादाय तस्य मुखं पृष्ठालवालयुक्तस्याधोभूतमुखस्य पूर्वभाण्डस्य मुखेन सह संयोज्य महिषीक्षीर-चूर्ण-मण्डूरफाणितैर्द्वयोः सन्धिबन्धनं कृत्वा संशोष्य च चुल्ल्यामुपरि संस्थाप्य वह्निं प्रज्वालयेत्। आलवालस्थमुष्णं जलं निःसार्य वारं वारं शीतलं जलं पूरयेत्।

इति पातनायन्त्रस्य द्वितीयार्थः।

उपर्यधस्तनस्थाल्यां क्षिपेदन्यामधोमुखीम्। स्थालिकां चिपटाभूततलान्तर्लिप्तपारदाम्॥
क्षिप्त्वा तां पङ्किले गर्ते ज्वालयेन्मूर्ध्नि पावकम्। अध पातनयन्त्रं हि तदैतत्परिकीर्तितम्॥

रसेन्द्रचूडामणिः।

अथवा—

अथोर्ध्वभाजने लिप्तस्थापितस्य जले सुधीः। दीप्तैर्वनोपलैः कुर्य्यादध पातं प्रयत्नतः॥

रसरत्नसमुच्चयः।

## ६ अधःपातनयन्त्रम्



एकस्या हण्डिकाया पारदपिष्टिं विलिप्य शोषयेत्। ततस्तदपेक्षया स्वल्पस्थूलहण्डिकाया शीतलं जल प्रपूर्य तस्या मुखे पूर्वोक्तहण्डिकाया मुख निवेश्य सन्धिवन्धनं कृत्वोपरि हण्डिकापृष्ठोपरि वह्निं ज्वालयेत्।

तदनु ऊर्द्ध्वहण्डिका शीतलजलेनापूर्य वह्निं प्रज्वालयेत्। इत्थं पञ्चप्रहरपर्य्यन्तं पारदोर्द्ध्वपातनपर्यन्त वा पारदप्रमाणानुसारं स्वल्पकालपर्यन्तमधिककालपर्यन्त-म्वा वह्निं प्रज्वालयेत्। ऊर्द्ध्वहण्डिकोष्णजलनि सारणं शीतलजलपूरणञ्चाग्निदान-पर्यन्तं कार्यम्। स्वाङ्गशीतलयन्त्रसन्धिं शनै शनै विश्लेष्योर्द्ध्वहण्डिकापृष्ठलग्नं निर्मल पारदं प ाँतवस्त्रेण ससार्य गृह्णीयात्। रसशास्त्रज्ञैरेतद्विद्याधराख्यं यन्त्रं प्रोक्तम्।

स्थूलस्थाल्या द्रवं क्षिप्त्वा वासो बद्ध्वा मुखे दृढम् ।
तत्र स्वेद्य विनिक्षिप्य पिधान्या प्रपिधाय च ॥
अधोऽग्निं ज्वालयेत्तत्र तत्स्यात्कन्दुकयन्त्रकम् ।स्वेदनं यन्त्रमित्येतत्प्राहुरन्ये मनीषिण ॥

अथवा—
स्थाल्या जल क्षिप्त्वा तृण दत्त्वा तृणोपरि । स्वेद्यद्रव्य विनिक्षिप्य पिधान्या प्रपिधाय च ॥
अधस्ताज्ज्वालयेदग्निमेतद्वा कन्दुयन्त्रकम् । रसेन्द्रचूडामणि

८ स्वेदन-(कन्दुक) यन्त्रम्



* यथा—स्थूलस्थाल्यां जलं क्षिप्त्वा वासो बद्ध्वा मुखे दृढम् ।
तत्र स्वेद्यं विनिक्षिप्य तन्मुखं प्रपिधाय च ॥
अधस्ताद् ज्वालयेदग्निं तत् स्यात् कन्दुकयन्त्रकम् ।
स्वेदनी-यन्त्रमित्यन्ये प्राहुरन्ये मनीषिणः ॥

स्वादुशीतलजलपूरिताया यथोक्तकषायकाञ्जिकादिद्रवपूरिताया वा हण्डिकाया मुखोपरि त्रिचतुरावृतं निर्मल वस्त्रं बद्ध्वा तदुपरि स्वेदनार्हं पारदपिष्टयादिद्रव्यं निधाय समानहण्डिकया शरावेण वाऽऽच्छाद्य सन्धिञ्च विलिप्य संशोष्य च यथा प्रमाण वह्नि दद्यात् । इद स्वेदनयन्त्रं प्रोक्तम् । रसरत्नसमुच्चयेऽस्य कन्दुकाख्य-नाम्ना निर्देश कृत । *

विधायाष्टाङ्गुलं पात्रं लौहमष्टाङ्गुलोच्छ्रयम् । कण्ठाधो द्व्यङ्गुले देशे गलाधारे हि तत्र च ॥
तिर्य्यग्लौहशलाकाश्च तन्वीस्तिर्य्यग्विनिक्षिपेत् । तनूनि स्वर्णपत्राणि तासामुपरि विन्यसेत्
पत्राधो निक्षिपेद्धूमं वक्ष्यमाणमिहैव हि । तत्पात्रं न्युब्जपात्रेण छादयेदपरेण हि ॥
मृदा विलिप्य सन्धिञ्च वह्निं प्रज्वालयेदधः । तेन पत्राणि कृत्स्नानि हतान्युक्तविधानतः ॥
रसश्चरति वेगेन द्रुतं गर्भे द्रवन्ति च । गन्धालकशिलानां हि कज्जल्या वा मृताहिना ।
धूपनं स्वर्णपत्राणां प्रथमं परिकीर्त्तितम् । तारार्थं तारपत्राणि मृतवङ्गेन धूपयेत् ॥
धूपयेच्च यथायोग्यैरन्यैरुपरसैरपि । धूपयन्त्रमिदं प्रोक्तं जारणाद्रव्यसाधने ॥

रसरत्नसमुच्चयः ।

## ६ धूपयन्त्रम्



अष्टाङ्गुलप्रमाणदैर्घ्यं विस्तृतञ्चैकं लौहपात्रं समादाय तस्मिन् गन्धकहरताल-मनःशिलाभिः कृतां कज्जलीं, नागभस्म वा निक्षिप्य तस्य ग्रीवाया द्व्यङ्गुलादधः प्रदेशे सूक्ष्मतिर्य्यग्लोहशलाकास्तिर्यग्रूपेण निधाय तासामुपरि कण्टकवेध्यानि शुद्ध

स्वणपत्राणि संस्थाप्य अधोमुखेनापरेण समानलौहपात्रेण डमरुयन्त्रवत् स्निग्ध-मृद्वस्त्रपङ्केन सन्धिबन्धनं कृत्वा संशोष्य च यन्त्रं चुल्यां संस्थाप्य यथाप्रमाण वह्नि प्रज्वाल्य स्वर्णपत्राणि धूपयेत्। अनेनैव विधिना रजतपत्राणि मृतवङ्गेन धूपयेत्। अन्यरसोपरसैर्वा यथोक्तं स्वर्णपत्राणि तारपत्राणि वा धूपयेत्। एवं मृतानि ( धूपितानि ) स्वर्णपत्राणि पारदेन सह विमर्द्य कज्जलीं कृत्वा मकरध्व-[२] जादिरसनिर्माण कर्तव्यम्। इत्थ धूपितानि स्वर्णपत्राणि पारद कृत्स्नतश्चरति। स्वस्मिन् समावेशयतीत्यर्थ। प्रायो मकरध्वजनिर्माणे पारदगन्धकयोरुदूर्ध्वपतनं भूत्वा काचकूपिकानलिकायां पिण्डरूपेणस्थितिर्भवति स्वर्णंचाधस्तिष्ठति, किन्तू-पर्युक्तविधिधूपितस्वर्णपत्रैस्सह पारद विमर्द्य गन्धकेन च सह कज्जलीं कृत्वा मक-रध्वजनिर्माणकरणेन स्वल्पस्वर्णांशस्यापि तयो सहोदूर्ध्वपतन भवति। इत्थं निर्मि-तञ्च मकरध्वज यथोक्तगुणकरं विद्यादन्यमन्यथेति स्वानुभव।

अजाशकृत् तुषाग्निश्च भूगर्त्ते त्रितयं क्षिपेत्। तस्योपरि स्थित खल्लः तप्तखल्ल इति स्मृतः ॥
अत्रिसंहितायाम्।

१० तप्तखल्लयन्त्रम्



भूमौ गर्त्तं कृत्वा तस्मिन् अजाशकृत तुषाश्च दत्वा वह्निं प्रज्वाल्य तदुपरि लौहखल्ल स्थापयेत्। रसादीना संशोधनार्थमयं तप्तखल्ल स्मृत ।

षोडशाङ्गुलविस्तीर्णं हस्तमात्रायतं समम् । धातुसत्त्वनिपातार्थं कोष्ठिकं परिकीर्त्तितम् ॥
परिपूर्णे दृढाङ्गारैरधोवातेन कोष्ठके । मात्रया ज्वालमार्गेण ज्वालयेच्च हुताशनम् ॥
अत्रिसंहितायाम् ।

## ११ कोष्ठिकयन्त्रम्



षोडशाङ्गुलविस्तृतं हस्तैकमितदैर्घ्यमेकं लौहमयं पात्रं समादाय तस्मिन् कोकिलादिकं प्रपूर्य तेषां मध्ये सत्वाहरणार्हधातुपूरितमूषां संस्थाप्य लौहपात्रोपरि तावन्मानमधोमुखं पात्रान्तरं संस्थाप्य वह्निं प्रज्वालयेत् । इदं कोष्ठिकयन्त्रं प्रकीर्तितम् । अथ पात्रे भस्त्रया धमनार्थं छिद्रमेकं पूर्वमेव कर्तव्यम् ।

॥ श्रीः ॥

# रसेन्द्रसारसंग्रह

## प्रथमोऽध्यायः ।

रसेन्द्रमिव निःशेष-जराव्याधिविनाशनम् ।
प्रणमामि गुरुं भक्त्या शङ्करं योगसाधनम् ॥ १ ॥
नत्वा गुरुपदद्वन्द्वं दृष्ट्वा तन्त्राण्यनेकशः ।
श्रील-गोपालकृष्णेन क्रियते रससंग्रहः ॥ २ ॥

### अथ टीकाकारकृतमङ्गलाचरणम् ।

भक्त्या श्रीगिरिजापतिं रघुपतिं राधापतिं माधवं
लोकानामघनाशिनीं भगवतीं भागीरथीं भारतीम् ।
वैद्यानाञ्च शिरोमणिं गुरुवरं श्रीसत्यनारायणं
श्रीताराचरणं नृसिंहविबुधं श्रीढुण्ढिराजं तथा ॥ १ ॥
श्रीकृष्णं पितरं तथैव जननीं श्रेष्ठांस्तथा सादरं
नत्वा देवगिरस्समर्चनपरैर्जैं(य)कृष्णदासैर्मुदा ।
व्याख्यार्थं रससंग्रहस्य विशदं सम्प्रेरितो ह्यम्बिका
दत्तोऽहं रचयामि कौतुकधिया गूढार्थसन्दीपिकाम् ॥ २ ॥

अथ सुप्रथितनामा निखिलरसशास्त्रपारदृश्वा भिषग्वर श्रीगोपालकृष्णः समस्तरसशास्त्रसारभूतं रसेन्द्रसारसङ्ग्रहाख्यं ग्रन्थं चिकीर्षु तस्य निर्विघ्नपरिसमाप्तये "निर्विघ्नग्रन्थसमाप्तिकामो मङ्गलमाचरेदिति" श्रुतिप्रतिपादितं शिष्टाचारपरम्परापरिप्राप्तं स्वेष्टदेवतास्तुतिरूपं मङ्गलं ग्रन्थादौ निबध्नाति रसेन्द्रमिवेत्यादि । योगसाधनं—योगश्चित्तवृत्तिनिरोधस्तेनोपायेन साधनं प्राप्तिर्यस्येति बहुव्रीहिः, एतेनावाङ्मनसगोचरस्यापि प्रत्यक्षीभवनं प्रतिपादितम् । निःशेषजराव्याधिविनाशनं निःशेषेण जराव्याधिविनाशनमर्थाद्योगलब्धशङ्करदर्शनेन पुरुषो जराव्याधिरहितो भवति; एवम्भूतं गुरुं विद्यागुरुत्वात्, योगैर्विविधैः स्वेदनमर्दनजारणबन्धनाद्युपायैः साधनं

षोडशाङ्गुलविस्तीर्णं हस्तमात्रायतं समम् । धातुसत्त्वनिपातार्थं कोष्ठिकं परिकीर्त्तितम् ॥
परिपूर्णे दृढाङ्गारैरधोवातेन कोष्ठके । मात्रया ज्वालमार्गेण ज्वालयेच्च हुताशनम् ॥
अत्रिसंहितायाम् ।

## ११ कोष्ठिकयन्त्रम्



षोडशाङ्गुलविस्तृतं हस्तैकमितदैर्घ्यञ्चैकं लौहमयं पात्रं समादाय तस्मिन् कोकिलादिकं प्रपूर्य तेषां मध्ये सत्वाहरणार्हधातुपूरितमूषां संस्थाप्य लौहपात्रोपरि तावन्मानमधोमुखं पात्रान्तरं संस्थाप्य वह्निं प्रज्वालयेत् । इदं कोष्ठिकयन्त्रं प्रकीर्तितम् । अध पात्रे भस्त्रया धमनार्थं छिद्रमेकं पूर्वमेव कर्तव्यम् ।

# रसेन्द्रसारसंग्रहः

## प्रथमोऽध्यायः ।

रसेन्द्रमिव निःशेष-जराव्याधिविनाशनम् ।
प्रणमामि गुरुं भक्त्या शङ्करं योगसाधनम् ॥ १ ॥
नत्वा गुरुपदद्वन्द्वं दृष्ट्वा तन्त्राण्यनेकशः ।
श्रील-गोपालकृष्णेन क्रियते रससंग्रहः ॥ २ ॥

### अथ टीकाकारकृतमङ्गलाचरणम् ।

भक्त्या श्रीगिरिजापतिं रघुपतिं राधापतिं माधवं
लोकानामवनाशिनीं भगवतीं भागीरथीं भारतीम् ।
वैद्यानाञ्च शिरोमणिं गुरुवरं श्रीसत्यनारायणं
श्रीताराचरणं नृसिंहविबुधं श्रीढुण्ढिराजं तथा ॥ १ ॥
श्रीकृष्णं पितरं तथैव जननीं श्रेष्ठांस्तथा सादरं
नत्वा देवगिरस्समर्चनपरै जैं(य)कृष्णदासैर्मुदा ।
व्याख्यार्थं रससंग्रहस्य विशदं सम्प्रेरितो ह्यम्बिका
दत्तोऽहं रचयामि कौतुकधिया गूढार्थसन्दीपिकाम् ॥ २ ॥

अथ सुप्रथितनामा निखिलरसशास्त्रपारदृश्वा भिषग्वरः श्रीगोपालकृष्ण समस्त-रसशास्त्रसारभूतं रसेन्द्रसारसङ्ग्रहाख्य ग्रन्थ चिकीर्षु तस्य निर्विघ्नपरिसमाप्तये "निर्विघ्नग्रन्थसमाप्तिकामो मङ्गलमाचरेदिति" श्रुतिप्रतिपादितं शिष्टाचारपरम्परापरिप्राप्तं स्वेष्टदेवतास्तुतिरूपं मङ्गल ग्रन्थादौ निबध्नाति रसेन्द्रमिवेत्यादि । योगसाधनं—योगश्चित्तवृत्तिनिरोधस्तेनोपायेन साधनं प्राप्तिर्यस्येति बहुव्रीहि, एतेनावाङ्मनसगोचरस्यापि प्रत्यक्षीभवनं प्रतिपादितम् । नि शेषजराव्याधिविनाशनं निःशेषेण जराव्याधिविनाशनमर्थाद्योगलब्धशङ्करदर्शनेन पुरुषो जराव्याधिविरहितो भवति, एवम्भूतं गुरुं विद्यागुरुत्वात्, योगैर्विविधै स्वेदनमर्दनजारणबन्धनाद्युपायै साधनं

सिद्धिर्यस्येति, निःशेषेण जराव्याधिविनाशनं योगसिद्धपारदसेवनेन पुरुषो देहसिद्धिलाभत्वाज्जराव्याधिविमुक्तो भवति, तथा शं कल्याणं रोगनिवर्तकत्वात् करोतीति शङ्करस्तं तथोक्तं, तथा गुरुं सकलपदार्थापेक्षयाधिकभारयुक्तं रसेन्द्रमिव पारदमिव, शङ्करं शिवं भक्त्या प्रणमामीति दृष्टान्तसहितार्थः। तथा च स्वगुरोः परमार्थतत्त्वप्रदर्शकं पदद्वन्द्वं पदयुगलं नत्वा तथान्यानि बहूनि रसतन्त्राणि सम्यगालोच्य श्रीगोपालकृष्णशर्म्मणा रससङ्ग्रहः क्रियते ॥ १-२ ॥

सिद्धयोगाश्च ये केचित् कृतिसाध्या भवन्ति हि।
एकीकृत्य तु ते सर्वे लिख्यन्ते यततो मया ॥ ३ ॥

विभिन्नरसतन्त्रेषु प्रत्यक्षफलप्रदाः, यत्नसाध्याश्च ये केचिदनुभूताः प्रयोगाः सन्ति ते एकीकृत्य मया लिख्यन्ते, येन विदुषां वृथैव विभिन्नग्रन्थावलोकनप्रयासो मा भवेदिति ॥ ३ ॥

तत्र रसप्राधान्यमाह—

अल्पमात्रोपयोगित्वादरुचेरप्रसङ्गतः।
क्षिप्रमारोग्यदायित्वादौषधेभ्योऽधिको रसः ॥ ४ ॥
साध्येषु भेषजं सर्वमीरितं तत्त्ववेदिना।
असाध्येष्वपि दातव्यो रसोऽतः श्रेष्ठ उच्यते ॥ ५ ॥
हतो हन्ति जराव्याधिं मूर्च्छितो व्याधिघातकः।
बद्धः खेचरतां धत्ते कोऽन्यः सूतात् कृपाकरः ॥ ६ ॥

अथ रसप्राधान्यमाह अल्पमात्रेत्यादि—काष्ठौषधापेक्षया स्वल्पमात्रोपयोगेन बहुफलप्रदत्वात्, अरुचेरविषयत्वात्, सहसा रक्तादिधातुसम्पर्केण क्षिप्रं रोगनिवर्तकत्वात् सर्वौषधेभ्यो रसोऽधिकःश्रेष्ठः। नहि केवलं सर्वौषधेभ्योऽधिकगुणतरत्वादस्य श्रेष्ठत्वमपितु योगसाधनत्वात्, तथा बहुकार्यकरत्वात् मुक्तिप्रदत्वाच्च सर्वेभ्योऽधिक इति उक्तञ्चास्य माहात्म्यं यथा—

शताश्वमेधेन कृतेन पुण्यं गोकोटिभिः स्वर्णसहस्रदानात्।
नृणां भवेत्सूतकदर्शनेन यत्सर्वतीर्थेषु कृताभिषेकात् ॥
विधाय रसलिङ्गं यो भक्तियुक्तः समर्चयेत्। जगत्त्रितयलिङ्गानां पूजाफलमवाप्नुयात् ॥
भक्षणं स्पर्शनं दानं ध्यानञ्च परिपूजनम्। पञ्चधा रसपूजोक्ता महापातकनाशिनी ॥

हन्ति भक्षणमात्रेण पूर्वजन्माघसम्भवम् । रोगसघमशेषाणा नराणा नात्र संशय ॥
पूर्वजन्मकृत पापं सद्यो नश्यति देहिनाम् । सुगन्धपिष्टसूतेन यदि शम्भुर्विलेपित. ॥
अभ्रक त्रुटिमात्र यो रसस्य परिजारयेत् । शतक्रतुफलं तस्य भवेदित्यब्रवीच्छिव ॥
रोगिभ्यो यो रस दत्ते शुद्धिपाकसमन्वितम् । तुलादानाश्वमेधाना फल प्राप्नोति शाश्वतम्॥
उदरे संस्थिते सूते यस्योत्क्रामति जीवितम् । स मुक्तो दुष्कृताद्घोरात् प्रयाति परम पदम्॥

मूर्च्छित्वा हरति रुजं वन्धनमनुभूय मुक्तिदो भवति ।
अमरीकरोति हि मृत कोऽन्य सूतात्कृपाकर ॥
सुरगुरुगोद्विजहिंसापापकलापोद्भवं किलासाध्यम् ।
श्वित्र तदपि च शमयति यस्तस्मात् क पवित्रतर सूतात् ॥
रसवन्ध एव धन्य प्रारम्भे यस्य सततमिति करुणा ।
सेत्स्यति रसे करिष्ये महीमह निर्जरामराणाम् ॥
सुकृतफलं तावदिदं सुकुले यज्जन्म धीश्च तत्रापि ।
सापि च सकलमहीतलतुलनफला भूतलञ्च सुविधेयम् ॥
भूतलविधेयताया फलमर्थास्ते च विविधभोगफला ।
भोगाश्च सन्ति शरीरे तदनित्यमतो वृथा सकलम् ॥
इति वनभोगशरीरान्मत्वाऽनित्यान्सदैव यतनीयम् ।
मुक्तौ सा च ज्ञानात्तच्चाभ्यासात् स च स्थिरे देहे ॥
तत्स्थैर्ये न समर्थं रसायनं किमपि मूललोहादि ।
स्वयमस्थिरस्वभावं दाह्य क्लेद्यञ्च शोष्यम् ॥
काष्ठोषध्यो नागे नागो वङ्गेऽथ वङ्गमपि शुल्वे ।
शुल्व तारे तारं कनके कनकञ्च सूते ॥
अमृतत्व हि भजन्ते हरमूर्त्तौ योगिनो यथा लीना ।
तद्वत् कवलितगगने रसराजे हेमलोहाद्या ॥

अथ रसस्य जीवन्मुक्तिकारणतामाह—

परमात्मनीव सततं भवति लयो यत्र सर्वसत्वानाम् ।
एकोऽसौ रसराज शरीरमजरामरं कुरुते ॥
स्थिरदेहोऽभ्यासवशात्प्राप्य ज्ञान गुणाष्टकोपेतम् ।
प्राप्नोति ब्रह्मपद न पुनर्भववासजन्मदु खानि ॥

एकांशेन जगत्पुटपटवद्व्याप्यास्थित पर ज्योति ।
पाठैस्त्रिभिस्तदन्त सुलभ न निरीक्षमात्रेण ॥
नहि देहेन कथञ्चिद् व्याधिजरामरणदुःखविधुरेण ।
क्षणभङ्गुरेण सूक्ष्म तत् अभ्योपासितु शक्यम ॥
नानापि देहसिद्धे को दर्शनाद्रिना शरीरेण ।
तद्योगगम्यममल मनसोऽपि न गोचर तत्त्वम् ॥
यज्ञाद्दानात्तपसो वेदाध्ययनाद्दमात्सदाचारात् ।
अत्यन्तभूयसी किल योगवशादात्मसंवित्ति ॥
भ्रूयुगमध्यगत यच्छिखिविद्युत्सूर्यवज्जगद्भाति ।
केषाञ्चित् पुण्यदृशामुन्मीलति चिन्मय परज्योति ॥
परमानन्दैकरस परम ज्योति स्वभावमविकल्पम ।
विगलितसकलक्लेश ज्ञेय शान्त स्वसंवेद्यम् ॥
तस्मिन्नाधाय मन स्फुरदखिल चिन्मय जगत् पश्यन ।
उत्सन्नकर्मबन्धो ब्रह्मत्वमिहैव प्राप्नोति ॥
प्रत्यक्षेण प्रमाणेन यो न जानाति सूतकम ।
अदृष्टविग्रह देव कथ ज्ञास्यति चिन्मयम् ॥
ब्रह्मादयो यतन्ते तस्मिन् दिव्या तनु समाश्रित्य ।
जीवन्मुक्ताश्चान्ये कल्पान्तस्थायिनो मुनय ॥
तस्माज्जीवन्मुक्ति समीहमानेन योगिना प्रथमम् ।
दिव्या तनुर्विधेया हरगौरीसृष्टिसंयोगात् ॥

अन्यच्च—लिङ्गकोटिसहस्रस्य यत्फल सम्यगर्चनात् ।
तत्फल कोटिगुणित रसलिङ्गार्चनाद्भवेत् ॥

अथ सङ्क्षेपेण रसोत्पत्ति, यथा—

शिवाङ्गात्प्रच्युत रेत पतित धरणीतले ।
शतयोजनगम्भीरान् कृत्वा कूपास्तु पञ्च च ॥
तदाप्रभृति कूपस्थ तद्रेत पञ्चधाऽभवत् ।
भेदा—रसो रसेन्द्र सूतश्च, पारदो मिश्रकस्तथा ॥
इति पञ्चविधो जात क्षेत्रभेदेन शम्भुज ।

सर्वेषां परिचय —

रसो रक्तो विनिर्मुक्त सर्वदोषै रसायन । सञ्जातास्त्रिदशास्तेन नीरुजा निर्जरामरा ॥
रसेन्द्रो दोषनिर्मुक्त श्यावो रूक्षोऽतिनिर्मल । रसायनोऽभवंस्तेन नागा मृत्युजरोज्झिता ॥
देवैर्नागैश्च तौ कूपौ पूरितौ मृद्भिरश्मभि । तदा प्रभृति लोकाना तौ जातावतिदुर्लभौ ॥
ईषत्पीतश्च रूक्षाङ्गो दोषयुक्तश्च सूतक । दशाष्टसस्कृतै. सिद्धो देहं लोहं करोति स ॥
अथान्यकूपज सोऽपि चञ्चल श्वेतवर्णवान् । पारदो विविधैर्योगै सर्वरोगहरो हि स ॥
मयूरचन्द्रिकाच्छाय स रसो मिश्रको मत । सोऽप्यष्टादशसंस्कारैर्युक्तश्चातीवसिद्धिद ॥
एता रससमुत्पत्तिं यो जानाति स धार्मिक । आयुरारोग्यसन्तानं रससिद्धिञ्च विन्दति ॥

अथ रसादीना निरुक्ति —

रसनात् सर्वधातूना रस इत्यभिधीयते ॥

जरामृत्युविनाशाय रस्यते वा रसो मत । रसोपरसराजत्वाद्रसेन्द्र इति कीर्तित ॥
देहलोहमयीं सिद्धिं सूतेऽत सूत उच्यते । रोगपङ्काब्धिमग्नाना पारदानाच्च पारद ॥
सर्वधातुगतं तेजो मिश्रितं यत्र तिष्ठति । तस्मात् स मिश्रक प्रोक्तो नानारूपफलप्रद ॥४॥

अथान्यहेतुना रसप्राधान्यमाह—साध्येष्वित्यादि । साध्यरोगेषु मूललोहादिकप्रयोगेण वैद्य सिद्धिमाप्नोति, असाध्यरोगेषु मूललोहादीना निष्फलत्वात् पारद एव तत्र प्रयोक्तव्य । तस्मात् साध्यासाध्यगदनिग्रहसमर्थत्वात् पारद श्रेष्ठ । असाध्यरोगाश्च द्विविधा, अप्रतिक्रिया, याप्याश्च, अप्रतिक्रियेषु याप्येषु च सर्वमौषधं निष्प्रयोजनम्, किन्तु पारद अप्रतिक्रियेषु याप्येषु च प्रयोक्तव्य ॥ ५ ॥

हेत्वन्तरमाह—हत इत्यादि । मारकगणौषधादिभिस्सह मृत पारदो जरा, अपमृत्युञ्च हन्ति, एव मूर्च्छितोऽपि व्याधि नाशयति । बद्धश्च खेचरता गगनसञ्चरणता ददाति । प्राचीनग्रन्थेपु बद्धपारदसाहाय्येन गगने यानादिसञ्चरण प्रतिपादितं, तदेव बद्ध इत्यादि शब्दतात्पर्यम् ॥ ६ ॥

अथ रसपर्यायमाह—

**रसेन्द्रः पारदः सूतः सूतराजश्च सूतकः ।**
**शिवतेजो रसः सप्त नामान्येवं रसस्य तु ॥ ७ ॥**

अथ रसपर्य्यायमाह—रसेन्द्र इत्यादि । रसेन्द्र, पारद, सूत, सूतराजश्च, सूतक, शिवतेज, रस, इमानि रसनामानि ॥ ७ ॥

मतान्तरम्—

शिववीजं रस' सूत पारदश्च रसेन्द्रकः ।
एतानि रसनामानि तथाऽन्यानि यथा शिवे ॥ ८ ॥

मतान्तरेण रसपर्य्यायमाह—शिववीजमित्यादि शिववीज, रस , सूत , पारद , रसेन्द्रक , इमानि रसनामानि तथा यानि शिवस्य नामानि तान्यपि सूतस्य वाचकानि ॥ ८ ॥

अथ रसलक्षणम्—

अन्तः सुनीलो वहिरुज्ज्वलो यो मध्याह्नसूर्य्यप्रतिमप्रकाश. ।
शस्तोऽथ धूम्र परिपाण्डरश्च चित्रो न योज्यो रसकर्मसिद्धौ ॥९॥

अथ रसलक्षणमाह—आभ्यन्तरिकप्रदेशे निर्मलगगनमिव नीलवर्ण , वहि प्रदेशे च स्फटिकवदुज्ज्वल , समन्ताच्च मध्यन्दिनसूर्यसदृशभासमान , पारदो रसकर्मणि प्रशस्त , अथचान्त प्रदेशे धूम्रवर्ण , वहिश्च श्वेतरक्तमिश्रवर्ण , समन्ताच्चचित्रवर्ण , पारदो रसकर्मणि त्याज्य ॥ ९ ॥

अथ रसदोषानाह—

नागो वङ्गो मलो वह्निश्चाञ्चल्यञ्च विषं गिरिः ।
असह्याग्निर्महादोषा निसर्गा पारदे स्थिता ॥ १० ॥
व्रणं कुष्ठं तथा जाड्यं दाहं वीर्यस्य नाशनम् ।
मरणं जडतां स्फोटं कुर्वन्त्येते क्रमान्नृणाम् ॥ ११ ॥
तस्माद्रसस्य सशुद्धि विदध्याद्भिषजां वरः ।
शुद्धोऽयममृत साक्षाद्दोषयुक्तो रसो विषम् ॥ १२ ॥

शुद्ध्यादिसस्काररहितपारदस्यनिसर्गदोषानाह—नाग इत्यादि । नाग सीसकदोष , वङ्गदोष , मलदोष अर्थात् खनिजस्थमलसमिश्रणजन्यदोष , वह्निदोषो दाहकत्वादि , चाञ्चल्यदोषश्चापलत्वमेकत्रेस्थित्यभाव इत्यर्थ , विषदोष , गिरिदोष , असह्याग्निदोष अर्थात् सस्कारार्थमग्नौस्थापितस्त्वेदुत्प्लुत्यगमनम्, एतेऽष्टौ स्वाभाविका महादोषा पारदे भवन्ति । अशुद्धपारदसेवनेन नानाविधा व्याधयो जायन्ते तद्यथा—सनागदोषपारदो व्रण, सवङ्गदोषपारद कुष्ठ, समलदोषपारदो जाड्य, मौर्ख्यं कर्तव्याकर्तव्यज्ञानशून्यत्वमित्यर्थ , सवह्निदोषपारद' शरीर दाह ज्वलन, चाञ्चल्य-

दोषजुष्टपारदो वीर्यस्य सप्तमधातो शुक्रस्य नाशनं प्रमेहादिरोगमुत्पाद्य क्षयकरणं, सविषदोषपारदो मरण, सगिरिदोषपारदो जड़तामङ्गस्य वातवाहकसूत्राणा शरीरसञ्चालनादिकार्यकरणरूपशक्तिं विनाश्य सर्वाङ्गादिवातव्याधिजननरूपजडता, तथा च असह्याग्निदोषयुक्तपारद स्फोटं (पादस्फोटादिकम्) सेवनेन जनयति वा पारदस्था १ इमे दोषा क्रमशो व्रणादिकान् रोगान् कुर्वन्तीति । तस्मात्पारदस्य सम्यक्तया शुद्धि कर्तव्या, यत सच्छुद्धपारद पीयूषमिव गुणकरो, दोषयुक्तश्च विष एव ॥१०-१२॥

मतान्तरम्—

**दोषहीनो यदा सूतस्तदा मृत्युज्वरापहः ।**
**शुद्धोऽयममृतः साक्षात् दोषयुक्तो रसो विषम् ॥ १३ ॥**

मतान्तरेण शुद्धाशुद्धपारदगुणानाह–दोषहीन इत्यादि, नागवङ्गादिदोषरहितपारदो मृत्युज्वराणा नाशक, यथाविधिसंशुद्धश्चेत् साक्षात् स्वयमेव अमृतं पीयूषम्, सदोषश्च विषतुल्य एव ॥ १३ ॥

अथ रसशोधनम्—

**अथातः संप्रवक्ष्यामि पारदस्य विशोधनम् ।**
**रसो ग्राह्यः सुनक्षत्रे पलानां शतमात्रकम् ॥**
**पञ्चाशत् पञ्चविंशद्वा दशपञ्चैकमेव वा ।**
**पलाद्धीनो न कर्त्तव्यो रससंस्कार उत्तमः ॥ १४ ॥**

अथाग्रे पारदशोधन लिख्यते–शुभनक्षत्रे भिषजा शतपल (४०० तो०) परिमितपारद शुद्ध्याद्यर्थं ग्रहीतव्य, अथवा पञ्चाशत् (२०० तो०) पञ्चविंशत् (१००) दशपञ्चक (६०तो०) किंवा पञ्च (२० तो०) पलपरिमितपारदो ग्राह्य, अथवा पलात् (४ तो०) हीनो न्यूनो न कर्तव्य । एवं पलहीनपारदसंस्कारो नैव श्रेष्ठ ॥ १४ ॥

मतान्तरम्—

**शतं पञ्चाशतं वापि पञ्चविंशद्दशैव च ।**
**पञ्चैकं वा पलञ्चैव पलार्द्धं कर्षमेव च ॥ १५ ॥**
**कर्षान्न्यूनो न कर्तव्यो रससंस्कार उत्तमः ।**
**प्रयोगेषु च सर्वेषु यथालाभं प्रकल्पयेत् ॥ १६ ॥**

**शुभेऽह्नि विष्णुं परिचिन्त्य कुर्य्यात् सम्यक् कुमारीवटुकार्च्चनञ्च ।**
**सुलोहपाषाणसमुद्भवेऽस्मिन् दृढे च वेदाङ्गुलिगर्भमात्रे ॥ १७ ॥**
**सुतप्तखल्ले निजमन्त्रयुक्तां विधाय रक्षां स्थिरसारबुद्धिः ।**
**अनन्यचित्तः शिवभक्तियुक्तः समाचरेत् कर्म्म रसस्य तज्ज्ञः ॥ १८॥**

मतान्तरेण शुद्ध्याद्यर्थं पारदग्रहणप्रमाणमाह शतमित्यादिना । पारदस्य पलाना शत ( ४००तो० ), पञ्चाशत ( २००तो० ) पञ्चविंशत् ( १००तो० ) दश (४०तो०) पञ्च (२०तो०) किंवा पारदस्यैक पलं, पलस्याप्यर्धं, कर्षमेव (१तो०) ग्राह्यम्, कर्षान्न्यून पारदस्य सस्कारो नैव उत्तम । अथवा येषु येषु प्रयोगेषु यथाकथितपारदप्रमाणवर्णन भवेत् तदनुसारेण तन्मात्र पारदस्य प्रमाण प्रकल्पनीयम । मेघाद्युपद्रवरहिते शुभनक्षत्रयुक्तदिवसे प्रातर्भगवद्विष्णो स्मरण कृत्वा सम्यक् कुमारीवटुकाना पूजन कुर्य्यात् । तदनन्तर तीक्ष्णकान्तलोहनिर्मिते किंवा प्रशस्तपाषाणनिर्मिते चतुरङ्गुलविस्तृतगम्भीरे, दृढे सम्यक् प्रतप्तखल्ले पारदसंस्कारभूमे परितो निजेष्टदेवतामन्त्रयुक्ता रक्षा विधाय स्थिरसारबुद्धिस्तथा रसशास्त्ररहस्यज्ञो भिषक् विषयान्तरव्यावृत्तमनसा शिवभक्तिपूर्वक रसस्य कर्म शोधनादिकर्माणि समाचरेत् ॥ १५–१८ ॥

तप्तखल्लक्षणम्—

**अजाशकृत् तुषाग्निश्च भूगर्त्ते त्रितय क्षिपेत् ।**
**तस्योपरि स्थितं खल्ल तप्तखल्लमिति स्मृतम् ॥ १९ ॥**

तप्तखल्ललक्षणमाह—अजाशकृदित्यादि—पृथिव्या निर्मिते स्वल्पगर्ते अजाया शकृत् विष्ठा ( सूखीमींगने ) यवगोधूमधान्याना तुषान् अग्निञ्च प्रक्षिप्य प्रदीप्ते वन्हौ तदुपरि खल्ल स्थापयेत् । एतदेव तप्तखल्ललक्षणं स्मृतम् ॥ १९ ॥

अथ ( अघोर ) रक्षामन्त्र —

**अघोरेभ्योऽथ घोरेभ्यो घोराघोरतरेभ्यश्च ।**
**सर्वत. सर्वसर्वेभ्यो नमस्ते रुद्ररूपिभ्यः ॥ २० ॥**

"अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यश्च, सर्वत सर्वसर्वेभ्यो नमस्ते रुद्ररुपिभ्य " अस्य मन्त्रस्य जपं स्मरणञ्च कृत्वा पारदस्य संस्कारमारभेत् ॥ २० ॥

अथ रसनिगड —

स्नुह्यर्कसम्भवं क्षीरं ब्रह्मबीजञ्च गुग्गुलुः ।
सैन्धवं द्विगुणं मर्द्यं निगडोऽयं महोत्तमः ॥ २१ ॥

अथ रसनिगडमाह–स्नुहीत्यादि । स्नुही वज्री, अर्क ताभ्या सम्भव यत् क्षीरं दुग्ध तत्, ब्रह्मबीजं पलाशबीज, गुग्गुलु पुर, सैन्धव सिन्धुजम् । एतत् सर्वं सम्मेल्य पारदापेक्षया द्विगुण ग्रहीतव्यम् । यथा स्नुहीक्षीरादिक प्रत्येकं वस्तु द्वितोलकञ्चेत् सर्वं वस्तुजात दशतोलक भवति, अत एभिस्सह पञ्चतोलकपारदं खल्वे सस्थाप्य सम्यक्तया मर्दन कर्तव्यम्, इत्थं रसस्य महोत्तमो निगडो भवति ॥२१॥

अथ साधारणशुद्धि —

षोडशांशैर्भिषक् चूर्णैरेकत्र मर्दयेद्रसम् ।
प्रत्येकं प्रत्यहं दत्त्वा सप्तवारं विमर्दयेत् ॥ २२ ॥

भिषक् पारदापेक्षया षोडशाशमात्रापरिमितैस्तत्तत्पारदशोधकद्रव्यैस्सह एकत्र खल्वे रस पारद मर्दयेत् । प्रत्यह प्रतिदिवस प्रत्येक एकं, एक चूर्ण पारदे प्रक्षिप्य काञ्जिकादिद्रवेण सह त विमर्दयेत्, इत्थ षोडशाशपरिमितैकैकस्य शोधकद्रव्यचूर्णस्य वारंवार निक्षेपणेन सप्तभावना देया अनया रीत्या सर्वेषा शोधकद्रव्यचूर्णाना घृतकुमार्यादिद्रवैस्सह सप्तसप्तभावना प्रदेयेति ग्रन्थकर्तुरभिप्राय ॥ २२ ॥

विशेषशुद्धिमाह—

सोर्णैर्निशेष्टकाधूम-जम्बीराम्बुभिरादिनम् ।
मर्दितः काञ्जिकैर्धौतो नागदोषं रसस्त्यजेत् ॥ २३ ॥
त्रिशालाङ्कोठचूर्णेन वङ्गदोषं विमुञ्चति ।
राजवृक्षो मलं हन्ति चित्रको वह्निदूषणम् ॥ २४ ॥
चाञ्चल्यं कृष्णधुस्तूरं त्रिफला विषनाशिनी ।
कटुत्रयं गिरिं हन्ति असह्याग्निं त्रिकण्टकः ॥ २५ ॥
प्रतिदोषं कलांशेन तत्तच्चूर्णं सकन्यकम् ।
उद्धृत्योष्णारनालेन मृत्पात्रे क्षालयेत् सुधीः ।
एवं संशोधितः सूतः सप्तकञ्चुकवर्जितः ॥ २६ ॥

अथ पारदस्य विशेषशुद्धिमाह । सोर्णैरित्यादिना, सोर्णैं मेषलोमसहितै, निशा

हरिद्रा, इष्टका इष्टिकाचूर्णं, धूमो महानसीयधूम , जम्बीराम्बु जंभीरनिम्बूरस एभि-र्द्रव्यैस्सह खल्वे, आदिन दिनपर्यन्त, वा वृद्धव्यवहारत सप्तदिवसपर्यन्त मर्दित पश्चात् काञ्जिकैर्धौत पारदो नागदोष सीसकदोष त्यजेत् ॥ २३ ॥

विशाला ऐन्द्रवारुणी गोरक्षकर्कटीवा, अङ्कोट अङ्कोटक ( अङ्कोलं वा, ) एतयो प्रत्येकं कलाशप्रमित चूर्णं गृहीत्वा घृतकुमारिकास्वरसेन सार्द्ध विमर्दित पारदो वङ्गदोष विमुञ्चति । तथा राजवृक्ष --आरग्वध ( अमलतास ) तस्य फलम-ज्जया मर्दित पारदा मलदोषं जहाति । चित्रक अनलनामा ( चीता ) तस्य स्वर-सेन सह मर्दित पारदो वह्निदोष त्यजति । कृष्णधुस्तूरस्वरसेन चाञ्चल्य नश्यति । त्रिफला वरा तस्या क्वाथेन चूर्णेन वा सह पारदस्य मर्द्दनेन विषनाशनं भवति । कटुत्रयं त्रिकटु ( सोंठ, मीर्च, पीपल ) पारदस्य गिरिं गिरिदोष नाशयति । त्रिकण्टको गोक्षुर ( गोखरु ) पारदस्य असह्याग्निदोष हन्ति । पारदस्य नागा-दयो ये दोषा सन्ति तेषा विनाशार्थं तत्तद्दोषनाशकभेषजद्रव्याणा पृथक् २ पारदा-पेक्षया कलांशेन षोडशांशमात्रया चूर्णं प्रक्षिप्य कन्याम्बुना पारदं विमर्द्य, उष्णा-रनालेन मृत्पात्रे सुधी प्रक्षालयेत् । एवं अमुना प्रकारेण संशोधित सम्यक् विशो-धित , सूत पारद , सप्तकञ्चुकदोषैर्विरहितो भवति ॥ २४-२६ ॥

मतान्तरम्—

**श्रीखण्ड देवकाष्ठञ्च काकजङ्घाजयाद्रवैः ।**
**कर्कटीमूषलीकन्या-द्रव दत्त्वा विमर्दयेत् ।**
**दिनैकं पातयेत् पश्चात् त शुद्ध विनियोजयेत् ॥ २७ ॥**

श्रीखण्ड श्वेतचन्दन, देवकाष्ठ देवदारु, काकजङ्घा काकनासा ( केषाञ्चिन्मतेन गुञ्जा ) जयाद्रवो विजयारसस्तैस्सह, तथा च कर्कटी, मूषली तालमूली, कन्या-घृतकुमारी एषा द्रव्याणाञ्च रसेन सह पारदं पृथक् २ दिनैकं एकदिवसपर्यन्तं विमर्दयेत् । सर्वैस्सह मर्द्दनानन्तरमूर्ध्वपातनं कृत्वा गृह्णीयात् । इत्थ शुद्ध तं रसं रसनिर्माणकार्येषु प्रयोजयेत् ॥ २७ ॥

मतान्तरम्—

**कुमार्य्या च निशाचूर्णैर्दिनं सूत विमर्दयेत् ।**
**पातयेत् पातनायन्त्रे सम्यक् शुद्धो भवेद्रसः ॥ २८ ॥**

कुमार्या स्वरसेन निशाचूर्णैर्हरिद्राचूर्णैश्च सह सूत पारद, दिनैकमेकदिवसपर्यन्त विमर्द्दयेत् । पश्चात् ऊर्ध्वपातनयन्त्रेणोर्ध्वपातन कुर्यात् । एतेन कर्मणा रस सम्यक्तया शुद्धो दोषहीनो भवेत् ॥ २८ ॥

मतान्तरम्—

**रसस्य द्वादशांशेन गन्धं दत्त्वा विमर्द्दयेत् ।**
**जम्बीरोत्थैर्द्रवैर्यामं पाच्यं पातनयन्त्रके ।**
**पुनर्मर्द्य पुनः पाच्यं सप्तवारं विशुद्धये ॥ २९ ॥**

रसस्य पारदस्यापेक्षया तस्मिन् द्वादशांशं शुद्धगन्धक सम्मेल्य खल्वे विमर्द्दयेत् । ततश्च जम्बीरनिम्बूस्वरसेनापि याम प्रहरैकं यावत् विमर्द्दयेत् । पश्चात् ऊर्ध्वपातनयन्त्रेण पारदस्योर्ध्वपातन कृत्वा ग्रहण कर्तव्यम् । पुनस्तावन्मात्रेण गन्धकेन सह पारदस्य खल्वे मर्द्दनविधिना कज्जलीं कृत्वा जम्बीरनिम्बूरसेन यामैकं यावत् विमर्द्दनञ्च विधाय पातयेत् । इत्थं पारदस्य सम्यक् विशुद्धये शुद्ध्यर्थमेषाक्रिया सप्तवारं कर्तव्या ॥ २९ ॥

मतान्तरम्—

**जयन्त्या वर्द्धमानस्य चार्द्रकस्य रसेन च ।**
**वायस्याश्चानुपूर्व्यैवं मर्द्दनं रसशोधनम् ॥ ३० ॥**
**एषां प्रत्येकशस्तावत् मर्द्दयेत् स्वरसेन च ।**
**यावच्च शुष्कतां याति सप्तवारं विचक्षणः ॥ ३१ ॥**
**उद्धृत्योष्णारनालेन मृद्भाण्डे क्षालयेत् सुधीः ।**
**सर्व्वदोषविनिर्मुक्तः सप्तकञ्चुकवर्जितः ।**
**जायते शुद्धसूतोऽयं युज्यते सर्व्वकर्म्मसु ॥ ३२ ॥**

जयन्त्या ( जेतार्क ) पत्राणा स्वरसेन, वर्द्धमानस्य एरण्डस्य, आर्द्रकस्य च स्वरसेन, वायस्या काकमाच्याश्च ( मकोय ) रसेन पृथक् २ क्रमश पारदस्य मर्द्दनेन शुद्धिर्जायते । पूर्वोक्तद्रव्याणा पृथक् २ स्वरसेन तावत् मर्द्दन कर्तव्य यावत् पारदस्यरस शुष्कता नैति । शुष्के पारदस्थरसे पुनस्तस्यैव द्रव्यस्य रसं प्रक्षिप्य मर्द्दन कर्तव्यम् । इत्थ सप्तवारमेकस्मिन्द्रव्यस्वरसे पारदं विमर्द्दयेत् । तत पारदं मृण्मये पात्रे प्रतप्तकाञ्ज्युदकेन प्रक्षाल्य गृह्णीयात् । इत्थ पारद सर्वदोषैर्विनिर्मुक्तस्तथा सप्तकञ्चुकदोषरहितश्च भवति । एव शुद्धपारदस्य सर्वत्र ग्रहण कुर्यात् ॥ ३०-३२॥

मतान्तरम्—

निशेष्टकाधूमरजोऽम्लपिष्टो विकञ्चुकः स्याद्धि ततश्च सोर्णैः।
वरारनालानलकन्यकाभिः सत्र्यूषणाभिर्म्मर्दितस्तु सूतः ॥ ३३ ॥

हरिद्राचूर्णम्, इष्टिकाचूर्णम्, महानसीयधूमरजः, अम्लपिष्टः अम्लपदार्थरसकल्को वा, वराचूर्णं त्रिफलाचूर्णम्, आरनालः काञ्जिकः, अनलः चित्रकः, कन्यका-घृतकुमारीस्वरसः, सत्र्यूषणाभिः त्रिकटुसहिताभिस्तथा सोर्णैः मेषरोमविशिष्टैश्च सप्तदिनपर्यन्तं मर्द्दितः सूतः विकञ्चुकः सप्तकञ्चुकादिदोषनिर्मुक्तो भवति ॥ ३३ ॥

मतान्तरम्—

दिनैकं मर्दयेत् सूतं कुमारीसम्भवैर्द्रवैः।
तथा चित्रकजैः क्वाथैर्मर्दयेदेकवासरम्।
काकमाचीरसैः सार्द्धं दिनमेकन्तु मर्दयेत् ॥ ३४ ॥

सूतं खल्वे कन्याम्बुना एकदिनपर्यन्तं सम्यक् विमर्द्दयेत्,। तथा चित्रकस्वरसेनापि दिनैकम्, एवं काकमाच्या रसेनापि एकदिनं विमर्द्दयेत्। इत्थं पारदः शुद्धो भवति ॥ ३४ ॥

मतान्तरम्—

रसोनस्वरसैः सूतः नागवल्लीदलोत्थितैः।
त्रिफलायास्तथा क्वाथै रसो मर्द्यः प्रयत्नतः ॥ ३५ ॥
ततस्तेभ्यः पृथक् कृत्वा सूतं प्रक्षाल्य काञ्जिकैः।
सर्वदोषविनिर्मुक्तं योजयेत् रसकर्म्मसु ॥ ३६ ॥

प्रथमं पारदं रसोनस्वरसैः( लहसुन )स्सह मर्द्दयेत्। ततो नागवल्लीदलेभ्यः ताम्बूलपत्रेभ्यो निर्गतस्वरसैस्ततश्च त्रिफला वरा तस्याः क्वाथैः सप्रयत्नं सम्यक् विमर्द्य तेभ्यः पृथक् कृत्वा काञ्जिकैः समीचीनं प्रक्षाल्य रसं गृह्णीयात्। एवं सर्वदोषरहितं तं रसादिनिर्माणकार्येषु प्रयोजयेत् ॥ ३५-३६ ॥

अथोर्द्ध्वपातनम्—

भागास्त्रयो रसस्यार्क-भागमेकं विमर्द्दयेत्।
जम्बीरद्रवयोगेन यावदायाति पिण्डताम् ॥ ३७ ॥
तत्पिण्डं तलभाण्डस्थमूर्द्ध्वभाण्डे जलं क्षिपेत्।

कृत्वाऽऽलवालकं वाऽपि ततः सूतं समुद्धरेत् ।
ऊद्र्ध्वपातनमित्युक्तं भिषग्भिः सूतशोधने ॥ ३८ ॥

अथ रसायने विशेषशुद्धिप्रदर्शयितु पारदस्य ऊद्र्ध्वपातनविधिमाह—भागा इति । रसस्य त्रयोभागा ( ३ तो० ) अर्कस्य ताम्रचूर्णस्य एको भाग ( १ तो ) खल्वे द्वावपि निक्षिप्य जम्वीरद्रवयोगेन जम्म्भीरीनिम्वूरसेन सह तावत् मर्द्दयेत् यावदुभौ पिण्डता प्राप्नुयाताम् । पश्चात्त पिण्ड तलभाण्डस्यान्त सस्थाप्य तलभाण्डस्य मुखोपरि द्वितीयभाण्डस्य मुख सम्यक् सस्थाप्य सवस्त्रस्निग्धमृदा उभयभाण्डमुखसन्धिबन्धन कृत्वा चूल्यामुपरि यन्त्रमेनं सस्थापयेत् । ऊर्ध्वभाण्डस्य पीठप्रदेशे चैकं शीतजलप्रक्षेपार्थमालवाल जलाधारं गोधूमचूर्णपिष्टया माषचूर्णपिष्टया वा कुर्यात् । पश्चादधो वह्निं प्रज्वालयेत् आलवालजलञ्च वारम्वारं परिवर्तनीयम् । पञ्च वा षट् यामपर्यन्त वह्निप्रदानेन तलभाण्डस्यपारद ऊद्र्ध्वभास्याभ्यन्तरिकप्रदेशे शीतलता सम्प्राप्य सूक्ष्मचूर्णरूपेण सलग्नो भवति । पश्चात् स्वाङ्गशीतं तं यन्त्रं विभिद्य ऊर्ध्वभाण्डसलग्न पारद यत्नतो निष्कास्य शुद्धवस्त्रेण च संसार्य गृह्णीयात् । भिषग्भिर्द्वैद्यै सूतस्य शोधनार्थमेतदूद्र्ध्वपातनयन्त्रं प्रकीर्तितम् । अनया क्रियया पारदसम्मिश्रितान्यधातवो भाण्डस्याध प्रदेश एव तिष्ठन्ति ॥ ३७–३८ ॥

अथाध पातनम्—

नवनीताह्वयं गन्धं घृष्ट्वा जम्भाम्भसा दिनम् ।
वानरीशिग्रुशिखिभिः सैन्धवासुरिसंयुतैः ॥ ३९ ॥
नष्टपिष्टं रसं कृत्वा लेपयेदूद्र्ध्वभाण्डके ।
ऊद्र्ध्वभाण्डोदरं लिप्त्वाऽधोभाण्डं जलसंयुतम् ॥ ४० ॥
सन्धिलेपं द्वयोः कृत्वा तद् यन्त्रं भुवि पूरयेत् ।
उपरिष्टात् पुटे दत्ते जले पतति पारदः ।
अधःपातनमित्युक्तं सिद्धाद्यैः सूतकर्म्मणि ॥ ४१ ॥

अथ अधःपातनयन्त्रमाह नवनीतेति—नवनीताह्वयं गन्धं रसतुल्यमामलासारगन्धक, जम्भाम्भसा जम्वीरनिम्वूरसेन सह दिनमेकं विमर्द्दय पश्चात् सैन्धवं सिन्धुजं लवणं, आसुरी श्वेतसर्षप , आभ्या सहितै , वानरी ( केवांचवीज ), शिग्रु ( सहजन ), शिखी अपामार्ग , चित्रको वा, उपर्युक्तपिष्टगन्धकञ्च, तैस्सह

मर्द्दनयोगेन रस नष्टपिष्ट सम्यक्पिष्टतुल्य कल्कस्वरूप वा कृत्वा ऊर्द्ध्वभाण्डस्याभ्यन्तरिकप्रदेशे लेपयेत्, अधोभाण्डे च शीतल जल प्रपूर्य सवस्त्रमृदा उभयभाण्डमुख परस्परं सयोज्य सन्धिवन्धनमाचरेत्। शुष्कता गते सन्धिलेपे भूमौ रचितगर्ते त यन्त्रं सस्थाप्य वन्योपलैरुपरिष्टात् पुट प्रदेयम् । इत्थमूर्द्ध्वभाण्डसलिप्तपारदो वह्नियोगेनाधस्थभाण्डजले पतति । स्वाङ्गशीतभूत यन्त्र विभिद्य रसं गृह्णीयात्। अनया क्रियया उर्द्ध्वपातनविधिना पारदेन सह समागता धातव उपरि एव तिष्ठन्ति पारदश्च तैर्विनिर्मुक्तोऽधो जले पतति ॥३९-४१॥

अथ तिर्य्यक्पातनम्—

**घटे रसं विनिक्षिप्य सजल घटमन्यकम् ।**
**तिर्य्यङ्मुख द्वयोः कृत्वा तन्मुख रोधयेत् सुधीः ॥ ४२ ॥**
**रसाधो ज्वालयेदग्नि यावत् सूतो जल विशेत् ।**
**तिर्य्यक्पातनमित्युक्त सिद्धैर्नागार्जुनादिभि ॥ ४३ ॥**

अथ रसस्य तिर्यक्पातनमाह घटे रसमित्यादि–एकस्मिन् घटे रम विनिक्षिप्य, अन्यस्मिद् घटे च जलविनिक्षिपेत्। पश्चादुभयोर्मुख तिर्यक् सयोज्य सवस्त्रवमृदा सन्धिवन्धन सुधी समाचरेत्। रसपूरितघटस्याधो वह्नि प्रज्वालयेत्। पश्चात् वह्नियोगेन पारदो जलविशिष्टघटे गच्छति। एतत् यन्त्र नागार्जुनादिभि सिद्धवैद्यै । "अथ पातनम्, प्रकीर्तितम्। अन्यच्च एकस्मिन् भाण्डे रस निक्षिप्य तन्मुख रोधयेत्। अन्यस्मिन्भाण्डे च शीतलजल प्रपूर्य तस्य मुखमपि सम्यक् रोधयेत् । पश्चात् रसयुक्तभाण्डस्य ग्रीवाया अध उदरप्रदेशे छिद्र कृत्वा वशनिर्मितामेका नलिका तिर्यक्रूपेण तस्मिन् छिद्रे निवेशयेत्। नालिकायाश्चान्य मुख जलभाण्डस्य ग्रीवाया अध प्रदेशे छिद्रं कृत्वा निवेशनीयम्। उभयभाण्डस्य छिद्राणि च सम्यक् निरुध्य चूलिकास्थरसभाण्डस्याधो वह्निं प्रज्वालयेत्। एतत्तिर्यक् पातनयन्त्रम् ॥ ४२-४३ ॥

अथ बोधनम्—

**एव कदर्थित सूत पण्डत्वमधिगच्छति ।**
**तन्मुक्तयेऽस्य क्रियते बोधन कथ्यते हि,तत् ॥ ४४ ॥**
**विश्वामित्रकपाले वा काचकूप्यामथापि वा ।**

सूते जलं विनिक्षिप्य तत्र तन्मज्जनावधि ॥ ४५ ॥
पूरयेत् त्रिदिनं भूम्यां गजहस्तप्रमाणतः ।
अनेन सूतराजोऽयं षण्डभावं विमुञ्चति ॥ ४६ ॥

अथ पारदस्य बोधनसंस्कारमाह—एवमित्यादि, उपर्युक्तत्रिविधपातनकर्मणा पारद षण्डत्व हीनवीर्यत्वमधिगच्छति, तस्य दोषस्य मुक्तये नाशाय पारदस्य बोधनसस्कार क्रियते । अथ बोधनसस्कारविधिमाह—विश्वामित्रकपाले नारिकेल-खर्परे काचकुप्या वा पारद निक्षिप्य तस्मिन् जलं प्रक्षिपेत् जलमात्रा तु यथा पारदस्य सम्यक् मज्जनं भवेत् तावज्जलं पूरणीयम् । पश्चात् भूमौ गजहस्तपरिमितं त्रिंशदङ्गुलीमित गर्तं विधाय तस्मिन् पारद जलयुक्त नारिकेलखर्परस्थ वा पारदं त्रिदिनपर्यन्तं सस्थाप्यम् । अनेन कर्मणा पारद षण्डभाव विमुञ्चति ॥ ४४–४६ ॥

अथ हिङ्गुलाकृष्टो रस —

अथवा हिङ्गुलात् सूतं ग्राहयेत् तन्निगद्यते ।
जम्बीरनिम्बुनीरेण मर्दितो हिङ्गुलो दिनम् ॥ ४७ ॥
ऊर्द्ध्वपातनयन्त्रेण ग्राह्यः स्यान्निर्मलो रसः ।
कञ्चुकैर्नागवङ्गाद्यैर्निर्मुक्तो रसकर्म्मणि ।
विना कर्म्माष्टकेनैव सूतोऽयं सर्वकर्म्मकृत् ॥ ४८ ॥

अथ हिङ्गुलातपारदनिष्कासनविधिमाह—अथवेति अथवा खनिजपारदं विहाय हिङ्गुलातपारदो ग्राह्य । "विधि ", एकस्मिन्पाषाणखल्वे हिङ्गुलं सम्यक् विचूर्ण्य जम्बीरनिम्बुरसेन हिङ्गुलमाप्लाव्य एकदिनपर्यन्तं मर्दयेत् । पश्चात् तस्य चक्रिका विधाय सशोष्य च ऊर्ध्वपातनयंत्रेण निर्मलरसो ग्राह्य । एवं हिङ्गु-लाकृष्टो रसो नागवङ्गादिदोषै सप्तकञ्चुकदोषैश्च विरहितो भवति। तथा च रसादि-कार्येषु स्वेदनमर्दनाद्यष्टकर्मविनैव हिङ्गुलोत्थसूत सर्वसिद्धिप्रदो भवति ॥४७–४८॥

अष्टकर्म यथा—

स्वेदनं मर्दनञ्चैव मूर्च्छनोत्थापने तथा ।
पातनं बोधनञ्चैव नियामनमतः परम् ॥ ४९ ॥
दीपनञ्चेति संस्काराः सूतस्याष्टौ प्रकीर्त्तिताः ॥ ५० ॥

अथ पारदस्य अष्टौ संस्कारा –स्वेदनम्, मर्दनम्, मूर्च्छनम्, उत्थापनम्,

पातनम्, बोधनम्, नियामनम्, दीपनञ्च एते सूतस्य अष्टादशसंस्कारा भवन्ति तेषां लक्षणम्, अथ स्वेदनलक्षणम्—

दोलायन्त्रे स्थापयित्वा रसेन्द्रं क्षारैरम्लैरौषधैर्वा कषायैः।
युक्त्या यत्स्यात् पाचनं स्वेदनं तत्प्राज्ञैरुक्तं दोषशैथिल्यकारि ॥

स्वेदनविधिः—त्र्यूषणं मूलकासुर्यौ पटुकार्द्रकवह्नयः।
तत्कल्के काञ्जिके सूतं स्वेदयेद्दिवसत्रयम् ॥

अथ मर्दनलक्षणम्—क्षाराद्यैरौषधैर्वा यत् खल्वे सूतस्य पेषणम्।
तन्मर्दनं बुधैः प्रोक्तं बहिर्मलनिवृत्तये ॥

मर्दनविधिः—सैन्धवं सदनधूमआसुरी यामिनी लशुनमार्द्रकं वरा।
षोडशांशं क्षिपेत् सर्वमेतद्रसान्मर्दयेद्रसवरादिनत्रयम् ॥

अथ मूर्च्छनलक्षणम्—ग्रहकन्यादिभिर्द्रव्यैर्नष्टपिष्टत्वसाधनम्।
दोषत्रयनिवृत्त्यर्थं तन्मूर्च्छनमिहोच्यते ॥

मूर्च्छनविधिः—यवाग्रजं स्वर्जिका च तथा लवणपञ्चकम्।
अम्लौषधानि विबुधः प्रक्षिप्य सूतके दृढम् ॥
तावत्सुपेषयेद्यावन्नष्टपिष्टत्वमाप्नुयात्।
इत्थं समूर्च्छितः सूतो विमुञ्चति मलत्रयम् ॥

अथ उत्थापन लक्षणम्—स्वेदाद्यैर्यद्रसेन्द्रस्य मूर्च्छाव्यापत्तिनाशनम्।
पुनः स्वरूपकरणं तदुत्थापनमीरितम् ॥

उत्थापनविधिः—जम्बीरमातुलुङ्गाद्यैः पेषयेदातपे रसम्।
वसनात्सारयेत्सम्यगुत्थितो जायते रसः ॥

पातनमिति—ऊर्द्ध्वादिपातनम् तदुक्तमेव। बोधनमपि "विश्वामित्रकपाले" वा, इत्यादिना चोक्तम्।

अथ नियामनलक्षणम्—बोधनाल्लब्धवीर्यस्य रसस्य स्वेदनं हि यत्।
चापल्यविनिवृत्त्यर्थं तन्नियामनमीरितम् ॥

नियामनविधिः—अम्लिकानागिनिम्बाम्बु वन्ध्याब्दकितवोद्भवैः।
रसैः संस्वेदितः सूतो नियतः नियतो भवेत् ॥

अथवा—नियामकगणादिष्टैः समस्तव्यस्तभेषजैः।
पूर्वदर्शितमार्गेण भिषक् कुर्यान्नियामनम् ॥

अथ दीपनलक्षणम्—

दोलायन्त्रे स्थापयित्वा रसेन्द्र क्षाराद्यैर्यत् पाचन स्याद्यथाऽयम् ।
ग्रासार्थी वा जारणे च प्रगल्भ शास्त्रज्ञैस्तद्दीपन सम्प्रदिष्टम् ॥

दीपनविधि —कासीस मरिच तथैव तुवरी शोभाञ्जन काञ्जिकम् ।
सौभाग्यं पटुपञ्चकञ्च दहनो राजीसम मेलयेत् ॥
निक्षिप्याथ दिनद्वय बुधवरो दोलाख्ययन्त्रे पचेत् ।
ग्रासार्थी खलु जारणे च चतुर सञ्जायते पारद ॥ इति रसतरङ्गिणी ।

इत्थ पारदस्याष्टौ सस्कारा लक्षणविधिपूर्वक प्रदर्शिता ॥ ४९–५० ॥

मतान्तरम्—

**दरदं तण्डुलस्थूलं कृत्वा मृत्पात्रके त्रिदिनम् ।**
**भाव्यं जम्बीररसैश्चाङ्गेर्या वा रसैर्बहुधा ॥ ५१ ॥**
**ततश्च जम्बीरवारिणा चाङ्गेर्या रसेन परिप्लुतम् ।**
**कृत्वा स्थालीमध्ये निधाय तदुपरि कठिनीघृष्टम् ॥ ५२ ॥**
**उत्तानं चारु शराव तत्र त्रिंशद्वारं जलं देयम् ।**
**उष्ण हेय तथैव तदूर्ध्वपातनेन निर्म्मलः शिवजः ॥ ५३ ॥**

अथ मतान्तरेण हिङ्गुलात्पारदनिष्कासनविधिमाह–दरदमित्यादिना । दरद हिङ्गुल तण्डुलवत्स्थूलकणप्राय खल्वे कृत्वा मृण्मये भाण्डे सस्थाप्य तदुपरि जम्बीररसस्य वहुवारं भावना प्रदेया । चाङ्गेरीरसेनापि तद्वदेव भावना देया, तदनन्तर त एकस्मिन्मृण्मयस्थालिकापात्रे निक्षिप्य ता स्थालीं जम्बीररसेन चाङ्गेर्याश्च रसेनापूर्य स्थाल्या मुखोपरि चैकं कठिनीघृष्टं ( खड़िया से लिप्त ) उत्तानीभूतं सुन्दर मृण्मयशराव निधाय सवस्त्रस्निग्धमृदा उभयो सम्यक् सन्धिबन्धन कर्तव्यम् । ततश्चैन भाण्ड चूल्या सस्थाप्याधो वह्नि प्रदेय , शरावस्य गम्भीरगर्तस्वरूपभाग शीतलजलेन आपूरणीयम् । उष्णजलं यत्नतो निष्कास्य पुन शीतलजलेन शरावगर्त पूरणीयम् । इत्थ त्रिंशद्वारमुष्णजल परित्यज्य शीतलजलप्रपूरणेन पारदस्य सम्यक्तया ऊर्ध्वपातन भवति । स्वाङ्गशीतलयन्त्रमवतार्य विभिद्य च सन्धिबन्धन शरावतलसलग्नपारद वस्त्रपूतं कृत्वा गृह्णीयात् । अनेन ऊर्ध्वपातनकर्मणा हिङ्गुलतो नागवङ्गादिदोषनिर्मुक्तनिर्मलपारदप्राप्तिर्भवति॥५१–५३॥

मतान्तरम्—

**पारिभद्ररसै. पेष्य हिङ्गुल याममात्रकम् ।**
**जम्बीराणां रसैर्वाऽथ पचेत् पातनयन्त्रके ॥ ५४ ॥**
**त सूतं योजयेद् योगे सप्तकञ्चुकवर्जितम् ।**
**संशुद्धिमन्तरेणापि शुद्धोऽय रसकर्म्मणि ॥ ५५ ॥**

अन्यमतेन हिङ्गुलाकृष्टरसमाह—पारिभद्रेति । हिङ्गुल खल्वे निक्षिप्य पारिभद्रो निम्वस्तस्य पत्रस्वरसेन यामपर्यन्त सम्यक् पेषयेत् । ततो जम्बीरनिम्बुरसेनापि यामैक पेषयेत् । ततश्च पारदचक्रिका विधाय । अथवा ऊर्द्ध्वपातनयन्त्रस्याधोभाण्डस्याभ्यन्तरिकप्रदेशे हिङ्गुल सलिप्य अधोभाण्डमुखमन्यभाण्डमुखेन सह सयोज्य सवस्त्रमृदा सम्यक् सन्धिवन्धन चरेत् । ततश्चैनमूर्द्ध्वपातनयन्त्र चुल्यामारोप्य वह्निं प्रज्वालयेत् । ऊर्द्ध्वभाण्डपृष्ठोपरि शीतलजलप्रदानप्रवन्ध कार्य । रसयामपर्यन्त मध्यमाग्निदानेन पारदस्य सम्यक् ऊर्द्ध्वपतन भवति । ततोऽवतार्य यन्त्र विभिद्य च सन्धिवन्धन ऊर्द्ध्वभाण्डान्त सलग्नपारद वस्त्रपूतं कृत्वा गृह्णीयात् । अनेन कर्मणा पारदो नागवङ्गदोषै सप्तकञ्चुकदोषैश्च निर्मुक्तो भवति । अन्यशुद्धिमन्तरेणापि तस्य रसकर्मणि प्रयोग क्रियते ॥५४–५५॥

अथ मूर्च्छनम्—

**गन्धकेन रस प्राज्ञ सुदृढ मर्दयेद्भिषक् ।**
**कज्जलाभो यदा सूतो विहाय घनचापलम् ॥ ५६ ॥**
**कज्जलाभो यदा सूतो विहाय रसकोविदै ।**
**दृश्यतेऽसौ तदा ज्ञेया मूर्च्छितो रसकोविदै ।**
**असौ रोगचय हन्यादनुपानस्य योगत. ॥ ५७ ॥**

अथ पारदस्य मूर्च्छनसंस्कारमाह–गन्धकेनेति । शुद्ध पारद खल्वे निक्षिप्य समानभागशुद्धगन्धकेन सह भिषक् सम्यक् दृढ मर्दयेत् । एव मर्दनेन यदा पारद स्वीयस्वाभाविकचाञ्चल्य विहाय कज्जलसदृशवर्णं स्निग्धचूर्णरूपश्च दृश्यते तदा रसशास्त्रपण्डितैरसौ सूत सम्मूर्च्छितो ज्ञेय । असौ मूर्च्छितपारदो विविधानुपानैस्सह ससेवितो रोगाणा समूह विनाशयेत् ॥ ५६–५७ ॥

अथ मारणम्—

**द्विपल शुद्धसूतस्य सूतार्द्धं गन्धक तथा ।**

**कन्यानीरेण संमर्द्य दिनमेकं निरन्तरम् ।**
**रुद्ध्वा तद्भूधरे यन्त्रे दिनैकं मारयेत् पुटे ॥ ५८ ॥**

अथ पारदस्य मारणमाह—द्विपलमित्यादि । शुद्धपारदस्य द्विपलमष्टतोलक शुद्धगन्धकस्य च एकपल ( ४ तो ) खल्वे ( पाषाणमये ) निक्षिप्य सम्यक् मर्दन-योगेन कज्जलीं सञ्चरेत् । पश्चात् तस्मिन् घृतकुमारीस्वरस निक्षिप्य एकदिनपर्यन्त निरन्तर मर्दयेत् । तत सशुष्ककज्जलीं मारकगणोक्तद्रव्यैस्सह भूधरयन्त्रे रुद्ध्वा दिनैक वह्निना पुटेत् । तेन पारदस्य मृतिर्भवति ॥ ५८ ॥

मतान्तरम्—

**भुजङ्गवल्लीनीरेण मर्दयेत् पारदं दृढम् ।**
**कर्कटीकन्दमूषायां सम्पुटस्थं पुटेद्गजे ।**
**भस्म तद् योगवाहि स्यात् सर्वकर्म्मसु योजयेत् ॥ ५९ ॥**

मतान्तरमाह—भुजङ्गवल्लीति । पारद खल्वे निक्षिप्य भुजङ्गवल्ली नागरवेल-पत्र तस्य रसेन सह सम्यक् दृढ मर्दयेत्, तत कर्कटीकन्दस्यान्त पारद निक्षिप्य, अथवा कर्कटीकन्दस्य पेषण कृत्वा तस्य मूषा कुर्यात् , तस्याञ्च रस निक्षिप्य शरावसम्पुटे मूषामवरुध्य च गजपुटे पचेत् । अनेन कर्मणा पारदस्य भस्म भवति । तद् भस्म विविधयोगैस्सह सर्वकर्मसु च प्रयोजयेत् ॥ ५९ ॥

मतान्तरम्—

**श्वेताङ्कोठजटानीरैर्मर्द्यः सूतो दिनत्रयम् ।**
**पुटेत्तु चान्धमूषायां सूतो भस्मत्वमाप्नुयात् ॥ ६० ॥**
**देवदाली हंसपादी यमचिञ्चा पुनर्नवा ।**
**एभिः सूतो विमृद्यः पुटनात् म्रियते ध्रुवम् ॥ ६१ ॥** [ इति भस्म ]

मतान्तरेण भस्मकरणमाह—श्वेताङ्कोठेत्यादि । सूत खल्वे निक्षिप्य श्वेता-ङ्कोठजटा श्वेताङ्कोलमूल तस्य स्वरसेन क्वाथेन वा सह त्रिदिन सम्यक् विमर्द्य अन्धमूषायाञ्च पादमवरुध्य पुटदानेन पारदभस्म भवति ॥ ६ ॥

मतान्तरमाह—देवदालीति । देवदाली हस्तिघोषक (वन्दालडोडा वा) हंस-पदी हंसराज , यमचिञ्चा ( खट्टीईमली ) वनयमानी, पुनर्नवा गदपुर्णा ( साठेडी )

मतान्तरम्—

पलमात्रं रसं शुद्धं तावन्मात्रन्तु गन्धकम् ।
विधिवत् कज्जलीं कृत्वा न्यग्रोधाङ्कुरवारिभिः ॥ ६५ ॥
भावनात्रितयं दत्त्वा स्थालीमध्ये निधापयेत् ।
विरच्य कचचीयन्त्रं वालुकाभिः प्रपूरयेत् ॥ ६६ ॥
दद्यात् तदनु मन्दाग्नि भिषग् यामचतुष्टयम् ।
जायते रससिन्दूरं तरुणादित्यसन्निभम् ।
अनुपानविशेषेण करोति विविधान् गुणान् ॥ ६७ ॥

अथ मतान्तरेण रससिन्दूरनिर्माणविधिमाह—पलमात्रमिति । पलमात्रं शुद्ध पारदम्, ( ४ तो० ८ तो० ) पलमात्रमेव शुद्ध गन्धकं खल्वे निक्षिप्य विधिवत् कज्जलीं कुर्यात् । ततश्च खल्वे एव तां कज्जलीं वटाङ्कुरा न्यग्रोधाङ्कुरा वटशुङ्गा इत्यर्थ ( शाखात अधोलम्बायमानशुङ्गा एव वटाङ्कुरा इति गुरुसम्प्रदाय ) तेषां स्वरसेन क्वाथेन वा सम्यक् आप्लाव्य मर्दयेत्, मर्दनेन शुष्कभूतां कज्जलीं पुनराप्लाव्य मर्दयेत्, इत्थं वारत्रयं भावनात्रितयं दत्वा सप्तवार कर्दमाक्तेन वाससा कृतावरणायां काचकूप्यां तां कज्जलीं प्रपूर्य जलनिर्मितया गुडखटिकाचूर्णपिष्ट्या च तस्या मुखमाच्छादयेत् । पश्चात्तां वालुकायन्त्रे संस्थापयेत् । पश्चात्तु यन्त्र चुल्ल्यामारोप्याधो वन्हि प्रज्वालयेत् । इत्थं द्वादशघण्टापर्यन्त ( ४ प्रहर ) मन्दाग्निदानेन तरुणादित्यसन्निभ रक्तवर्णमित्यर्थ, रससिन्दूर जायते । यथारोग विहितानुपानैस्सह रससिन्दूर सेवनेन विविधान गुणान् करोति ॥ ६५—६७ ॥

मतान्तरम्—

पृथक् समं समं कृत्वा पारदं गन्धकं तथा ।
नरसारं धूमसारं स्फटिकं याममात्रकम् ॥ ६८ ॥
निम्बूरसेन संमर्द्य काचकूप्यां निवेशयेत् ।
मुखे पाषाणखटिकां दत्त्वा मुद्रां प्रलेपयेत् ॥ ६९ ॥
सप्तभिर्मृत्तिकावस्त्रैः पृथक् संशोष्य वेष्टयेत् ।
सच्छिद्रायां मृदः स्थाल्यां कूपिकां तां निवेशयेत् ॥ ७० ॥
पूरयेत् सिकतापूरैः आ-गलं मतिमान भिषक् ।
निवेश्य चुल्ल्यां दहनं मन्दं मध्य खरं क्रमात् ॥ ७१ ॥

प्रज्वाल्य द्वादश यामं स्वाङ्गशीतं समुद्धरेत् ।
स्फोटयित्वा तु मुक्ताभमृदूर्ध्वलग्नं बलिं त्यजेत् ॥
अधःस्थं रससिन्दूरं सर्वरोगेषु योजयेत् ॥ ७२ ॥

अथ मतान्तरेण रससिन्दूरनिर्माणमाह—पृथगित्यादि । शुद्धरसस्य एको भागः, शुद्धगन्धकस्याप्येको भागः शुद्धनवसादरस्यैको भागः, स्थूलभागे महानिम्बगवाक्ष-वल्कमूलपटलचूर्णं तस्याप्येको भागः, स्फटिकस्य एको भागः ग्राह्यः । पूर्वं तत्र पारदगन्धकयोः कज्जलीं कृत्वा तस्मिन् शेषद्रव्याणि प्रक्षिप्य मर्दयेत् । पश्चात् यामपर्यन्तं ( ३ घण्टे ) निम्बूरसेन सर्वं समर्द्य संशोष्य च काचकूप्यां कज्जलीं निक्षिपेत् । काचकूपिकामुखे च पाषाणखटिकां (पत्थरखड़िये का डाट) दत्त्वा जलनिर्मितगुडचूर्णपिष्ट्या मुद्रां सन्धिस्थाने प्रलेपयेत् पश्चात्तस्याः कूपिकायाः सर्वतोपरि किंचिद्दग्धमृत्तिकाजलसंसिक्तवस्त्रपट्टिकालेपनं कुर्यात् संशोष्य च पुनस्तथैव द्वितीयवारं लेपनं कुर्यात् । इत्थं सप्तवारं लेप्यम् । पुनस्तां कूपिकां मध्याधोभागकृतसूक्ष्मच्छिद्रान्वितायां स्थाल्यां अधः किंचित् खटिकां निक्षिप्य तदुपरि संस्थापयेत् पश्चात् कूपिकाकण्ठाधोभागपर्यन्तं स्थालीं वालुकाभिः प्रपूरयेत् । चुल्ल्यामुपरि वालुकायन्त्रं संस्थाप्याधो मन्दं मध्यं खरं दहनं क्रमशो द्वादशयामपर्यन्तं देयम् । स्वाङ्गशीतं यन्त्रमवतार्य विभिद्य च उपरिभागगतं गन्धकं परित्यज्य तदधः कूपीकण्ठसंलग्नं सुरागं रससिन्दूरं गृह्णीयात् । सर्वरोगेषु च यथाविहितानुपानैस्सह प्रयोजयेत् ॥ ६८-७२ ॥

अथ रसकर्पूरम्—

टङ्कणं मधु लाक्षा च ऊर्णा गुञ्जायुतो रसः ।
मर्दितो भृङ्गजद्रावैः दिनैकं चालयेत् पुनः ।
ध्मातो भस्मत्वमाप्नोति शुद्धकर्पूरसन्निभम् ॥ ७३ ॥

अथ रसकर्पूरनिर्माणविधिमाह—टङ्कणमित्यादि । टङ्कणं, मधु, लाक्षा, ऊर्णा मेषरोम गुञ्जा श्वेतगुञ्जा, शुद्धपारदश्च, सर्वं समभागमादाय पेषयेत् भृङ्गराजरसेन च सम्यक् संमर्द्य सम्पुटं कृत्वा दिनैकं यावद्वह्निदानेन शुद्धकर्पूरसन्निभं पारदो भस्मत्वमाप्नोति ॥ ७३ ॥

मतान्तरम्—

पिष्टं पांशुपटु प्रगाढममलं वज्रयस्नुणा नैकशः
सूतं धातुगतं खटीकवलितं तं सम्पुटे रोधयेत् ।

अन्तःस्थं लवणस्य तस्य च तले प्रज्वाल्य वह्निं दृढ
वस्त्रं ग्राह्यमथेन्दुकुन्दधवलं भस्मोपरिस्थं शनै ॥ ७४ ॥
तद्वल्लद्वितयं लवङ्गसहितं प्रातः प्रभुक्तं नृणा-
मूर्ध्वं रेचयति ह्रियाममसकृत् पेयं जलं शीतलम् ।
एतद्धन्ति च वत्सराधिकविषं षाण्मासिकं मासिकं
शैलोत्थं गरलं मृगेन्द्रकुटिलोद्भूतञ्च तात्कालिकम् ॥ ७५ ॥
[ रसकर्पूरमिति रसमञ्जरीकार , श्वेतभस्मेति चन्द्रिकाकार ] ।

मतान्तरेण रसकर्पूरनिर्माणमाह–पिष्टमित्यादि । शुद्धकासीस सैन्धवाख्य लवणञ्च समानमादाय शुद्धपारदेन सह पेषयेत् । तदनु वज्री स्नुही (थूहर) तदम्बुना तदीय-दुग्धेन बहुशो मर्दयेत् । पश्चात् शरावसदृशलोहपात्रे संस्थाप्येतरलोहपात्रमुखेन सह खटिकचूर्णादिना सन्धिबन्धन कुर्यात्, पुनरेत सम्पुट मृण्मयभाण्डे संस्थाप्य तद्भाण्डावशेष लवणेन पूरयेत् । यन्त्रमेतद चुल्ल्यामारोप्य एकदिनपर्यन्त तीव्राग्नि दद्यात् । स्वाङ्गशीत यन्त्रमवतार्य विभिद्य च ऊर्ध्वपात्रसलग्न चन्द्रकुन्दपुष्पसमान-धवल भस्म समाहरेत् । एतदेव रसकर्पूरमुच्यते । प्रयोगविधि —वल्लद्वय ( ३ रत्ती ) रसकर्पूर लवङ्गचूर्णेन सह सेवनेन प्रात काले प्रभुक्त नृणामन्न ह्रियामानन्तर विरेचयति, अस्य भक्षणानन्तर वारम्वारमल्पं स्वादु शीतल जल पेयम् । अस्य सेव-नेन वर्षादप्यधिककालोत्पन्न, षण्मासजन्य मासिकम्वा विष नश्यति । तथा पाषाणा-घातजन्य विषं, सिंहदंष्ट्राघातजन्यं विष, सिंहचिकुरभक्षणोत्थञ्च विष, तात्कालिकम्वा विष नश्यति । रसमञ्जरीकारमतेनास्य रसकर्पूर नाम, चन्द्रिकाकारमतेन च पारदस्य श्वेतभस्म इति नाम वर्तते ॥ ७४—७५ ॥

सर्वाङ्गसुन्दरो रस –

मर्दयेत् रसगन्धौ च हस्तिशुण्डीद्रवैर्दृढम् ।
भूधात्रिकारसैः वाऽपि पर्यन्तं दिनसप्ततः ॥ ७६ ॥
विघृष्य वालुकायन्त्रे मूषायां सन्निवेशयेत् ।
दिनमेकं दहेदग्नौ मन्दं मन्दं निशावधि ॥ ७७ ॥
एवं निष्पाद्यते पीतः शीतः सूतस्तु गृह्यते ।
पर्णखण्डेन तद्गुञ्जां भक्षयेत् सततं हिताम् ॥ ७८ ॥
क्षुद्बोधं कुरुते पूर्वमुदराणि विनाशयेत् ।

जराणां नाशनः श्रेष्ठस्तद्वत् श्रीसुखकारकः ॥ ७९ ॥
हृदयोत्साहजननः सुरूपतनयप्रदः ।
बलप्रदः सदा देहे जरानाशनतत्परः ॥ ८० ॥
अङ्गमर्द्दादिकं दोषं सर्वं नाशयति क्षणात् ।
एतस्मान्नापरः सूतो रसात् सर्वाङ्गसुन्दरात् ॥ ८१ ॥

[ पीतभस्मेति चन्द्रिकाकाराः ]

अथ सर्वाङ्गसुन्दररसनिर्माणविधिमाह—मर्दयेदिति । शुद्धं पारदं शुद्धं गन्धकञ्च समानभागमादाय तत्रैकद्रवो कज्जलीं कृत्वा हस्तिशुण्डीस्वरसेन क्वाथेन वा, तथा मुस्तामलकक्वाथेन क्वाथेन वा पृथक् ७ सप्तदिनपर्यन्तं मर्दयेत् । पश्चात्तद्गोलं संस्थाप्य वालुकायन्त्रे एकदिनपर्यन्तं निशानिशि ( ८ प्रहर ) मन्दाग्निना पचेत् । स्वाङ्गशीतं यन्त्रमवतार्य तस्मात् पीतभस्म गृह्णीयात् । अथ सेवनविधिस्तथा गुणाश्च—अस्य रसस्य गुञ्जापरिमितमात्रां ( १ रत्ती ) ताम्बूलपत्रवाटिकया निक्षिप्य सेवनेन देहदीप्तं सम्पादयति । अयं रसः सेवनेन पूर्वं बुभुक्षां वर्धयति, निखिलान् सद्यः सर्वांश्च गुल्मप्रमेहोदररोगान् विनाशयति, जरां निहन्ति देहकान्तिं सुन्दरां करोति । हृदयस्योत्साहं जनयति, सुन्दरस्वरसमुद्भवं सूते, बलप्रदः, देहस्य जरानाशकः । अङ्गमर्द्दादिकं सर्वं दोषव्यूहं विनाशयति, एतस्मात् सर्वाङ्गसुन्दररसादपरः सूतयोगो नास्ति गुणकरः । सर्वाङ्गसुन्दररसं चन्द्रिकाकाराः पीतभस्मनाम्ना व्यवहरन्ति ॥७९—८१॥

अथ कृष्णभस्म—

धान्याभ्रकं रसं तुल्यं मारयेत् मारकद्रवैः ।
दिनैकं तेन कल्केन वस्त्रं लिप्त्वा तु वर्त्तिकाम् ॥ ८२ ॥
विलिप्य तैलैर्वर्त्तिं तामेरण्डोत्थैः पुनः पुनः ।
तदाज्यभाण्डे प्रज्वाल्य गृह्णीयात् पतितञ्च यत् ॥ ८३ ॥
कृष्णभस्म भवेत् तच्च पुनर्मर्द्यं नियामकैः ।
दिनैकं पातयेत् यन्त्रे कन्दुकाख्ये न संशयः ।
मृतः सूतो भवेत् तच्च तत्तद्रोगेषु योजयेत् ॥ ८४ ॥
श्वेतं पीतं तथा रक्तं कृष्णञ्चेति चतुर्विधम् ।
लक्षणं भस्मसूतानां श्रेष्ठं स्यादुत्तरोत्तरम् ॥ ८५ ॥

अथ कृष्णभस्म निर्माणविधिमाह—धान्याभ्रकमित्यादि । धान्याभ्रकं शुद्धं पारदञ्च

समं २ गृहीत्वा खल्वे मर्दयेत् । तदनु मारकगणप्रयुक्तौषधस्वरसैर्विभाव्य एकदिनावधि-पुटयोगेन मारयेत्, पश्चान्मारकगणौषधद्रव्यैस्सह तस्य कल्क कृत्वा वस्त्रपट्टिका तेन कल्केन विलिप्य वर्तिका कुर्य्यात्, एना वर्तिकामेरण्डतैलेन वारम्वार विलिप्य वह्निना प्रज्वाल्य च घृतलिप्तमृण्मयभाण्डे स्थापयेत्, एवं भाण्डे वर्तिकामुखात् विन्दुश पतित पारद गृह्णीयात्, एतदेव कृष्णभस्म । पुनरप्येतद्भस्म नियामकगणोक्तभेषजचूर्णैस्सह विमर्द्य दिनैक यावत् कन्दुकसज्ञकयन्त्रे पातयेत् । अनया रीत्या निश्चयेन सूतो मृतो भवति, यथाविहितरोगानुपानैस्सह सर्वत्र योजयेत् । श्वेतं, पीत, रक्त कृष्णश्चेति चतुर्विध पारदस्य भस्म भवति । चतुर्विधभस्मना मध्ये उत्तरोत्तर श्रेष्ठ ज्ञेयम्॥८२-८५॥

अथ वज्रमूषाकरणम्—

द्वौ भागौ तुषदग्धस्य चैका वल्मीकमृत्तिका ।
लौहकिट्टस्य भागैकं श्वेतपाषाणभागिकम् ॥ ८६ ॥
नरकेशसमं किञ्चित् छागीक्षीरेण पेषयेत् ।
याममात्र दृढ मर्द्य तेन मूषां प्रकल्पयेत् ॥ ८७ ॥
शोषयित्वा रस क्षिप्त्वा तत्कल्कैः सन्निरोधयेत् ।
वज्रमूषेयमाख्याता सम्यक् पारदस घ्रिका ॥ ८८ ॥

अथ वज्रमूषाकरणविधिमाह—द्वौ भागाविति । अर्धदग्धतुषाना भागद्वयम्, वल्मीकमृत्तिकाया (दीमकगृहमृत्तिका) एको भाग , लौहकिट्ट मण्डूर तस्यैकोभाग , श्वेतपाषाण कठिनी ( खड़िया ) तस्याश्चूर्णस्यैको भाग , नरकेशानाश्चैको भाग , एतान् सर्वान् अजाक्षीरेण यामैक यावत् दृढ सम्पेष्य तेन मूषायन्त्रनिर्माण कृत्वा सशोष्य च तस्या रस प्रपूर्य तस्या मुख तन्निर्माणद्रव्यकल्केनैव सम्यक् रोधयेत् । इयमेव वज्रमूषा रसशास्त्रकारैराख्याता । अस्या पारद सम्यक्तया भस्मादिरूपेण ससिद्धो भवति ॥ ८६—८८ ॥

अथ नियामकगण —

सर्पाक्षी वन्यकर्कोटी कञ्चुकी यमचिञ्चिका ।
शतावरी शङ्खपुष्पी शरपुङ्खा पुनर्नवा ॥ ८९ ॥
मण्डूकपर्णी मत्स्याक्षी ब्रह्मदण्डी शिखण्डिनी ।
अनन्ता काकजङ्घा च काकमाची च पोतिका ॥ ९० ॥

विष्णुक्रान्ता सहचरा सहदेवी महाबला ।
बला नागबला मूर्वा चक्रमर्दकरञ्जकौ ।
पाठा तामलकी नीली जालिनी पद्मचारिणी ॥ ९१ ॥
घण्टा विघण्टा गोजिह्वा कोकिलाक्षो घनध्वनिः ।
आखुपर्णी क्षीरिणी च त्रिपुटी मेषशृङ्गिका ॥ ९२ ॥
कृष्णवर्णा च तुलसी सिंही च गिरिकर्णिका ।
एता नियामकौषध्यः पुष्पमूलदलान्विता ॥ ९३ ॥

अथ नियामकगणमाह—सर्पाक्षीत्यादि । सर्पाक्षी गन्धनाकुली, वन्यकर्कोटी ( वनककोड़ा ) कञ्चुकी क्षीरीशवृक्ष ( कञ्चुकशाकविशेष ), यमचिञ्चिका-अम्लिका ( खट्टी इमली ), शतावरी-बहुसुता ( शतावर ), शङ्खपुष्पी, शरपुङ्खा-प्लीहशत्रु, पुनर्नवा-शोथघ्नी ( गदपूरणा ), मण्डूकपर्णी—भेकपर्णी, मत्स्याक्षी-मत्स्यगन्धा (मछेछीयागोरखापान) ब्रह्मदण्डी, शिखण्डिनी-गुञ्जा, अनन्ता-कृष्णसारिवा, श्वेतसारिवा ( अनन्तमूल ), काकजंघा-नदीकान्ता, काकमाची-ध्वाङ्क्षमाची ( मकोय ), पोतिका-उपोदिका ( पोइशाक ), विष्णुक्रान्ता श्वेतापराजिता, ( वा ), सहचरा ( पियावाना, झिण्टी वेति केचित् ), सहदेवी-महाबला (महाबला पीतपुष्पा सहदेवी च सा स्मृता) महाबला पूर्वं सहदेवी पठिता । सा च महाबलाया पर्यायवाचिका तस्माद् पुनर्महाबलाशब्देन सैव द्विगुणा ग्राह्या, अथवा महाबलाशब्देन अतिबला ( कघी ) ग्राह्या तेन, पुनरुक्तदोषाभाव । एवञ्च बलाचतुष्टयस्य ग्रहणमपि, बला—वाट्यालिका ( खरेटी ), नागबला-गाङ्गेरुकी ( गङ्गेरन ), मूर्वा-मधूलिका, चक्रमर्द -दद्रुघ्न ( पनवाड़ ), करञ्जको नक्तमाल, पाठा अम्बष्ठा, तामलकी भूम्यामलकिका ( पातालआवला ) नीली मधुपर्णिका जालिनी राजकोशातकी ( कड़वीतरोई ), पद्मचारिणी-भार्ङ्गी, घण्टा पाटला ( पाढल ), विघण्टा ( गुलच्छरन्द ), गोजिह्वा गोजिका ( गाजुबा ), कोकिलाक्ष काकेक्षु ( तालमखाना ), घनध्वनि -मुस्तक, आखुपर्ण मूषकपर्णी, क्षीरिणी दुग्धिका ( खिरनीति केचित् ), त्रिपुटी त्रिवृत्, मेषशृङ्गिका अजशृङ्गिका '( मेढासींगी ), कृष्णवर्णा कृष्णतुलसी, तुलसी, श्वेततुलसी, सिंही कण्टकारी ( वासिका वेति केचित् ), गिरिकर्णिका-नीलापराजिता, एता नियामकगणपठिता ओषध्य पुष्पमूलदलसहिता रसकर्मणि ग्राह्या ॥ ८९-९३ ॥

अथ मारकवर्ग —

घनवचाचित्रकगोक्षुरा· कटुतुम्बी दन्तिका जातिः ।
सर्पाक्षी शरपुङ्खा कन्या चाण्डालिनीकन्दम् ॥ ९४ ॥
विषुमुष्टिवज्रवल्ल्यौ लज्जा लाक्षा च देवदाली च ।
सहदेवी नीपकणा निर्गुण्डि चक्रलाङ्गलिके ॥ ९५ ॥
माणार्कचन्द्ररेखा रविभक्ता काकमाचिका चार्कः ।
विष्णुक्रान्ता वायसतुण्डी वज्री च बला शुण्ठी च ॥ ९६ ॥
कोपातकी जयन्ती वाराही हस्तिशुण्डिका रम्भा ।
मत्स्याक्षी यमचिञ्चा हरिद्रे द्वे पुनर्नवाद्वितयम् ॥ ९७ ॥
धुस्तूरकाकजङ्घे शतावरी कञ्चुकी च वन्ध्या च ।
तिलभेकपर्णिदूर्वा मूर्वा च हरीतकी तुलसी ॥ ९८ ॥
गोकण्टकाखुपर्ण्यौ कर्कटीकन्दवर्गलता च ।
मुपली हिंगु-गुडूची शिग्रुर्गिरिकर्णिका महाराष्ट्री ॥ ९९ ॥
मार्कव-सैन्धव-सरणी-सोमलता श्वेतसर्षपोऽसनकः ।
हंसपदी व्याघ्रपदी किंशुकभल्लातकेन्द्रवारुणिकाः ॥ १०० ॥
सर्वञ्चार्द्धांशं वा अष्टादशाधिकं वाऽपि द्रव्यम् ।
रसमारणमूर्च्छादौ युक्तिज्ञैर्विधिवदुपयोज्यम् ॥ १०१ ॥

अथ मारकगणमाह—घनेत्यादि । घनं–मुस्तक, वचा–उग्रगन्धा, चित्रक –अनलनामा, गोक्षुर —त्रिकण्टक , कटुतुम्बी—तुम्बी, दन्तिका—दन्ती, जाति —मालती ( चमेली ), सर्पाक्षी गण्डाली ( गन्धनाकुली वा ), शरपुङ्खा प्लीहशत्रु ( सरफोंका ), कन्या–घृतकुमारी, चाण्डालिनीकन्द, विषमुष्टी कुचेलक , वज्रवल्ली स्नुही, लज्जा ( लज्जावन्ती ), लाक्षा जतु, देवदाली वेणी ( वन्दालडोडा ), सहदेवी महाबला, नीप कदम्ब , कणा पिप्पली, निर्गुण्डी सिन्दुवार , चक्र तगर, लाङ्गलिका कलिहारी, माण मानकन्द , अर्क श्वेतार्क , चन्द्ररेखा सोमराजी, "माणार्कचन्द्ररेखा" इत्यत्र "शलार्कचन्द्रलेखा" इति क्वचित् पाठ , रविभक्ता आदित्यभक्ता ( पाटमाधा इति ख्याता ) काकमाचिका ध्वाङ्क्षमाची, अर्क –रक्तार्क , विष्णुक्रान्ता श्वेतापराजिता, वायसतुण्डी काकनासा वज्री अस्थिसहारी (हाड़जोड़ ) बलावाट्यालिका ( खरेंटी ) शुण्ठी, कोपातकी जालिनी ( कडवीतरोई ) जयन्ती, वाराहीकन्द , हस्तिशुण्डिका,

रम्भा कदली, मत्स्याक्षी मत्स्यगन्धा ( मच्छेछी ), यमचिञ्चा ( कर्चाडमली ), हरिद्रे द्वे—हरिद्रा दारुहरिद्रा च, पुनर्नवाद्वितयं श्वेतरक्तपुनर्नवा, धुस्तूर कनक, काकजङ्घा नदीकान्ता, शतावरी, कसुर्की—शाकविशेष, वन्ध्या—कर्कोटकी, तिल, भेकपर्णी मण्डूकपर्णी, दूर्वा, मूर्वा मधूलिका, हरीतकी, तुलसी गोकण्टक—गोक्षुर, आखुपर्णी, कर्कटी, कन्दवर्गलता, सुपर्णी, हिङ्गु, गुडूची, शिग्रु ( सहजन ), गिरिकर्णिका नीलापराजिता, महाराष्ट्री—जलपिप्पली, मार्कव—भृङ्गराज, सैन्धवलवण, सरणी गन्धप्रसारणी, सोमलता—श्वेतसर्षप, असनः बीजक, हंसपदी, व्याघ्रपदी, किंशुक—पलाश, भल्लातक, इन्द्रवारुणिका, युक्तियुगलवेद्यैः सर्वाणि, अर्धानि, अष्टादशद्रव्याणि वा रसमारणमूर्च्छादौ प्रयोक्तव्यानि ॥ ९४—१०१ ॥

अथ अम्लवर्ग —

**अम्लवेतसजम्बीर लुङ्गाम्लचणकाम्लका ।**
**नागरङ्ग तिन्तिडी च चिञ्चापत्रञ्च निम्बुकम् ॥ १०२ ॥**
**चाङ्गेरी दाडिमञ्चैव करमर्द तथैव च ।**
**एष चाम्लगणः प्रोक्तो वेतसाम्लसमायुतः ॥ १०३ ॥**

अथ अम्लवर्गमाह—अम्लवेतमेत्यादि । अम्लवेतस चुक्र, जम्बीर दन्तशठ ( वृहज्जम्बीरीनिम्बू ), लुङ्गाम्ल मातुलुङ्ग, तिन्तिडीकमिति भावप्रकाशनिघण्टु यथा—"वृक्षाम्ल तिन्तिडीकञ्च चुक्र स्यादम्लवृक्षकम्" इति चणकाम्ल चणकपत्रसत्वम्, नागरङ्ग नारङ्गा, ( सन्तरा औरेञ्ज ) तिन्तडी अम्लिका ( इमली टेमेराइण्डस्ट्री ) चिञ्चापत्र अम्लिकापत्रम्, निम्बुक निम्पाक निम्बूवा, चाङ्गेरी चुक्रिका अम्बष्ठा वा, दाडिम दन्तबीज ( अनार ) करमर्द सुषेण, यातु लघुफला सा करमर्दिका, (करौंदा) कमरङ्गश्च ( कमरख) वेतसाम्लसमायुत एषोऽम्लपदार्थाना गण प्रोक्त ॥१०२–१०३॥

अथ लवणवर्ग —

**लवणानि च कथ्यन्ते सामुद्र सैन्धवं विडम् ।**
**सौवर्चल रोमकञ्च चुल्लिकालवण तथा ॥ १०४ ॥**

अथ लवणवर्गमाह—लवणानीति । समुद्रजलनिर्मित सामुद्रम्, सैन्धव खनिजोत्पन्नम्, ( सेंधालूण सोडियम् क्लोराइड ) विड पाक्य द्राविडदेशोत्पन्न वा, सौवर्चल रुचक ( कालानमक, ( अनाक्या क्लोराइड ), रोमक गडाख्यम् ( दे०-

भा० साकनमक ), चुल्लिकालवण नवसादर । इमानि लवणवर्गोक्तलवणानि जानीयाद्बुध ॥ १०४ ॥

अथ मूत्रवर्ग —

**मूत्राणि हस्तिकरभ-महिषीखरवाजिनाम् ।**
**गोऽजाऽवीनां स्त्रियाः पुंसां मूत्रवर्ग उदाहृतः ॥ १०५ ॥**

अथ मूत्रवर्गमाह—मूत्राणीति । हस्तिमूत्रम, करभ उष्ट्र (मरुस्थलमेदपाटदेशयो र्बाहुल्येन लभ्यते) स्तस्य मूत्रम्, महिषीमूत्रम् (भैंस वफोलोज), खरो वैशाखनन्दनस्तस्यमूत्रम् (गर्दभमूत्र), वाजी अश्वस्तस्य मूत्रम् एषा पुसा मूत्र प्रशस्यते, किन्तु अत्र महिष्या अपि पाठ आगत ,मूत्रस्तु स्त्रीजातेरेव महिष्या नतु महिषस्य ग्राह्य ,कुत "गोऽजावीमहिषीणाञ्च स्त्रीणा मूत्रमुदाहृतम्"इतिशास्त्रविरोधात्। गोमूत्रम्, अजामूत्रम्, (वकरीमूत्र), अवीना मेषाणा मूत्रम्, अत्र स्त्रीणामेव मूत्र प्रशस्यते॥१०५॥

अथ द्रावकवर्ग —

**गुञ्जाटङ्कणमध्वाज्य-गुडा द्रावकपञ्चकाः ॥ १०६ ॥**

अथ द्रावकवर्गमाह—गुञ्जा श्वेतगुञ्जा, टङ्कणं सौभाग्यम् (सुहागा), मधु, आज्यं घृतम्, गुड पुराणगुड एते पञ्चपदार्था धातूना द्रवीकरणत्वात् द्रावका कथ्यन्ते ॥ १०६ ॥

अथ पित्तवर्ग.—

**पित्तं पञ्चविध मत्स्य-गवाश्वरुरुवर्हिजम् ॥ १०७ ॥**

अथपित्तवर्गमाह—पित्तमिति । गो पित्तम्, मत्स्यपित्तम्, अश्वपित्तम्, रुरुनामकमृगपित्तम, वर्ही मयूरस्तस्य पित्तम, इति पञ्चविध पित्तमुच्यते ॥ १०७ ॥

अथ क्षारवर्ग —

**स्वर्जिका टङ्कणञ्चैव यवक्षार उदाहृतः ॥ १०८ ॥**

अथ क्षारवर्गमाह—स्वर्जिका सज्जी, यावशूको यवक्षार , टङ्कणं सौभाग्यम् इति क्षारवर्गपदार्थपरिगणनम् । शास्त्रान्तरे तु–'मुधापलाशशिखरिचिंचार्कतिलनालजा । स्वर्जिका यावशूकश्च क्षाराष्टकमुदाहृतम् ॥ १०८ ॥

अथ रससेवाक्रमफले—

प्रातरेव पुरतो विरेचनं तद्दिनोपवसनं विधाय च ।
तत्परेऽहनि च पथ्यसेवनं तत्परेऽहनि रसेन्द्रसेवनम् ॥१०९॥
बुद्धिः स्मृतिप्रभाकान्ति-बलञ्चैव रसस्तथा ।
वर्द्धन्ते सर्व एवैते रससेवाविधौ नृणाम् ॥ ११० ॥

अथ रससेवाक्रममाह—प्रातरिति । रसायनार्थं रससेवनकर्त्ता प्रथमदिवसे प्रभाते यथाकोष्ठं मृदुमध्यमादिविरेचनं गृह्णीयात्, विरेचनदिवसे चोपवासं चरेत् । द्वितीय-दिवसे कृशरादिकं पथ्यभोजनं भक्षयेत् । तृतीयदिवसे रसेन्द्रसेवनं विधिपूर्वकमार-भेत् । विधिपूर्वकरसेन्द्रसेवनकर्त्तॄणां नृणां बुद्धिर्मनीषा, स्मृतिः स्मरणं, प्रभा दीप्तिः, कान्तिः शरीरशोभा, बलं वीर्यम्, रसो भोजनपचनसमयजातः सप्तधातुप्रथमावयवः, सर्वदेहपोषको भोज्यान्नसारभागः, एते वर्द्धन्ते ॥ १०९—११० ॥

तत्र पथ्यकथनम्—

हितं मुद्गाम्बु दुग्धाज्यं शाल्यन्नञ्च विशेषतः ।
शाकं पौनर्नवं वास्तु मेघनादञ्च यूथिकाम् ॥ १११ ॥
लवणं मागधीं मुस्तं पञ्चमूलानि भक्षयेत् ।
अनुपानन्तु दातव्यं ज्ञात्वा रोगादिकं भिषक् ॥ ११२ ॥

अथपथ्यमाह—हितमित्यादि । रसेन्द्रसेवनकर्त्रे पानार्थं मुद्गाम्बु मुद्गयूषम्, गो-दुग्धम्, गोघृतम्, शाली तण्डुलौदनम्, पौनर्नवं, वास्तुकं ( बथुआशाक ) मेघनाद-तण्डुलीयशाकम्, यूथिकाशाकञ्च दद्यात् । सैन्धवं लवणम्, मागधीं भोजनान्ते भा-वितपिप्पलीम्, मुस्तं, पञ्चमूलानि च पथ्यानि सन्ति, रोगानुसारमनुपानं दात-व्यम् ॥ १११—११२ ॥

अत्र अपथ्यकथनम्—

कुष्माण्डं कर्कटीञ्चैव कलिङ्गं कारवेल्लकम् ।
कुसुम्भिका च कर्कोटी कलम्बी काकमाचिका ।
ककाराष्टकमेतद्धि वर्जयेत् रसभक्षकः ॥११३॥ [इति रसशोधनाधिकारः]

अथ अपथ्यमाह—कुष्माण्डं काशीफलम्, कर्कटीं चिर्भटिकाम्, कलिङ्गमिन्द्र-

यवा, कारवेल्लक कठिल्लम् ( करेला ), कुसुम्भिका कुसुम्भ, कर्कोटी महाजाली पीत पुष्पा ( ककोडा ), कलम्बी शतपर्वा, काकमाचिका वायसी ( मकोय ) एतत् ककाराष्टक पारदसेवी वर्जयेत् ॥ ११३ ॥

[ इति रसशोधनाधिकार । ]

अथ उपरसभेदा —

गन्धको वज्र वैकान्तं वज्राभ्रं तालकं शिला।
खपर शिखितुण्डञ्च विमल हेमामक्षिकम् ॥ ११४ ॥
काशीश कान्तपाषाणं वराटाञ्जनहिङ्गुलम्।
गैरिक शङ्खभूनाग टङ्कणञ्च शिलाजतु।
एते चोपरसाः प्रोक्ताः शोध्या मार्य्या विधानतः ॥ ११५ ॥

गन्धक, (सल्फर ), वज्र हीरकम्, वैक्रान्त दग्धहीरक क्षुद्रकुलिशम्वा, वज्राभ्रकम्, तालकम्, शिला मन शिला, खर्परम्, शिखितुण्ड तुत्थम्, विमलं रौप्यमाक्षिक विमलधातुर्वा, स्वर्णमाक्षिकम्, काशीशं पुष्पादिकासीसम्, कान्तपाषाणम्, वराटिका, अञ्जनम्, हिङ्गुलम्, गैरिकम्, ( गेरु ) शङ्ख, भुनाग वर्षाकालीनमृदुलम्त्राकृतिकीटविशेष ( केन्चुआ, अर्थवार्म ) तस्य सत्वम्, टङ्कणम्, शिलाजतु, एते उपरसा प्रोक्ता, एतेषा शोधन मारणञ्च शास्त्रविधानपूर्वक सम्यक् कर्तव्यम् ॥ ११४—११५ ॥

अत्रादौ गन्धकोत्पत्तिमाह —

श्वेतद्वीपे पुरा देव्याः क्रीडन्त्याः प्रस्रुतं रजः।
क्षीरार्णवे तु स्नाताया दुकूलं रजसाऽन्वितम्।
धौत तत्त सलिले तस्मिन् गधन्को गन्धवत् स्मृतः ॥ ११६ ॥

अथ गन्धकोत्पत्तिमाह—श्वेतद्वीप इत्यादि। पूर्वकाले देवाङ्गनाभिस्सह क्रीडन्त्या पार्वतीदेव्या श्वेतद्वीपसन्निकटप्रदेशे रज प्रस्रुत प्रावर्तत्, पश्चात् क्षीरसागरे स्नानं कुर्वत्या रजसान्वित वस्त्र सलिलेन धौत तेन तत्र जले गन्धकोत्पत्तिरभवत् ॥११६॥

अथ गन्धकभेदा —

चतुर्धा गन्धकः प्रोक्तो रक्तः पीतः सितोऽसितः।

**रक्तो हेमक्रियासूक्तः पीतश्वेतौ रसायने ।**
**व्रणादिलेपने श्वेतः कृष्ण. श्रेष्ठः सुदुर्लभः ॥ ११७ ॥**

अथ गन्धकभेदानाह—चतुर्धेति । रक्त, पीत, श्वेत, कृष्णश्चेति भेदैर्गन्धकश्चतुर्धा, रक्तगन्धकस्य प्रयोग सुवर्णनिर्माणार्थ क्रियते । रसायनकर्मणि पीतश्वेतगन्धकौ युज्येते । व्रणादिपूरणार्थमपि श्वेतगन्धकलेप श्रेष्ट । सर्वेपा मध्ये कृष्ण श्रेष्ट, किन्तु सुतरा दुर्लभ एव ॥ ११७ ॥

अशुद्धगन्धकदोषा —

**अशुद्धगन्धः कुरुते तु ताप कुष्ठ भ्रम पित्तरुजां करोति ।**
**रूप बल वीर्य्यसुख निहन्ति तस्मात् सुशुद्धो विनियोजनीयः ११८**

अशोधितगन्धकस्य दोषमाह—अशुद्धगन्धको रसायनकर्मणि वा स्वतन्त्रसेवनेन देहताप, कुष्ट, भ्रम मूर्च्छाम्, पित्तविकारम् करोति, देहस्य स्वरूप, बलं वीर्य्यं, सौख्यञ्च विनाशयति । तस्मात्सर्वत्र सम्यक् शुद्ध एव गन्धक प्रयोज्य ॥११८॥

गन्धकपर्याया —

**गन्धको गन्धपाषाण. शुकपुच्छ' सुगन्धकः ।**
**सौगन्धि शुल्वरिपुः पामारिर्नवनीतक' ॥ ११९ ॥**

अथ गन्धकपर्यायानाह—गन्धक इत्यादि । गन्धक, गन्धपाषाण, शुकपुच्छ (तस्य वर्णे सदृशत्वात्), सुगन्धक, सौगन्धिक, शुल्व ताम्र तस्य रिपु शत्रुस्तस्याशुमारकत्वादिति, पामाया अरिर्विनाशक अतएव पामारि, नवनीतकस्तस्यस्पर्शतुल्यत्वात्, ॥ ११९ ॥

अथ गन्धकशुद्धि—

**साज्य भाण्डे पयः क्षिप्त्वा मुख वस्त्रेण बन्धयेत् ।**
**तत्पृष्ठे गन्धक क्षिप्त्वा शरावेण पिधापयेत् ॥ १२० ॥**
**भाण्डं निक्षिप्य भूम्यन्तरूर्द्ध्वे देय पुट लघु**
**तत क्षीरे द्रुत गन्ध शुद्ध योगेषु योजयेत् ॥ १२१ ॥**

अथ गन्धकशोधनमाह—साज्यमिति । एकस्मिन् मृण्मये भाण्डे घृत गन्धकस्नपन सम्यक् भवेत् तावन्मित दुग्धञ्च निक्षिप्य तन्मुखे वस्त्र बध्नीयात्, वस्त्रोपरि

च गन्धकचूर्णं संस्थाप्य शरावेण गन्धकमाच्छाद्य सान्द्र भूगर्ते निक्षिपेत् । पश्चाद्गा-र्त्तोपरि वन्योपलैर्लघुपुटं देय तेन द्रुत गन्धक वस्त्रेण संस्रुत्य साज्ये दुग्धे पतति । पश्चात्तं निष्कास्य उष्णजलेन प्रक्षाल्य च सर्वत्र योजयेत् ॥ १२०—१२१ ॥

मतान्तरम्—

लौहपात्रे विनिक्षिप्य घृतमग्नौ प्रतापयेत् ।
तप्ते घृते तत्समानं क्षिपेत् गन्धकजं रजः ॥ १२२ ॥
विद्रुतं गन्धकं दृष्ट्वा दुग्धमध्ये विनिक्षिपेत् ।
एवं गन्धकशुद्धिः स्यात् सर्वरोगेषु योजयेत् ॥ १२३ ॥

मतान्तरेण गन्धकशोधनमाह—लौहपात्र इत्यादि । चुल्यामुपरि लौहनिर्मित कटाह संस्थाप्य तस्मिन्गन्धकपरिमित घृत प्रक्षिप्य तापयेत्, द्रुते घृते गन्धकचूर्णं निक्षिपेत्, द्रुते विद्रुत गन्धकं झटिति सन्निकृष्टदुग्धे पातयेत् पश्चात् घनीभूत गन्धक खल्वे विमर्द्य पूर्ववत् घृते सन्द्राव्य पूर्वं दुग्ध परित्यज्येतरदुग्धे पातयेत् । इत्थ सप्तवार कर्तव्य तेन साधु शोधन भवति । एकवार करणेनापि शुद्धिर्भवत्येव तथाप्यधिकस्याधिक फलमिति । इत्थ विशुद्ध गन्धक सर्वत्र निःशङ्क योजयेत् ॥ १२२—१२३ ॥

अथ शुद्धगन्धकगुणा —

शुद्धगन्धो हरिद्रोगान् कुष्ठमृत्युज्वरादिकान् ।
अग्निकारी महान् उष्णो वीर्य्यवृद्धिं करोति च ॥ १२४ ॥

अथ शुद्धगन्धकगुणानाह—शुद्धगन्ध इत्यादि । सम्यक् शुद्धगन्धक कुष्ट, मृत्यु, अष्टविधज्वरांश्च नाशयति, तथा अग्नेर्दीपक उष्णवीर्यश्च वर्तते, देहे वीर्यवृद्धिञ्च करोति ॥ १२४ ॥

अन्यच्च—

गन्धश्चातिरसायनः सुमधुरः पाके कटूष्णान्वितः
कण्डूकुष्ठविसर्पदर्पदलनो दीप्तानलः पाचनः ।
आमोन्मन्थनशोधनो विषहरः सूताच्च वीर्य्यप्रदः
गौरीपुष्पभवस्तथा क्रिमिहरः स्वर्णाधिक वीर्य्यकृत् ॥१२५॥

अन्यगुणानप्याह—गन्धश्चातीति । गन्धक सुमधुर, अत्यन्तरसायनगुणकर

"रसायनञ्च तज्ज्ञेयं यज्जराव्याधिविनाशकम्" पाके च कटुस्वादं, उष्णप्रकृतिकश्च, तथा कण्डूकुष्ठविसर्पवृद्धिनाशकं, पाचको वन्हेर्दीपकः, आमदोषनिवारकः, स्थावरजङ्गमादिसर्वविधविषबाधानाशकः, मृतादप्यधिकवीर्य्यप्रदः, क्रिमयो रोगोत्पादननिमित्त-कारणीभूताः सूक्ष्मजीवाणवस्तेषां नाशकोऽस्ति, तथा गौर्याः पार्वत्याः पुष्पेण रजसा उत्पन्नश्च कीर्तितः ॥ १२७ ॥

अथ अशुद्धवज्रदोषाः—

**पार्श्वपीडां पाण्डुरोगं हृल्लासं दाहसन्ततिम् ।**
**रोगानीकं गुरुत्वञ्च धत्ते वज्रमशोधितम् ॥ १२८ ॥**

अथ अशुद्धवज्रस्य दोषानाह-पार्श्वपीडामिति । अपरिशुद्धहीरकसेवनेन उभय-पार्श्वयोः पीडा, पाण्डुरोगं, हृदयस्य वैचित्त्यं वमनेच्छामित्यर्थः, देहे ज्वलनं, गुरुत्वं, रोगसमूहं करोति, तस्माच्छोधयेत् । यद्यप्यत्र हीरकस्य स्वरूपलक्षणभेदग्राह्याग्राह्य-त्वं नोक्तं ग्रन्थगौरवभिया तदस्माभिस्तन्त्रान्तरमनुसृत्य प्रदर्श्यते ।

वज्रञ्च त्रिविधं प्रोक्तं नरो नारी नपुंसकम् । पूर्वपूर्वमिह श्रेष्ठं रसवीर्य्यविपाकतः ॥
अष्टास्रञ्चाष्टफलकं षट्कोणमतिभासुरम् । अम्बुदेन्द्रधनुर्वारितरं पुंवज्रमुच्यते ॥
तदेव चिपिटाकारं स्त्रीवज्रं वर्त्तुलायतम् । वर्त्तुलं कुण्ठकोणाग्रं किञ्चिद् गुरु नपुंसकम् ॥
स्त्रीपुनपुंसकं वज्रं योज्यं स्त्रीपुनपुंसके । व्यात्यासान्नैव फलदं पुंवज्रेण विना क्वचित् ॥
श्वेतादिवर्णभेदेन तदेकैकं चतुर्विधम् । ब्रह्मक्षत्रियविट्शूद्रस्वस्वं वर्णफलप्रदम् ॥
उत्तमोत्तमवर्णं हि नीचवर्णफलप्रदम् । न्यायोऽयं भैरवेणोक्तः पदार्थेष्वखिलेष्वपि ॥

इति रसरत्नसमुच्चयः ।

अन्यत्र—स्निग्धं विद्युद्धिभं स्वच्छमलेख्यं च विलेखनम् ।
तीक्ष्णं षट्कोणमष्टास्रं जात्यं हीरकमुच्यते ॥
वर्त्तुलं मलिनं नीलं भूलाभं स्फुटितं खरम् ।
मकाकपादरेखाढ्यं हेयं हीरकमुच्यते ॥

हीरकस्य परीक्षणम्—

यश्चित्रापफलके शिलातले घृष्यते नहि निकामघर्षितम् ॥
लीलयैव दलयत्यथापरान् । तद्वरं भिदुरमीरितं बुधैः ॥
हीरको हीरकं हीरमभेद्यं भिदुरं तथा । कुलिशं वज्रकं वज्रं तथोक्तं भार्गवप्रियम् ॥

इति रसतरङ्गिणी ॥ १२८ ॥

अथ वज्रशोधनम्—

**व्याघ्रीकन्दगतं वज्रं दोलायन्त्रे विपाचितम् ।**
**सप्ताहं कोद्रवक्काथे कौलत्थे विमलं भवेत् ॥ १२७ ॥**

अथ वज्रशोधनमाह—व्याघ्रीकन्दमिति । व्याघ्री कण्टकारी तस्या मूलकन्दमध्ये हीरक निधाय, एकस्मिन्भाण्डे कोद्रवक्वाथ प्रपूर्य दोलायन्त्रविधिना सप्तदिनपर्यन्त स्वेदयेत् । तदनु कुलत्थक्वाथेन सह सप्तदिनावधि दोलायन्त्रेण पचेत् । पश्चात्प्रक्षाल्य विमल हीरक गृह्णीयात् ॥ १२७ ॥

मतान्तरम्—

**व्याघ्रीकन्दगतं वज्रं दोलायन्त्रे विपाचयेत् ।**
**अहोरात्रात् समुद्धृत्य हयमूत्रेण सेचयेत् ।**
**वज्रीक्षीरेण वा सिञ्चेत् कुलिशं विमलं भवेत् ॥ १२८ ॥**

मतान्तरेण शोधनमाह—व्याघ्रीकन्दगतमित्यादि । पूर्वोक्तविधिना व्याघ्रीकन्दगतं वज्र कुलत्थक्वाथेन कोद्रवक्वाथेन च सह एकदिनपर्यन्त स्वेदयेत् । तदनु व्याघ्रीकन्दान्निष्काश्य वन्हौ सतप्तं कृत्वा वज्री स्नुही तदीयदुग्धे निर्वापयेत् सप्तवारं तदनु सन्तप्त कृत्वा सप्तवार पृथक् २ अश्वमूत्रेऽपि निषेचयेत् । एवं हीरकं निर्मल भवति ॥ १२८ ॥

अथ वज्रमारणम्—

**त्रिवर्षारूढकार्पास-मूलमादाय पेषयेत् ।**
**त्रिवर्षनागवल्ल्यास्तु निजद्रावैः प्रपेषयेत् ॥ १२९ ॥**
**तद्गोलके क्षिपेद्वज्रं रुद्ध्वा गजपुटे पचेत् ।**
**एवं सप्तपुटैनैव म्रियते कुलिशं ध्रुवम् ॥ १३० ॥**

अथ वज्रमारणविधिमाह त्रिवर्षेत्यादि । त्रिवर्षारोपितस्य पुराणस्य कार्पासस्य मूलमादाय त प्रक्षाल्य त्रिवर्षारूढनागवल्ल्या स्वरसेन क्वाथेन वा पिष्ट्वा कल्कमाचरेत् । तस्य कल्कस्य गोलक कृत्वा तस्मिन् विशुद्ध हीरकं सस्थाप्य सम्यक् सम्पुट कृत्वा वन्योपलैर्गजपुटे पचेत् । इत्थ पुन कल्कान्तरे हीरक संस्थाप्य सप्तवार पुटनेन वज्रभस्म भवति ।

गजपुटमाह रसरत्नसमुच्चये—

राजहस्तप्रमाणेन चतुरस्रञ्च निम्नकम् । पूर्णञ्चोपलसाठीभि कण्ठावध्यथ विन्यसेत् ॥
विन्यसेत् कुमुदीं तत्र पुटनद्रव्यपूरिताम् । पूर्णच्छगणतोऽर्द्धानि गिरिण्डानि विनिक्षिपेत् ॥
एतद्गजपुटं प्रोक्तं महागुणविधायकम् ॥ १ ॥

अन्यच्च—

सपादहस्तमानेन कुण्डे निम्ने तथाऽऽयते । वनोपलसहस्रेण पूर्णे मध्ये विधारयेत् ॥
पुटनद्रव्यसंयुक्ता कोष्ठिका मुद्रिता मुखे। अथार्द्धानि करण्डानि अर्द्धान्युपरिनिक्षिपेत् ॥
एतद्गजपुटं प्रोक्तं ख्यातं सर्वपुटोत्तमम् । साधारणनराङ्गुल्या त्रिंशदङ्गुलको गजः ॥
इति ॥ १२९—१३० ॥

मतान्तरम्—

**कांस्यपात्रे तु भेकस्य मूत्रे वज्रन्तु निक्षिपेत् ।**
**त्रिःसप्तकृत्वः सन्तप्तं वज्रमेव मृतं भवेत् ॥ १३१ ॥**

अन्यमतेन वज्रमारणमाह त्रिःसप्तकृत्व इत्यादि—एकस्मिन् कांस्यपात्रे मण्डूकस्य मूत्रं संस्थाप्य वन्हौ हीरकं सन्तप्तं कृत्वा तस्मिन्निर्वापयेत् । इत्थमेकविंशतिवारं सन्तप्तं कृत्वा निर्वापणेन तस्य भस्म भवति ॥ १३१ ॥

अथान्यं —

**त्रिःसप्तकृत्वः सन्तप्तं खरमूत्रेण सेचयेत् ।**
**मुद्रैस्तालकपिण्डं तद्गोले कुलिशं क्षिपेत् ॥ १३२ ॥**
**प्रध्मातं वाजिमूत्रेण सिक्तं पूर्वक्रमेण तु ।**
**भस्मीभवति तद्वज्रं वज्रवत् कुरुते तनुम् ॥ १३३ ॥**

अथान्यमतमाह त्रिःसप्तकृत्व इत्यादि—हीरकं वन्हौ सन्तप्तं कृत्वा खरमूत्रे निर्वापयेत् । इत्थमेकविंशतिवारं प्रतप्तं कृत्वा खरमूत्रे निर्वापणं कर्तव्यम् । प्रथमनिर्वापितमूत्रं विहाय द्वितीयनिर्वापणे नूतनमाप्लावनयोग्यं मूत्रं गृहीतव्यम् । सर्वत्रैष नियमः । हीरकं प्रक्षाल्य तदनु शुद्धहरितालचूर्णस्य जलेन सह पिण्डं कृत्वा तदन्तःप्रदेशे तं सम्यगवरुध्य खराग्नौ सन्तप्तं कृत्वा वाजिमूत्रे ( अश्वमूत्रे ) निर्वापणं कुर्यात् । एषा क्रियाऽपि एकविंशतिवारं कर्तव्या, इत्थं भस्मीभूतं हीरकं सेवनेन स्वतनुं दृढं करोति ॥ १३२—१३३ ॥

अथ शोधितवज्रगुण —

**आयुष्यं सौख्यजननं बलरूपप्रदं तथा ।**
**रोगघ्नं मृत्युहरणं वज्रभस्म भवत्यलम् ॥ १३४ ॥**

अथ मृतवज्रस्य गुणमाह, आयुष्यमित्यादि—शुद्ध मृत हीरक सेवनेन आयुष्करं, सौख्यसम्पादक देहवल सौन्दर्यञ्च करोति, अकालमृत्युविनाश निखिलव्याधिविध्वंसञ्च करोति ॥ १३४ ॥

अथ वैक्रान्तशोधनम्—

**वैक्रान्तं वज्रवच्छोध्यं ध्मातं तत् हयमूत्रके ।**
**हितं तद्भस्म संयोज्यं वज्रस्थाने विचक्षणै. ॥ १३५ ॥**

अथ वैक्रान्तशोधनमाह—वैक्रान्तं वज्रवच्छोधयेत् मारयेच्च । अथवा वैक्रान्त वन्हौ प्रताप्य अश्वमूत्रे निर्वापयेत् । इत्थमेकविंशतिवार निर्वापणं कर्तव्य तेन वैक्रान्त भस्मीभवति । अनया युक्त्या कृत वैक्रान्तभस्म शीतवीर्यं भवति, वज्राभावे वैक्रान्त व्यवहरेत् ॥ १३५ ॥

मतान्तरम्—

**वैक्रान्तं वज्रवच्छोध्यं मारणञ्चैव तस्य तत् ।**
**हयमूत्रेण तत् सेव्यं सप्तं तप्तं त्रिसप्तधा ॥ १३६ ॥**
**ततश्चोत्तरवारुण्याः पञ्चाङ्गगोलके क्षिपेत् ।**
**रुद्ध्वामूषापुटे पाच्यम् उद्धृत्य गोलके पुनः ॥ १३७ ॥**
**क्षिप्त्वा रुद्ध्वा पचेदेवं यावत् तत् भस्मतां व्रजेत् ।**
**भस्मीभूतञ्च वैक्रान्तं वज्रस्थाने नियोजयेत् ॥ १३८ ॥**

मतान्तरमाह वैक्रान्तमिति—वैक्रान्त दग्धहीरकवज्रशोधमारणविधिनैव शोध्य मारणीयञ्च, विशेष विधिमाह—वैक्रान्त प्रताप्य हयमूत्रे त्रिसप्तधा, एकविंशतिवार निर्वापयेत्, तदनु, इन्द्रायणपञ्चाङ्ग जलेन सह पाषाणे पिष्ट्वा गोलक विरच्य तस्मिन्वैक्रान्त स्थापयेत्, त गोलकं मूषायन्त्रे सम्पुटरूपेण सम्यगवरुध्य पुटेत् । इत्थ वारम्वार नूतनोत्तरवारुणीपञ्चाङ्गकल्कगोलक कृत्वा वैक्रान्त सस्थाप्य मूषायाञ्चावरुध्य पुटं देयम । यावत्तद्भस्यस्वरूप नैव प्राप्नुयात् तावत्पुटेत् ॥१३६—१३८॥

अथाभ्रपर्याया —

अभ्रकं गिरिजाबीजममलं गगनाह्वयम् ॥ १३९ ॥

अथ अभ्रकपर्यायानाह अभ्रकमिति, अभ्रकम्, गिरिजाबीजम्, अमलम्, गगनाह्वयम (अर्थात् आकाशस्य ये पर्य्यायवाचकशब्दा स्युस्तैरस्यापि व्यवहार शास्त्रे क्रियते ॥ १३९ ॥

अथाभ्रशोधनम्—

तत्र कृष्णाभ्रके वज्रं पीतात्मनि तु ग्राहिकम् ।
सितात्मके तारकं स्याद्धीरकं रक्तके वरम् ॥ १४० ॥
सुप्रशस्तं कठोराङ्गं गुरु कज्जलसन्निभम् ।
यन्न शब्दायते वह्नौ नैवोच्छूनं भवेदपि ।
सद्राकरसमुद्भूतं वज्रेति प्रथितं घनम् ॥ १४१ ॥
पिनाकं दर्दुरं नागं वज्रञ्चेति चतुर्विधम् ॥ १४२ ॥
ध्मातमभ्रं दलचयं पिनाकं विसृजत्यलम् ।
फूत्कारं भुजगः कुर्यात् दर्दुरं भेकशब्दवत् ।
चतुर्थञ्च वरं ज्ञेयं न वह्नौ विकृतिं व्रजेत् ॥ १४३ ॥
कुष्ठप्रदं पिनाकं स्याद्दर्दुरं मरणप्रदम् ।
नागं देहगतं नित्यं व्याधिं कुर्याद् भगन्दरम् ॥ १४४ ॥
रसे रसायने चैव योज्यं वज्राभ्रकं प्रिये !
तस्माद्वज्राभ्रकं ग्राह्यं व्याधिवार्द्धक्यमृत्युजित् ॥ १४५ ॥

अथ अभ्रकस्य शोधनमारणादिकमाह तत्रेति—अभ्रकं चतुर्विधवर्णं भवति, कृष्ण, पीत, श्वेत, रक्तञ्च, कृष्णवर्णाभ्रकजातिमध्ये वज्रसंज्ञकमभ्रकं वरम् । पीतवर्णाभ्रकजातिमध्ये ग्राहिकसंज्ञकं वरं प्रोक्तम्, श्वेतवर्णाभ्रकजातिमध्ये तारकसंज्ञकं वरं भवति । रक्तवर्णाभ्रकजातिमध्ये च धीरकसंज्ञकमभ्रकं श्रेष्ठमस्ति ।

अथ वज्राभ्रकलक्षणमाह सुप्रशस्तमिति यदभ्रकं कठोराङ्गं स्वल्पाघातेनाभङ्गुरं, भारयुक्तं, कज्जलमिवकृष्णवर्णं, वह्नौ सन्तापितस्य शब्दं नैव कुर्यात् स्फीततां च न याति, तथा प्रशस्तप्रदेशस्थखनिजोद्भूतञ्च भवेत्तद्वज्राभ्रकं ज्ञेयम् । वज्राभ्रकं चतुर्विधं भवति, पिनाक, दर्दुर, नाग वज्रश्चेति भेदात् । पिनाकसंज्ञकमभ्रकमग्नौ सन्तापनेन

दलानि विमुञ्चति, नागसञ्ज्ञकमभ्रकं वन्हौ सन्तापितं सर्पवत्फुत्कारं कुर्य्यात्, दर्दुरसञ्ज्ञकञ्च अभ्रकं सन्तापनेन मण्डूकवच्छब्दं करोति, उत्प्लुत्यच पात्राद्बहिर्गच्छति, चतुर्थं वज्रसञ्ज्ञकमभ्रकं वन्हौ सन्तापितं सन्नैव कामपि विकृतिं प्राप्नोति तदेव रसकर्मणि वरं ज्ञेयम्। पिनाकाभ्रकभस्मसेवनेन शरीरे कुष्ठं स्यात, दर्दुराभ्रकभस्म मरणं करोति, नागाभ्रकभस्म सेवनेन भगन्दरसञ्ज्ञकव्याधिमुत्पादयति । रसकर्मणि रसायनकर्मणिच वज्राभ्रकस्यैव व्यवहारः कर्तव्यः । ( रसायनलक्षणन्तु यज्जराव्याधिविध्वंसि तद्रूप्यं तद्रसायनमिति ) शास्त्रान्तरे ।

अभ्रं सितारुणश्यामपीतवर्णविभेदतः । चतुर्विधं समाख्यातं कृष्णं तत्र गदापहम् ॥

कृष्णाभ्रकस्य भेदाः —

पिनाकनागमण्डूकवज्राद्ययविभेदतः । चतुर्विधन्तु कृष्णाभ्रं मतं रसविशारदैः ॥

पिनाकलक्षणं दोषाश्च—

अग्नौ सन्तापितं यत्तु दलानि परिमुञ्चति । रसतन्त्ररहस्यज्ञैस्तत्पिनाकं प्रकीर्तितम्॥

पिनाकाभ्रं मलं रुदध्वा कुरुते मरणं ध्रुवम् । कुष्ठादिकान्महारोगान् जनयत्यपिनिश्चितम्॥

नागाभ्रकलक्षणं दोषाश्च—

पावकोत्तापितं यत्तु दलानि परिमुञ्चति । फुत्काहिस्वानवच्चाभ्रं नागाभ्रं तदिहोच्यते ॥

नागाभ्रं सेवितं कुर्यान्महाघोरं भगन्दरम् । मण्डलं वा महाकुष्ठं तद्द्वयं वा न संशयः ॥

मण्डूकाभ्रस्य लक्षणं दोषाश्च—

अग्नौ सन्तापितं यत्तु भेकवत्कुरुते रवम्। उत्प्लुत्योत्प्लुत्य च पतेन्मण्डूकं तदिहोच्यते॥

मण्डूकसंज्ञकं त्वभ्रं सततं परिशीलितम् । अश्मरीं जनयत्याशु शस्त्रसाध्यमसंशयम् ॥

वज्राभ्रकस्य लक्षणं गुणाश्च—

पावकोत्तापितं यत्तु विकृतिं नैव गच्छति । तिष्ठत्यग्नौ भिदुरवद्वज्राभ्रं तत्प्रकीर्तितम्॥

सर्वश्रेष्ठन्तु वज्राभ्रं महाव्याधिहरं परम् । देहसिद्धिकरञ्चापि जरावैरूप्यनाशनम् ॥

वज्राभ्रकप्राप्त्यभावे ग्राह्याभ्रकलक्षणम्—

नीलाञ्जनोपमं स्निग्धं भारपूर्णं महोज्वलम् । निर्मोच्यपत्रं मृदुलं त्वभ्रं श्रेष्ठमिहोच्यते॥

देशभेदेनाभ्रकस्य वैशिष्ट्यम्—

अभ्रकं हिमशैलोत्थमुत्तमं परिकीर्तितम् । मध्यमं पूर्वशैलोत्थं त्वधमं दक्षिणाद्रिजम् ॥

इतिरसतरङ्गिणी ।

देव्या रजो भवेद्गन्धो धातुः शुक्रं तथाभ्रकमिति रसरत्नसमुच्चय १४०—१४५

अशुद्धाभ्रस्य दोषा —

**अशुद्धाभ्रं निहन्त्यायुः वर्द्धयेत् मारुतं कफम् ।**
**अहृतं छेदयेद्गात्रं मन्दाग्निक्रिमिवर्द्धनम् ॥ १४६ ॥**

अथ अशुद्धाभ्रकस्य दोषमाह—अशुद्धाभ्रकमित्यादि—अशोधिताभ्रकस्य कृतं भस्म आयुषो नाशं करोति, वात कफञ्च वर्धयति शुद्धमपि विधिपूर्वकमहृतं (अमारितम्) सेवनेन शरीर स्फोटादिकमुत्पाद्य छेदयति, अग्निमान्द्यं क्रिमिरोगांश्च जनयति ॥ १४६ ॥

धान्यभ्रमाह—

**पादांशशालिसंयुक्तमभ्रकं कम्बलोदरे ।**
**त्रिरात्रं स्थापयेत् नीरे तत् क्लिन्नं मर्दयेद्दृढम् ॥ १४७ ॥**
**कम्बलाद्गलितं श्लक्ष्णं वालुकारहितञ्च यत् ।**
**तद्धान्याभ्रमिति प्रोक्तमभ्रमारणसिद्धये ॥ १४८ ॥**

अथ धान्याभ्रकरणविधिमाह। पादांशेति—पादांश शुद्धाभ्रकांपेक्षया चतुर्थांश शालिधान्यसंयुक्तमभ्रकं कम्बलमध्ये संस्थाप्य पोट्टलिकां कृत्वा त्रिरात्रमिति त्रिरात्रिन्दिव जलपूरितभाण्डे स्थापयेत्। जलसयोगेन श्लथीभूतसर्वावयवमभ्रक पोट्टलिकास्थमेव दृढ विमर्द्य तत्तारणक्रियया कम्बलाद्गालयेत् सारयेदित्यर्थ, वालुकादिभिर्विमुक्तं श्लक्ष्णञ्च कम्बलनिर्गतमभ्रकं धान्याभ्रं प्रोक्तं तच्च मारणे श्रेष्ठम्। "धान्येभ्यो निर्गतं यस्मात्तस्माद्धान्याभ्रमुच्यते" ॥ १४७—१४८ ॥

मतान्तरम्—

**त्रिफलाक्वाथगोमूत्र-क्षीरकाञ्जिकसेचितम् ।**
**भस्माग्नौ सप्तधा व्योम तप्तं तप्तं विशुध्यति ॥ १४९ ॥**

मतान्तरमाह त्रिफलेति—अभ्रकं वन्हौ सन्ताप्य त्रिफलाक्वाथे सप्तवारं निर्वापयेत्। सप्तवैव गोमूत्रे, गोदुग्धे, काञ्जिके च, पृथक् २ निर्वापयेत्। एवमष्टविंशतिवारमुक्तपदार्थेषु निर्वापितमभ्रकं सम्यक् शुद्धयति ॥ १४९ ॥

मतान्तरम्—

**अथवा बदरीक्वाथे ध्मातमभ्रं विनिक्षिपेत् ।**

**मर्दितं पाणिना शुष्कं धान्याभ्रादतिरिच्यते ॥ १५० ॥**

मतान्तरमाह, वदरीक्वाथ इत्यादि—अथवेति उपर्युक्तशुद्ध्यपेक्षया अभ्रकं वन्हौ सन्ताप्य वदरीक्वाथे सप्तवारं निर्वापयेत्, पाणिना हस्ताभ्याञ्च (जातित्वात् ग्रन्थकारेण एकवचनं प्रयुक्तं "जातावेकवचनम्") तस्मिन्क्वाथे सम्यक् विमर्द्य पश्चादातपे शोषयेत्। इत्थं शोधितमभ्रकं धान्याभ्रकादपि श्रेष्ठम् ॥ १५० ॥

मतान्तरम्—

**अगस्त्यपुष्पतोयेन पिष्टं शूरणकन्दगम्।**
**गोष्ठभूमिगतं मासं जायते रससन्निभम् ॥ १५१ ॥ (इत्यभ्रशोधनम्)**

मतान्तरेण शोधनमाह अगस्त्येति—अभ्रकं विचूर्ण्य खल्वे निक्षिप्य च, अगस्त्यं मुनितरुस्तस्य पुष्पस्वरसेन क्वाथेन वा सम्यक् पेषयेत्। तदनु शूरणकन्दमध्ये खातं कृत्वा तत्राभ्रकं निक्षिप्य गोबन्धनभूमिखनितगर्ते मासमेकं स्थापयेत्। इत्थं सशुद्धमभ्रकं पारदवद्गुणकारि भवति ॥ १५१ ॥

इत्यभ्रकशोधनम्।

अथाभ्रमारणम्—

**वज्राभ्रकं समादाय निक्षिप्य स्थालिकोदरे।**
**रम्भादिक्षारतोयेन पचेद् गोमयवह्निना ॥ १५२ ॥**
**यावत् सिन्दूरसङ्काशं न भवेत् स्थालिकाबहिः।**
**सेचनीयं ततः क्षीरैस्ततः सूक्ष्मं विचूर्णयेत् ॥ १५३ ॥**

अथ अभ्रकमारणमाह वज्राभ्रकमिति—सम्यक् विशुद्धं वज्राभ्रकं समादाय मृण्मये भाण्डे। (हण्डिकाया वा) निक्षिप्य वक्ष्यमाणरम्भादिगणोक्तक्षारजलेन सह गोवरनिर्मितोपलवन्हिना हण्डिकाबहिः पृष्ठरक्तीभवनपर्यन्तं पचेत्। तदनु गोदुग्धेन सेचनं कृत्वा सूक्ष्मं विचूर्ण्य वस्त्रेण मारयेत्। इत्थमभ्रकभस्म भवति ॥ १५२–१५३ ॥

मतान्तरम्—

**धान्याभ्रकं समादाय मुस्ताक्वाथैः पुटत्रयम्।**
**तद्वत् पुनर्नवानीरैः कासमर्दरसैस्तथा ॥ १५४ ॥**
**नागवल्लीरसैः सूर्य-क्षीरैर्देयं पृथक् पृथक्।**
**दिनं दिनं मर्दयित्वा क्वाथैर्वटजटोद्भवैः ॥ १५५ ॥**

त्रिगोक्षुरकषायेण त्रिः पुटेत् वानरीरसैः ।
दत्वा पुटत्रयं पश्चात् त्रिः पुटेत् मूपलीजले ॥ १५६ ॥
मोचकन्दरसैः पाच्यं त्रिरात्र कोकिलाक्षकैः ।
रसैः पुटेल्लोध्रकैस्तु क्षीरादेकं पुटेत् पुनः ॥ १५७ ॥
दध्ना घृतेन मधुना स्वच्छया सितया तथा ।
एकमेकं पुट दद्यादभ्रस्यैवं मृतिर्भवेत् ॥ १५८ ॥
सर्वरोगहर व्योम जायते योगवाहिकम् ।
कामिनीमददर्पघ्न शश्वत पुंस्त्वापघातिनाम् ।
वृष्यमायुष्कर शुक्र-वृद्धिसन्तानकारकम् ॥ १५९ ॥

मतान्तरेण मारणमाह धान्याभ्रकमित्यादि—धान्याभ्रक खल्वे मुस्ताक्काथेन सह सम्यक् विमर्द्य शरावद्वयमध्ये सम्पुटकृत्वा गजपुटे पचेत् । तदनु पुनर्मुस्ताक्काथेन विमर्द्य पुटेत्, इत्थ पुटत्रय देयम् । उपर्युक्तरीत्यैव पुनर्नवास्वरसेन क्काथेन वा सह विमर्द्य पुटत्रय दद्यात् । कासमर्दरसेन क्काथेन वा पुटत्रय देयम्, नागवल्लीरसेन च विमर्द्य पुटत्रय देयम्, तदनु सूर्या मदारस्तस्य दुग्धेन विमर्द्य त्रि पुटेत्, वटजटा वटशुङ्गा । (शाखाप्रान्ततो भूमिभाग लम्बायमानाना सूत्राणा कोमलमग्रभाग वटाङ्कुर इति नाम्ना कथ्यते ) तेषा क्काथेन सह दिनमेक विमर्द्य पुटेत्, अनेनापि पृथक् पुटत्रय दिनमेक विमर्द्य देयम्।मुपली श्वेतमुपली तस्या क्काथेन विमर्द्य पुटत्रय, गोक्षुरस्त्रिकण्टक (गोखरू) तस्य क्काथेन पुटत्रय, वानरीक्काथेन (कैंवाच) पुटत्रय, तदनु कदलीकन्दरसेन पुटत्रय, कोकिलाक्ष क्षुरक ( तालमखाना ) तस्य क्काथेन पुटत्रय, लोध्रक्काथेनापि पुटत्रय पुनस्त गोक्षीरेण दिनमेक विमर्द्य पुटेत् । गोदध्ना विमर्द्य पुटमेक दद्यात्, गोघृतेन पुटमेक, मधुना च सह विमर्द्य पुटमेक दद्यात्, स्वच्छया निर्मलया सितया च सह पुटमेक दद्यात् । इत्थ ध्रुवमभ्रकस्य मृतिर्भवेत् । अनया युक्त्या कृत भस्म सर्वव्याधिविध्वसि, यथाविहितरोगघ्नभेषजैस्सह प्रयोगकरणेन फलप्रद, पुरुषत्वहीनाना श्रेष्ठ, वृष्यम, आयुष्कर पुत्रप्रद, शुक्रजनकञ्च भवति ॥ १५४—१५९ ॥

अथ मारकगण —

तण्डुलीयकबृहतीनागवल्लीतगरपुनर्नवाब्द ।

हिलमोचिकामण्डूकपर्णी तिक्ताऽऽखुपर्णिका।
मदनार्कावपि लवसुतमातृकासि' सुधीभिरुदितम् ॥ १६० ॥

अथ मारकगणमाह तण्डुलीयकेत्यादि—तण्डुलीयक मेघनाद (चौलाई) वृहती कण्टकारो (वडीकटेली), नागवल्ली भुजङ्गवल्ली (नागरवेलपान), तगर नहुषम्, पुनर्नवा गदपूर्णा (साठेडी) हिलमोचिका, मण्डूकपर्णा तिक्ता कुटकी, आखुपर्णा मूषापर्णी, मदन, अर्को मदार, शतावरी इति मारकगणद्रव्याणि। चूर्णितै रेतैं समस्तैर्व्यस्तै र्वा सह अभ्रक पुटेत् तेन भस्मीभवति ॥ १६० ॥

मतान्तरम्—

रम्भादिनाऽभ्रं लवणेन पिष्ट्वा चक्रीकृतं तद्दलमध्यवर्त्ति।
दग्धेन्धनेषु व्यजनानिलेन स्नुह्यर्कमूलांबुपटेन सिद्धम् ॥ १६१ ॥

मतान्तरेण मारणमाह रम्भादिनेत्यादि—रम्भादिगणोक्तद्रव्यैस्सह तथालवणेन च सह शुद्धाभ्रक सम्पेष्य चक्रिका (टिकिया) कुर्यात्, तदनु रम्भादिगणद्रव्यपत्रमध्ये वा तेषा कल्कगोलके अभ्रक संस्थाप्य दग्धेन्धनानि कोकिला स्तेषा वन्हौ पुटेत्। पश्चात् स्नुही स्नुक् (थूहर) अर्कोमदार स्तयो र्मूलस्वरसेन क्वाथेन वा पिष्ट्वा पुटेत्। अनया अभ्रकस्य भस्म सम्भवति ॥ १६१ ॥

मतान्तरम्—

धान्याभ्रकस्य भागैकं भागौ द्वौ टङ्कणस्य च।
पिष्ट्वा तदन्धमूषायां रुद्ध्वा तीव्राग्निना पचेत्।
स्वभावं शीतलं चूर्णं सर्वयोगेषु योजयेत् ॥ १६२ ॥

मतान्तरेण भस्मकरणमाह धान्याभ्रकस्येत्यादि—धान्याभ्रकस्य एकं भागं, टङ्कणस्य च द्वौ भागौ खल्वे सञ्चूर्ण्य कासमर्दरसेन पिष्ट्वा च, अन्धमूषाया निक्षिप्य पुटेत्। अनया रीत्या स्वभावशीतवीर्यमभ्रकस्य भस्म भवति ॥ १६२ ॥

मतान्तरम्—

धान्याभ्रकं दृढं मर्द्यमर्कक्षीरर्दिनावधि।
वेष्टयेदर्कपत्रेण चक्राकारन्तु कारयेत् ॥ १६३ ॥
कुञ्जराख्ये पुटे दग्ध्वा सप्तवारान् पुनः पुनः।
ततो वटजटाक्वाथैस्तद्वद्देयं पुटत्रयम्।

म्रियते नात्र सन्देहः सर्वयोगेषु योजयेत् ॥ १६४ ॥

मतान्तरमाह धान्याभ्रकमित्यादि—धान्याभ्रकं खल्वे निक्षिप्य त्रिदिनपर्यन्तं पेषयेत्, तदनु तस्य चक्रिका विधाय अर्कपत्रेण वेष्टयेत् पश्चाद्गजपुटे पचेत्। इत्थं सप्तपुटानि दत्वा पुनः खल्वे वटजटादिकाथेन सह दिनैकं पिष्ट्वा पुटेत्, अनया युक्त्याऽपि पुटत्रयं देयम्। इत्थं मृतमभ्रकं सर्वत्र व्यवहरेत् ॥ १६३—१६४ ॥

मतान्तरम्—

दुग्धत्रयं कुमार्यस्तु गङ्गापत्रं नृमूत्रकम्।
वटशुङ्गमजारक्तमेभिरभ्रं विमर्दयेत् ॥ १६५ ॥
शतधा पुटितं भस्म जायते पद्मरागवत्।
निश्चन्द्रकं भवेत् व्योम शुद्धदेहे रसायनम् ॥ १६६ ॥

मतान्तरमाह दुग्धत्रयमित्यादि—दुग्धत्रयं गोदुग्धम्, अजादुग्धम्, अर्कदुग्धं, घृतकुमारीस्वरसः, गङ्गापत्रं भद्रमुस्तकम् वनतण्डुलीयकं वा, नरमूत्रम्, वटशुङ्गं अजारक्तम्, एभिः पृथक् २ अभ्रकं विमर्द्य चक्रिकां कृत्वा सम्पुटस्थं पुटेत्, अनेन विधानेन शतवारं पुटनादभ्रकस्य निश्चन्द्रं पद्मरागमणिसदृशं रक्तवर्णं भस्म भवति, तच्च वमनादिपञ्चकर्मसंशुद्धदेहे रसायनगुणसम्पादकं जायते ॥१६५—१६६।

मारिताभ्रस्य गुणाः—

निश्चन्द्रं मारितं व्योम रूपं वीर्यं दृढं तनुम्।
कुरुते नाशयेत् मृत्युं जरारोगकदम्बकम् ॥ १६७ ॥ [ इत्यभ्रमारणम् ]

अथ मारिताभ्रकस्य गुणानाह निश्चन्द्रमिति—अभ्रकस्य निश्चन्द्रिकं हतं भस्म देहसौन्दर्यं बलञ्च करोति जरा रोगसमूहं अपमृत्युञ्च नाशयेत्, शरीरञ्च दृढं करोति ॥ १६८ ॥

अथ हरितालपर्य्यायास्तद्भेदाश्च—

हरितालं तालमालं मालं शैलूषभूषणम्।
पिञ्जकं रोमहरणं तालकं पीतमित्यपि।
नालकं पटलं पिण्डं द्विधा तत्राद्यमुत्तमम् ॥ १६८ ॥

अथ हरितालस्य पर्यायान् भेदांश्चाह हरितालमिति—हरितालं तालम् आलम्, मालम्, शैलूषभूषणं नराः स्वदेहरक्षार्थं प्रयुञ्जन्ति, पिञ्जकम्, रोमहरणम्.

पीतम् । तालक द्विविध भवति, एक पत्ररचनायुक्तत्वात्पत्रतालकमुच्यते, द्वितीय पिण्डस्वरूपत्वात्पिण्डमुच्यते, तयोर्मध्ये भेषजकर्मणि पत्रतालकं श्रेष्ठ मतम् ।

अन्यमतेन पत्रपिण्डतालयो र्लक्षणादिक यथा—

स्वर्णवर्णं गुरुस्निग्धं तनुपत्रञ्च भासुरम् । तत्पत्रतालकं प्रोक्तं बहुपत्रं रसायनम् ॥
निष्पत्रं पिण्डसदृशं स्वल्पसत्वं तथा गुरु । स्त्रीपुष्पहरणं तत्तु गुणाल्पं पिण्डतालकम् ॥

इतिरसरत्नसमुच्चय ।

मल्लगन्धकसयोगजन्यत्वान्मल्लगन्धजमपि तालक भिषग्भि कथ्यते । कृत्रिमतालनिर्माणमित्थ, विशोधित मल्ल सख्यकभागिक गङ्खविषं (सखिया) विमलीकृत तत्वभागिकञ्च गन्धकमुभौ खल्वे निक्षिप्य शनै २ पेषयेत् । ततो डमरूसज्ञकयन्त्रे पचेदित्थ स्वाङ्गशीत यन्त्र विभिद्योर्द्ध्वलग्नं तालकं गृह्णीयात् । साम्प्रत विशेषतया हट्टे कृत्रिमतालकमेव प्राप्यते ॥ १६८ ॥

अशुद्धहरितालस्य दोषा —

**अशुद्धतालमायुर्घ्नं कफमारुतमेहकृत् ।**
**तापस्फोटाङ्गसङ्कोचान् कुरुते तेन शोधयेत् ॥ १६९ ॥**

अथ अशुद्धतालकस्य दोषमाह, अशुद्धमित्यादि—अशुद्धताल सेवनेन आयुर्नाशयति, कफ, मारुत, वर्धयति, प्रमेहञ्चोत्पादयति, देहे ज्वलनं, स्फोट च करोति, अङ्गसङ्कोचयति तेन शोधन कुर्यात् ॥ १६९ ॥

हरितालशोधनम्—

**शुद्धं स्यात् तालकं स्विन्नं कुष्माण्डसलिले ततः ।**
**चूर्णोदके पृथक् तैले तस्मिन् पूते न दोषकृत् ॥ १७० ॥**

अथतालकस्य शोधनमाह शुद्धमिति—प्रथमम्तालक वस्त्रे बद्ध्वा दोलायन्त्रेण श्वेतकुष्माण्डस्वरसे स्वेदयेत्, ततश्चूर्णं नीरे आप्लाव्य तस्मिन्नीरे (चूनेके जल में) प्रहरैक स्वेदयेत्, तदनु घर्मोदकेन प्रक्षाल्य पुनर्वस्त्रे बद्ध्वा तैले प्रहरैकं स्वेदयेत्, स्वेदनानन्तर उष्णोदकेन प्रक्षाल्य योगेषु योजयेत् । इत्थ विशोधितं तालकं दोषकृन्नैव भवति ॥ १७० ॥

अन्यच्च—

**तालकं कणशः कृत्वा दशांशेन च टङ्कणम् ।**

जम्बीरोत्थैर्द्रवैः क्षाल्य काञ्जिकैःक्षालयेत् पुनः ॥ १७१ ॥
वस्त्रे चतुर्गुणे बद्ध्वा दोलायन्त्रे दिनं पचेत् ।
सञ्चूर्ण्य आरनालेन दिन कुष्माण्डजे रसे ।
स्वेद्य वा शाल्मलीतोयस्तालक शुद्धिमाप्नुयात् ॥ १७२ ॥

अन्यमतेन तालकस्य शोधनमाह तालकमिति—तालक खल्वे स्थूलकणरूपेण विचूर्ण्य तालकापेक्षया दशांश टङ्कणञ्चादाय वस्त्रेण बद्ध्वा यामैक दोलायन्त्रे पचेत् तदनु यामैककाञ्जिके पचेत्, पश्चाच्चूर्णकृत्वा काञ्जिकेन सह विमर्द्य कुष्माण्डस्वरसे दिनमेक पचेत्, अथवा शाल्मलिमूलस्वरसे पचेत् इत्थ तालक शुद्धिमाप्नुयात् ॥ १७१–१७२

अन्यच्च—

तालकं पाट्टलीं बद्ध्वा सचूर्णे काञ्जिके पचेत् ।
दोलायन्त्रेण यामैकं तत कुष्माण्डजे रसे ॥ १७३ ॥
तिलतैले पचेत् याम यामं तत् त्रिफले जले ।
दोलायन्त्रे चतुर्यामं पाच्य शुध्यति तालकम् ॥ १७४ ॥ [इति शोधनम् ] ॥

अन्यमतमाह तालकमिति—तालक खल्वे विचूर्ण्य दृढवस्त्रे पोटलीस्वरूपेण-बद्ध्वा एकप्रहरावधि चूर्णमिश्रितकाञ्जिके दोलायन्त्रे विधिना स्वेदयेत्, तदनु श्वेत-कुष्माण्डस्वरसे, यामैक पचेत्ततस्तिलतैलेऽपि यामैक पचेत् ततस्त्रिफलाक्काथे यामैक पचेत्, इत्थ चतुर्याम स्वेदित तालक निश्चयेन विशुद्ध्यति ॥ १७३—१७४ ॥

इति हरितालशोधनम् ।

अथ हरितालमारणम्—

तालकं कणश कृत्वा सुशुद्धं हण्डिकान्तरे ।
चूर्णोदकेन सम्पिष्टमपामार्गजटोद्भवैः ॥ १७५ ॥
क्षारोदकैश्च सम्पिष्टमूर्द्ध्वाधो यावशूकजम् ।
चूर्ण दत्वा निरुध्याथ कुष्माण्डैश्च प्रपूरयेत् ॥ १७६ ॥
पुनर्मुखं निरुध्याथ चतुर्यामं क्रमाग्निना ।
पचेदेवं हि तच्चूर्ण कुष्ठादौ परियोजयेत् ॥ १७७ ॥

अथहरितालमारणमाह तालकमित्यादि—प्रथमन्तालक कणश कृत्वा हण्डिकान्तरे चूर्णोदकेन यामैक स्वेदन्, तदनु अपामार्गमूलनिर्मितक्षारोदकेन सह खल्वे दृढ-

विमर्द्य चक्रिका कुर्यात् । तदनु चैकस्मिन् शरावमध्ये स्वल्पं यवक्षारं निक्षिप्य तदुपरि चक्रिकाणां स्थापनं कृत्वा यवक्षारेण तासामाच्छादनं कुर्यात्, अथेतरेण शरावेण सह सम्यग् मृदा वस्त्रेण च सन्धिबन्धनं कृत्वा सम्पुटमेनमेकस्मिन्मृण्मयभाण्डे संस्थाप्य भाण्डावकाशं कुष्माण्डसलिलेनापूर्य शरावेण मुखबन्धनं कृत्वा चतुर्यामपर्यन्तं क्रमशो मन्दमध्यमतीव्राग्निना पचेत्, स्वाङ्गशीतं यन्त्रमवतार्य उर्ध्वशरावसलग्नं हरतालभस्म गृह्णीयात्, यथानुपानं कुष्ठादिकरोगेषु च प्रयोजयेत् ॥ १७५—१७७॥

शोधितहरितालस्य गुणाः—

**हरितालं कटु स्निग्धं कषायञ्च विसर्पनुत् ।**
**तालकं हरते रोगान् कुष्ठमृत्युज्वरादिकान् ।**
**सशुद्धं कान्तिवीर्य्यौजः कुरुते मृत्युनाशनम् ॥ १७८ ॥**

उपर्युक्तविधिना शुद्धस्य मृतस्य च हरितालस्य गुणानाह हरितालमिति । इत्थं मृतं हरितालं स्वादे कटु, स्निग्धं, कषायं तथा विसर्पं प्रसरणशीलकण्ड्वादिकं नाशयति, कुष्ठं, अपमृत्युं, ज्वरञ्च नाशयति, तथा शरीरकान्तिं, वीर्य्यं, ओजश्च वर्धयति ॥ १७८ ॥

मतान्तरे मारणम्—

**अम्लरोलीजलैर्भाव्यं तालं द्वादशयामकम् ।**
**तथैव निम्बुनीरेण ततश्चूर्णोदकेन च ॥ १७९ ॥**
**प्रक्षाल्य शाल्मलीक्षारैर्द्विगुणैः खातमध्यगम् ।**
**विधाय कवचीयन्त्रं वालुकाभिः प्रपूरयेत् ॥ १८० ॥**
**द्वादशप्रहरं पक्त्वा स्वाङ्गशीतञ्च चूर्णयेत् ।**
**खादयेत् रक्तिकामेकां कुष्ठश्लीपदशान्तये ॥ १८१ ॥**

अथ मतान्तरेण हरतालस्य मारणमाह–अम्लरोलीजलैरिति । अम्लरोली चाङ्गेरी-तस्याः स्वरसेन क्वाथेन वा चूर्णितं तालं द्वादशप्रहरावधि खल्वे मर्दनीयम् । तथैव निम्बुरसेन मर्दनीयं चूर्णोदकेनापि पूर्ववदेव विमर्द्य प्रक्षालयेत् । तदनु काचकूप्यां शाल्मलिमूलनिर्मितं क्षारं प्रस्तार्य तदुपरि तालकं प्रपूरयेत् ( क्षारमात्रा तु तालकापेक्षयाद्विगुणिता ) पश्चात् काचकूपीं भाण्डे संस्थाप्य वालुकया काचकूपीं कण्ठभागपर्यन्तं भाण्डं पूरयेत् । तदनु भाण्डं चूल्यामारोप्य द्वादशयामपर्यन्तं वन्हिं

दद्यात्, स्वाङ्गशीतञ्चावतार्य हरिताल विचूर्ण्य यथानुपान रक्तिकैकमित कुष्ठदलीपदरो-
गप्रशमनार्थं प्रयोजयेत् ॥ १७९–१८१ ॥

अथ रसमाणिक्यम्—

तालकं वशपत्राख्यं कुष्माण्डसलिले क्षिपेत् ।
सप्तधा वा त्रिधा वाऽपि दध्ना चाम्लेन वा पुनः ॥ १८२ ॥
शोधयित्वा पुन शुष्क चूर्णयेत् तण्डुलाकृति ।
तत शरावके पात्रे स्थापयेत् कुशलो भिषक् ॥ १८३ ॥
बदरीपल्लवोत्थेन कल्केन लेपयेद्भिषक् ।
अरुणाभमध पात्र तावज्ज्वाला प्रदीयते ॥ १८४ ॥
स्वाङ्गशीतं समुद्धृत्य माणिक्याभं भवेद् ध्रुवम् ।
तत् रक्तिद्वितयं खादेद् घृतभ्रामरमर्दितम् ॥ १८५ ॥
सम्पूज्य देवदेवेश कुष्ठरोगाद्विमुच्यते ।
स्फुटित गलित यच्च वातरक्तं भगन्दरम् ॥ १८६ ॥
नाडीव्रणं व्रण दुष्टमुपदंश विचर्चिकाम् ।
नासाऽऽस्यसम्भवान् रोगान् क्षतान् हन्ति सुदारुणान् ।
पुण्डरीकञ्च चर्माख्यं विस्फोट मण्डल तथा ॥ १८७ ॥

अथ रसमाणिक्यनिर्माणविधिमाह तालकमिति । पत्रहरितालक वस्त्रे बद्ध्वा श्वेतकुष्माण्डस्वरसेन यामैक दोलायन्त्रे, स्वेदयेत् इत्थ कुष्माण्डस्वरसेन सप्तवार त्रिवारम्वा स्वेदयेत् । अनयव रीत्या सप्तवार त्रिवारम्वा दध्ना स्वेदयेत्, अम्लेन निम्ब्वादिकरसेन सप्तधा त्रिधा वा स्वेदयेत, इत्थ हरिताल विशोध्य सत्त्वे चूर्णं कृत्वा शरावद्वयमध्ये संस्थाप्य बदरीपत्रपिष्टया शरावयो सन्धिबन्धन कर्तव्यम । पश्चाच्छरावसम्पुट मृण्मयभाण्डे सस्थाप्य त वालुकाभि प्रपूर्य शरावान्तरण भाण्डमुखमवरुध्य चूल्यामारोप्य पचेत् । यावद्वह्नियोगेन भाण्डस्याधोभाग रक्तवर्णंर्भवेत्तावत्कालपर्यन्त वन्हिप्रदान कर्तव्यम् । पश्चात् स्वाङ्गशीत यन्त्रमवतार्य माणिक्योपम रसमाणिक्य गृह्णीयात् । इत्थ निर्मित रसमाणिक्य रक्तिद्वय विषममात्राप्रकल्पितघृतमधुभ्या देवदेवेश सम्पूज्य प्रत्यह सेवयेत् , तेन कुष्ठरोगाद्विमुक्तो भवेत् तथा च यथाविधिसेवित रसमाणिक्य स्फुटित गलितञ्च, वातरक्तरोग, भगन्दर नाशयति । नाडीव्रण,

दुष्टं व्रण, उपदंश, विचर्चिकाञ्च नाशयति । नासामुखजन्यरोगान् । सुदारुणान्तुर क्षतादिकरोगान्, पुण्डरीककुष्ठ, मण्डलकुष्ठ, चर्मकुष्ठ, विस्फोटञ्च विनाशयेत् । तालकचूर्णं अभ्रकपत्रमध्ये रुद्ध्वा पश्चात् शरावे ता पोट्टली सस्थाप्य शरावान्तरेण सह सन्धिवन्धन कर्तव्यमिति सुगमप्रकार ॥ १८२–१८७ ॥

अथ सलक्षणमन शिलाया पर्याया —

**मनःशिला च नेपाली शिलाह्वा नागजिह्विका ।**
**मनोह्वा कुनटी गोणी करञ्जी करवीरिका ।**
**मनोह्वा त्वोड्पुष्पाभा शस्यते सर्वकर्म्मसु ॥ १८८ ॥**

अथ मन शिलाया पर्य्यायादिकमाह मन शिलेत्यादि—मन शिला, नेपाली, शिलाह्वा, नागजिह्विका, मनोह्वा, कुनटी, गोणी, करञ्जी, करवीरिका, एते मन शिलाया पर्यायवाचकशब्दा शास्त्रे व्यवह्रियन्ते । जपाकुसुमसदृशरक्तवर्णा मन शिला भेषजकर्मणि शस्यते ॥ १८८ ॥

अशुद्धमन शिलाया दोषा —

**मनःशिला मन्दवलञ्च नून करोति जन्तो· शुभपाकहीना ।**
**मलन्तु वद्धं कुरुते च नून सशर्करं कृच्छ्रगदं करोति ॥ १८९ ॥**
**अश्मरीमूत्रहृद्रोगमशुद्धा कुरुते शिला ।**
**मन्दाग्नि मलदुष्टिञ्च शुद्धा सर्वरुजापहा ॥ १९० ॥**

यथाविधि शुभशोधनादि सस्कारहीना मन शिला सेवनेन पुरुषस्य वलह्रास मन्दाग्निञ्च करोति, शर्करोत्सर्गविशिष्ट मूत्ररोग जनयति, विवन्धञ्चोत्पादयति यथ विधि शोधिता च सर्वरोगान्निहन्ति ॥ १८९ ॥

अथ मतान्तरेण शुद्धाशुद्धगुणदोषविवेचनञ्चाह अश्मरीत्यादि—अशोधितमन शिला सेवनेन पुरुषस्य मूत्राशये ( वस्ति ) वृक्के च अश्मरीं जनयति, मूत्रावरोध हृदयव्याधिञ्चोत्पादयति, अग्नेर्मान्द्य, मलावरोधञ्च करोति, यथाविधि शुद्धा तु, यथाविहितरोगानुपानपूर्वक सेवनेन सर्वरोगान्निहन्यात् ॥ १९० ॥

मन शिलाशोधनम्—

**जयन्तीभृङ्गराजोत्थै· रक्तागस्त्यरसैः शिला ।**
**दोलायन्त्रे दिनं पाच्या याम छागस्य मूत्रके ।**

क्षालयेदारनालेन सर्वरोगेषु योजयेत् ॥ १९१ ॥

अथ शोधनमाह जयन्तीत्यादि—मनःशिला वस्त्रे बद्ध्वा दोलायन्त्रेण जयन्तीस्वरसे दिनमेकं पचेत्, ततो भृङ्गराजरसे, रक्तागस्त्यस्वरसे च पचेत्, तदनु छागस्य अजाया मूत्रे यामैकं दोलायन्त्रविधिना पचेत्, पश्चात्काञ्जिकेन प्रक्षाल्य विशुद्धं सर्वत्र प्रयोजयेत् ॥ १९१ ॥

मतान्तरम्—

मातुलुङ्गरसैः पिष्ट्वा जयानीरैर्मनःशिला ।
शृङ्गवेररसैर्वाऽपि विशुध्यति मनःशिला ॥ १९२ ॥

मतान्तरेण शोधनमाह मातुलुङ्गेत्यादि—मनःशिला खल्वे जम्भीरीनिम्बुरसेन पिष्ट्वा शोधयेत्, अथवा जयन्तीस्वरसे, शृङ्गवेरमार्द्रकं तस्य स्वरसे वा दिनमेकं दोलायन्त्रविधानेन पचेत् ॥ १९२ ॥

शोधितमनःशिलाया गुणाः—

कटुः स्निग्धा शिला तिक्ता कफघ्नी लेखनी सरा ।
भूतावेशभयं हन्ति कासश्वासहरा शुभा ॥१९३॥ [इति मनःशिलाशुद्धिः]

इत्थं विशुद्धा मनःशिला, कटुः, स्निग्धा, तिक्ता, कफनाशिनी, लेखनी(१), मलसारिणी, भूतावेशजन्योन्मादं, कासं श्वासञ्च नाशयति॥१९३॥ इति मनःशिला शुद्धिः ।

अथ खर्परशोधनम्—

पुष्पाणां रक्तपीतानां रसैः पिष्ट्वा च भावयेत् ।
नरमूत्रैश्च गोमूत्रैर्यवाम्लैश्च ससैन्धवैः ।
सप्ताहं त्रिदिनं वाऽपि पश्चात् शुध्यति खर्परः ॥ १९४ ॥

अथ खर्परशोधनमाह पुष्पाणामित्यादि—खर्परस्य लक्षणभेदादिकं यथा—
खर्परोऽतिखरश्चैव सदलो निर्दलस्तथा । मृत्तिकाभश्च पीताभो भाराढ्यश्चेह शस्यते॥
खर्परोद्विविधः प्रोक्तः सदलोनिर्दलस्तथा । सदलो दर्दुराख्यः स्यात् कारवेल्लाभिधोऽपरः ॥
खर्परं दर्दुराख्यन्तु योजयेत् सत्त्वपातने । औषधेषु च सर्वत्र कारवेल्लं प्रयोजयेत् ॥

(१) धातून्मलान्वादेहस्य विशोष्योल्लेखयेच्च यत् ।
लेखनं तद्यथा क्षौद्रं नीरमुष्णं वचा यवाः ॥

रसशास्त्रोक्तकिंशुकादिरक्तपीतपुष्पाणां स्वरसेन क्वाथेन वा खल्वे खर्परं पिष्ट्वा ससैन्धवनरमूत्रेण, गोमूत्रेण, यवकाञ्जिकोदकेन वा त्रिदिनं सप्तदिनं वा भावयेत्, तेन खर्परोविशुद्ध्यति ॥ १९४ ॥

मतान्तरम्—

खर्परः परिसन्तप्तः सप्तवारान् निमज्जितः ।
निम्बुबीजरसे चान्तर्निर्मलत्वमवाप्नुयात् ॥ १९५ ॥

अथ मतान्तरेण खर्परशोधनमाह खर्पर इत्यादि—खर्परं वह्नौ सन्तप्तं कृत्वा निम्बुरसे निर्वापयेत्, इत्थं सप्तवारं निर्वापणेन विशुद्ध्यति ॥ १९५ ॥

अथ मारणं गुणाश्च—

**खर्परं पारदेनैव वालुकायन्त्रगं पचेत् ।**
**चूर्णयित्वा दिनं यावत् शोभनं भस्म जायते ।**
**नेत्ररोगहरः क्लेदी क्षयहा खर्परो गुरुः ॥१९६॥** [ इति खर्परशोधनमारणम् ]

अथ खर्परस्य मारणमाह खर्परमिति—विशोधितं खर्परं समानभागपारदेन सह खल्वे सम्यग्विमर्द्य सम्पुटस्थं कृत्वा एकदिनावधि वालुकायन्त्रे पचेत् । पश्चात् स्वाङ्गशीतमवतार्य शोभनं पीतवर्णं भस्म गृह्णीयात् । भस्मगुणानाह खर्परभस्म नेत्रव्याधिहरं, क्लेदकरं, क्षयविध्वंसि च वर्तते ॥ १९६ ॥

अथ सपर्य्यायतुत्थशोधनमारणम्—

**तुत्थके तु शिखिग्रीवं हेमसारं मयूरकम् ।**
**विष्टया मर्दयेत् तुत्थं मार्जारक-कपोतयोः ॥ १९७ ॥**
**दशांशं टङ्कणं दत्त्वा पाच्यं मृदुपुटे ततः ।**
**पुटं दद्यात् पटुक्षौद्रैः किल तुत्थविशुद्धये ॥ १९८ ॥**

अथ तुत्थकस्य सपर्यायशोधनमारणादिकमाह तुत्थक इत्यादि—तुत्थञ्च ताम्रोपधातु, यथा तुत्थं ताम्रोपधातुर्हि किञ्चित्ताम्रेण तद्भवेत्, किञ्चित्ताम्रगुणं तस्माद्वक्ष्यमाणगुणञ्च तत्, तुत्थोत्पत्तिं यथा—

पीत्वा हालाहलं वान्तं पीतामृतगरुत्मता ।
विषेणामृतयुक्तेन गिरौ मरकताह्वये ॥
तद्वान्तं हि घनीभूतं सञ्जातं तुत्थकं खलु ।
मयूरकण्ठसच्छायं भाराढ्यमतिशस्यते ॥

तुत्थस्य पर्याया —तुत्थ, तुत्थक, शिखिग्रीव, हेमसार, मयूरक, सस्यक, ताम्रगर्भश्च ताम्राशत्वात्। अथ शोधनम्, पूर्वं खल्वे तुत्थं निक्षिप्य मार्जारो विडाल, कपोत पारावतस्तयोर्विष्ठया सह मर्दयेत्। तदनु दशमांश शुद्धटङ्कणं सम्मेल्य सम्यक् विमर्द्य शरावद्वये सम्पुट कृत्वा मृदुपुटे पचेत्, पश्चात् पादांशेनैव शिखिन्मधु च दत्वा पुनर्विमर्द्य पुटेत्। इत्थं तुत्थकं विशुद्ध्यति म्रियते च ॥ १९७–१९८ ॥

अन्यच्च—

**ओतोर्विष्ठासमं तुत्थं सक्षौद्रं टङ्कणाङ्घ्रियुक्।**
**त्रिधा सुपुटितं शुद्धं वान्तिभ्रान्तिविवर्जितम् ॥ १९९ ॥**

अन्यमतेन तुत्थस्य शोधनादिक्रममाह, ओतोरिति—ओतोर्बिडालस्य विष्ठया समं तुत्थकं, स्वल्पं मधु च, तथा तुत्थापेक्षया तुर्यांशं शुद्धटङ्कणञ्च खल्वे विमर्द्य पुटेत्। इत्थं पुटत्रयेणैव वान्त्यादिदोषरहितं तुत्थकं विशुद्धं मृतञ्च भवति ॥ १९९ ॥

अन्यच्च—

**गन्धकेन समं तुत्थं तुत्थार्द्धेनार्द्धयामकम्।**
**वान्तिभ्रान्ती यदा न स्तस्तदा सिद्धिं विनिर्दिशेत् ॥२००॥**

अन्यमतमाह गन्धकेनेत्यादि—तुत्थकं, तदर्धं शुद्धगन्धकञ्च खल्वे विमर्द्य अर्द्धयामावधि वह्नौ पुटं देयम्, तदनु पुनः शुद्धमर्धगन्धकं सम्मेल्य पुटेत्। पुटप्रदानन्तु वान्त्यादिदोषविनाशानुसारि, प्रायः सप्तपुटैर्वान्त्यादिदोषरहितं भवति॥२००॥

गुणाः —

**तुत्थं सकटुकक्षारं कषायं विशदं लघु।**
**लेखनं भेदि चक्षुष्यं कण्डूकृमिविषापहम् ॥२०१॥** [ इति तुत्थकशुद्धिः । ]

अथ तुत्थकस्य गुणानाह तुत्थमिति—तुत्थकं कटु, कषायं, विशदं, लघु, क्षारकर्मकरं, भेदि ( रेचकम् ), लेखनं-स्थौल्यहरं, नयनहितकारकं, कण्डूकृमिविषबाधानाशकञ्च भवति ॥ २०१ ॥ इति तुत्थकशुद्धिः ।

अथ विमलशुद्धिः —

**मूत्रारनालतैलेषु गोदुग्धे कदलीरसे।**
**कौलत्थे कोद्रवक्वाथे माक्षिकं विमलं तथा ॥ २०२ ॥**

**मुहुः शूरणकन्दस्थं स्वेदयेद्धरवह्निना ।**
**क्षाराम्ललवणैश्चैव तैलसर्पिः समन्वितम् ।**
**पुटत्रयं प्रदातव्यं ततस्तु शोधितं भवेत् ॥ २०३ ॥**

अथ विमलशोधनमाह मूत्रेत्यादि—विमलभेदादिकं यथा—
विमलस्त्रिविध प्रोक्तो हेमाद्यस्तारपूर्वक । तृतीय कांस्यविमलस्तत्कान्त्या स लक्ष्यते॥
वर्त्तुल कोणसयुक्त स्निग्धश्च फलकान्वित । मरुत्पित्तहरो वृष्यो विमलोऽतिरसायन ॥
पूर्वो हेमक्रियासूक्तो द्वितीयो रूप्यकृन्मत । तृतीयो भेषजे तेषु पूर्वपूर्वो गुणोत्तर ॥

विमलशुद्धि –विमल शूरणकन्दमध्ये निक्षिप्य एकप्रहरपर्यन्त दोलायन्त्रविधानेन गोमूत्रे पचेत्, तत काञ्जिके, गोदुग्धे, कदलीमूलस्वरसे, कुलत्थक्वाथे, कोद्रवक्वाथेऽपि पृथक् २ स्वेदयेत् । तदनु उष्णोदकेन विमल प्रक्षाल्य सत्वे यवक्षारकाञ्जिकसैन्धवैस्सह पेषयेत् । स्वल्प तिलतैल गोघृत च सम्मेल्य पेषयेत्, तत शरावसम्पुटस्थ कृत्वा गजपुटे पुटेत् । एव पुटत्रयप्रदानेन शुद्धिर्भवति ॥ २०२–२०३ ॥

मतान्तरम्—

**जम्बीरस्य रसैः स्विन्नो मेषशृङ्गीरसैस्तथा ।**
**रम्भातोयेन वा पाच्य वस्र विमलशुद्धये ॥ २०४॥** [ इति विमलशुद्धि । ]

मतान्तरेण विमलशोधनमाह जम्बीरस्येति–विमल दोलायन्त्रे दिनमेकं जम्बीरनिम्बुरसेन स्वेदयेत् , तदनु शृङ्गीरसेन क्वाथेन वा दिनैकं स्वेदयेत्, ततश्च रम्भातोय कदलीकन्दरसस्तेन दिनमेक स्वेदयेत् , तेन विमल सम्यक्तया विशुद्ध्यति ॥ २०४ ॥ इति विमलशुद्धि ।

अथ माक्षिकनामानि—

**माक्षिके धातुमाक्षिकं तप्तं तापीसमुद्भवम् ।**
**गरुडो माक्षिकः पक्षी बृहद्वर्ण इति स्मृतः ॥ २०५ ॥**

अथ माक्षिकनामान्याह माक्षिक इत्यादि—माक्षिक, धातुमाक्षिक, तप्त, तापीसमुद्भवम् , (तापीनाम्नी नदी तस्यास्तटनिकटखनिजोत्पन्नत्वात् ) गरुड , माक्षिक , पक्षी, बृहद्वर्ण इति । अन्यान्तरे माक्षिकोत्पत्तिभेदादिक यथा सुवर्णशैलप्रभवो विष्णुना काञ्चनो रस , ताप्या किरातचीनेषु यवनेषु च निर्मित । ताप्य सूर्यांशुसन्तप्तो माधवे मासि दृश्यते । माक्षिको द्विविधो हेममाक्षिकस्तारमाक्षिक , तत्राद्यं

माक्षिकं कान्यकुब्जोत्थं स्वर्णसन्निभम्, तपतीतीरसम्भूतं पञ्चवर्णसुवर्णवत्, पाषाणबहुलः प्रोक्तस्ताराख्योऽल्पगुणात्मकः। ईषत्सुवर्णसाहित्यात्सुवर्णगुणसाम्यतः। सुवर्णद्युतिमत्वाद्वा स्वर्णमाक्षिकमुच्यते। ईषद्रौप्यस्य साहित्याद्वा रौप्यगुणसाम्यतः, रौप्यवद्द्युतिमत्वाद्वा रौप्यमाक्षिकमुच्यते।

ग्राह्यसुवर्णरौप्यमाक्षिकयोः स्वरूपं यथा--

स्निग्धं गुरुश्यामलकान्तिकिञ्चित् कषे सुवर्णद्युति सुप्रकाशम्।
कोणोज्झितं स्वर्णसमानवर्णं सुवर्णमाक्षीकमिह प्रशस्तम्॥
स्निग्धं सकोणं गुरु च वर्त्तुलं रजतोज्ज्वलम्।
रौप्यवच्चाकचिक्याढ्यं जात्यं तद्रौप्यमाक्षिकम्॥ २०५॥

अस्य लक्षणम्—

**भङ्गे सुवर्णसङ्काशो मनाक् कृष्णच्छविर्बहिः।**
**बृहद्वर्ण इति ख्यातो माक्षिकः श्रेष्ठ उच्यते॥ २०६॥**

प्रशस्तबृहद्वर्णमाक्षिकलक्षणमाह भङ्ग इत्यादि—भङ्गे सुवर्णसमानवर्णं, बहिःप्रदेशे च किञ्चित्कृष्णवर्णं, ईदृशलक्षणयुक्तो बृहद्वर्णमाक्षिकः, (स्वर्णमाक्षिक इति) भेषजकर्मणि श्रेष्ठः प्रोक्तः॥ २०६॥

अशुद्धमाक्षिकदोषाः—

**मन्दाग्निं बलहानिञ्च व्रणं विष्टम्भगात्ररुक्।**
**कुरुते माक्षिको मृत्युमशुद्धो नात्र संशयः॥ २०७॥**

अथ अशुद्धमाक्षिकस्य दोषमाह, मन्दाग्निमित्यादि—अशोधितमाक्षिकसेवनेन अग्निमान्द्य, बलनाश, व्रण, विबन्ध, देहे रुजा, मरणञ्च करोति तस्माद्विशोधनं कार्यम्॥ २०७॥

अथ माक्षिकशोधनम्—

**स्वर्णमाक्षिकचूर्णन्तु वस्त्रे बद्ध्वा विपाचयेत्।**
**कालमारिष-शालिञ्च-क्वाथे दोलाविधानतः।**
**तदधः पतितं शस्तमेव शुध्यति माक्षिकम्॥ २०८॥**

अथ माक्षिकशोधनमाह स्वर्णमाक्षिकेत्यादि—खल्वे स्वर्णमाक्षिकं विचूर्ण्य सूक्ष्मे निर्मले च वस्त्रे बद्ध्वा कालमारिष सकण्टको वन्यमेघनाद (चौलाई) तस्य

स्वरसे क्वाथे वा, तथा शालिञ्चक्राथ शालिञ्चसज्ञकशाकविशेषक्राथस्तस्मिन् दोलायन्त्रविधिना स्वेदयेत् । इत्थ स्वेदनेन सूक्ष्मवस्त्रान्निर्गत्य पात्राभ्यन्तरे पतित स्वर्णमाक्षिकं सर्वत्र औषधादिकर्मणि प्रशस्तम् ॥ २०८ ॥

मतान्तरम्—

**माक्षिकस्य त्रयो भागा भागैकं सैन्धवस्य च ।**
**मातुलुङ्गद्रवैर्वाऽथ जम्बीरोत्थद्रवैः पचेत् ॥ २०९ ॥**
**लौहपात्रे पचेत् तावत् लौहदर्व्या च चालयेत् ।**
**भासवर्णमयो यावत् तावच्छुध्यति माक्षिकम् ॥ २१० ॥**

मतान्तरेण माक्षिकस्य शोधनमाह माक्षिकस्येत्यादि—भागत्रय स्वर्णमाक्षिक सैन्धवलवणस्य च एक भाग गृहीत्वा लौहनिर्मितकटाहे मातुलुङ्गरसे जम्बीरनिम्बुरसे वा पचेत्, लौहदर्व्या च प्रचालयेत्, इत्थ पाचनेन रक्तवर्णोपम माक्षिकं ज्ञात्वा चुल्लियन्त्रात्कटाहमवतारयेत्, ततश्च शुद्ध स्वर्णमाक्षिक सर्वत्र प्रयोजयेत् ॥ २०९–२१० ॥

मतान्तरम्—

**माक्षिकस्य चतुर्थांश गन्धं दत्त्वा विमर्दयेत् ।**
**उरुबूकस्य तैलेन ततः कुर्याच्च चक्रिकाम् ॥ २११ ॥**
**शरावसम्पुटे कृत्वा पुटेद्गजपुटेन तु ।**
**सिन्दूराभ भवेद्भस्म माक्षिकस्य न संशयः ॥ २१२ ॥**

मतान्तरेण शोधनमाह माक्षिकस्येत्यादि—स्वर्णमाक्षिकस्य यावत्परिमाण भवेत् तदपेक्षया चतुर्थांश शुद्धगन्धकं गृहीत्वा खल्वे एरण्डतैलेन सह सम्यक् विमर्द्य चक्रिका कृत्वा शरावद्वयसम्पुटस्थ च विधाय गजपुटे पचेत्, अनया रीत्या कतिपयपुटैरेव सिन्दूरसदृशरक्तवर्णं स्वर्णमाक्षिकभस्म सञ्जायते ॥ २११–२१२ ॥

शुद्धमाक्षिकस्य गुणा —

**माक्षिकं तिक्तमधुरं मेहार्शःक्रिमिकुष्ठनुत् ।**
**कफपित्तहरं बल्यं योगवाहि रसायनम् ॥ २१३ ॥**

[ इति माक्षिकशोधनम् । ]

अथ स्वर्णमाक्षिकभस्मगुणमाह, स्वर्णमाक्षिकस्य भस्म तिक्त, मधुर बल-

वर्धक, प्रमेहघ्नं, अर्श क्रिमिकुष्ठरोगाणां च नाशकं, कफपित्तजन्यरुजापहं, तथा यथाविहितरोगानुपानपूर्वकं सर्वव्याधिहरं, रसायनगुणकरञ्च वर्तते । रसायनञ्च तज्ज्ञेयं यज्जराव्याधिनाशकम् ॥ २१३ ॥

अथ सपर्य्यायकाशीशशोधनम्—

**काशीशं धातुकाशीशं खेचरं दन्तरञ्जनम् ।**
**सकृद्भृङ्गाम्बुना स्विन्नं काशीशं निर्मलं भवेत् ॥ २१४ ॥**

अथ काशीशशोधनादिकमाह काशीश इत्यादि—काशीशं, धातुकाशीशं, खेचरं, दन्तरञ्जनमिति पर्यायवाचकशब्दाः । काशीश "हिराकस" इतिलोके, तन्त्रान्तरे तु अस्य धातुकासीसं, पांशुकासीसमिति वा संज्ञा, तद्यथा भावप्रकाशे "कासीसं धातुकासीसं पांशुकासीसमित्यपि । तदेव किञ्चित्पीतं तु पुष्पकासीसमुच्यते" यद्यप्यत्रास्य-लिङ्गं न स्फुटमुक्तं तथापि निबन्धान्तरदर्शनात् तत् ज्ञातव्यं, तद्यथा रत्नमालायां "कासीसं द्विविधं धातुपुष्पभेदात्, धातुकासीसं हरितं लोहितञ्च अन्यच्चुवल कृष्णञ्च, अन्यत्राप्युक्तं "पुष्पकासीसं किञ्चित्पीतं, भस्मवन्मृत्तिकाभं धातुकासीसम्, इति भैषज्यरत्नावल्यान्तु कासीस-धातुकासीस-पुष्पकासीसभेदेनास्य त्रैविध्यमुक्तम् । अथ काशीशस्यशोधनं, काशीशं सत्वे विचूर्ण्य भृङ्गराजस्वरसे दोलायन्त्रेण वारमेकं स्वेदयेत्, स्वेदनार्थं वन्हिप्रमाणन्तु प्रायः प्रहरत्रयं पर्याप्तम् ॥ २१४ ॥

गुणाः—

**काशीशं निर्मलं स्निग्धं श्वित्रनेत्ररुजापहम् ।**
**पित्तापस्मारशमनं रसवद्गुणकारकम् ॥२१५॥** [ इति काशीशशोधनम् ]

इत्थं निर्मलं काशीशं स्निग्धं श्वेतकुष्ठनाशकं नयनव्याधिहरं पित्तक्षयकरं अपस्मारविनाशकं, पारदवद्बहुगुणकरञ्च ज्ञेयम् ॥ २१५ ॥

अथ कान्तपाषाणनामानि—

**राजपट्टं महापट्टं शिखिग्रीवं विराटकम् ॥ २१६ ॥**

अथ कान्तपाषाणस्य नामान्याह राजपट्ट इत्यादि—राजपट्टं, महापट्टं, शिखिग्रीवं, विराटकमिति कान्तापाषाणस्य पर्यायाः, तस्यपरिचयो यथा

कान्तपाषाणकः ख्यातः चुम्बको लौहकर्षकः
कान्तोपलः कान्तदृषत् स एव परिकीर्तितः । इति ॥ २१६ ॥

अथ कान्तपाषाणशुद्धि —

**चूर्णित कान्तपाषाणं महिषीक्षीरसंयुतम् ।**
**विपचेदायसे पात्रे गोघृतेन समाहितम् ॥ २१७ ॥**
**लवणे च तथा क्षारे शोभाञ्जनरसे क्षिपेत् ।**
**अम्लवर्गस्य तोयेन दिनं घर्मे विभावयेत् ॥ २१८ ॥**
**तथैव दोलिकायन्त्रे द्विवारं पाचयेत् सुधीः ।**
**कान्तपाषाणशुद्धौ तु रसकर्म समाचरेत् ॥ २१९ ॥**

[ इति कान्तपाषाणशोधनम् । अस्यैव नामान्तरं राजपट्ट इति]

अथ कान्तपाषाणशोधनमाह चूर्णितमिति—कान्तपाषाण सत्वे विचूर्ण्य गोघृतसहितेन महिषीक्षीरेण लौहनिर्मितकटाहे दोलायन्त्रविधिना तीव्राग्नौ त्रियाम पचेत्, तदनु तप्तोदकेन प्रक्षाल्य लवणयवक्षारमिश्रितशोभाञ्जनरसेन दिनैक विमर्द्य घर्मे शोषयेत् , ततश्च अम्लवर्गोक्तपदार्थस्वरसैर्भावयित्वा दिनैकमातपे शोपयेत् , पुनरपि पूर्ववद्दोलायन्त्रेण द्विवार सस्वेद्य लौहवत्पुटादिक दत्वा रसकर्मणि प्रयोजयेत् ॥ २१'–२१९ ॥

अथ वराटिकालक्षणानि—

**पीताभा ग्रन्थिला पृष्ठे दीर्घवृन्ता वराटिका ।**
**सार्द्धनिष्कभरा श्रेष्ठा निष्कभारा च मध्यमा ॥ २२० ॥**
**पादोननिष्कभारा च कनिष्ठा परिकीर्त्तिता ।**
**रसवैद्यैर्विनिर्दिष्टा सा वराटकसञ्ज्ञका ॥ २२१ ॥**

अथ वराटिकाया नामलक्षणादिकमाह पीताभेति—वराटको वराटश्च वराटी च वराटिका । कपर्दक कपर्दश्च कपर्दी च कपर्दिका । बालक्रीडनकश्चापि चरोवर्यश्चराचर । वराटक वराटश्च कपर्दश्च निगद्यते । अथ भेदा यथा—

वराटिका त्रिधाप्रोक्ता पीता श्वेता च धूसरा,
पीतोत्तमा मध्यमा तु श्वेतान्यात्वधमा मता । इति,

पीतवर्णा, पृष्ठभागे च ग्रन्थिला ग्रन्थिवदुत्सेधयुक्ता, दीर्घवृन्ता, तथा सार्द्धनिष्कैकपरिमिता श्रेष्ठा, एकनिष्कपरिमिता च मध्यमा, पादोननिष्कभारयुक्ता च कनिष्ठा कथ्यते ॥ २२०–२२१ ॥

अथ वराटिकाशुद्धिस्तस्या गुणाश्च—

वराटी काञ्जिके स्विन्ना यामाच्छुद्धिमवाप्नुयात् ।
परिणामादिशूलघ्नी क्षयहा ग्रहणीहरा ।
कटूष्णा दीपनी वृष्या तिक्ता वातकफापहा ॥ २२२ ॥

अथ वराटिकाया शोधनमाह वराटीति—वराटिका दोलायन्त्रेण काञ्जिके प्रहर पचेत्, पश्चात् तप्तोदकेन प्रक्षाल्य विशुद्धा गृह्णीयात्, भस्मार्थञ्च प्रयोजयेत्, एव विधशुद्धवराटिकाया गुणमाह—शोधितवराटिकाया भस्मसम्पादन विना नास्ति क्वापि सेवनार्थ प्रयोगस्तथापि एवविधशुद्धवराटिकानिमितभस्मगुणा इति तात्पर्य्य-गर्भित वाक्यमिति । वराटभस्म कटुत्रिकसमन्वित निम्वूकाम्लेन सह सेवनेन परि-णामादिशूल व्यपोहति, तथा क्षय, ग्रहणीं, विकृतवात, कफञ्च विनाशयति, कटूवी, उष्णा, दीपनशक्तिदायिनी, वृष्या, तिक्ता च ज्ञेया ॥ २२२ ॥

मतान्तरे शोधनम्—

भूगर्त्ते च समे शुद्धे पत्तन स्थापयेत् सुधीः ।
तुषेण पूरयेत् तस्याः किञ्चिन्मध्यं भिषग्वर. ॥ २२३ ॥
वराटपूरिता मूषां तन्मध्ये विनिवेशयेत् ।
करीषाग्नि ततो दद्यात् पालिकायन्त्रमुत्तमम् ।
अनेन म्रियते नून वराट सर्वरोगजित ॥ २२४ ॥

[ इति वराटिकाशुद्धि । ]

अन्यमतेन वराटशोधन मारणञ्चाह भूगर्त्त इत्यादि—भूमौ समभाग गर्त्तमेक विधाय तस्याधोभागे लौहपत्र सस्थाप्य किञ्चिद्भाग तुषै प्रपूरयेत्, तदनु वराट खण्डे स्थूल विचूर्ण्य मूषायन्त्रे निक्षिप्य मुखञ्चावरुध्य तुषमध्ये मूषा सस्थाप्य तदुपरिभाग सम्यग्वनोपलैराच्छाद्य वन्हि प्रज्ज्वालयेत् । इत्थ मृत वराट सर्वरोग-नाशनक्षमन्भवति ॥ २२३–२२४ ॥

अथाञ्जनशुद्धि —

नीलाञ्जन चूर्णयित्वा जम्बीरद्रवभावितम् ।
दिनैकमातपे शुद्धं ततः कार्येषु योजयेत् ॥ २२५ ॥

अथ नीलाञ्जनशोधनमाह नीलाञ्जनमिति—नीलाञ्जनमिति सर्वेषामञ्जनाना-मुपलक्षणम् यथा रसरत्नसमुच्चये अञ्जनभेदा ,

सौवीरमञ्जन प्रोक्त रसाञ्जनमत परम् ।
स्रोतोऽञ्जन तदन्यच्च पुष्पाञ्जनकमेव च ॥
नीलाञ्जनञ्च तेषा हि स्वरूपमिह वर्ण्यते ।

सौवीरमञ्जन सुवीरानाम्नी काचिन्नदी तत्र भवमिति तल्लक्षण यथा चक्रसंग्रहे वल्मीकशिखराकार भग्नं नीलोत्पलद्युति । सौवीराञ्जनमित्याहुरायुर्वेदविदो जना ॥ तस्य गुणा —यथा सौवीरमञ्जन धूम्र रक्तपित्तहर हिमम् । विषहिध्माक्षिरोगघ्न व्रणशोध-नरोपणमिति ॥ रसाञ्जनञ्च पीताभ विषवक्त्रगदापहम् । श्वासहिध्मापह वर्ण्य वात-पित्तास्रनाशनमिति ॥ स्रोतोऽञ्जनमञ्जनविशेष "कृष्णसुर्मा" इति प्रसिद्धम् , एतदेव श्रेष्ठ यदुक्त भावप्रकाशे । स्रोतोऽञ्जनगुणा सर्वे सौवीरेऽपि मता बुधै । किन्तु द्वयोर-ञ्जनयो श्रेष्ठ स्रोतोऽञ्जन स्मृतम इति ॥ तस्य लक्षण यथा राजनिघण्टौ वल्मीकशि-खराकार भिन्ननीलाञ्जनप्रभम् । घृष्टे च गैरिकावर्ण श्रेष्ठ स्रोतोऽञ्जनञ्च तत् ॥ तस्य गुणा रसरत्नसमुच्चये यथा—स्रोतोऽञ्जन हिम स्निग्ध कषाय स्वादुलेखनम् । नेत्र्य हि-ध्माविषच्छर्दि कफपित्तास्ररोगनुत ॥ इति, पुष्पाञ्जन सित स्निग्ध हिम सर्वाक्षिरोग-नुत् । अतिदुर्द्धरहिध्माघ्न विषज्वरगदापहम् ॥ नीलाञ्जन गुरुस्निग्ध नेत्र्य दोषत्रया-पहम । रसायन सुवर्णघ्न लोहमार्दवकारकम् ॥ रसरत्नसमुच्चये सर्वाञ्जनशोधनविधि , अञ्जनानि विशुद्ध्यन्ति भृङ्गराजभवद्रवै । सनोदासत्त्ववत्सत्त्वमञ्जनाना समाहरेत् ॥ नीलाञ्जन सर्वे विचूर्ण्य जम्बीरनिम्बुरसेन दिनमेक भावयेत् । ततश्चातपे सशुष्कं विशुद्ध भवति, तच्च सर्वत्र योजयेत् ॥ सप्तदिनपर्यन्त भृङ्गराजरसेन भावितमपि विशुद्ध्यति, तथैव त्रिफलाक्वाथे सप्तदिन भावनाविधानेनापि शुद्ध भवति, प्रायेणाञ्ज-नार्थं त्रिफलाभावित श्रेष्ठ ज्ञेयमिति ॥ २२५ ॥

अथ हिङ्गुलपर्य्याया —

हिङ्गुले हिंगुलुर्यानि दरद शुकतुण्डकः ।
रसगन्धकसम्भूतो हिङ्गुलो दैत्यरक्तकः ॥ २२६ ॥

अथ हिङ्गुलस्य पर्य्यायानाह हिङ्गुल इत्यादि—हिङ्गुल , हिङ्गुलु , दरद , शुक-तुण्डक , रसगन्धकसम्भूत पारदगन्धकोत्पन्नत्वात्, दैत्यरक्तक , हिङ्गुल हि त्रिवि-

धम्, यथा भावप्रकाशे, दरदस्त्रिविध प्रोक्तश्चर्मार शुकतुण्डक । हंसपादस्तृतीय-स्यात् गुणवानुत्तरोत्तर ॥ चर्मार शुक्लवर्ण स्यात् सपीत शुकतुण्डक । जपाकुसुम-सङ्काशो हंसपादो महोत्तम ॥ अन्यत्र श्रेष्ठहिङ्गुललक्षण यथा जपाकुसुमसङ्काश पेषणे सुमनोहर । महोज्ज्वलो भारपूर्णो हिङ्गुल श्रेष्ठ इष्यते ॥ २२६ ॥

अथ हिंगुलशोधनम्—

**अम्लवर्गद्रवै पिष्टा दरदो माहिषेण च ।**
**दुग्धेन सप्तधा पिष्ट शुष्कीभूतो विशुध्यति ॥ २२७ ॥**

अथ हिङ्गुलशोधनमाह, अम्लवर्गेत्यादि—हिङ्गुल खल्वे विचूर्ण्य अम्लवर्गकथित-द्रव्याणामन्यतमद्रव्यरसेन वा जम्बीरनिम्बुरसेनैव आप्लाव्य दृढ पेषयेत् । इत्थ सप्तवारं निम्बुरसेन आप्लाव्य विमर्द्य च शोषयेत्, तदनु सप्तवार माहिषदुग्धेन सम्यक् भावयित्वा विमर्दयेत् । इत्थ पेषणेन शुष्कीभूत हिङ्गुल विशुद्धयति ॥२२७॥

अन्यच्च—

**मेषीदुग्धेन दरदमम्लवर्गैर्विभावितम् ।**
**सप्तवार प्रयत्नेन शुद्धिमायाति निश्चितम् ॥ २२८ ॥**

अन्यमतेन हिङ्गुलस्य शोधनमाह मेषीदुग्धेनेत्यादि—सप्तवार पृथक् २अम्ल-वर्गोक्तद्रव्यैस्सह हिङ्गुल भावयित्वा तदनु सप्तवार मेषीदुग्धेन विमर्द्य शोषयेत् । इत्थ निश्चित हिङ्गुल शुद्धयति ॥ २२८ ॥

अन्यमतम्—

**दरद दोलिकायन्त्रे पक्क जम्बीरजैर्द्रवै ।**
**सप्तवारमजामूत्रैर्भावित शुद्धिमेति हि ॥ २२९ ॥**

अन्यमतेन शोधनमाह, हिङ्गुल दोलायन्त्रेण जम्बीरनिम्बुरसे यामैक सस्वेद्य प-श्चात् सप्तवारमजामूत्रेण सम्भाव्य पिष्ट्वा च शोषयेत्, तेन हिङ्गुलं विशुद्धयति॥२२९॥

अथान्यत्—

**आर्द्रकैर्लकुचद्रावैः सप्तधा भवितो यदि ।**
**हिंगुल शुद्धतां याति निर्दोषो जायते खलु ॥ २३० ॥**

अथान्यमतेन शोधनमाह आर्द्रकैरिति—हिङ्गुल खल्वे विचूर्ण्य आर्द्रकस्वरसेन

सम्यगाप्लाव्य पिष्ट्वा च शोषयेत्, इत्थं सप्तवार भावयेत्, ततश्च लकुचद्रावो वङ्-हलस्वरसस्तेनापि सप्तवारमाप्लाव्य पिष्ट्वा च शोषयेत्, तेन हिङ्गुल सम्यक् शुद्धयति निर्दोषश्च जायते ॥ २३० ॥

अथ शुद्धहिंगुललक्षण गुणाश्च—

**बिम्ब्याभं हिंगुलं दिव्यं रसगन्धकसम्भवम् ।**
**मेहकुष्ठहरं रुच्य बल्य मेधाग्निवर्द्धनम् ॥ २३१ ॥**

अथ शुद्धहिङ्गुलस्य लक्षण गुणाश्चाह बिम्ब्याभमिति—शोधित हिङ्गुल बिम्ब्याभ पक्वबिम्बीफलसमानरक्तवर्णं भवति, रसगन्धकसंयोगसमुत्पन्न दिव्य देदीप्यमान भवति । शुद्धहिङ्गुलस्य गुणा विशुद्ध हिङ्गुल विंशतिविधप्रमेहान्निखिलकुष्ठांश्च हन्ति तथा रुचिकर देहबलवर्द्धक, मेधा स्मरणशक्ति पाचकाग्निश्च विवर्द्धयति ।
अथान्यगुणा —लोचनामयहर कफापह पित्तजामयनिषूदन परम् ।

प्लीहकुष्ठगरकामलाहरो जाठराग्निजननोऽथपाचन ॥
मेहवर्गपरितापनाशनो देहकान्तिबलवुद्धिवर्द्धन ।
आमवातगजदर्पखण्डनो हिङ्गुलोविजयतेज्वरापह ॥ २३१ ॥

अथ शिलाजतुनामानि—

**शिलाजतुनि शैलेयमद्रय गिरिजमश्मजम् ।**
**धातुजमश्मजतुकं शैलज चाश्मसम्भवम् ॥ २३२ ॥**

अथ शिलाजतुनामादिकमाह शिलाजतुनीत्यादि—शिलाजतु, शैलेय, अद्रय, गिरिज, अश्मज, धातुज, अश्मजतुक, शैलज, अश्मसम्भव, शिलामय , शिलास्वेद , शिलानिर्यास इति । शिलाजतु च धातुनि स्रवम्, उक्तश्च यथा "हेमाद्या सूर्यसन्तप्ता स्रवन्ति गिरिधातव । जत्वाभ मृदु मृत्स्नाभ यन्मल तच्छिलाजतु ॥ नात्युष्णशीत धातुभ्यश्चतुर्भ्यस्तस्य सम्भव । हेम्नोऽथ रजतात् ताम्रात् वर कृष्णायसादपि ॥ अथान्यमतेन शिलाजतुपरिचयो गुणादिकञ्च यथा रसतरङ्गिण्या सूर्यसन्तापसन्तप्ता. शिला शैलाधिपस्य यत् । गाट मुञ्चति निर्यास तच्छिलाजतु कीर्तितम् ॥ शैलाधिपशिलासारो निर्गतो रवितापत । शुष्क सन्मूर्तता यात शिलाजतु निगद्यते ॥ सौवर्ण राजत ताम्र लोहञ्चेति विभेदत । शिलाजतु समाख्यात भिषग्भिस्तु चतुर्विधम् ॥ शिशिर मधुर तिक्त कटुक कटुपाकि च । जपाकुसुमसङ्काश सौवर्ण शैलधातुजम् ॥

शिशिरं पाण्डुरं तिक्तं स्वादुपाकि च राजतम् ।
तिक्तोष्णतीक्ष्णं नीलाभं ताम्रं गिरिजमीरितम् ॥
तिक्तं सलवणं कृष्णं विपाके कटुशीतलम् ।
गुरु स्निग्धं कषायञ्च सर्वश्रेष्ठं तदायसम् ॥
सौवर्णं वातपित्तघ्नं राजतं श्लेष्मपित्तहृत् ।
कफघ्नं ताम्रजं ज्ञेयं त्रिदोषहरमायसम् ॥

एषां मध्ये चायसं शिलाजतु श्रेष्ठत्वात्, रसायनत्वात्, सर्वरोगोपशान्तिकरत्वाच्च सर्वत्रैवाद्रियते तस्य विशेषलक्षणं यथा "लौहकिट्टायते वह्नौ विधूमं दह्यतेऽम्भसि। तृणाग्रे कृतं श्रेष्ठमधो गलति तन्तुवत् ॥ अथ रसरत्नसमुच्चये शुद्धशिलाजतुलक्षणगुणादिकं यथा—

वह्नौ क्षिप्तं भवेद्यत्तल्लिङ्गाकारमधूमकम् ।
सलिलेऽप्यविलीनञ्च तच्छुद्धं हि शिलाजतु ॥

गुणाः—नूनं सज्वरपाण्डुशोफशमनं मेहाग्निमान्द्यापहम् ।
मेदश्छेदकरञ्च यक्ष्मशमनं शूलामयोन्मूलनम् ।
गुल्मप्लीहविनाशनं जठरहृच्छूलघ्नमामापहम् ॥
सर्वत्वग्गदनाशनं किमपरं देहे च लोहे हितम् ॥ २३० ॥

तच्छुद्धिः—

**गोदुग्धत्रिफलाभृङ्ग-द्रवैः पिष्टं शिलाजतु ।**
**दिनैकं लौहजे पात्रे शुद्धिमायात्यसंशयम् ॥ २३३ ॥**

अथ शिलाजतुनः साधारणशुद्धिमाह गोदुग्ध इत्यादि—प्रथमं शिलाजतुनो मलादिकमपसार्य तदनु गोदुग्धेन, त्रिफलाक्वाथेन, भृङ्गराजस्वरसेन क्रमशः एकं दिनं लोहपात्रे पिष्ट्वा शोधयेत् । अत्र यद्यपि सामान्यतयैव शोधनमुक्तं तथापि विशेषरूपेण शोधनं यथा रसतरङ्गिण्या—विगताम्बुदे निवाते धरणातलप्रदेशे । प्रखरे निदाघकाले प्रणयेच्छिलाजशुद्धिम् ॥ विमलानि भाजनानि त्वयसा विनिर्मितानि । युगसम्मितानि तीव्रे निदधीत सूर्यतापे ॥ सुविचूर्णितं शिलाजं विनिधाय पात्रमध्ये । द्विगुणं प्रतप्तनीरं त्रिफलाकषायमर्द्धम् ॥ गिरिजे प्रदाय यामं निदधीत तीव्रतापे । कामं विमर्द्य गिरिजं विदधीत वस्त्रपूतम् ॥ विनिधाय पूर्वपात्रे निदधीत तीव्रतापे ।

अथ तीव्रातपयोगाद्विमल सरप्रकाशम् ॥ मृदुल आगाढकृष्ण यदुपैति नीरपृष्ठे । निदधोत सोष्णतोये खल्वभाजनेऽपरस्मिन् ॥ अथवा द्वितीयपात्रात्खलु भाजने तृतीये। अथ भाजनात्तृतीयान्निदधोत तुर्यपात्रे ॥ सलिलन्तु यावदच्छ न भवेत्तु तावदेवम्। विदधीत वैद्यवर्य सतत कृतावधान ॥ सलिल भवेद्यदाच्छ मलमेत्यध प्रदेशे । सलिलोद्र्ध्वभागसस्थं गिरिज हरेद्विशुद्धम् ॥ विधिना ह्यनेन शुद्धि तदुपैति निर्विशेषाम्। गिरिज विशुद्धमेव विनियोजयेद्विशङ्क ॥ त्रिफलाक्काथनिर्माणविशेष –शिलाजतुसम क्वाथ्य जलमष्टगुण तत । पादाशशेषित क्वाथ शिलामयविशुद्धये ॥ उपर्युक्तविधिनैव क्वाथस्थाने गोमूत्र, भृङ्गराजस्वरस वा दत्त्वा समाहृत शिलाजतु शुद्धिमाप्नोति । शुद्धशिलाजतुन परीक्षण 'याङ्गारसस्था निर्धूमा पक्वालिङ्गोपमा-भवेत्। आस्वादे कटुतिक्ता च शिलालाक्षा तु साऽमला॥ सलिले या विनिक्षिप्ता तन्तु-प्रसवकारिणी, अस्वादे कटुतिक्ता च शिलालाक्षातु साऽमला ॥ २३३ ॥

अथ शुद्धिशिलाजतुगुणा —

**शिलाजतु भवेत् तिक्तं कटुकञ्च रसायनम् ।**
**क्षयशोथोदरार्शांसि हन्ति वस्तिरुजां जयेत् ॥ २३४ ॥**

अथ शुद्धशिलाजतुगुणमाह शिलाजत्वित्यादि--शिलाजतु स्वादे तिक्तं, पाके च कटुक, रसायनगुणकर, क्षयरोग, शोथरोगं, अर्शोरोग, उदरविकार, वस्तिशूलं च निवारयेत् ॥ २३४ ॥

अथ सौवीरादिशोधनम्—

**सौवीरं टङ्कणं शङ्खं कङ्कुष्ठं गैरिक तथा ।**
**एते वराटवच्छोध्या भवेयुर्दोषवर्जिताः ॥ २३५ ॥**

अथ सौवीरादीना साधारणशोधनमाह सौवीरमित्यादि--सौवीरं सौवीराख्य-मञ्जन, टङ्कण सौभाग्य, शङ्ख, कङ्कुष्ठ गैरिकञ्च एते वराटवत्प्रहरैकं काञ्जिके स्वेदिता साधारणतया विशुद्ध्यन्ति ॥ २३५ ॥

ककुष्ठादीना शोधनम्—

**कंकुष्ठं गैरिकं शङ्खं काशीशं टङ्कणं तथा ।**
**नीलाञ्जनं शुक्ति भेदाः खुल्वकाः सवराटकाः ॥ २३६ ॥**

जम्बीरवारिणा स्विन्ना क्षालिता' कोष्णवारिणा ।
शुद्धिमायान्त्यमी योज्या' भिषग्भिर्योगसिद्धये ॥ २३७ ॥

अथ कङ्कुष्टादीनां साधारणशोधनमाह कङ्कुष्टमित्यादि—कङ्कु(१)ष्ट, गैरिक, शङ्ख, कासीस, सौराष्ट्र, नीलाञ्जन, शुक्तय, शम्बूका, क्षुद्रवराटकाश्च, दोलायन्त्रे जम्बीरनिम्बुरसेन याम स्वेदिता पश्चात्कोष्णजलेन प्रक्षालिता विशुद्धिमायान्ति॥२३६-२३७॥

अथ टङ्कणपर्य्याया —

टङ्कणं क्षामणष्टङ्क सम्यक्क्षारश्च पाचनः ।
सुभगो मालतीजातो द्रावी लौहविशुद्धिद' ॥ २३८ ॥

अथ टङ्कणनामान्याह टङ्कणमिति—टङ्कण, क्षामण, टङ्क, सम्यक्क्षार पाचन सुभग, मालतीजात, द्रावी, धातूना द्रावकत्वात्, लौहविशुद्धिद, इमानि टङ्कणस्य नामानि ॥ २३८ ॥

अथ टङ्कणशुद्धि —

आदौ टङ्कणमादाय काञ्जिकाम्ले विनिक्षिपेत् ।
एकरात्रात् समुद्धृत्य रौद्रयन्त्रे विभावयेत् ॥ २३९ ॥
नरमूत्रगतं टङ्क गवा मूत्रगत तथा ।
दिनान्ते तत् समुद्धृत्य जम्बीराम्बुगतं ततः ॥ २४० ॥
जम्बीराम्लात् समुद्धृत्य नारिकेलस्य पात्रके ।
मरीचचूर्णसंयुक्त क्षालयेच्छीतलाम्बुना
एव टङ्क समादाय सर्वरोगेषु योजयेत् ॥ २४१ ॥

अथ टङ्कणशोधनमाह आदाविति—प्रथम टङ्कण काञ्जिकाम्ले एकरात्रपर्यन्त स्थापयेत्, तत उद्धृत्य तीव्रातपे शोषयेत् ।पुन पुरुषमूत्रे, गोमूत्रे च पृथक् २ एकरात्रिपर्यन्त सस्थाप्य घर्मे शोषयेत् । तदनु जम्बीरनिम्बुरसेऽपि तथैव सस्थाप्य

(१) अथ कङ्कुष्टस्य उत्पत्तिभेदादिक यथा रसरत्नसमुच्चये—
हिमवत्पादशिखरे कङ्कुष्टमुपजायते । तत्रैक नालिकाख्य हि तदन्यद्रेणुक मतम् ॥
पीतप्रभ गुरुस्निग्ध श्रेष्ठ कङ्कुष्ठमादिमम।श्यामपीत लघु त्यक्तसत्व नेष्टं हि रेणुकम् ॥
केचिद्वदन्ति कङ्कुष्ठ सद्योजातस्य दन्तिन । वर्चश्च श्यामपीताभ रेचन परिकथ्यते ॥
कतिचित्तेजिवाहाना बाल कङ्कुष्टसज्ञकम । वदन्ति श्वेतपीताभ तदतीव विरेचनम् ॥

शोषयेत्। ततश्च जम्बीराम्लान्निष्काश्य नारिकेलपात्रे मरिचचूर्णेन सह टङ्कण संस्थापयेत्, पश्चाच्छीतलवारिणा क्षालयेत्। इत्थं विशुद्ध सौभाग्य सर्वरोगेषु प्रयोजयेत्।
अन्यमतेन टङ्कणस्य निर्मलीकरण शोधनञ्च यथा—
टङ्कण चूर्णित तोये तत्वसख्यगुणे भिषक्। सन्द्राव्य वस्त्रपूतञ्च कृत्वा चूल्या निधापयेत्॥
तीव्राग्निना पचेत्काम नीरञ्च परिशोषयेत्। स्वल्पनीराशशेषे च टङ्कण निर्मल हरेत्॥
शोधन यथा—सुचूर्णित टङ्कणन्तु खलु पञ्चपलोन्मितम्।

समुज्ज्वलोदरे क्षुद्रकटाहे विन्यसेत्तत ॥
चुल्लिकाया निधायाथ पचेद्दर्व्या प्रचालयन्।
सुपुष्पित नष्टनीर शुद्धिमायाति टङ्कणम्॥ इति ॥ २३९–२४१ ॥

गुणा —

**टङ्कणोऽग्निकरो रूक्षः कफघ्नो रेचनो लघुः ॥ २४२ ॥**

अथ शोधितटङ्कणस्य गुणानाह टङ्कण इति—टङ्कणो वह्नेर्दीपक, रूक्ष, कफविकारहन्ता, लघु, रेचकश्चास्ति। अन्यगुणा, स्त्रीपुष्पजनक, आध्माननाशक, कासश्वासहर पित्तकृत् मूढगर्भप्रवर्तकश्च वर्तते। अस्यामयिकप्रयोगा।

सत्र्यूषणटङ्कणो मधुना शीलित· क्षणमाध्मान नाशयेत्।
व्रणेषु चूर्णितटङ्कण अवचूर्णनेन रुधिरस्रावं निवारयेत्॥

वह्निसम्भृष्ट टङ्कण मधुना सह लेपनेन मुखपाक निहन्यात्। वन्हिभृष्ट टङ्कणं श्वेतचन्दनकर्दमाक्त लेपनेन सिध्मकुष्ट हरति ॥ २४२ ॥

अथ शङ्खशोधनम्—

**अन्धमूषागतं शङ्ख पलमेकं विचक्षणः ।**
**माषार्द्धटङ्कणैर्मिश्र दण्डयन्त्रेण मारयेत् ॥ २४३ ॥**

अथ शङ्खशोधनमाह, अन्धमूषागतमित्यादि—शङ्खनामानि यथा—शङ्खः, कम्बु, त्रिरेख, समुद्रज, सुनाद, दीर्घनाद, कम्बोजश्च। ग्राह्यशङ्खस्वरूप यथा—
वृत्त स्निग्ध सूक्ष्ममुखो निर्मलश्चेन्दुसुन्दर। दीर्घकायोगुरुश्चापि शङ्ख श्रेष्ट प्रकीर्तित॥
शङ्खस्तु द्विविध प्रोक्तो रसतन्त्रविचक्षणै। प्रथमोदक्षिणावर्तो वामावर्तोऽपरोमत॥

प्रथमो देवपूजने प्रयुज्यते दुर्लभश्च, वामावर्त· सुलभ। सामान्यतया दोलायन्त्रेण जम्बीररसे यामैक स्वेदनेन विशुद्धभूतं पलपरिमित शङ्खमादाय स्थूल-

कणरूप विधाय मूषायन्त्रे मापार्धशुद्धटङ्कणेन सह अवरुध्य दण्डयन्त्रेण मारयेत, ततश्च सूक्ष्म विचूर्ण्य गृह्णीयात् ॥ २४३ ॥

अथ शुद्धशङ्खगुणा —

**शङ्ख· सर्वरुजां हन्ति विशेषादुदरामयम् ।**
**शूलाम्लपित्तविष्टम्भ-मेहहृत् वह्निदीपनः ॥ २४४ ॥**

[ इति उपरसशोधनाद्यधिकार । ]

शङ्खभस्मगुणानाह शङ्ख इत्यादि —अनुपानविभेदेन शङ्खभस्म सर्वरोगाञ्नि हन्ति, विशेषत उदररोगान्, तथा शूल, अम्लपित्त, विष्टम्भ, प्रमेहश्च नाशयति, वन्हिञ्च प्रदीपयति ॥ २४४ ॥

अथ स्वर्णादिशोधनम्—

**हेमादिलौहकिट्टान्तं शोधनं मारणं शृणु ।**
**तैले तक्रे गवां मूत्रे काञ्जिकेऽथ कुलत्थजे ॥ २४५ ॥**
**तप्ततप्तानि सिञ्चेत तत्तद्द्रावे च सप्तधा ।**
**एवं स्वर्णादिलौहानि शुद्धिमायान्त्यसंशयम् ॥ २४६ ॥**

अथ स्वर्णादीना साधारणशोधनमाह हेमादीत्यादि—स्वर्णादीना सूक्ष्मपत्राणि कृत्वा वह्नौ सन्ताप्य पृथक् २ सप्तवारं तैलादिषु निर्वापयेत् । एव पञ्चत्रिंशद्वार प्रतप्त कृत्वा तैलादिद्रवपदार्थेषु निर्वापितं प्रत्येकं स्वर्णादिक विशुद्धयति, साधारणशोधन-मिदं विशेषशोधन्तु सर्वेषामग्रे प्रतिपादयिष्यते ॥ २४५–२४६ ॥

अशुद्धामृतस्वर्णस्य दोषा —

**सौख्य वीर्य्यं बलं हन्ति नानारोगं करोति च ।**
**अशुद्धममृत स्वर्ण, तस्मात् शुद्धन्तु मारयेत् ॥ २४७ ॥**

अथाशुद्धामृतस्वर्णदोषमाह सौख्यमित्यादि—सामान्यविशेषोभयशुद्धिहीनममृतञ्च स्वर्ण सेवनेन सौख्य देहबल वीर्य्यञ्च हन्ति, नानारोगमुत्पादयति तस्मादुभय-शुद्धिं कृत्वा मारयेत् ॥ २४७ ॥

स्वर्णशोधनम्—

**मृत्तिकामातुलुङ्गाम्लैर्भावितं पञ्चवासरम् ।**

मृद्भस्मलवणाद्धेम शोधयेत् पुटयेत् ततः ॥ २४८ ॥

अथ स्वर्णस्य विशेषशुद्धिमाह, यद्यप्यत्र स्वर्णस्य सनामभेदलक्षणादिकं नोक्तं तथापि तन्निबन्धान्तरमवलम्ब्य प्रदर्श्यते । यथा भावप्रकाशे सुवर्णोत्पत्ति –
पुरा निजाश्रमस्थाना सप्तर्षिणा जितात्मना । पत्नीर्विलोक्य लावण्यलक्ष्मीसम्पन्नयोवना ॥ कन्दर्पदर्पविध्वस्तचेतसो जातवेदस । पतित यद्धरापृष्ठे रेतस्तद्धेमता मगात् ॥ तस्य नामानि—

स्वर्ण सुवर्ण कनक हिरण्य हेम हाटकम् । तपनीयञ्च गाङ्गेय कलधौत भर्मकाञ्चनम् ॥
चामीकर शातकुम्भ तथा कार्तस्वरञ्च तत् । जाम्बूनद जातरूपं महारजतमित्यपि ॥
रुक्मं लोहवर चाग्निवीज चाम्पेयकर्वुरम् । अष्टापद च रसजं तैजसञ्चापि कीर्तितम् ॥

तस्य भेदा —

प्राकृतं सहजं वह्निसम्भूत खनिसम्भवम् । रसेन्द्रवेधसञ्जात स्वर्ण पञ्चविध स्मृतम् ॥

तेषा प्रत्येकस्य लक्षणादिक, तत्र प्राकृतोत्पत्ति ।

ब्रह्माण्डं संवृतं येन रजोगुणभुवा खलु । तत्प्राकृतमिति प्रोक्त देवानामपि दुर्लभम् ॥

अनेन सुवर्णेन ब्रह्मण आधारभूत स्वर्णमय अण्डाकारो भुवनकोष पिहितम् ।

तदुक्तं मनुसंहिताया—

"सोऽभिध्याय शरीरात्स्वात् सिसृक्षुर्विविधा प्रजा । अप एव ससर्जादौ तासु वीजमवासृजत् ॥
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मिञ्जज्ञे स्वय ब्रह्मा सर्वलोकपितामह ॥

अथ सहजस्वर्णोत्पत्ति यथा—

ब्रह्मा येनाऽऽवृतो जात सुवर्णेन जरायुणा । तन्मेरुरूपता यात सुवर्ण सहज हि तत् ॥

अथ वह्निजस्वर्णोत्पत्ति यथा—

विसृष्टमग्निना शैव तेज पीत सुदु:सहम । अभूत् सर्वं समुद्दिष्ट सुवर्ण वह्निसम्भवम् ॥

अर्थात् प्रस्कन्नस्य रुद्रशुक्रस्याग्निसङ्क्रान्तस्याग्निना देवप्रार्थनया गङ्गायामाहितस्य, तया च वोढुमसमर्थतया "समुत्ससर्जत गर्भ मेरौ गिरिवरे तदा" ।

इत्यनेन मेरौ निक्षिप्तस्य तस्य तेजसैव मेरुस्थं निखिलवस्तुजातं सुवर्णीकृत तदेवाग्निज स्वर्णं ज्ञेयम् । यथोक्त भारतानुशासनिके—

'तेजसा तस्य गर्भस्य भास्करस्यैव रश्मिभि । यद्द्रव्य परिसंसृष्ट पृथिव्या पर्वतेषु च ॥

कगल्पं विधाय भूधरयन्त्रे मापार्धशुद्धटङ्कणेन सह अवरुध्य गजपुटयन्त्रेण मारयेत्, ततश्च सूक्ष्मं विचूर्ण्य गृह्णीयात् ॥ २४३ ॥

अथ शुद्धशङ्खगुणाः —

शङ्खः सर्वरुजां हन्ति विशेषादुदरामयम् ।
शूलाम्लपित्तविष्टम्भ-मेहहृत् वह्निदीपनः ॥ २४४ ॥

[ इति उपरसशोधनाधिकारः । ]

शङ्खभस्मगुणानाह शङ्ख इत्यादि —अनुपानविभेदेन शङ्खभस्म सर्वरोगानिहन्ति, विशेषत उदररोगान्, तथा शूलं, अम्लपित्तं, विष्टम्भं, प्रमेहञ्च नाशयति, वह्निञ्च प्रदीपयति ॥ २४४ ॥

अथ स्वर्णादिशोधनम्—

हेमादिलौहकिट्टान्तं शोधनं मारणं शृणु ।
तैले तक्रे गवां मूत्रे काञ्जिकेऽथ कुलत्थजे ॥ २४५ ॥
तप्ततप्तानि सिञ्चेत तत्तद्द्रावे च सप्तधा ।
एवं स्वर्णादिलौहानि शुद्धिमायान्त्यसंशयम् ॥ २४६ ॥

अथ स्वर्णादीनां साधारणशोधनमाह हेमादीत्यादि—स्वर्णादीनां सूक्ष्मपत्राणि कृत्वा वह्नौ सन्ताप्य पृथक् २ सप्तवारं तैलादिषु निर्वापयेत् । एवं पञ्चत्रिंशद्वारं प्रतप्तं कृत्वा तैलादिद्रवपदार्थेषु निर्वापितं प्रत्येकं स्वर्णादिकं विशुद्ध्यति, साधारणशोधनमिदं विशेषशोधनन्तु सर्वेषामग्रे प्रतिपादयिष्यते ॥ २४५—२४६ ॥

अशुद्धामृतस्वर्णस्य दोषाः —

सौख्यं वीर्य्यं बलं हन्ति नानारोगं करोति च ।
अशुद्धममृतं स्वर्णं, तस्मात् शुद्धन्तु मारयेत् ॥ २४७ ॥

अथाशुद्धामृतस्वर्णदोषमाह सौख्यमित्यादि—सामान्यविशेषोभयशुद्धिहीनममृतं स्वर्णं सेवनेन सौख्यं देहबलं वीर्य्यञ्च हन्ति, नानारोगमुत्पादयति तस्मादुभयशुद्धिं कृत्वा मारयेत् ॥ २४७ ॥

स्वर्णशोधनम्—

मृच्चिकामातुलुङ्गाम्लैर्भावितं पञ्चवासरम् ।

मृद्भस्मलवणाद्धेम शोधयेत् पुटयेत् ततः ॥ २४८ ॥

अथ स्वर्णस्य विशेषशुद्धिमाह, यद्यप्यत्र स्वर्णस्य सनामभेदलक्षणादिकं नोक्तं तथापि तन्निबन्धान्तरमवलम्ब्य प्रदर्श्यते। यथा भावप्रकाशे सुवर्णोत्पत्ति - पुरा निजाश्रमस्थाना सप्तर्षिणा जितात्मना । पत्नीर्विलोक्य लावण्यलक्ष्मीसम्पन्नयौवना ॥ कन्दर्पदर्पविध्वस्तचेतसो जातवेदस । पतितं यद्धरापृष्ठे रेतस्तद्धेमतामगात् ॥ तस्य नामानि—

स्वर्णं सुवर्णं कनक हिरण्य हेम हाटकम् । तपनीयञ्च गाङ्गेय कलधौत भर्मकाञ्चनम् ॥
चामीकरं शातकुम्भं तथा कार्तस्वरञ्च तत् । जाम्बूनद जातरूपं महारजतमित्यपि ॥
रुक्मं लोहवर चाग्निबीज चाम्पेयकर्बुरम् । अष्टापदं च रसजं तैजसञ्चापि कीर्तितम् ॥

तस्य भेदा —

प्राकृतं सहजं वह्निसम्भूत खनिसम्भवम् । रसेन्द्रवेधसञ्जात स्वर्णं पञ्चविध स्मृतम् ॥

तेषा प्रत्येकस्य लक्षणादिक, तत्र प्राकृतोत्पत्ति ।

ब्रह्माण्ड सवृतं येन रजोगुणभुवा खलु । तत्प्राकृतमिति प्रोक्त देवानामपि दुर्लभम् ॥

अनेन सुवर्णेन ब्रह्मण आधारभूत स्वर्णमय अण्डाकारो भुवनकोष पिहितम् ।

तदुक्तं मनुसंहिताया—

"सोऽभिध्याय शरीरात्स्वात् सिसृक्षुर्विविधा प्रजा ।अप एव ससर्जादौ तासु बीजमवासृजत् ॥
तदण्डमभवद्धैम सहस्रांशुसमप्रभम् । तस्मिन्जज्ञे स्वय ब्रह्मा सर्वलोकपितामह ॥

*अथ सहजस्वर्णोत्पत्ति यथा—*

ब्रह्मा येनाऽऽवृतो जात सुवर्णेन जरायुणा । तन्मेरुरूपता यात सुवर्णं सहज हि तत् ॥

अथ वह्निजस्वर्णोत्पत्ति यथा—

विसृष्टमग्निना शैव तेज पीत सुदु सहम । अभूत् सर्वं समुद्दिष्ट सुवर्णं वह्निसम्भवम् ॥

अर्थात् प्रस्कन्नस्य रुद्रशुक्रस्याग्निसक्रान्तस्याग्निना देवप्रार्थनया गङ्गायामाहितस्य, तया च वोढुमसमर्थतया "समुत्ससर्जत गर्भं मेरौ गिरिवरे तदा" ।

इत्यनेन मेरौ निक्षिप्तस्य तस्य तेजसैव मेरुस्थं निखिलवस्तुजात सुवर्णीकृत तदेवाग्निज स्वर्ण ज्ञेयम् । यथोक्त भारतानुशासनिके—

'तेजसा तस्य गर्भस्य भास्करस्यैव रश्मिभि । यद्द्रव्य परिससृष्ट पृथिव्या पर्वतेषु च ॥

अथ स्वर्णस्य विशेषशोधनमाह मृत्तिकेति—सूचिवेध्यानि स्वर्णपत्राणि मातुलुङ्गरसविलोडितपञ्चमृत्तिकाया निःक्षिप्य पञ्चदिन स्थापयेत्–मर्दयेच्च, ततो निम्बुरस पिष्टपञ्च(१)मृत्तिकावन्योपलभस्मलवणै पत्राण्यालिप्य कपोताख्यपुटे पुटेत्। इत्थं सप्तपुटैरेव स्वर्ण प्रशस्ता शुद्धिमाप्नोति ॥ २४८ ॥

मतान्तरम्—

**वल्मीकमृत्तिका धूमं गैरिकं चेष्टका पटु।**
**इत्येता मृत्तिकाः पञ्च जम्बीरैरारनालकैः ॥ २४९ ॥**
**पिष्ट्वा लेप्यं स्वर्णपत्रं पुटेन तु विशुध्यति।**
**धारयेत् स्वर्णपत्रीभिस्त्रिदिनं पञ्चमृत्तिकाः ॥ २५० ॥**

[ इति स्वर्णशोधनम् ]।

अथ मतान्तरेण शोधनमाह वल्मीकेत्यादि। दीमकगृहमृत्तिका, महानसायधूम कृष्णमृत्तिका वा, गैरिक, इष्टकाचूर्ण, पटु पांशुजलवणञ्च इत्येता पञ्चमृत्तिका-जम्बीरनिम्बुरसेन सम्यक् पिष्ट्वा तया पिष्टया कण्टकवेध्यानि स्वर्णपत्राणि लिप्त्वा लघुपुटेन पुटेत्। पुटप्रदानात्प्राक् पत्राणि त्रिदिनपर्यन्त जम्बीरनिम्बुरसाप्लावितपञ्चमृत्तिकाया स्थापनीयाने ॥ २४९–२५० ॥

अथ स्वर्णमारणम्—

**माक्षिकं नागचूर्णञ्च पिष्टमर्करसेन च।**
**हेमपत्रं पुटेनैव म्रियते क्षणमात्रतः ॥ २५१ ॥**

अथ स्वर्णमारणमाह माक्षिकमित्यादि—सामान्यविशेषोभयशुद्धियुक्तं कण्टकवेध्य स्वर्णपत्र अर्कदुग्धपिष्टशुद्धस्वर्णमाक्षिकसीसचूर्णकल्केनालिप्य तच्च मूषाया संस्थाप्य प्रपुटेत्। तेन स्वर्ण मृतम्भवति ॥ २५१ ॥

मतान्तरम्—

**सुशुद्धं पारदं दत्त्वा कुर्य्यात् यत्नेन पीठिकाम्।**
**दत्त्वोर्द्ध्वाधो नागचूर्णं पुटेन म्रियते ध्रुवम् ॥ २५२ ॥**

(१) इष्टिकाचूर्णक भस्म तथा वल्लीकमृत्तिका।
गैरिकं लवणञ्चेति कीर्तिता पञ्चमृत्तिका ॥

मतान्तरेण मारणमाह शुद्धमित्यादि—सुशुद्धपारद एकभाग, स्वर्णपत्रञ्चार्धभागं खल्वे विमर्द्य गुटिका (पीठिका) चरेत्। तदनु मूषाया षोडशांश शुद्धसीसकचूर्णं निक्षिप्य तन्मध्ये स्वर्णपीठिका न्यसेत्। ततश्चैकपुटेनैव स्वर्णं म्रियते ॥ २५२ ॥

मतान्तरम्—

गलितस्य सुवर्णस्य षोडशांशेन सीसकम्।
योजयित्वा समुद्धृत्य निम्बुनीरेण मर्दयेत् ॥ २५३ ॥
गोलं कृत्वा गन्धचूर्णं सम दद्यादुपर्य्यधः।
शरावसम्पुटे कृत्वा पुटेत् त्रिंशद्वनोपलैः।
एवं मुनिपुटैर्हेम नोत्थानं लभते पुनः ॥ २५४ ॥

मतान्तरमाह गलितस्येत्यादि—विशुद्धानि स्वर्णपत्राणि वह्नौ प्रद्राव्य तस्मिन् द्रवे षोडशांशं शुद्धसीसकचूर्णं सम्मेल्य निम्बुरसेन सह दृढ मर्दयेत्। तदनु गोलकं कृत्वा शरावे संस्थाप्य गोलकस्याध उपरि च समान शुद्धगन्धकचूर्णं दत्वा शरावान्तरेण सह सम्पुट कृत्वा त्रिंशद्वनोपलैः पुटेत्। इत्थं सप्तपुटैरेव स्वर्णं म्रियते तच्च मित्रपञ्चकयोगेन ध्मापितोऽपि स्वरूप नैति, भस्मरूपेणैव तिष्ठतीत्यर्थः ॥२५३।२५४॥

मतान्तरम्—

शुद्धसूतसमं स्वर्णं खल्ले कृत्वा तु गोलकम्।
उर्द्ध्वाधो गन्धक दत्त्वा सर्वतुल्यं निरुध्य च ॥ २५५ ॥
त्रिंशद्वनोपलैर्दद्यात् पुटान्येव चतुर्दश।
निरुत्थं जायते भस्म गन्धो देय पुनः पुन. ॥ २५६ ॥

मतान्तरेण स्वर्णमारणमाह शुद्धसूतसममित्यादि—शुद्धपारद, तत्समञ्च विशुद्ध पत्रस्वरूप स्वर्णं खल्वे निक्षिप्य समर्द्य गोलकञ्चरेत। पश्चात् स्वर्णपारदसमानं शुद्धगन्धकचूर्णमादाय तदर्धं शरावे निक्षिप्य तदुपरि गोलक स्थापयेत्। ततोऽवशेषं गन्धक गोलकोपरि संस्थाप्य शरावान्तरेण सह सम्पुट कृत्वा त्रिंशद्वनोपलैः पुटं दद्यात्। इत्थं चतुर्दशपुटैरेव निरुत्थ स्वर्णभस्म जायते, द्वितीयादिपुटेषु केवलं गन्धकचूर्णम्वारम्वार देयम् ॥ २५५।२५६ ॥

अथ शुद्धस्वर्णगुणा —

कषायतिक्तमधुरं सुवर्णं गुरु लेखनम्।

हृद्यं रसायनं वल्यं चक्षुण्यं कान्तिदं शुचि ॥ २५७ ॥
आयुर्मेधावयः स्थैर्य-वाग्विशुद्धिस्मृतिप्रदम् ।
क्षयोन्मादगराणाञ्च कुष्ठानां नाशनं परम् ॥ २५८ ॥ [ इति स्वर्णमारणम् ]

अथ शुद्धस्वर्णभस्मनो गुणानाह कषायमित्यादि—स्वर्णभस्म कषायं, तिक्तं, मधुर, गुरु, लेखनं, हृदयहितकर, रसायनगुणप्रद, वलवर्धकं, नयनरोगहरं, देह-सौन्दर्यकर, आयुर्वर्धकं, मेधाकर, वयस स्थापकं, वाग्विशुद्धिकर, स्मरणशक्ति-प्रदं, तथा क्षयोन्मादविषवाधाना निवर्तक, कुष्ठनाशकञ्चास्ति । अथास्यामयिक-प्रयोगा –वित्वत्वक्स्वरसोपेत रससिन्दूरेण च सयुक्त वातिक ज्वर, रससिन्दूरसयु-क्तपर्पटकस्वरसोपेत स्वर्णभस्म पैत्तिकं ज्वर, तुलसीरससयुक्त ससिन्दूरं स्वर्ण-भस्म कफज्वरं नाशयति । साभ्रक मृतं स्वर्णं मधुना सह सेवित जीर्णज्वरम पोहति । विल्वपेशीभृष्टजीरकाभ्या सह सेवित स्वर्णभस्म तीव्रमतिसारं निवारयेत् । साभ्रकं ससिन्दूर ममौक्तिकम्वा स्वर्णं मधुना सह सेवनेन राजयक्ष्माण निहन्ति ।

सुवर्णचूर्णं परिशीलितन्तु वचा मृताविश्वशतावरीभि ।
षण्मासमात्रन्तु निषेवणेन मेधाभिवृद्धिं जनयेन्नितान्तम् ॥
मृत सुवर्णं परिशीलयन्त स्थिराविदारीवरदाजराभि ।
मासत्रयेणैव कृशा पुमास प्रपुष्टदेहाश्च वहुप्रजा स्यु ॥

नागकेशरचूर्णेन सुवर्णं परिशीलितम् । ऋतौ सीमन्तनीनान्तु गर्भधारणमुत्तमम् ॥
इति रसतरङ्गिण्युक्तामयिकप्रयोगा ॥ २५७–२५८ ॥

अथ शुद्धरजतलक्षणम्—

दग्धोत्तीर्णं सुशीतं यन्निर्मलं कुन्दसन्निभम् ।
गुरु स्निग्ध कुमारञ्च तारमुत्तममिष्यते ॥ २५९ ॥

अथ भेषजकर्मयोग्यरजतलक्षणमाह दग्धोत्तीर्णमित्यादि—अग्नौ दग्धे सति यत् सुशीत कुन्दपुष्पवच्छ्वेतवर्णं तद्दग्धोत्तीर्णं तथा भारयुक्त, स्निग्धं, मसृणञ्च भवे-त्तद् रजतं रसकर्मार्हम् । अत्र यद्यपि रजतोत्पत्तिनामभेदादिक नोक्त तथापि ग्रन्था-न्तरानुसरणेन प्रदर्श्यते यथा भावप्रकाशे—

त्रिपुरस्य वधार्थाय निर्निमेषैर्विलोचनै । निरीक्षयामास शिव क्रोधेन परिपूरित ॥
अग्निस्तत्कालमपतत्तस्यैकस्माद्विलोचनात् । ततो रुद्र समभवद्वैश्वानर इव ज्वलन् ॥

द्वितीयादपतन्नेत्रादश्रुबिन्दुस्तु वामकात्। तस्माद्रजतमुत्पन्नमुक्त कर्मसु योजयेत् ॥

अथ रजतभेदा रसरत्नसमुच्चये—

सहजं खनिसञ्जात कृत्रिम त्रिविध मतम्। रजत पूर्वपूर्वं हि स्वगुणैरुत्तरोत्तरम् ॥
कैलासाद्यद्रिसम्भूत सहज रजत भवेत्।तत्स्पृष्टं हि सकृद्व्याधिनाशन देहिनां भवेत् ॥
हिमाचलादिकूटेषु यद्रूप्य जायते हि तत्। खनिज कथ्यते तज्ज्ञै परम हि रसायनम् ॥
श्रीरामपादुकान्यस्त वङ्ग यद्रूप्यता गतम्। तस्मादरूप्यमित्युक्त कृत्रिम सर्वरोगनुत् ॥

अथ ग्राह्यरजतलक्षण यथा—

घन स्वच्छ गुरु स्निग्ध दाहे छेदे सित मृदु। शङ्खाभ मसृणं स्फोटरहित रजत शुभम्॥

अथ हेयरजतलक्षणं यथा—

दाहे रक्तञ्च पीतञ्च कृष्ण रूक्ष स्फुट लघु। स्थूलाङ्ग कर्कशाङ्गञ्च रजत त्याज्यमष्टधा ॥

रजतपर्याया —"रजत रौप्य, तारं, सौध, शुभ्रक, चन्द्रलौह, चन्द्रहासं, रूपकं चन्द्रसनकञ्चेति ॥ २५९ ॥

अथ अशुद्धरजतदोषा —

**आयु॰ शुक्रं बलं हन्ति रोगसङ्घं करोति च।**
**अशुद्धञ्चामृतं तारं शुद्धं मार्यमतो बुधै॰ ॥ २६० ॥**

अथाशुद्धरजतस्य दोषमाह, आयुरित्यादि—अशुद्ध तथा सम्यगमृतञ्च रौप्यभस्म सेवित आयु, शुक्र, देहबल हन्ति, विविधरोगाश्च करोति। तस्माद्विशोध्य विधिपूर्वक मारयेत् ॥ २६० ॥

अथ रजतशोधनम्—

**नागेन क्षारराजेन द्रावितं शुद्धिमृच्छति।**
**रजतं दोषनिर्मुक्तं किंवा क्षाराम्लपाचितम्॥२६१॥** [इति रजतशोधनम्।]

अथ रजतस्य विशेषशोधनमाह नागेनेत्यादि—सामान्यतया तैलादिषु विशोधित पत्रस्वरूप रजत शुद्धनागचूर्णेन टङ्कणक्षारेण च सह द्रावयेत्। तदनु यवक्षारमिश्रितनिम्बुरसे दोलायन्त्रविधिना पचेत्। तेन रजतं सर्वदोषनिर्मुक्त जायते २६१

अथ रजतमारणम्—

**माक्षिकं गन्धकञ्चैवमर्कक्षीरेण मर्दयेत्।**
**तेन लिप्तं रूप्यपत्रं पुटेन म्रियते ध्रुवम् ॥ २६२ ॥**

अथ रजतस्य मारणमाह माक्षिकमित्यादि—सम्यग्विशुद्ध माक्षिकचूर्ण तथा गन्धकञ्चोभय रजतपत्रापेक्षया तुल्यमादाय अर्कदुग्धेन पेषयेत् । तदनु तया पिष्ट्या रजतपत्राणि विलिप्य शरावद्वये सम्पुट कृत्वा कुक्कुटपुटे प्रपुटेत् । इत्थ कतिचित्पुटैरेव रजत ध्रुव म्रियते ॥ २६२ ॥

मतान्तरम्—

**कण्टवेध्ये तारपत्रे दत्त्वा द्विगुणहिंगुलम् ।**
**पातयन्त्रे रसो ग्राह्यो रजतं मृतमुच्यते ॥ २६३ ॥**

अथ मतान्तरेण रजतमारणमाह कण्टवेध्य इत्यादि—सम्यग्विशुद्धरजतस्य कण्टकवेध्यानि पत्राणि कृत्वा द्विगुण हिङ्गुलं निम्बुरसेन पिष्ट्वा तेन पत्राणि प्रलिप्य ऊर्ध्वपातनयन्त्रे पचेत् । इत्थ द्वित्रिवारं करणेन ऊर्ध्वपात्रे सलग्न पारद अध पात्रस्थञ्च मृत रौप्य गृह्णीयात् ॥ २६३ ॥

मतान्तरम्—

**तालं गन्धं रौप्यपत्र मर्दयेत् निम्बुकद्रवैः ।**
**त्रिपुटैश्च भवेद्भस्म योज्यमेतद्रसादिषु ॥ २६४ ॥**

मतान्तरेण रजतमारणमाह तालमिति—शुद्ध हरताल, शुद्ध गन्धक, शुद्ध पत्ररूपरजतञ्च सम सममादाय खल्वे निम्बुरसेन सह दृढं विमर्द्य शरावसम्पुटं कृत्वा पुटेत् । इत्थ त्रिभि पुटैरेव रौप्य म्रियते तच्च रसादिसर्वकर्मसु योजयेत् ॥२६४॥

मतान्तरम्—

**तारपत्रं चतुर्भागं भागैकं शुद्धतालकम् ।**
**मर्द्य जम्बीरजैर्द्रावैस्तारपत्राणि लेपयेत् ॥ २६५ ॥**
**रुद्ध्वा त्रिभिः पुटैः पाच्यं पञ्चविंशद्वनोपलैः ।**
**म्रियते नात्र सन्देहो गन्धो देयः पुनः पुनः ॥ २६६ ॥**

अथवा चतुर्भागं शुद्धरजतपत्र, शुद्धतालकञ्चैकं भागमादाय खल्वे जम्बीरनिम्बुरसेन सह विमर्द्य तारपत्राणि तेनैव निम्बुरसपिष्टहरितालपिष्ट्या विलिप्य सशोष्य च सम्पुटस्थं कृत्वा पञ्चविंशद्वनोपलै प्रपुटेत् । इत्थ त्रिभि पुटैरेव रौप्य ध्रुव म्रियते ॥ "गन्धो देय पुन पुन" इत्यन्तिमवाक्येन प्रथमप्रकारीयप्रथमपुटदानानन्तर द्वितीयादिपुटेषु हरिताल नैव देयमपि तु गन्धकं दत्त्वा निम्बुरसेन

विमर्द्यैव शेषौ द्वौ पुटौ देयौ। अथवा द्वितीयपुटे रौप्यस्य हरितालेन सहैव पुटप्रदानमुचितं यदि च—तत्रापि केषाञ्चिन्मते गन्धकप्रक्षेप प्रयोज्यश्चेत् द्वतीयादिपुटयो केवल गन्धकमेव नतु हरितालम। किन्त्वत्रापि गन्धकसम्बन्धयोजने गन्धकरौप्यादिमानभेद विना नैवावलोक्यते कोऽपि विशेष, अत पूर्वविधावेव गन्धकसम्बन्ध उचित, इति ॥ २६५-२६६ ॥

अथ शुद्धरजतगुणा —

**शीत कषाय मधुरमम्लं वातप्रकोपजित्।**

**दीपन वलकृत् स्निग्ध गुल्माजीर्णविनाशनम्।**

**आयुष्यं दीर्घरोगघ्न रजत लेखनं स्मृतम् ॥ २६७ ॥** [ इति रजतमारणम्। ]

अथ शुद्धमृतरजतगुणमाह शीतमित्यादि—यथाविधि शोधित मृतञ्च रजत शीतवीर्यं, स्वादे कषाय, मधुर, अम्ल, वह्निदीपन, वलवर्धक, स्निग्ध, आयुष्य, लेखन, वातविकारशान्तिकर, पञ्चविधगुल्मस्य, अजीर्णस्य च विनाशक, चिरानुवन्धरोगनिवर्तकञ्च स्मृतम्। अथास्य रसतरङ्गिण्युक्तामयिकप्रयोगा, यथा—

यवानिकादेवपुष्पचूर्णेन रजत मृतम्। शीलित नाशयत्याशु कोष्ठवात चिरोत्थितम् ॥

एलाचूर्णयुत तार अजीर्णरोगजनित हृदयस्पन्दन हरेत्।

तार सलौह माक्षीकरस सिन्दूरसयुतम्। यवानी चित्रकक्काथयुतन्तु परिशीलितम् ॥

गृध्रसीञ्चैव विश्वाचीं तथैव त्रिकवेदनाम्। विविधस्थानसम्भूत नाडीशूलञ्च नाशयेत् ॥

सिताघृतैलासयुक्त रजतन्तु निषेवित। उन्मादं नाशयत्येव ह्यचिरादेव दारुणम् ॥

स्थिरात्मगुप्ताशतमूलिकाभिर्निषेवित वै खलु चन्द्रलोहम्।
मासद्वयेनैवनिहन्ति कार्श्यं, वल्यञ्च वृष्यञ्च पर प्रदिष्टम् ॥
कृमिघ्नभल्लातकचित्रवरक्तै र्यत्नेन तार परिशीलितन्तु।
मासैकयोगेन हि सुन्दरीणा सौन्दर्यवृद्धि जनयेन्नितान्तम् ॥
प्रक्षीणवुद्धिस्मृतिसाहसानां, शिरोभ्रमेणातिविमोहितानाम्।
अध्यापनादौ सुचिर रताना, यूना शिशूनाञ्च पर प्रशस्तम ॥ २६७ ॥

अथ अशुद्धताम्रदोषा —

**न विषं विषमित्याहुस्ताम्रञ्च विषमुच्यते।**
**एको दोषो विषे त्वष्टौ दोषास्ताम्रे प्रकीर्त्तिता ॥ २६८ ॥**

**भ्रमो मूर्च्छा विदाहश्च उत्क्लेदशोषवान्तयः ।**
**अरुचिश्चित्तसन्ताप एते दोषा विषोपमाः ।**
**तस्माद्विशुद्धं ताम्रं हि ग्राह्यं रोगोपशान्तये ॥ २६९ ॥**

अथ ताम्रशोधनादिकमाह न विषमित्यादि—अत्र ताम्रस्य यद्यपि ग्राह्याग्राह्यत्व-भेदादिकञ्च नोक्तं तथापि ग्रन्थान्तरमनुसृत्य वर्ण्यते, ताम्रोत्पत्तिः, यथा भावप्रकाशे-

शुक्रं यत्कार्तिकेयस्य पतितं धरणीतले तस्मात्ताम्रं समुत्पन्नमिदमाहुः पुराविदः ।

तस्य पर्यायाः ताम्रं, औदुम्बरं, शुल्वं, उदुम्बरं, रविप्रियं, म्लेच्छमुखं, त्र्यम्बकं, नेपालीयं, त्वाष्ट्रं, द्विष्टं, घ्रष्टं, सूर्यपर्यायसंज्ञकञ्च। तस्य भेदाः, रसरत्नसमुच्चये यथा—

म्लेच्छं नेपालकञ्चेति तयोर्नेपालमुत्तमम् । नेपालादन्यखन्युत्थं म्लेच्छमित्यभिधीयते ॥

नेपालताम्रलक्षणं यथा—

"सुस्निग्धं मृदुलं शोणं घनघातक्षमं गुरु । निर्विकारं गुणश्रेष्ठं ताम्रं नेपालमुच्यते ॥

म्लेच्छताम्रलक्षणं यथा—

सितकृष्णारुणच्छायमतिवानि कठोरकं । क्षालितञ्च पुनः कृष्णमेतन्म्लेच्छकताम्रकम् ॥

ग्राह्यताम्रस्वरूपम्—

जपाकुसुमसङ्काशं स्निग्धं मृदुघनक्षमम् । लौहनागोज्झितं ताम्रं मारणाय प्रशस्यते ॥

हेयताम्रस्वरूपं यथा—

कृष्णं रूक्षमतिस्तब्धं श्वेतञ्चापि घनासहं लोहनागयुतं चेति शुल्वं दुष्टं प्रकीर्तितम्, विषोपविषादिकं नैव विषं ताम्रमेव सर्वाधिकविषप्रभावकरं कुतः, विषे मारणात्मक एक एव दोषः, ताम्रे त्वष्टौ वक्ष्यमाणा दोषा यथा—अशुद्धताम्रे भ्रमो, मूर्च्छा, विदाहः, हृदयस्योत्क्लेदः, शरीरशोषः, वमनं, अरुचिः, चित्तसन्तापः, एतेऽष्टौ दोषा सन्ति, ते च विषवद्धानिकरा स्तस्मात्तेषां विनाशार्थं ताम्रं विशोधयेत् ततश्च रोगशान्त्यर्थमौषधादिषु प्रयोजयेत् ॥ २६८–२६९ ॥

अथ ताम्रशुद्धिः—

**पटुना रविदुग्धेन ताम्रपत्राणि लेपयेत् ।**
**अग्नौ सन्ताप्य निर्गुण्डी-रसे सिञ्चेत् पुनः पुनः ॥ २७० ॥**

अथ ताम्रस्य शोधनमाह पटुनेति—ताम्रपत्राणां तैलतक्रादिषु सामान्यशोधनं कृत्वा तदनु रविदुग्धेन—अर्कक्षीरेण, पटु—सैन्धवलवणं विमर्द्य तेन ताम्रपत्राणि लेप-

येत्, ततस्तानि तीव्राग्नौ प्रतप्तानि कृत्वा मृण्मयहण्डिकास्थिते निर्गुण्डीस्वरसे (सिन्धुवारस्वरसे) निर्वापयेत्। इत्थं नवीनं निर्गुण्डीस्वरसमादाय द्वितीयनिर्वापनं कर्त्तव्यम्। अनया युक्त्या सप्तवारं निर्वापणेन शुद्ध्यन्ति ॥ २७० ॥

मतान्तरम्—

**गोमूत्रेण पचेद्यामं ताम्रपत्रं दृढाग्निना।**
**शुध्यते नात्र सन्देहो मारणञ्चात्र कथ्यते ॥ २७१ ॥** [ इति ताम्रशोधनम्। ]

अथ मतान्तरेण ताम्रशोधनमाह गोमूत्रेणेत्यादि—ताम्रपत्राणि लवणयुक्तगोमूत्रे तीव्राग्निना यामैकं पाचितानि विशुद्धिमाप्नुवन्ति अथाग्रे मारणं कथ्यते ॥ २७१ ॥

अथ ताम्रमारणम्—

**सूतमेकं द्विधा गन्धं यामं मर्द्यन्तु कन्यया।**
**द्वयोस्तुल्यं ताम्रपत्रं लिप्त्वा स्थाल्यां निधापयेत् ॥२७२॥**
**सम्यक् शूरणजैः सार्द्धं पार्श्वे भस्म निधापयेत्।**
**चतुर्यामं पचेच्चुल्यां पात्रपृष्ठे सगोमये ॥ २७३ ॥**
**जलं पुनः पुनर्देयं स्वाङ्गशीतं विमर्दयेत्।**
**म्रियते नात्र सन्देहः सर्वरोगेषु योजयेत् ॥ २७४ ॥**

अथ ताम्रमारणमाह सूतमेकमिति—शुद्धपारदस्यैकं भागं शुद्धगन्धकस्य च द्वौ भागौ खल्वे निक्षिप्य घृतकुमारीस्वरसेन सह यामैकं विमर्दयेत्। ततश्च द्वयोस्तुल्यं पत्रस्वरूपं शुद्धताम्रं तत्पिष्टया लिप्त्वा एकस्मिन् भाण्डे ताम्रं निक्षिप्योपरि शूरणकन्दकल्कं भस्म वा निक्षिपेत्, पश्चाच्छरावेणाच्छाद्य सन्धिबन्धनं कृत्वा शरावपृष्ठोपरि गोवरेण जलार्थमालवालं कुर्यात्। तच्च जलेन पूरयेत्। हण्डिकाञ्च चुल्ल्यामारोप्य चतुर्यामं पचेत्, उष्णजलञ्च निष्कास्य वारं वारं शीतलं जलं पूरणीयम्। पश्चात् स्वाङ्गशीतं यन्त्रमवतार्य मृतं ताम्रं विचूर्ण्य सर्वरोगेषु योजयेत् ॥ २७२—२७४ ॥

मतान्तरम्—

**जम्भाम्भसा सैन्धवसंयुतेन सगन्धकं स्थापय शुल्वपत्रम्।**
**पक्वायमानं पुटयेत् सुयुक्त्या वान्त्यादिकं यावदुपैति शान्तिम् ॥२७५॥**

अथ मतान्तरेण ताम्रमारणमाह जम्भाम्भसेति—ताम्रतुल्य सैन्धवलवण शुद्ध-गन्धकञ्चादाय जम्भीरनिम्बुरसेन विमर्द्य तया पिष्टया ताम्रपत्राणि लेपयेत् । ततश्चैकस्या हण्डिकाया संस्थाप्य स्वल्पशरावेण आच्छाद्य सन्धि लेपयेत् । अवशिष्ट हण्डिकाभाग वालुकाभि प्रपूर्य हण्डिकामुख शरावेण आच्छाद्य सन्धिबन्धन कृत्वा चुल्ल्यामारोप्य पचेत् । भस्मीभूतञ्च पञ्चगव्येन सह विमर्द्य वार वार पुटेत् यावद्वान्त्यादिशान्तिमुपैति । पञ्चगव्यन्तु—"गव्य क्षीरं दधि घृत गोमूत्र गोमयं तथा । एकत्रयोजित तुल्य पञ्चगव्यमिहोच्यते" ॥ २७५ ॥

अन्यमतम्—

**शुद्धं ताम्रदलं विमर्द्य पटुना क्षारेण जम्बीरजैः ।**
**नीरैर्घस्रमिदं स्नुगर्कपयसा लिप्तं धमेत् सप्तधा ॥**
**निर्गुण्ड्यम्बु हिम रसेन्द्रकलितं दुग्धाज्यगन्धेन तत् ।**
**तुल्येनाथ मृतं भवेत् सुपुटितं पञ्चामृतेन त्रिधा ॥ २७६ ॥**

अन्यमतेन मारणमाह शुद्धमिति—साधारणविशेषविधिशोधितानि ताम्रपत्राणि दिनमेकं खल्वे समानैः सैन्धवलवणक्षारैः जम्बीरनिम्बुरसेन च सह विमर्दयेत्, तदनु स्नुह्यर्कदुग्धेन सह दिनैक विमर्द्य तीव्राग्नौ प्रतप्तानि कृत्वा निर्गुण्डीस्वरसे निर्वापयेत् । इत्थ सप्तवार कुर्यात् । यत् गैरिकोपम ताम्रचूर्णमध पतति तत् सगृह्य उष्णोदकेन च प्रक्षाल्य तुल्येन शुद्धपारदेन गन्धकेन च सह मर्दयेत्, गोदुग्धघृताभ्या गोलक कृत्वा सम्पुटस्थं पचेत् । अत्रापि गोलक पुनर्नवादिकल्केन सह हण्डिकाया सस्थाप्य शरावेणाच्छाद्य सन्धिबन्धन कृत्वा हण्डिकावकाश वालुकाभिः प्रपूर्य शरावान्तरेण हण्डिकामुखसन्धिबन्धन कृत्वा पचेत् । पश्चात् निष्काश्य ताम्रभस्म पञ्चामृतेन सह विमर्द्य शरावसम्पुट कृत्वा पुटेत् । इत्थ त्रिभि पुटैरेवामृतीकरण भवति पञ्चामृतन्तु—"गव्य क्षीर दधिघृतं माक्षिकञ्चाथ शर्करा । पञ्चामृतं समाख्यातं रसकर्म प्रसाधकम्" इति ॥ २७६ ॥

अथ शुद्धताम्रगुणा —

**वान्तिभ्रान्तिविवर्जितं क्षयरुजाकुष्ठानि पाण्डूवामयं ।**
**शूलं मेहगुदांकुरानिलगदानुक्तानुपानैर्जयेत् ॥**
**गुञ्जामात्रमिदं ततो द्विगुणितं तच्छुद्धकायेन चेत् ।**

**भुक्तं स्थौल्यजराऽपमृत्युशमनं पथ्याशिना वत्सरात् ॥ २७७ ॥**
**ताम्रमुष्णं गरहरं यकृत्प्लीहोदरापहम् ।**
**क्रिमिशूलामवातघ्नं ग्रहण्यर्शोऽम्लपित्तजित् ॥२७८॥** [ इति ताम्रमारणम् ]

एवंविधमृतताम्रस्य गुणानाहवान्तिभ्रान्त्यादि–वान्तिभ्रान्त्यादिदोषशून्यं ताम्रभस्म यथाविहितरोगानुपानपूर्वकं सेवनेन क्षयं, कुष्ठं, पाण्डुरोगं, शूलं, प्रमेहं अर्शं, वातरोगांश्च, निवारयति । वमनादिपञ्चकर्मशुद्धशरीरेण गुञ्जैकादारभ्य द्विगुञ्जमितं ताम्रभस्म पथ्यपूर्वकमेकवर्षपर्यन्तं सेवितं मेदोवृद्धिजन्यदेहस्थौल्यं, जरां, अकालमृत्युञ्च विनाशयति, ताम्रभस्म, उष्णं, विषनाशकं, यकृत्प्लीहोदरवृद्धिं, जलोदरं, क्रिमिसमूहं, आमवातञ्च नाशयति ॥ २७७—२७८ ॥

अथ पित्तलकांस्ययोः शोधनादिकम्—

**पित्तलञ्च तथा कांस्यं ताम्रवत् मारयेत् पृथक् ।**
**ताम्रवच्छोधनं तेषां ताम्रवत् गुणकारकम् ॥ २७९ ॥**

[ इति पित्तलकांस्यशोधनमारणम् ]

अथ पित्तलकांस्ययोः शोधनादिकमाह पित्तलञ्चेत्यादि–पित्तलं हि मिश्रधातुः, ताम्रयशदसंयोगजन्यश्च तस्मात्ताम्रयशदोपधातुरपि कथ्यते, यथाह भावप्रकाशे-“रीतिरप्युपधातुः स्यात्ताम्रस्य यशदस्य च” । अथपित्तलपर्यायाः, पित्तलं त्वारकूटं स्यादारो रीतिश्च कथ्यते । पित्तलं पीतलोहञ्च कपिलोहञ्च रीतिका ॥ अथ पित्तलभेदाः, रीतिकाकतुण्डी च द्विविधं पित्तलं भवेत् । सन्ताप्य काञ्जिके क्षिप्ता ताम्राभा रीतिका मता ॥ एवं या जायते कृष्णा काकतुण्डीति सा मता । राजरीति ब्रह्मरीति कपिला पिङ्गलापि च ॥ ग्राह्यपित्तललक्षणम् यथा रसरत्नसमुच्चये “गुर्वी मृद्वी च पीताभा साराङ्गी ताडनक्षमा । सुस्निग्धा मसृणाङ्गी च रीतिरेतादृशी शुभा ॥ पाण्डुपीता खरा रूक्षा बर्बरा ताडनाक्षमा । पूतिगन्धा तथा लघ्वी रीतिर्नेष्टा रसादिषु ॥ अथ पित्तलस्य शोधनं, पित्तलं तैलादिषु साधारणरीत्या संशोध्य ताम्रवद्विशेषशोधनं, कुर्यात्, तद्वदेव भस्मापि चरेत् । अथ मृतपित्तलगुणाः, “पित्तलस्य गुणा ज्ञेयाः स्वयोनिसदृशा बुधैः । संयोगजप्रभावेण तस्या अन्येऽपि गुणाः स्मृताः ॥ रीतिकायुगलं रूक्षं तिक्तञ्च लवणं रसे । शोधनं पाण्डुरोगघ्नं क्रिमिघ्नं नातिलेखनम् ॥ अथ कांस्यम्, कांस्यमपि वङ्गताम्रसंयोगजन्यमतस्तयोरुपधा-

तु । तथा चोक्तम्–अष्टभागेन ताम्रेण द्विभागखुरकेण च । विद्रुतेन भवेत् कांस्यं तत् सौराष्ट्रभवं शुभम् ।। तस्य पर्याया , कंसोय, कास्यक, ताम्रत्रपुजम् , घोप, वह्निलोह, इति, शुभकास्यलक्षण यथा–तीक्ष्णशब्द मृदुस्निग्धमीषच्छ्यामलशुभ्रकम् । निर्मल दाहरक्तञ्च षोढा कास्य प्रशस्यते ॥ हेयकास्यस्वरूप यथा–तत्पीत दहने ताम्र खर रूक्ष घनासहम् । मन्दनाद गतज्योति सप्तधा कास्यमुत्सृजेत् ॥ अस्यापि शोधन मारणञ्च ताम्रवत्कर्तव्यम् , अथास्य गुणा – "कास्यस्य तु गुणा ज्ञेया स्वयोनिसदृशा जनै । सयोगजप्रभावेण तस्याऽन्येऽपि गुणा स्मृता ॥ कास्य लघु च तिक्तोष्ण लेखन दृक्प्रसादनम् । कृमिकुष्ठहरं वातपित्तघ्न दीपन हितम् ।। घृतमेक विना चान्यत् सर्वं कास्यगत नृणाम् । भुक्तमारोग्यसुखद हित साम्यकर तथा ।।२७९।।

अथ नागवङ्गयो शोधनम्—

**नागवङ्गे च गलिते रविदुग्धेन सेचिते ।**
**त्रिवारान् शुद्धिमायातः सच्छिद्रे हण्डिकान्तरे ॥ २८० ॥**

अथ नागवङ्गयो शोधनादिकमाह नाग इत्यादि–अथ नागोत्पत्ति —

"दृष्ट्वा भोगिसुता रम्या वासुकिस्तु मुमोच यत् ।
वीर्यं जातस्ततो नाग सर्वरोगापहो नृणाम् ॥

श्रेष्ठनागलक्षणम् ।

सुगौरव मृदु स्निग्ध छेदने मलिनोज्वलम् ।
वहि श्याम द्रुतद्रावं सीसक जात्यमादिशेत् ॥

हेयनागलक्षण यथा—

वहि शुक्ल भारहीन रूक्ष छेदे च निष्प्रभम् । समल कठिनद्राव सीसक हेयमादिशेत्॥

सीसकनामानि–सीसं, सीसकं, नागं, वर्घ्नम् , वप्रम् ।

अथ वङ्गभेदा —

खुरक मिश्रकश्चेति द्विविध वङ्गमुच्यते । खुरक श्रेष्ठमाख्यात मिश्रक त्ववर मतम् ॥
धवलं मृदुल स्निग्ध द्रुतद्राव सगौरवम् । नि शब्द खुरवङ्गं स्यात् मिश्रकं श्यामशुभ्रकम्॥

वङ्गस्य पर्याया —रङ्गम्, वङ्गम्, त्रपु, शुक्रलोहकम्, कुरूप्यम्, त्रपुसञ्च ।

अथोभयो शोधनम् , नाग वङ्गञ्च वह्नौ प्रद्रवित कृत्वा तैलतक्रादिषु पृथक् २ सप्तवारं विशोधयेत् ।

शोधन विधि । नागादिक कटाहस्थ कृत्वा वह्नौ द्रावयेत् । द्रवितञ्च झटिति तैलपूरितगर्भे सच्छिद्रशरावपिहितास्यके मृण्मयभाण्डे छिद्रमार्गेण निर्वापयेत् । निर्वापितञ्च निष्काश्य पुनर्द्रुतं कृत्वा पूर्वतैलं परिक्षिप्य नवीनतैल भाण्डे प्रपूर्य तस्मिन् छिद्रमार्गेण निर्वापयेत् । इत्थं सप्तवारं पृथक् २ तैलतक्रगोमूत्रकाञ्जिकोदकुलत्थक्वाथादिषु द्रवेषु निर्वाप्य पश्चाद्विशेषशुद्ध्यर्थं, अर्कदुग्धपूरिते सच्छिद्रशरावपिहितास्यके भाण्डे प्रतप्त द्रुत निर्वापयेत् । इत्थं त्रिवारं निर्वापणेन नागो विशेषशुद्धिमाप्नोति । अर्कदुग्धाभावे पूर्वरीत्या निर्गुण्डीक्वाथे स्वरसे वा त्रिवारं निर्वापयेत् । वङ्गस्यापि नागवदेव साधारणशोधनं कृत्वा वारत्रयमर्कदुग्धे अथवा हरिद्राचूर्णयुक्तनिर्गुण्डीस्वरसे क्वाथे वा निर्वापयेत् । निर्वापणसमये द्रवसंसर्गेण वङ्ग सशब्दमुत्प्लवनं करोति, कदापि भाण्डस्फोटोऽपि भवति । तस्मात्सावधानतया किञ्चिद् दूरस्थो दृढे मृण्मयभाण्डे सच्छिद्रशरावपिहितास्यके छिद्रमार्गेण तदन्तःस्थद्रवे निर्वापयेत् ॥ २८० ॥

मतान्तरम्—

**वङ्गं चूर्णोदके स्विन्नं यामार्द्धेन विशुध्यति ॥२८१॥** [ इति नागवङ्गशुद्धिः ]

मतान्तरेण वङ्गशोधनमाह वङ्गमिति—वङ्गपत्राणि चूर्णोदके दोलायन्त्रविधिना यामार्द्ध स्वेदनेन विशुद्ध्यन्ति ॥ २८१ ॥

अथ सीसकमारणम्—

**भुजङ्गममगस्त्यस्य पिष्ट्वा पत्रं प्रलेपयेत् ।**
**तत्र सविद्रुते नागे वासाऽपामार्गसम्भवम् ॥ २८२ ॥**
**क्षारं विमिश्रयेत् तत्र चतुर्थांशं गुरूक्तितः ।**
**प्रहरं पाचयेच्चुल्यां वासादर्व्या च चालयेत् ॥ २८३ ॥**
**तत उद्धृत्य तच्चूर्णं वासानीरेण मर्दयेत् ।**
**एवं सप्तपुटैर्नागं सिन्दूरं जायते ध्रुवम् ॥ २८४ ॥**

अथ सीसकमारणमाह भुजङ्गममिति—शुद्ध सीसकचूर्णं अथवा सीसकपत्रं अगस्त्यपत्राणि पिष्ट्वा तेन कल्केन प्रलेपयेत् । तदनु त मृण्मयभाण्डे निक्षिप्य वह्नौ द्रावयेत् । द्रुते नागे वासकापामार्गयोः क्षारं नागात् चतुर्थांश गृहीत्वा तस्मात् स्वल्प २ प्रक्षिपन् वासकदण्डेन च दृढ मर्दयन् यामैक यामद्वय वा पाचयेत् । ततश्च भस्मी-

भूत नागं भाण्डान्निष्क्रास्य वासकस्वरसेन खल्वे विमर्द्य सम्पुटस्थं गजपुटे पचेत् ।
इत्थं सप्तपुटप्रदानेन सिन्दूरसमानरक्तवर्णं नागभस्म भवति ॥ २८२–२८४ ॥

अन्यमतम्—

**त्रिभिः कुम्भीपुटैर्नागो वासारसविमर्दितः ।**
**सशिलो भस्मतामेति तद्रजः सर्वमेहजित् ॥ २८५ ॥**
**दशनागबलं धत्ते वीर्य्यायुः कान्तिवर्द्धनम् ।**
**मेहान् हन्ति हतं नागं सेव्यं वङ्गञ्च तद्गुणम् ॥ २८६ ॥**

अथ मतान्तरेण नागमारणमाह त्रिभिरित्यादि—शुद्धसीसकं, शुद्धमनःशिलाञ्च समानप्रमाणेन गृहीत्वा खल्वे वासकस्वरसेन सार्द्धं दृढं विमर्द्य सम्पुटस्थं कृत्वा गजपुटे पुटेत् । इत्थं त्रिभिः पुटैर्नागस्य भस्म भवति । एवंविधमृतनाग सेवनेन विंशतिप्रमेहान्हन्ति, दशगजसमानं बलं, देहकान्तिं, वीर्य्यं, आयुश्च वर्धयति । वङ्गस्यापि सेवनेन एते गुणा भवन्ति ॥ २८५–२८६ ॥

अथ शुद्धनागगुणा—

**तारस्य रञ्जनो नागो वातपित्तकफापहः ।**
**ग्रहणीकुष्ठगुल्मार्शः शोषव्रणविषापहः ॥२८७॥** ( इति नागमारणम् । )

अथ शुद्धनागगुणमाह तारस्येति—सीसकभस्म रजतं रञ्जयति, विकृतान् वातपित्तकफान् हन्ति, ग्रहणीं, कुष्ठानि, गुल्मानि, द्विविधमर्शः, शोषं, व्रणान्, विषबाधाश्च दूरीकरोति ॥ २८७ ॥

अथ वङ्गमारणम्—

**वङ्गं सतालमर्कस्य पिष्ट्वा दुग्धेन सम्पुटेत् ।**
**शुष्काश्वत्थभवैर्वल्कैः सप्तधा भस्मतां नयेत् ॥ २८८ ॥**

अथ वङ्गस्य मारणमाह वङ्गमित्यादि—सम्यग्विशुद्धं खुरकवङ्गमादाय समानभागं शुद्धतालचूर्णं अर्कदुग्धेन पिष्ट्वा तेन प्रलेपयेत् । पश्चात् शरावे शुष्कपिप्पलत्वक्कल्कमध्यस्थं कृत्वा शरावान्तरेण सह सम्पुटं विधाय गजपुटे पुटेत् । इत्थं सप्तसंख्यकपुटैरेव वङ्गभस्म भवति ॥ २८८ ॥

मतान्तरम्—

विशुद्धवङ्गपत्राणि द्रावयेद् हण्डिकान्तरे ।
अपामार्गाद्भव चूर्णं तत्तुल्यं तत्र मेलयेत् ॥ २८९ ॥
स्थूलाग्रया लौहदर्व्या शनैस्तदभिमर्दयेत् ।
यावद्भस्मत्वमाप्नोति तावन्मर्द्यन्तु पूर्ववत् ॥ २९० ॥
ततस्त्वेकीकृत चूर्णं कृत्वा चाङ्गारवर्जितम् ।
नूतनेन शरावेण रोधयेच्च भिषग्वर ।
पश्चात् तीव्राग्निना पक्क वङ्गभस्म भवेद् ध्रुवम् ॥ २९१ ॥

मतान्तरेण वङ्गस्य मारणमाह विशुद्धवङ्गपत्राणीत्यादि–सामान्यविशेपोभयप्रकारविशुद्धानि वङ्गपत्राणि हण्डिकान्तरे निक्षिप्य वन्हौ प्रदाव्य तस्मिन् तुल्याशापामार्गक्षारमादाय तस्मात्स्वल्प २ निक्षिपन् बृहदग्रभागया लोहदर्व्या चालयेत्, द्रवितवङ्गस्य भस्मभवनपर्यन्त स्वल्प २ क्षारनिक्षेपण मर्दनञ्च कर्तव्यम् । तदनु भस्मतुल्यपरिदृश्यमाणा वङ्गविभूतिमेकत्र कृत्वा शरावेण च सम्यग् आच्छाद्य प्रहरद्वय तीव्राग्निदान कर्तव्यम् । तत स्वाङ्गशीता वङ्गभूति क्षारशून्यकरणार्थं वारम्वारं प्रक्षालयेद् । प्रक्षालनविधिस्तु एकस्मिन् स्वच्छपात्रे ( तामचीनी या चिनीका डिश ) जलं प्रपूर्य तस्मिन् वङ्गभूतिं घोलयेत् । किञ्चित्कालपर्यन्त तदवस्थ संस्थाप्य पश्चात् शनै शनै नीरं नि सारयेत् । इत्थ पञ्चदशवार वा ततोऽप्यधिकवार प्रक्षालनेन वङ्गभस्म क्षारशून्यं भवति । क्षारशून्यपरीक्षा तु रक्तवर्णकपत्रेण ( रेड लिटमस पेपर ) कर्तव्या । यदा रक्तवर्णकपत्र प्रक्षालितजले निमज्जित चेन्नीलवर्णता नोपेयात्तदा वङ्गभस्म क्षारशून्य जातमिति जानीयात् । ततश्चातपे संशोष्य गोदुग्धेन सह मर्दनं ( भावनाम् ) कृत्वा शरावसम्पुटस्थञ्च विधाय गजपुटे पुटेत् । इत्थ चतुर्दशपुटैर्दोषरहित वङ्गस्य शोभन भस्म भवति । अधिकपुटैरधिकगुणोदय । हण्डिकापेक्षया लोहकटाहे वङ्गजारण क्षारादिभि कर्तव्यम, ते वोचालनं सम्यग्भवति ॥ २८९—२९१ ॥

मतान्तरम्—

वङ्ग खर्परके कृत्वा चुल्ल्यां संस्थापयेत् सुधीः ।
द्रवीभूते पुनस्तस्मिन् चूर्णान्येतानि दापयेत् ॥ २९२ ॥

**प्रथमे रजनीचूर्णं द्वितीये च यमानिकाम् ।**
**तृतीये जीरकञ्चैव ततश्चिञ्चात्वगुद्भवम् ॥ २९३ ॥**
**अश्वत्थवल्कलोत्थञ्च चूर्णं तत्र विनिक्षिपेत् ।**
**एवं विधानतो वङ्गं म्रियते नात्र संशयः ॥ २९४ ॥**

अथ मतान्तरेण वङ्गमारणमाह वङ्गमिति–विशुद्धवङ्गपत्राणि कटाहे निक्षिप्य वन्हियोगेन द्रावयेत् । तदनु द्रवीभूते वङ्गे प्रथम समानभागगृहीतहरिद्राचूर्णस्य–स्वल्प २ भाग प्रक्षिपन् लोहदर्व्या चालयेत्। ततश्च समानभागयमानीचूर्णं स्वल्पं २ प्रक्षिपन् मर्दयेत्, तृतीयावस्थाया समानजीरक प्रक्षिपन् चालयेत्, तदनु तत्तुल्य चिञ्चात्वचश्चूर्णं पूर्वरीत्या प्रक्षिपेत्, ततश्च पिप्पलत्वचश्चूर्णमपि समान प्रक्षिपन् लोहदर्व्या मर्दयेत् । सर्वजारकवस्तुना जारणानन्तर वङ्गभूतिमेकत्रीकृत्य शरावेणाच्छाद्य प्रहरद्वय तीव्राग्नि दद्यात् । स्वाङ्गशीतञ्च निष्काश्य पूर्ववत् प्रक्षालनेन क्षारशून्य कृत्वा संशोष्य च गोदुग्धेन, अथवा घृतकुमारीस्वरसेन, गन्धकेन वा, हरितालेन वा सह विमर्द्य कतिचित्पुटप्रदान कुर्यात् । तेन वङ्ग सम्यक्तया मृत भवति । केवलगोदुग्धेन सह चतुर्दशपुटैरेव सम्यग् दोषहीन प्रयोगार्हं वङ्गभस्म भवतीति स्वानुभव ॥ २९२—२९४ ॥

गुणा —

**वङ्गं तिक्ताम्लकं रूक्षं किञ्चिद्वातप्रकोपणम् ।**
**मेदः श्लेष्मामयघ्नञ्च क्रिमिघ्नं मेहनाशनम् ॥२९५॥** [ इति वङ्गमारणम् । ]

अथ मृतवङ्गस्य गुणानाह वङ्गमिति–वङ्गभस्म तिक्त, अम्लम् , रुक्षम्, किंचिद्वातप्रकोपकम्, मेद श्लेष्मविकारनाशकम्, क्रिमिनाशकं, प्रमेहहरञ्च वर्तते ॥२९५॥

अथ लौहशोधनम्—

**तप्तानि सर्वलौहानि कदलीमूलवारिणि ।**
**सप्तधा त्वभिषिक्तानि शुद्धिमायान्त्यनुत्तमाम् ॥ २९६ ॥**

अथ लोहशोधनमाह तप्तानीत्यादि–यद्यप्यत्रग्रन्थगौरवभिया लोहोत्पत्तिभेदलक्षणादिक नोक्त तथापि तत्सर्वं ग्रन्थव्याख्याप्रसङ्गेन तन्त्रान्तरमनुसृत्य लिख्यते, प्रथम लोहोत्पत्ति , यथा भावप्रकाशे––

,पुरा, लोमिनदैत्याना निहताना सुरै र्युधि । उत्पन्नानि शरीरेभ्यो लौहानि विविधानि च॥

अथ विविधलोहानां नामानि भेदास्तेषां लक्षणानि च उच्यन्ते यथा रसरत्न समुच्चये—

"मुण्डं तीक्ष्णञ्च कान्तञ्च त्रिप्रकारमयः स्मृतम् ।
मुण्डात्तीक्ष्णं ततः कान्तं प्रशस्तं परिकीर्तितम् ॥

अथ मुण्डलोहनामानि—मुण्ड, मुण्डलोह, कृपिलोह, शिलात्मजम् कृष्णायसम् दृषत्सारम् आयसञ्चेति । अथास्य भेदाः—

'मृदु कुण्ठं कडारञ्च त्रिविधं मुण्डमुच्यते । द्रुतद्रावमविस्फोटं चिक्कणं मृदु तच्छुभम् ॥
हतं यत्प्रसरेद्दुःखात्तत्कुण्ठं मध्यमं स्मृतम् । यद्धतं भज्यते भङ्गे कृष्णं स्यात्तत्कडारकम् ॥

अथास्य प्रयोगविषयः—कटाहपिष्टपचनखल्वादीनां निर्माणार्थं साम्प्रतं मुण्डलोहं प्रयुज्यते । अथ तीक्ष्णलोहस्य नामानि भेदादिकञ्च—

लोह, लोहम्, लोहकम्, तीक्ष्णम्, तीक्ष्णकम्, सारलोहम्, काललोहम्, शस्त्रलोहञ्चेति । अथास्य भेदाः—

'खरं सारञ्च हृन्नालं तारावट्टञ्च वाजिरम् । काललोहाभिधानञ्च षड्विधं तीक्ष्णमुच्यते ॥

अथ खरादीनां लक्षणानि—

परुषं पोगरोन्मुक्तं भङ्गे पारदवच्छवि । नमने भङ्गुरं यत्तत्खरलोहमुदाहृतम् ॥

किन्तत्पोगरमित्याह—

'अङ्गक्षया च वङ्गञ्च पोगरस्याभिधात्रयम् । चिकुरं भङ्गुरं लोहे पोगरं तत् स्मृतं बुधैः ॥

अर्थात् कुञ्चितकुन्तलवत् लोहे रचनाविशेषः ।

वेगभङ्गुरधारं यत् सारलोहं तदीरितम् । पोगराभासरूपं पाण्डुभूमिजं सारमीरितम् ॥
कृष्णपाण्डुवपुश्चञ्चुबीजतुल्योरुपोगरम् । छेदने चातिपरुषं हृन्नालमिति कथ्यते ॥
पोगरैत्रसङ्काशैः सूक्ष्मरेखैश्च सान्द्रकैः । निचितं श्यामलाङ्गञ्च वाजिरं तत्प्रकीर्तितम् ॥
नीलकृष्णप्रभं सान्द्रं मसृणं गुरु भासुरम् । लोहघातेऽप्यभङ्गात्मधारं कालायसं मतम् ॥

कृपाणादिशस्त्राणां तथा यन्त्राणाञ्च निर्माणार्थं तीक्ष्णलोहमिदानीं लोके बाहुल्येन प्रयुज्यते, मुण्डलोहापेक्षया कान्तलोहाभावे च कृपाणयन्त्रादिनिर्माणशालादितः सुरेतितं तीक्ष्णलोहचूर्णं भेषजकर्मणि ग्राह्यम् । अथ कान्तलोहस्य नामानि भेदाः, लक्षणादिकञ्च । कान्तम्, कान्तलोहम्, कान्तायसम्, अयस्कान्तम्, महालोहञ्चेति ।

अथास्य भेदाः—

"भ्रामकं चुम्बकञ्चैव कर्षकं द्रावकं तथा । एवं चतुर्विधं कान्तं रोमकान्तञ्च पञ्चमम् ॥

राजनिघण्टौ तु—"स्याद्भ्रामकं तदनु चुम्बकरोमकाख्य स्याच्छेदकाख्यमिति-तच्च चतुर्विध तत्" । इत्येवमस्य चातुर्विध्यमेवोक्तं तच्च चुम्बककर्षकयो प्राय समानगुणत्वेनाभेद मत्वा उभयोरेकत्वेन गणनादिति । अथास्यभेदान्तर यथा—
एकद्वि-त्रि-चतुष्पञ्च सर्वतोमुखमेव तत्। पीतं कृष्ण तथा रक्त' त्रिवर्णं स्यात्पृथक् पृथक् ॥
क्रमेण देवतास्तत्र ब्रह्मविष्णुमहेश्वरा ॥

अथ भ्रामकादोनालक्षणानि—

भ्रामयेल्लोहजात यत्तत्कान्त भ्रामक मतम् । चुम्बयेच्चुम्बक कान्त कर्षयेत्कर्षक तथा॥
साक्षाद्यद्द्रावयेल्लोह तत्कान्त द्रावक भवेत् । तद्रोमकान्त स्फुटितात् यतो रोमोद्गमो भवेत् ॥

अथ कान्तलोहभेदेषु श्रेष्ठकान्तलोहकथन लक्षणञ्चाह—

स्पर्शवेधि भवेत्पीत कृष्ण श्रेष्ठ रसायने । रक्तवर्ण तथा चापि रसबन्धे प्रशस्यते ॥
भ्रामकन्तु कनिष्ट स्याच्चुम्बक मध्यमं स्मृतम् । उत्तम कर्षकञ्चैव द्रावकञ्चोत्तमोत्तमम्॥
कनिष्ठ स्यादेकमुख मध्य द्वित्रिमुख भवेत् । चतुष्पञ्चमुख श्रेष्ठमुत्तम सर्वतोमुखम् ॥
भ्रामक चुम्बकञ्चैवाव्याधिनाशे प्रशस्यते । रसे रसायने चैव कर्षकं द्रावक हितम् ॥
मदोन्मत्तगज सूत कान्तमङ्कुशमुच्यते । क्षेत्र ज्ञात्वा ग्रहीतव्य तत्प्रयत्नेन धीमता ॥
मारुताऽऽतपविक्षिप्त' वर्जयेन्नात्र राशय ॥

अथ सामान्येन तीक्ष्णकान्तलोहयोर्लक्षणानि—

उज्ज्वल लोहफलक धात्रीकाशीसलेपितम् । गिरिश्रृङ्गाङ्कित यत्स्यात्तीक्ष्णलोह तदुच्यते ॥
पात्रे यस्य प्रसरति जले तैलबिन्दुर्न लिप्तो हिङ्गुर्गन्ध विसृजति तथा तिक्तता निम्बकल्क ॥
तप्त दुग्धं भवतिशिखराकारकं नैति भूमौ कान्त लौह तदिदमुदित लक्षणोक्त नचान्यत् ॥

अथ शुद्धि—यथोक्तलक्षण तीक्ष्णलोहचूर्णं कान्तं वा समादाय प्रथम "तैले तक्रे गवा मूत्रे काञ्जिकेऽथ कुलत्थजे" इत्युक्ततैलादिषु पृथक् २ सप्तवार वह्नौ प्रतप्त कृत्वा निर्वापयेत् । ततश्च कदलीमूलवारिणि—रम्भामूलस्वरसे सप्तवार प्रतप्त कृत्वा-सिञ्चेत् इत्थं सर्वविध लौहानि श्रेष्ठा शुद्धिमाप्नुवन्ति ॥ २९६ ॥

मतान्तरम्—

**त्रिफलाऽष्टगुणे तोये त्रिफला षोडशं पलम् ।**
**तत्क्वाथे पादशेषे तु लौहस्य पलपञ्चकम् ॥ २९७ ॥**
**कृत्वा च तप्तपत्राणि सप्तवारं निषेचयेत् ।**
**एवं प्रलीयते दोषो गिरिजे ! लौहसम्भवः ॥२९८॥** [ इति लौहशोधनम् । ]

अथ मतान्तरेण लोहशुद्धयर्थं त्रिफलाक्वाथनिर्माणप्रकारमाह त्रिफलेति— षोडशपलपरिमिता त्रिफलामादाय मृण्मये भाण्डे निक्षिप्य त्रिफलापेक्षया अष्टगुणे (१२८ पल) जले वह्नियोगेन क्वाथयेत्। क्वथनेन चतुर्थांशमात्रया (३२ पल) अवशिष्टं जलं ज्ञात्वा अवतारयेत्। अस्य क्वाथस्य सप्तभागं कृत्वा एकैकस्मिन् भागे पञ्चपलपरिमितं प्रतप्तं लोहं निर्वापयेत्। इत्थं सप्तधा निर्वापणेन लोहस्य अत्युत्तमा शुद्धिर्भवति। पूर्वप्रतप्तलोहनिर्वापणावशिष्टक्वाथं परित्यज्य सप्तधाकृतभागे नूतनक्वाथे क्रमशो निर्वापणं कुर्यात्। अनेन विधानेन हे पार्वति! लोहान्तर्गता दोषा नश्यन्ति। रसतरङ्गिण्यामपि त्रिफलाक्वाथनिर्माणद्रव्यादिनिर्देशो यथा—"त्रैफलं वल्कलं वै कला१६भागिकं नाग८नेत्र२क्षपानाथ१भागं जलम्। पाचितं शोषितं वेद४भागोन्मितं सेचनीयं त्वयं पञ्च भागोन्मितम्" ॥ २९७–२९८ ॥

इति लोहशोधनम्।

निरुत्थीकरणोपाय—

**भानुपाकात् तथा स्थाली–पाकाच्च पुटपाकतः।**
**निरुत्थो जायते लौहो यथोक्तफलदो भवेत् ॥ २९९ ॥**

अथ लोहस्य निरुत्थभस्मनिर्माणोपायमाह भानुपाकादित्यादि–वक्ष्यमाणे भानुपाकस्थालीपाकपुटपाके यथाविधिपाचितलौहस्य निरुत्थं भस्म जायते यथोक्तफलप्रदश्च भवति।

अथ भानुपाकलक्षण—

वराक्वाथयुतं लौहं भानो प्रखरभानुभिः। शुष्यन्विपच्यते यस्माद्भानुपाकस्ततः स्मृतः ॥२९९॥

अथ भानुपाकविधि—

**लौहे दृषदि लौहस्य मुद्गरेण हतं मुहुः।**
**कृत्वाम्बुगलितं शुद्धं जलेन त्रैफलेन वा ॥ ३०० ॥**
**क्षालयेद्बहुशः पश्चात् कृत्वा द्रवान्तरं पृथक्।**
**शोषितं भानुभिर्भानोर्भानुपाके प्रयोजयेत् ॥ ३०१ ॥**
**क्षालने भानुपाके तु लोहतुल्यं फलत्रिकम्।**
**जलं द्विगुणितं दत्त्वा चतुर्भागावशेषितम् ॥ ३०२ ॥**
**एवमुक्तं फलक्वाथ–जलं दत्त्वा पुनः पुनः।**
**शोषयेत् सूर्यतेजोभिर्निरन्तरमहस्त्रयम् ॥ ३०३ ॥**

अथवा तत्र तत्क्वाथं दत्वा दत्वा भिषग्वरः ।
सप्तसप्तविधैरेव सप्त वारान् विशोधयेत् ॥३०४॥ [इति भानुपाकविधि । ]

अथ भानुपाकविधिमाह लौह इत्यादि–विशुद्ध लौह पाषाणखल्वे लौहनिर्मितखल्वे वा मुद्गरेण विचूर्ण्य त्रिफलाक्वाथेन शुद्धजलेन वा वार २ सम्यक् प्रक्षाल्य अङ्गारादिमिश्रितद्रव्यान्तरञ्च पृथक् कृत्वा निर्मल कुर्यात् । पश्चात् सूर्यस्य रश्मिभि संशुष्क कृत्वा भानुपाकार्थं प्रयोजयेत् । अथ लौहस्य प्रक्षालनार्थं भानुपाककरणार्थञ्च कियन्माना त्रिफला ग्राह्या, कियन्मानञ्च जल ग्राह्य तदाह क्षालन इत्यादि । क्षालनार्थं भानुपाकार्थञ्च यावन्मान लौह तावन्मानमेव फलत्रिकं, जलञ्च द्विगुण गृहीत्वा मृण्मये भाण्डे वह्नौ क्वाथयेत् , चतुर्थांशावशेषितञ्च ज्ञात्वा अवतारयेत् । तदनु लौहखल्वे मृण्मयबृहच्छरावे वा लौहचूर्णं उपर्युक्तयुक्तिनिर्मितत्रिफलाक्वाथेन आप्लाव्य सतत दिवसत्रय सूर्यरश्मिभि क्वाथ शोषयेत् । एषा क्रिया सप्तवार कर्तव्या, त्रिफलाक्वाथञ्चोपर्युक्तप्रमाणानुसार वार वार निर्माय भानुपाकं चरेत् । अथवा क्वाथ सप्तधा विभज्य सप्तवार स्वल्प स्वल्प दत्वा शोषयेत् , नास्ति त्रिदिवसमर्यादा, एवमपि सप्तवार कुर्यात् ॥ ३००–३०४ ॥

अथ स्थालीपाकविधि —

इत्थमादित्यपाकान्ते स्थाल्यां पाकमुपाचरेत् ।
स्थालीपाके फलं ग्राह्यमयसस्त्रिगुणीकृतम् ॥ ३०५ ॥
तस्य षोडशिकं तोयमष्टभागावशेषितम् ।
मृदुमध्यकठोराणामन्येषामयसा समम् ॥ ३०६ ॥
क्वथनीयं समादाय चतुरष्टौ च षोडश ।
गुणानां स्थाप्यते तोयं शोषयेदयसा समम् ॥ ३०७ ॥
स्वरसस्यापि लौहेन स्थालीपाके समानता ।
स्थाल्यां क्वाथादिकं दत्वा यथाविधि विनिर्मितम् ।
पाकेन क्षीयते यस्मात् स्थालीपाक इति स्मृतः ॥ ३०८ ॥
हस्तिकर्णपलाशस्य मूलञ्च शतमूलिका ।
भृङ्गराजाख्यराजानामेषां निजरसैः सह ॥ ३०९ ॥
मिलित्वा वा विधातव्यं स्थालीपाके फलादनु ।
यथादोषौषधेनापि स्थालीपाको विधीयते ॥३१०॥ [इति स्थालीपाकविधि ।

अथ स्थालीपाकविधिमाह इत्थमित्यादि–स्थालीपाकलक्षणन्तु यथा—

त्रिफलाक्वथितोपेत लोह स्थाल्या खराग्निना ।
शुष्यन् विपच्यते यस्मात् स्थाल पाकस्तत स्मृत ॥

भानुपाकविपक्व लौह जलेन प्रक्षाल्य तत स्थालीपाक समाचरेत् । तत्र त्रिफलामान जलादिमानञ्च आह स्थालीपाक इत्यादि–स्थालीपाके यावत्परिमित लोह भवेत् ततस्त्रिगुणा त्रिफलामादाय षोडशगुणे जले क्वाथयेत्, क्वथनेन अष्टभागावशिष्ट जल ज्ञात्वा अवतारयेत् । तथा वक्ष्यमाणाना मृदुमध्यकठोराणा द्रव्याणा स्वरसाप्राप्तौ तेषा क्वाथ कर्तव्यस्तत्र मानमुच्यते मृदुमध्यकठोरद्रव्याणि लौहप्रमाणतुल्यानि गृहीत्वा तेषा मृदुद्रव्येषु चतुर्गुणम , मध्यद्रव्येषु अष्टगुणम्, कठोरद्रव्येषु च षोडशगुण जल दत्वा क्वाथयेत्, लोहसमञ्चावशिष्ट जल ज्ञात्वा अवतारयेत् । यदि च मृदुद्रव्यस्य स्वरसप्राप्तिर्भवेत्तदा तस्यापि लोहसमान भाग स्थालीपाकार्थं गृह्णीयात् । लौहस्थाल्या ( कटाहे ) अथवा मृण्मयभाण्डे यथाविधिनिर्मित त्रिफलाक्वाथ, अथवा यथादोषप्रत्यनीक काष्ठौषधस्वरस, क्वाथ वा प्रपूर्य तस्मिन् लोह निक्षिप्य चुल्या खराग्निना पचेत्, स्थाल्या लोह पच्यतेऽत स्थालीपाक स्मृत । फलादनु–त्रिफलाक्वाथे स्थालीपाककरणानन्तर लोहस्य हस्तिकर्णपलाशो गजकर्णवद्बृहदाकारपत्रमय। वन्यपलाश तस्य मूल तस्य स्वरस क्वाथ वा लोहतुल्य समादाय स्थालीपाक कुर्यात् तदनु शतमूली–शतावरी तस्या स्वरसे क्वाथे वा स्थालीपाक चरेत्, ततश्च भृङ्गराजस्वरसेऽपि स्थालीपाक कुर्यात्, अथवा सर्वेषा रस सयोज्य स्थालीपाक कुर्यात् । अनेनैव प्रकारेण दोषप्रत्यनीकै र्विविधद्रव्यस्वरसै क्वाथैस्सह वा लोहस्य स्थालीपाक कुर्यात् ॥ ३०५–३१० ॥

अथ पुटपाकविधि —

**स्थालीपाके सुसपक्व प्रक्षाल्य स्वच्छवारिणा ।**
**शुष्क सञ्चूर्ण्य यत्नेन पुटपाके प्रयोजयेत् ॥ ३११ ॥**
**पुटाद्दोषविनाश. स्यात् पुटादेव गुणोदय. ।**
**म्रियते च पुटाल्लौहस्तस्मात् पुट समाचरेत् ॥ ३१२ ॥**
**यथा यथा प्रदीयन्ते पुटा सुबहुशो यदि ।**
**तथा तथा प्रकुर्वन्ति गुणानेव सहस्रश. ॥ ३१३ ॥**

पुटपाकेन पक्वन्तु शस्यते रसकर्मसु ।
दशादिशतपर्य्यन्तो गदे पुटविधिर्मतः ॥ ३१४ ॥
शतादिस्तु सहस्रान्तः पुटो देयो रसायने ।
वाजीकर्मणि विज्ञेयो दशादिशतपञ्चकः ॥ ३१५ ॥
तावदेव पुटेल्लोह यावच्चूर्णीकृत जले ।
निस्तरङ्गे लघुत्वेन समुत्तरति हसवत् ॥ ३१६ ॥
पुटपाकौषधस्यापि क्वाथो वा स्वरसोऽपि वा ।
वक्ष्यमाणप्रमाणेन कर्त्तव्यो भिषजां वरै. ॥ ३१७ ॥
रसाभावे तु सर्वेषां क्वाथो ग्राह्यो मनीषिभिः ।
अभावे स्वरसस्यापि क्वाथ एव फलत्रिकात् ॥ ३१८ ॥

अथ लोहस्य पुटपाकविधिमाह–तत्र प्रथम किकर्तव्य तदुच्यते स्थालीपाक इत्यादि–त्रिफलादीना द्रव्याणा क्वाथे स्थाल्या सम्यक् पक्व लौह स्वच्छजलेन प्रक्षाल्य सशोष्य च खल्वे चूर्ण कुर्यात् तदनु पुटपाकार्थं त प्रयोजयेत्। अथ पुटप्रदानगुणमाह पुटादित्यादि–पुटदानात् लोहस्यदोषहानि, के च ते दोषा स्तदाह भावप्रकाशे–गुरुता दृढतोत्क्लेदकश्मलं दाहकारिता। अश्मदोष सुदुर्गन्धो दोषा सप्तायसस्य|तु ॥ इति ।

पुटादेव गुणोदय, के च ते गुणास्तदाह रसरत्नसमुच्चये–
लोह जन्तुविकारपाण्डुपवनक्षीणत्वपित्तामय–
स्थौल्यार्शोग्रहणीज्वरार्तिकफजिच्छोफप्रमेहप्रणुत् ।
गुल्मप्लीहविषापह बलकरं कुष्ठाग्निमान्द्यप्रणुत्
सौख्यालम्बि रसायन मृतिहर कान्तादिक क्विट्टवत् ॥

आयुष्प्रदाता बलवीर्यकर्ता रोगप्रहर्ता मदनस्य कर्ता । अय समानं नहि किञ्चिदन्यद्रसायन श्रेष्ठतम हि जन्तो ॥ इति ।

पुटादेव च लोहो म्रियते तस्मात् प्रयत्नपूर्वक यथा शास्त्रं पुट दद्यात् ।

अथ पुटस्य स्वरूप ।

रसादिभिर्भेषजाना खल्वे लोह विमर्दितम् ।
पुटस्थ पच्यते यस्मात् पुटपाकस्ततत स्मृत ॥ इति ।

अथ पुटप्रदानप्रमाण गुणाश्चाह–यथा यथा विधिपूर्वक बहुश प्रदत्ता पुटा तथा

अथ पटोलादिगण —

**पटोलपत्रकोशीर-कासमर्दापराजिताः ।**
**लोध्रेन्दीवर-कह्लार-वाराही कान्तया सह ॥**
**पटोलादिरिति ज्ञेयः पित्तश्लेष्मगदापहः ॥ ३२९ ॥**

अथ पटोलादिगणमाह पटोलपत्रमित्यादि—पटोलपत्रकम्, उशीर—वीरणमूलम् ( खस इति लोके ) यदाह भावप्रकाशे—वीरणस्य तु मूल स्यादुशीर नलदञ्च तत्, इति । कासमर्द (कसौंजी), अपराजिता—विष्णुक्रान्ता, लोध्र (पठानीलोध), इन्दीवर—नीलकमलम्, कह्लार —श्वेतकमलम् सौगन्धिकम् वा, वाराही—वाराहीकन्द, कान्ता—प्रियङ्गु (फूलप्रियङ्गु), एष पटोलादिगण पित्तश्लेष्मजरोगापहर्ता, पटोलादिगणोक्तद्रव्यस्वरसभावित ततश्च पुटित लौह पित्तश्लेष्मजव्याधिनिवारकं भवति॥३२९॥

अथ किंशुकादिगण —

**किंशुकः काश्मरी विश्वमग्निमन्थस्त्रिकण्टकः ।**
**श्योनाकः शालपर्णी च सिहपुच्छीद्वय स्थिरा ॥ ३३० ॥**
**पाटला कण्टकारी च बृहती बिल्व एव च ।**
**किंशुकादिगणो ह्येष दोषत्रयहरो मतः ॥ ३३१ ॥**

अथ किंशुकादिगणमाह किंशुक इत्यादि—किंशुक —पलाश, काश्मरी—गम्भारी, विश्वम्—शुण्ठी, अग्निमन्थ —गणिकारिका, त्रिकण्टक —गोक्षुर, श्योनाक —दीर्घवृन्त ( सोनालू, अरलु, टेण्टू वा ), शालपर्णी—त्रिपर्णी, सिंहपुच्छीद्वय—पृश्नीपर्णी, माषपर्णी मुद्गपर्णी च, स्थिरा—गुडूची, पाटला—मधुदूती ( पाटल ), कण्टकारी—व्याघ्री ( छोटी कटेरी ), बृहती—वार्ताकी ( बड़ी कटेरी ), बिल्व —श्रीफल, एष किंशुकादिगण प्रोक्त दोषत्रयजन्यव्याधिहरश्च, किंशुकादिगणोक्ताना समस्ताना व्यस्ताना वा द्रव्याणा स्वरसै क्वाथैर्वा लोह भावयित्वा पुटेत्, इत्थ मृत लोह दोषत्रयहर भवति ॥ ३३०–३३१ ॥

अथ शतावर्य्यादिगण —

**शतावरीबलाधात्री गुडूची वृद्धदारकः ।**
**वानरीभृङ्गराजाख्य-विदारीगोक्षुरक्षुरैः ।**
**वाजिगन्धाकणायुक्तैर्वाजीकर्म्मसु शस्यते ॥ ३३२ ॥**

अथ शतावर्य्यादिगणमाह शतावर्य्यादि-शतावरी-प्रसिद्धा, बला-खरेटी, महाबला-( सहदेई ), अतिबला-( कंघी ), नागबला (गंगेरन), धात्री-आमलकी, गुडूची-छिन्ना ( गिलोय ), वृद्धदारक -( विधारा ), वानरी-कपिकच्छु, भृङ्गराज -भृङ्गराज, विदारी-विदारीकन्द, गोक्षुर -त्रिकण्टक, क्षुरक -कोकिलाक्षः ( तालमखाना ), वाजिगन्धा अश्वगन्धा, कणा-पिप्पली, शतावरीगणोक्तानीमानि द्रव्याणि वार्त्तिकेषु प्रशस्तानि ॥ ३३२ ॥

अथ विदारीकन्दादिगणः —

विदारीकन्दपिण्डालुभृङ्गराजशतावरी ।
क्षीरकञ्चुकभल्लातामृतकाचित्रकैस्तथा ॥ ३३३ ॥
करिकर्णपलाशैश्च मुषलीमधुकैरपि ।
मुण्डिरीकेशराजैः पुटो देयो रसायने ॥ ३३४ ॥

अथ विदारीकन्दादिगणमाहविदार्य्यादिविदारी—

विदारीकन्द -( शुक्लभूमिकुष्माण्ड ), पिण्डालु -पिण्डालु, भृङ्गराज, शतावरी, क्षीरकञ्चुक -क्षीरकाकोली, भल्लातक (भिलावा), अमृता-गुडूची, चित्रक, करिकर्णपलाशो-गजकर्णपलाश, मुषली-तालमूली, मधुक -यष्टी ( मुलेठी ), मुण्डिरी-मुण्डी, केशराज प्रसिद्ध, इमान्यपि शतावरीगणोक्तद्रव्याणि, रसायनार्थमेषां स्वरसैः क्वाथैर्वा लोहं भावयित्वा पुटेत् । इत्थं मृतं लोहं रसायनगुणकरं भवति ॥ ३३३-३३४ ॥

सामान्ये तु विशेषे च पुटे यद्‌यत् प्रकीर्तितम् ।
मिलितैरेकशो वा तैर्यथेष्टं पुटयेत् ततः ।
पुटपाके फलादीनामयसा ग्रहणं समम् ॥ ३३५ ॥

लोहस्य सामान्यपुटदानार्थं विशेषपुटदानार्थञ्च तत्तद्‌गणेषु यानि द्रव्याणि प्रोक्तानि तेषां स्वरसप्राप्तौ समस्तगणोक्तद्रव्यस्वरसैः, अथवा गणोक्तानां द्रव्याणां पृथक् २ स्वरसैश्च लोहं भावयित्वा दृढं पेषयेत्, ततश्च तस्य चक्रिकां कृत्वा शरावे मृन्मयभाण्डे वा सम्पुटस्थं च कृत्वा गजपुटे पुटेत्, इत्थं दशादिपुटदानारम्भे सहस्रपुटपर्यन्तं यावच्छक्यं पुटदानं कर्त्तव्यम्, अधिकस्य अधिकं फलमिति, यदि च स्वरसप्राप्तिर्न स्यात्तदा लोहसमं गणोक्तं प्रत्येकं द्रव्यमादाय पूर्वोक्तविधिना क्वाथ

कृत्वा तेन च भावयित्वा पुटेत्। वारितरलक्षणयुक्तस्यैव लोहभस्मन प्रयोगं कुर्यात्। वारितरलक्षण यथा—

तावदेव पुटेल्लौह यावच्चूर्णीकृत जले। निस्तरगे लघुत्वेन समुत्तरति हंसवत् ॥ ३३५ ॥

अथ पुटपाकप्रकारमाह—

**हस्तमात्रमिते गर्त्ते करीषेणार्द्धपूरिते।**
**अथवा तुषकाष्ठाभ्यां पूरितेऽर्द्धे निधापयेत् ॥**
**लौहमग्निं ततो दत्त्वा तथैवोद्र्ध्वं प्रपूरयेत् ॥ ३३६ ॥**
**दिवा वा यदि वा रात्रौ विधिनानेन पाचयेत्।**
**चतुर्भिः प्रहरैरेव पुटपाकेन मारयेत् ॥ ३३७ ॥**
**पुटपाके क्षणादूर्ध्वं स्थितो भवति भस्मसात्।**
**अधस्तादपकृष्टस्तु मन्दो भवति वीर्य्यतः ॥ ३३८ ॥**
**कुण्डस्था भस्मनाच्छन्न आकृष्टव्यः सुशीतलः।**
**समाकृष्टस्य तप्तस्य गुणहानिः प्रजायते ॥ ३३९ ॥**

अथ पुटपाकप्रकारमाह हस्तमात्रमित इत्यादि–शुद्धभूमौ हस्तैकपरिमित विस्तृत–गम्भीरं तावदेव च दीर्घं गर्तं विधाय तस्यार्धमधोभाग वन्योपलै तुषकाष्ठाभ्या वा प्रपूर्य तदुपरि मध्यप्रदेशे शरावसम्पुटस्थ लौहं अर्थात् शरावसम्पुट स्थापयेत्, पश्चाद्वह्निं प्रज्ज्वाल्य सम्पुटोपरि वन्योपलानि, अथवा तुषकाष्ठानि सम्यक्तया दत्वा सम्पूर्णं गर्तं पूरयेत्, इत्थ दिवा रात्रौ वा तूर्ययामावधि ( १२ घण्टे ) सम्पुटस्थ लोहं पचेत्, स्वाङ्गशीतं सम्पुट विभिद्य लौहचक्रिकाश्च निष्कास्य खल्वे त्रिफलादिगणोक्तै र्यथेष्टद्रव्यस्वरसै क्वाथै र्वा पुनराप्लाव्य दृढं केतकीरज सदृश विमर्द्य चक्रिकाश्च कृत्वा पुनर्यथोक्तविधिना लोहं पुटेत्। इत्थं दशादिपुटादारभ्य सहस्रपुटपर्यन्तं, यावच्छक्यं वा, वारितरभवनपर्यन्त वा लौहं पुटेत्। अथ लौहसम्पुटस्य गर्ते कस्मिन्भागे स्थापन गुणावहं कुत्र च स्थापन दोषावहं तदाह पुटपाक इत्यादि–लोहसम्पुटं यदि मध्यभागाद् किञ्चिदूर्ध्वप्रदेशे स्थापयेत्तदा तत्रस्थतुषोपलादीनि शीघ्र भस्मता प्राप्स्यन्ति, ( अर्थात् गर्तस्य अर्धभागादपि अधिकभागपर्यन्तं तुषोपलादिकं प्रपूर्य तदुपरि लौहसम्पुट स्थापनेन उपलादिकस्य शीघ्रनाशस्तेन च सम्यक्तया लोहोपरि वन्हे प्रभावो न स्यादित्यर्थ ) तथा गर्त-

अथ लौहस्य निरुत्थोकरणम्—

**सर्वमेतत् मृतं लौह पक्तव्यं मित्रपञ्चकैः ।**
**यद्येवं स्यात् निरुत्थञ्च सेव्यं रक्तिचतुष्टयम् ॥ ३४४ ॥**

अथ लौहस्य निरुत्थीकरणमाह–सर्वमित्यादि–किरातादिनानागणद्रव्यक्वाथभावनायोगेन मृत तीक्ष्णकान्तादिक सर्वं लौहजात खल्वे मित्रपञ्चकेन सह विमर्द्य शरावसम्पुटस्थ पुटेत् । एवं यदि लोहभस्म स्वप्रकृतिं ( मारणात्प्राक् यद्रूपमासीत्तमित्यर्थ ) नाप्नुयात्तदा निरुत्थ भस्म जानीयात् । रसायनार्थं निरुत्थ लोहभस्म रक्तिचतुष्टयपर्यन्त, यथानुपाने प्रयोजयेत् ॥ २४४ ॥

अथ मित्रपञ्चकम्—

**मधु सर्पिस्तथा गुञ्जा टङ्कणं गुग्गुलुस्तथा ।**
**मित्रपञ्चकमेतत् तु गणितं धातुमेलने ॥ ३४५ ॥**

अथ मित्रपञ्चकमाह मधुसर्पिरित्यादि–मधु–माक्षिकम्, सर्पि –गोघृतम्, गुञ्जाचरम् ), टङ्कणम्–सौभाग्यम् ( सुहागा ), गुग्गुलु –पुर संज्ञकम्, एतत्सर्वं समभागेन मिलित मित्रपञ्चकमुच्यते,अस्य धातूना परस्परमेलनार्थमुपयोग क्रियते॥ ३४५॥

निरुत्थोकरणे मतान्तरम्—

**गोघृतं गन्धकं लौहं तप्तखल्ले विमर्दयेत् ।**
**दिनैकं कन्यकाद्रावै रुद्ध्वा गजपुटे पचेत् ।**
**इत्येवं सर्वलौहानां कर्त्तव्यं स्यात् निरुत्थितम् ॥ ३४६ ॥**

अथ मतान्तरेण लोहस्य निरुत्थीकरणमाह गोघृतमित्यादि गोघृतम् , शुद्धगन्धकम् , लौहभस्म च सर्वं सम सम गृहीत्वा प्रतप्तलौहखल्वे निक्षिप्य मर्दयेत् , तदनु दिनैकं घृतकुमारोस्वरसे विमर्द्य चक्रिकाश्च कृत्वा सम्पुटस्थ गजपुटे पचेत् । तेन लौहस्य निरुत्थ भस्म जायते, इत्येव सर्वलोहाना ( सप्तधातूनामित्यर्थ ) निरुत्थित भस्म भवति ॥ ३४६ ॥

रसायने विशेषो यथा—

**मर्दयेच्च लौहभस्म गुञ्जामध्वाज्यटङ्कणैः ।**
**धमेद्वह्नौ पुनर्लौहं तदा योज्यं रसायने ॥ ३४७ ॥**

अथ वज्रपाण्ड्यादिगुणा —

**सामान्याद्द्विगुणं क्रौञ्चं कालिङ्गोऽष्टगुणस्ततः ।**
**कले शतगुणं भद्रं भद्राद्वज्रं सहस्रधा ॥ ३५१ ॥**
**वज्रात् शतगुणं पाण्डि निरङ्गं दशभिर्गुणैः ।**
**ततः कोटिसहस्रैर्वा कान्तलौहं महागुणम् ॥ ३५२ ।** [इति लौहमारणम् । ]

अथ वज्रपाण्ड्यादिगुणमाह—सामान्यादित्यादि सामान्यलौहापेक्षया द्विगुणं हितकरं क्रौञ्चलौहं भवति, क्रौञ्चात्कलिङ्गलौहमष्टगुणं हितकरं, कले शतगुणं हितकरं भद्रलौहम्, भद्रादपि सहस्रगुणहितकरं वज्रलौहम्, वज्रापेक्षया शतगुणं हितकरं पाण्डिलौहम्, ततश्च दशगुणं हितप्रदं निरङ्गलौहं ज्ञेयम्, निरङ्गादपि कोटि-सहस्राधिकगुणकरं कान्तलौहं जानीयात् ॥ ३५१–३५२ ॥

अथ मण्डूरस्य उत्कर्षादिनिर्णयः —

**ये गुणा मारिते मुण्डे ते गुणा मुण्डकिट्टके ।**
**तस्मात् सर्वत्र मण्डूरं रोगशान्त्यै प्रयोजयेत् ॥ ३५३ ॥**
**शतोर्द्ध्वमुत्तमं किट्टं मध्यञ्चाशीतिवार्षिकम् ।**
**अधमं षष्टिवर्षीयं ततो हीनं विषोपमम् ॥ ३५४ ॥**

अथ मण्डूरस्योत्कर्षमाह ये गुणा इत्यादि—मण्डूरस्य स्वरूपादिकं यथा भावप्रकाशे—"ध्मायमानस्य लौहस्य मलं मण्डूरमुच्यते ।

अन्यत्रापि—

प्रतापितस्य लौहस्य घनाघातच्युतं मलम् । कालेन पिण्डतां यातं क्षितौ मण्डूरमुच्यते॥

अथास्य नामानि—

लौहसिंहानिका किट्टी सिंहानञ्च निगद्यते । लौहकिट्टं, लौहमलं लौहोच्छिष्टञ्च तन्मतम् ॥

यल्लौहं यद्गुणं प्रोक्तं तत्किट्टमपि तद्गुणम् । अथास्य प्राशस्त्यं ग्राह्यमण्डूरल-क्षणञ्च रसतरङ्गिण्या—

षष्टिप्रायमधमं मध्यं मसप्ततिवार्षिकम् । सर्वश्रेष्ठं समाख्यातं मण्डूरं शतवार्षिकम् ॥

ग्राह्यमण्डूरलक्षणं यथा—

स्निग्धं गुरु दृढञ्चैव कृष्णं कोटरवर्जितम् । जीर्णनष्टपुरस्थञ्च मण्डूरं ग्राह्यमुच्यते ॥

ये गुणा मुण्डलौहभस्मनि त एव विधिपूर्वकशोधितमारितमुण्डकिट्टके भवन्ति,

तस्मात् तदभावे रोगशान्त्यै सर्वत्र मण्डूर प्रयोजयेत् । शतवर्षादपि अधिक जीर्णं मण्डूर श्रेष्ठ कीर्तित मध्यमञ्चाशीतिवार्षिक, षष्टिवर्षीयमधममल्पफलप्रद तस्मादपि स्वल्पवर्षजीर्णं त्याज्यमेव तस्य विषप्रभावकारित्वात् ॥ ३५३-३५४ ॥

मण्डूरशोधनम्—

**दग्ध्वाऽक्षकाष्ठैर्मलमायसन्तु गोमूत्रनिर्वापितमष्टवारान् ।**
**विचूर्ण्य लीढ मधुनाऽचिरेण कुम्भाह्वयं पाण्डुगदं निहन्ति ॥ ३५५ ॥**

अथ मण्डूरशोधनादिकमाह दग्ध्वेत्यादि—प्रथम मण्डूरस्य तैलतक्रादिषु सामान्यशोधन कृत्वा तदनु विभीतककाष्ठाङ्गारोपरि कटाहसस्थ मण्डूर प्रतप्त कृत्वा गोमूत्रे निर्वापयेत एवमष्टवार निर्वापणेन तस्य शुद्धिर्भवति, ततोऽस्य मारण कर्तव्य यथा—

चूर्णीकृतन्तु मण्डूर त्रिफलाक्वथिताम्भसा । सम्पेष्य सम्पुट कृत्वा त्रिंशद्वार तत पुटेत् ॥
एव नातिचिरादेव रक्तचन्दनसप्रभम् । मण्डूरं जायते तूर्णं ततो योगेषु योजयेत् ॥

लौहमारकगणोदितै भैषजक्वाथैरपि सह प्रपेषित सम्पुटीकृतञ्च लौहकिट्ट भस्मी भवति, इत्थ मृत मण्डूर मधुना सेवित कुम्भसज्ञक पाण्डुरोग निवारयेत् ॥ ३५५ ॥

अथ किट्टादीनामुत्तरोत्तर श्रेष्ठत्वम्—

**किट्टाद्दशगुणं मुण्डं मुण्डात् तीक्ष्ण शताधिकम् ।**
**तीक्ष्णात् लक्षगुण कान्त भक्षणात् कुरुते गुणम् ॥ ३५६ ॥**

अथ किट्टाद्यपेक्षया कान्तस्य श्रेष्ठत्वमाह किट्टादित्यादि किट्टात्—मण्डूरात् मुण्ड दशगुण फलप्रद, मुण्डाच्च तीक्ष्णलौह शतगुणाधिकफलप्रद, तीक्ष्णलौहादपि कान्तलौह लक्षगुणाधिकफलप्रदं, तस्माद्यथालाभ कान्त लौह योगेषु प्रयोजयेत् ॥ ३५६ ॥

अथ स्वर्णादीना मारणद्रव्याणि—

**नागै. सुवर्णं रजतञ्च ताप्यैर्गन्धेन ताम्र शिलया च नागम् ।**
**तालेन वङ्ग त्रिविधञ्च लौह नारीपयो हन्ति च हिङ्गुलेन ॥ ३५७ ॥**

[ इति स्वर्णादिशोधनमारणविधि । ]

अथ स्वर्णादिधातूना साधारणमारणद्रव्य सक्षेपत आह—नागैरित्यादि—शुद्ध पत्रस्वरूप स्वर्ण नागभस्मना निम्ब्वादिद्रवयोगेन विलिप्य पुटेत् । शुद्ध रजतपत्रं स्वर्णमाक्षिकचूर्णेन सह मारयेत् । विधिर्यथा रसतरङ्गिण्या—

पत्रीकृत शुद्धतार चतुस्तोलकसमितम् । द्वितोलकमितञ्चैव सुमृत स्वर्णमाक्षिकम् ॥
सुधादुग्धेन सम्पेष्य यत्नतो याममात्रकम् । आतपे चाथ सशोष्य श्लक्ष्णचूर्णन्तु कारयेत् ॥

शरावसम्पुटस्थञ्च पुटेद्वन्योपलैर्भिषक् । एवं स्वल्पपुटैरेव भेजूत मृतिमाप्नुयात् ॥

द्वितीयादिषु पुटेषु सुधादुग्धेन सम्पेष्य पुटेत्, माक्षिकचूर्णप्रक्षेपो नैव कार्य इति। गन्धकयोगेन ताम्रभस्म कुर्यात् । विधिर्यथा—

ताम्र पत्रीकृत शुद्धं भिषग् दशपलोन्मितम् । ताम्रद्विगुणितञ्चैव गन्ध दत्वा विमर्दयेत्॥
सम्पुटस्थ तत कृत्वामृदा सन्धि निरोधयेत् । अहोरात्र पचेद्यत्नाद्वालुकायन्त्रग भिषक् ॥
स्वाङ्गशीतन्तु विज्ञाय सम्पुट त्ववतारयेत्। ताम्रोन्मितं बलि दत्वा शुल्व खल्वेऽथ पेषयेत् ॥
इत्थ त्रिवार पुटयेत्तुल्य गन्ध विनिक्षिपन्। एव मृत ताम्रकं स्यादञ्जनादौ गुणावहम् ॥इति।

मन शिलया सह नागभस्म कुर्यात्, अथ विधि —

विशुद्ध सीसमादाय कटाहे तु निधापयेत्। चुल्लिकाया निधायाथ वह्निं प्रज्वाल्य गालयेत्॥
सीसकं विद्रुत ज्ञात्वा स्वल्पं स्वल्प मुहुर्मुहु । विशुद्धकुनटीचूर्णं तुल्य दत्वा विमर्दयेत॥
सीसभस्म भवेद्यावद् चूर्णं तावत्समापयेत् । स्वत शीतं ततो ज्ञात्वा सीसभस्म समाहरेत्
भस्मतुल्य बलिं दत्वा निम्बुनीरेण मर्दयेत् । घर्मे विशोष्य यत्नेन सम्पुटस्थं तत पुटेत्॥
इत्थ त्रिभि पुटैरेव सीसक मृतिमाप्नुयात् । इत्थ मृत सीसकन्तु वीतशङ्क प्रयोजयेत् ॥

हरतालचूर्णेन भस्मना वा सह वङ्गभस्म कुर्यात्, विधि —

वङ्ग विशुद्ध प्रद्राव्य मृदुपत्राणि कारयेत् । ततोऽर्कदुग्धपिष्टेन तालेन परिलेपयेत् ॥
घर्मे सशोष्य यत्नेन वङ्गपत्राणि वै पृथक् । चिञ्चात्वक्क्षारमध्यस्थानीह कृत्वा पुटेद्भिषक्
एव पुटत्रयेणैव वङ्गक याति पञ्चताम् । इत्थ मृत वङ्गकन्तु वीतशङ्क प्रयोजयेत् ।।इति

त्रिविध मुण्डतीक्ष्णकान्तादिक लौह हिङ्गुलेन, घृतकुमारीस्वरसेन च सह विमर्द्य मारयेत् । अथ मूले नारीपय इत्युक्त तच्चोपलक्षण तस्मात् घृतकुमारीस्वरसेन लोहसमं हिङ्गुल सम्पेष्य तेन लोह विलिप्य पुटेत्। अस्मिन् ग्रन्थ एव प्रतिपादित यथा—

क्षिपेद्वा द्वादशांशेन दरद तीक्ष्णचूर्णत । कन्यानीरेण सम्र्द्य यामयुग्मञ्च सम्पुटेत् ॥

एव सप्तपुटै मृत्यु लोहचूर्णमवाप्नुयादिति ॥

अथवा सुलभे नारीस्तन्ये तु तेन सह हिङ्गुल विमर्द्य लौह पुटेत् । यथोक्त रसरत्नसमुच्चयेऽपि—

"हिङ्गुलस्य पलान् पञ्च नारीस्तन्येन पेषयेत् ।तेन लौहस्य पत्राणि लेपयेत्। पलपञ्चकम् ॥
रुद्ध्वा गजपुटे पच्यात् कषायैस्त्रिफलै पुन ।जम्बीररसनालैर्वा विशुष्यर्धेन हिङ्गुलम् ॥
पिष्ट्वा रुद्ध्वा पचेल्लौह तद्द्रवे पाचयेत् पुन ।चत्वारिंशत्पुटैरेव कान्तितीक्ष्णञ्च मुण्डकम् ॥

म्रियते नात्र सन्देहो दत्वा दत्वैव हिङ्गुलम् ॥ इति स्वर्णादिशोधनमारणविधिः ॥३५७॥

[ इति किट्टशोधनमारणम् । ]

अथ मणिमुक्तादिशोधनम्—

**स्वेदयेद्दोलिकायन्त्रे जयन्त्या स्वरसेन च ।**
**मणिमुक्ताप्रवालानि यामैकेन च शोधयेत् ॥ ३५८ ॥**

अथ मणिमुक्ताप्रवालादीनां साधारणशोधनमाह—स्वेदयेदित्यादि—मणिशब्दं विविधरत्नवाचकं मणिविशेषवाचकश्च यथा तृणशब्दः तृणजातौ तृणविशेषरूपार्थे च तद्वदिति । यद्यप्यत्र मण्यादीनां परिगणनं भेदाः स्वरूपं गुणाश्च नोक्तास्तथापि ग्रन्थान्तरमनुसृत्य ग्रन्थव्याख्याप्रसंगेन तत्सर्वं प्रदर्श्यते, मणयः रत्नानि, रत्नशब्दस्य निरुक्तिः राजनिघण्टौ उक्ता यथा—

धनार्थिनो जनाः सर्वे रमन्तेऽस्मिन्नतीव यत् । ततो रत्नमिति प्रोक्तं शब्दशास्त्रविशारदैः ॥

अथ मणीनां नामानि यथा रसरत्नसमुच्चये—

वैक्रान्तः सूर्यकान्तश्च हीरकः मौक्तिकं मणिः । चन्द्रकान्तस्तथा चैव राजावर्तश्च सप्तमः ॥
गरुडोद्गारकश्चैव ज्ञातव्या मणयस्त्वमी । पुष्परागो गोमेदश्च पद्मरागः प्रवालकम् ॥
वैदूर्यश्च तथा नीलः एते च मणयो मताः । यत्नतः संगृहीतव्या रसबन्धस्य कारणात् ॥
अथ श्रेष्ठमणीनां नामानि—पद्मरागेन्द्रनीलाख्यौ तथा मरकतोत्तमः ।
पुष्परागः स वज्राख्यः पञ्चरत्नवराः स्मृताः ॥

अथ नवग्रहाणां प्रसादकरत्नानि—
"माणिक्यमुक्ताफलविद्रुमाणि तार्क्ष्यञ्च पुष्पं भिदुरञ्च नीलम् ।
गोमेदकञ्चाथ विदूरकञ्च क्रमेण रत्नानि नवग्रहाणाम् ॥
रसे रसायने दाने, धारणे देवतार्चने । सुलक्ष्माणि सुजातीनि रत्नान्युक्तानि सिद्धये ॥

अथ प्रत्येकस्य नामभेदगुणादिकम् । अथ वैक्रान्तः ।
अष्टास्रश्चाष्टफलकः षट्कोणो मसृणो गुरुः । शुद्धमिश्रितवर्णैश्च युक्तो वैक्रान्त उच्यते ॥
तस्य भेदाः—
श्वेतो रक्तश्च पीतश्च नीलः पारावतच्छविः । श्यामलः कृष्णवर्णश्च कर्बुरश्चाष्टधा हि सः ॥
गुणाः—
रसायनेषु सर्वेषु पूर्वगण्यः प्रतापवान् । वज्रस्थाने नियोक्तव्यो वैक्रान्तः सर्वदोषहा ॥

अथ वैक्रान्तस्योत्पत्ति —,

दैत्येन्द्रो माहिषः सिद्ध. सहदेव समुद्भव । दुर्गा भगवती देवी त शूलेन व्यमर्दयत् ॥
तस्य रक्तन्तु पतितं यत्र यत्र स्थितं भुवि । तत्र तत्र तु वैक्रान्तं वज्राकारं महारसम् ॥
विन्ध्यस्य दक्षिणे देशे ह्युत्तरे चास्ति सर्वत. । विकृन्तयति लोहानि तेन वैक्रान्तक· स्मृत ॥

अथ वैक्रान्तस्य शोधनम् ।

कुलत्थक्वाथसंस्विन्नो वैक्रान्त परिशुद्ध्यति । इति वैक्रान्त ।

अथसूर्यकान्त —सूर्यकान्तमणिस्तु स्वनाम्नैव-प्रसिद्धा, अस्या गुणा -राजनिघण्टौ यथा—
सूर्यकान्तो भवेदुष्णो निर्मलश्च रसायन. । वातश्लेष्महरो मेध्य पूजनात् रवितुष्टिद. ॥
अथ सूर्यकान्तपरीक्षणम्—यस्तु सूर्यांशुसंस्पृष्टो प्रसूते दहनप्रभाम् । स एव जात्य कथित·,
इति सूर्यकान्त ।

अथ हीरकं वज्रम् । अस्य शोधनमारणादिकं पूर्वमेवोक्तम् . इति । अथ मौक्तिकम् अथान्यनामानि—

मुक्ता मुक्ताफलञ्चैव मौक्तिक मौक्तिकेयकम् । शुक्तिज शौक्तिकेयञ्च शशिरत्न शशिप्रियम् ।

अथ ग्राह्यमौक्तिकलक्षणम् यथा—

' चन्द्रोज्ज्वलानि स्थूलमत्यन्तरम्यं स्निग्ध वृत निर्व्रण निर्मल यत् ।
धत्ते न्यस्तं यत्तुलाया गुरुत्व प्राज्ञैरुक्त मौक्तिकं तत्तु जात्यम् ॥

विमर्दित शालितुषै र्गोमूत्रपटुना भृशम् । यन्नैति विकृतिं किञ्चित्तन्मौक्तिकमकृत्रिमम् ॥

अथ हेयमौक्तिकस्वरूपं—

दीर्घ पार्श्वक्षत रूक्ष त्र्यस्र श्यामञ्च सव्रणम् । हतप्रभं क्षुद्रकाय मौक्तिकं हेयमीरितम् ॥

अथ शुभमौक्तिकस्वरूपम्—

ह्लादि श्वेत गुरु स्निग्ध रश्मिवन्निर्मल महत् । स्थान तोयप्रभ वृत्त मौक्तिक नवधा शुभम् ।

अथ मौक्तिकशोधनम्—मौक्तिकं जयन्तीस्वरसे दोलायन्त्रे यामैकं पचेत् । अथवा अगस्त्यपुष्पस्वरसे यामैकं दोलायंत्रे पचेत् । इत्थ मणिमुक्ताप्रवालानि विशुद्ध्यन्ति ।

अथ मुक्तागुणा.—मुक्ताफलं लघु हिमं मधुरञ्च कान्तिदृष्ट्यग्निपुष्टिकरण विषहारि भेदि । वीर्यप्रद, क्षयापह श्वासकासनाशनम्, इति मौक्तिकम् ।

अथ मणि —स्फटिकोपल अस्य गुणा राजनिघण्टौ—पित्तदाहरोगघ्न· रत्नसमवीर्यश्चेति । अथ चन्द्रकान्त , स्वनाम्नैवाय ख्यात·. अस्य लक्षणम्—

यन्निर्मल सुमसृण शिशिरञ्च पीत, स्निग्ध पर सुविशद परमं पवित्रम् ।

स्राव स्रवत्यथ परं तुहिनांशुसङ्गाचन्द्रोपलं खलु तदेव मतं तु जात्यम् ॥

अस्य गुणाः—,

चन्द्रकान्तस्तु शिशिरः स्निग्धः पित्तास्रतापहृत् ।
शिवप्रीतिकरः स्वच्छः ग्रहालक्ष्मीविनाशकृत् ॥ इति चन्द्रकान्तः ।

अथ राजावर्त, नामानि—

राजावर्तो नृपावर्त आवर्तमणिरित्यपि । नृपोपलश्च नीलाश्मा स एव परिकीर्तितः ॥

अथ अस्य शोधनम् यथा—

निम्बुद्रवे सगोमूत्रे सक्षारे स्वेदिता खलु ।
द्वित्रिवारेण शुद्धयन्ति राजावर्तादिधातवः ॥

अस्य गुणाः—

प्रमेहक्षयदुर्नामपाण्डुश्लेष्मानिलापहः । दीपनः पाचनो वृष्यो राजावर्तो रसायनः ॥इति

अथ—गरुडोद्गारकः-मरकतं "पन्ना" इति लोके—अस्य नामानि—गारुत्मतं, मरकतं, तार्क्ष्यं, बुधरत्नं, रौहिणेयं, हरिद्रत्नञ्चेति । ग्राह्यमरकतलक्षणम् यथा—

हरिद्वर्णं गुरु स्निग्धं स्फुरद्रश्मिचयं शुभम् । मसृणं भासुरं तार्क्ष्यं गात्रं सप्तगुणं मतम् ॥

अग्राह्यन्यलक्षणं यथा—

कपिलं कर्कशं नीलं पाण्डुकृष्णं मलान्वितम् । चिपिटं विकरं रूक्षं लघु तार्क्ष्यं न शस्यते ॥

शोधनं यथा—

सुरभेः पयसा यामं दोलायन्त्रे विधानतः । विपाचितं मरकतं विशुद्धयति सुनिश्चितम् ॥

अथ गुणाः—"ज्वरच्छर्दिविषश्वाससन्निपाताग्निमान्द्यनुत् । दुर्नामपाण्डुशोफघ्नं तार्क्ष्यमोजोविवर्द्धनम् ॥ इति तार्क्ष्यम् ।

अथ पुष्परागः—पुखराज इति प्रसिद्धः । अस्य नामानि—

पुष्परागो मञ्जुमणिः स्याद्वाचस्पतिवल्लभः । गुरुरत्नं पीतमणिः स एव प्रोच्यते बुधैः ॥

ग्राह्याग्राह्यलक्षणं यथा—

पुष्परागो गुरुः स्वच्छः स्निग्धः स्थूलः समो मृदुः । कर्णिकारप्रसूनाभो मसृणश्च शुभोऽष्टधा ॥
निष्प्रभं कर्कशं रूक्षं पीतश्यामं नतोन्नतम् । कपिशं कपिलं पाण्डुं पुष्परागं परित्यजेत् ॥

अथास्य शोधनगुणाः—

"कुलत्थक्वथितोपेते काञ्जिके स्वेदितं समम् । दोलायन्त्रे पुष्परागं यामैकेन विशुद्धयति ॥

अथास्य गुणा —

"पुष्परागो विषच्छर्दिकफवाताग्निमान्द्यनुत् । दाहकुष्ठास्रशमनो दीपन पाचनो लघु ॥

इतिपुष्पराग ।

अथ गोमेद , अस्य निरुक्तिर्यथा—

गोमेदसमरागत्वाद् गोमेद रत्नमुच्यते । गोमेद राहुरत्नञ्च पिङ्गस्फटिकमित्यपि ॥

ग्राह्याग्राह्यलक्षण यथा—

सुस्वच्छगोजलच्छाय स्वच्छ स्निग्ध सम गुरु। निर्दल मसृण दीप्त गोमेद शुभमष्टधा॥
विच्छाय लघु रूक्षाङ्ग चिपिट पटलान्वितम्। निष्प्रभ पीतकाचाभ गोमेद न शुभावहम्॥

अथास्य शोधन यथा–निम्वूकस्वरसेन दोलायन्त्रेण यामैकं स्वेदयेत् ।

अथगुणा –गोमेद कफपित्तघ्न क्षयपाण्डुक्षयङ्करम् । दीपन पाचनरूच्य त्वच्य बुद्धि-प्रबोधनम् ॥ इति गोमेद । अथ पद्मराग अस्य नामानि यथा–

माणिक्य रङ्गमाणिक्य पद्मरागसमाह्वम् । रविरत्न शोणरत्न कुरुविदञ्च लोहितम् ॥
माणिक्य पद्मराग स्यात् शोणरत्नञ्च लोहितम् ।

अस्य द्वौ भेदौ यथा—

माणिक्य पद्मरागाख्य द्वितीय नीलगन्धि च ॥

अथ प्रशस्ताप्रशस्तलक्षणं यथा—

कुशेशयदलच्छाय स्वच्छ स्निग्ध महत् स्फुटम्। वृत्तायत सम गात्र माणिक्य श्रेष्ठमुच्यते॥
नील गङ्गाम्बुसम्भूत नीलगर्भारुणच्छवि। पूर्वमाणिक्यवच्छ्रेष्ट माणिक्य नीलगन्धि तत्॥
रन्ध्रकार्कश्यमालिन्यरौक्ष्यावैशद्यसयुतम् । चिपट लघु वक्रञ्च माणिक्य दुष्टमष्टधा ॥

अथ शोधनम् —

निम्वूकस्वरसे यामैक दोलायन्त्रविधिना पचेत् तेन विशुद्धयति ।

गुणा —

माणिक्य दीपन वृष्य कफवातक्षयार्तिनुत् । भूतवेतालपापघ्न कर्मजव्याधिनाशनम्॥

इतिपद्मराग ।

अथ प्रवालकम , अस्य नामादिकं यथा—

प्रवालकं प्रवालश्च भौमरत्नञ्च विद्रुमम् । अव्धिजन्तुविशेषोत्थ तदेव परिकीर्तितम् ॥

ग्राह्यप्रवालस्य लक्षणम्—

पक्वविम्वफलच्छाय वृत्तायतमवक्रकम् । स्निग्धमव्रणकं स्थूल प्रवालं सप्तधा शुभम

अथ निकृष्टप्रवालस्य लक्षणम्—

पाण्डुरं धूसरं रूक्षं सव्रणं कोटरान्वितम्। निर्भारं शुभ्रवर्णञ्च प्रवालं नेष्यते शुभम्॥

अथ प्रवालस्य शोधनम्—

जयन्तीस्वरसेन सह दोलायन्त्रविधिना यामैकं सुपरिस्विन्नं प्रवालकं विशुद्ध्यति॥ अथवा सर्जिकाक्षारसंयुक्ते जले दोलायन्त्रविधिना यामैकं स्वेदयेत्। अथवा मकण्टकतण्डुलीयकस्वरसेन यामैकं संस्वेद्य प्रवालं शोधयेत्। इत्थं सर्वाणि मणिमुक्तादीनि शोधयेत्।

अथ वैदूर्यम्। अथास्य नामानि—

विदूररत्नं वैदूर्य्यं केतुरत्नं विदूरजम्। विडालाख्यं विडालाक्षञ्च कीर्तितम्॥

अथ शुभाशुभवैदूर्यलक्षणं यथा—

वैदूर्यं श्यामशुभ्राभं समं स्वच्छं गुरु स्फुटम्।
अभ्रशुभ्रोत्तरीयेण गर्भितं शुभमीरितम्॥
श्यामं तायसमच्छायं चिपिटं लघु रूक्षगम्। रत्नगर्भोत्तरीयञ्च वैदूर्यं नैव शस्यते॥

अथ वैदूर्यशोधनं यथा—

वैदूर्यं त्रिफलाक्वाथे दोलायन्त्रविधिना यामैकं परिस्विन्नं विशुद्ध्यति।
इति वैदूर्यम्।

अथ नीलम्, अस्य नामानि—

नीलो नीलोपलो नीलं नीलरत्नं सुनीलकम्। महानीलञ्च नीलाश्म शनिरत्नञ्च कीर्तितम्॥

अथास्य भेदा—

जलनीलमिन्द्रनीलञ्च द्विविधं नीलमुच्यते। औषधार्थं तयोर्मध्ये इन्द्रनीलं वरं स्मृतम्॥

अथैतयोः स्वरूपम्—

श्वैत्यगर्भितनीलाभं लघु तज्जलनीलकम्। कार्ष्ण्यगर्भितनीलाभं सभारं शक्रनीलकम्।

श्रेष्ठनीललक्षणं यथा—

एकच्छायं गुरु स्निग्धं स्वच्छं पिण्डितविग्रहम्। मृदु मध्ये लसज्ज्योतिः सप्तधा नीलमुत्तमम्॥
कोमलं त्रिहितं रूक्षं निर्भारं रक्तगन्धि च। चिपिटाभं सुसूक्ष्मञ्च जलनीलञ्च सप्तधा॥

अथ नीलशोधनम्—

नीलस्वरससंयुक्तं दोलायन्त्रे विधानतः। यामैकं परिपक्वन्तु नीलं शुद्ध्यति निश्चितम्॥

अथ सर्वेषां रत्नानां शोधनं यथा रसरत्नाकरे यथा--
शुद्धत्यम्लेन माणिक्यं जयन्त्या मौक्तिकं शुचि। विद्रुमं क्षारवर्गेण तार्क्ष्यं गोदुग्धतः शुचि ॥
पुष्परागश्च कौलत्थक्वाथेनैव विशुद्ध्यति। रोचनाभिश्च गोमेदं वैदूर्यं त्रिफलाजलैः ॥
नीलं नीलीरसैर्वज्रं चिना शुद्ध्यति दोलया ॥ ३५८ ॥

मणिमुक्तादिमारणम्—

**मुक्ताफलानि शुद्धानि खल्वे पिष्ट्वा पुटेल्लघु।**
**एवं भस्मत्वमाप्नोति वज्रकं काञ्जियोगतः ॥ ३५९ ॥**

अथ मणिमुक्तादीनां मारणमाह मुक्तेत्यादि–तत्र प्रथमं वैक्रान्तमारणं यथा–
म्रियतेऽष्टपुटैर्गन्धनिम्बूरसद्रवान्वितः ॥ इति वैक्रान्तमारणम्।
अथ मौक्तिकभस्मविधिः —. शुद्धानि मुक्तानि खल्वे गोदुग्धेन पिष्ट्वा सम्पुटयोगेन लघुपुटे पुटेत्, एवं त्रिपुटैः शशिप्रभं मौक्तिकभस्म भवति। अथवा तरुणीपरिस्रुतजलेन ( गुलाब के अर्क में ) पिष्ट्वा त्रिधा पुटेत्।

इति मौक्तिकभस्मविधिः।

चन्द्रकान्तस्य मारणादिकमस्य मौक्तिकतुल्यं कार्यम्। अथवा—
रसनटाहिङ्गुलेपेन कन्यानीरेण मर्दितः। चन्द्रकान्तः सुपुटितो म्रियते नात्र संशयः ॥

अथ राजावर्तस्य मारणम्—

रसाम्लगन्धकोपेतो राजावर्तो विचूर्णितः। पुटनात्सप्तवारेण राजावर्तो मृतो भवेत् ॥

अथ मरकतस्य मारणं यथा–शुद्धं मरकतं खल्वे निम्बूरसयोगेन समभागिकैः शुद्धमनःशिलाहरतालगन्धकैस्सह सम्यक् विमर्द्य सम्पुटस्थं लघुपुटे पुटेत्। इत्थमष्टपुटैर्म्रियते। पुष्परागस्य मारणन्तु मरकतसदृशं कार्यम् ॥

गोमेदस्य मारणन्तु मरकततुल्यमेव।

अथ पद्मरागस्य (माणिक्यस्य) मारणं यथा—

शुद्धं माणिक्यं खल्वे मनःशिलागन्धकहरतालैः समैस्सह निम्बुरसयोगेन दृढं विमर्द्य चक्रिकाश्च कृत्वा संशोष्य सम्पुटस्थं गजपुटे पुटेत्। एवं रीत्यानया वसुवारं पुटनात्पाण्डुरप्रभं भस्म जायते।

अथ प्रवालमारणम्—विशोधितं प्रवालं खल्वे सूक्ष्मं विचूर्ण्य घृतकुमारीस्वरसेन ( तदन्तर्मज्जयेत्यर्थः ) दृढं विमर्द्य चक्रिकाश्च कृत्वा संशोष्य सम्पुटस्थं कृत्वा गजपुटे पचेत्। एवं त्रिभिः पुटैरेव शुभ्रवर्णं प्रवालस्य भस्म जायते। अथवा शुद्धं प्रवालं

गोदुग्धेन सह खल्वे दृढं विमर्द्य चक्रिकाश्च कृत्वा संशोषयेत्। तदनु घृतकुमारीमज्जा-न्तर्गतं कृत्वा सम्पुटस्थं गजपुटे पचेत्।

अथ प्रवालस्य गुणाः—

क्षयपित्तास्रकासघ्नं दीपनं पाचनं लघु। विषभूतादिशमनं विद्रुमं नेत्ररोगनुत्॥

अथ प्रवालभस्मनः केचिदामयिकप्रयोगाः—रक्तिद्वयं प्रवालभस्म तण्डुलोदकेन सह सेवितं मूत्रकृच्छ्रं निवारयति। रक्तिद्वयं प्रवालभस्म, रक्तिद्वयं अभ्रकभस्म, रक्तिद्वयञ्च वंशलोचनं मधुना सह प्रत्यहं सेवनेन क्षयोत्थं कासं निवारयति। इति प्रवालः।

अथ वैदूर्यस्य मारणं यथा—

माणिक्यमारणविधिना वसुगजकपुटैर्वैदूर्यं म्रियते।

अथ मृतवैदूर्यस्य गुणाः—

वैदूर्यं रक्तपित्तघ्नं प्रज्ञायुर्बलवर्द्धनम्।
पित्तप्रधानरोगघ्नं दीपनं मलमोचनम्॥ इति वैदूर्यमारणम्।

नीलस्य मारणन्तु माणिक्यमारणविधिना कुर्यात्। अथास्य गुणाः—
श्वासकासहरं वृष्यं त्रिदोषघ्नं सुदीपनम्। विषमज्वरदुर्नामपापघ्नं नीलमीरितम्॥
इति मणिमुक्तादिमारणम्॥ ३५९॥

मतान्तरम्—

**कुमार्य्या तण्डुलीयेन तुल्येन च निषेचयेत्।**
**प्रत्येकं सप्तवारांश्च तप्ततप्तानि कृत्स्नशः॥ ३६०॥**
**मौक्तिकानि प्रवालानि तथा रत्नान्यशेषतः।**
**क्षणाद्विविधवर्णानि म्रियन्ते नात्र संशयः॥ ३६१॥**

अथ मतान्तरेण मौक्तिकप्रवालादीनां मारणमाह कुमार्य्येत्यादि—तत्रोदाहरणस्वरूपेण प्रवालमारणं यथा—विशुद्धं प्रवालं वन्हौ सन्तप्तं कृत्वा तुल्ये कुमारीस्वरसे निर्वापयेत्। इत्थं सप्तवारं निर्वाप्य तदनु पुनः सन्तप्तं कृत्वा तण्डुलीयकद्रवेऽपि सप्तवारं निर्वापयेत्। अनेनैव विधानेन मौक्तिकानि सम्पूर्णरत्नानि च म्रियन्ते॥ ३६०–३६१॥

प्रवालमारणम्—

स्त्रीदुग्धेन प्रवालञ्च भावयित्वा तु हण्डिके ।
मध्येऽपि तक्रसहितं स्थापयेत् तां निरोधयेत् ।
चुल्ल्यामग्निप्रतापेन म्रियते प्रहरद्वये ॥ ३६२ ॥

अथ मतान्तरेण प्रवालस्य मारण स्त्रीदुग्धेनेति—स्त्रीदुग्धेन ( गोदुग्धेनेत्यर्थ ) प्रवाल खल्वे भावयित्वा चूर्णयेत् । पुनश्च एकस्मिन्मृत्तिकापात्रे (हण्डिकायाम्) तक्र प्रपूर्य गोदुग्धभावित प्रवाल निक्षिप्य पात्रमुख शरावेण निरुध्य मृत्तिकया सलिप्य सशुष्कञ्च कृत्वा चुल्यामारोप्य प्रहरद्वय वह्निं प्रदापयेत् । स्वाङ्गशीतलपात्रमवतार्य शशिसुन्दर प्रवालभस्म समाहरेत् ॥ ३६२ ॥

सर्वरत्नाना शोधनम्—

कुलत्थस्य पलशत वारिद्रोणेन पाचयेत् ।
तस्मिन् पादावशेषे च क्वाथेऽष्टौ मणयः शिलाः ॥ ३६३ ॥
आतपे त्रिदिनं शोध्याः क्वाथसिक्ता. पुनः पुनः ।
शुध्यन्ते सर्वरत्नानि मणयश्च न संशय ॥ ३६४ ॥

[ इति मुक्तादिशोधनमारणम् । ]

[ इति धात्वादिशोधनमारणविधि । ]

अथ सर्वेषा रत्नाना सामान्यशोधनार्थं कुलत्थक्वाथनिर्माणमाह कुलत्थस्येति–शतपल कुलत्थं ( ४०० तोला, ऽ५ सेर, कुलत्थ) समादाय एकद्रोणजले क्वाथ कुर्यात् । चतुर्थांशमवशिष्ट ज्ञात्वाऽवतारयेत् । अथ अनेन क्वाथेन अष्टौ मणय , मन शिला, सवरत्नानि च शुद्धयन्ति ।

अथ शोधनविधि — एकस्मिन्पात्रे मण्यादिक संस्थाप्य कुलत्थक्वाथेनापूर्य त्रिदिन तीव्रातपे सस्थापयेत् । प्रतिदिवसं क्वाथेन सेचनं कर्तव्यम् । अनेनैन विधिना मण्यादीनि सर्वरत्नानि शुद्धयन्ते ॥ ३६३–३६४ ॥

अथ विषशुद्धि —

कृत्वा चणकसंस्थानं गोमूत्रैर्भावयेत् त्र्यहम् ।
समटङ्कणसंपिष्टं मृतमित्युच्यते विषम् ॥ ३६५ ॥

अथ विषोपविषशोधनादिकमाह कृत्वेत्यादिना–यद्यप्यत्र विषोत्पत्तिव्याख्या-भेदादिक ग्रन्थगौरवभिया नोक्त, तथापि ग्रन्थ व्याख्याप्रसङ्गेन विस्तरतस्तन्त्रान्त-रमनुसृत्य तत्सर्वं विशद व्याक्रियते । तत्र प्रथमं विषपदस्य निरुक्ति —

दृष्ट्वैतद् यद्विषादन्ति जनास्तस्माद्विषं मतम्।नर वा विषिणोत्येतन्मृत्युपाशैस्ततो विषम्।इति

अथ विषोत्पत्ति —

मथ्यमाने जलनिधावमृतार्थं सुरासुरै । जात प्रागमृतोत्पत्ते पुरुषो घोरदर्शनः ॥
दीप्ततेजाश्चतुर्दंष्ट्रो हरित्केशोऽनलेक्षण । जगद्विषण्ण त दृष्ट्वा तेनासौ विषसंज्ञित ॥
हुङ्कृतो ब्रह्मणा मूर्तो तत स्थावरजङ्गमे।सोऽध्यतिष्ठन्निज रूपमुज्झित्वा वञ्चनात्मकम् ।

इति वाग्भट ।

अथान्यमतेन विषोत्पत्ति यथा—

शृणु देवि प्रवक्ष्यामि यत्रोत्पन्न महाविषम् । भेदास्तस्य वरारोहे यत्र तत्र सविस्तरम् ॥
देवदैत्योरगा सिद्धा गन्धर्वा यक्षराक्षसा । पिशाचा किन्नराश्चैव मिलित्वा च वरानने॥
एकतो बलिराजश्च ब्रह्माद्याश्च तथैकत । मन्थान मन्दर कृत्वा नागराजेन वेष्टितम् ॥
क्षाराब्धिमन्थन तत्र प्रारब्ध सुरसुन्दरि । निर्गतास्तत्र रत्नौघा कामधेन्वादय प्रिये ॥
अतीवमन्थनाद्देवि मन्दराघातवेगत । अहिराजश्रमाद्देवि विषज्वाला विनिर्गता ॥
ततोऽतिघोरा सा ज्वाला निमग्ना क्षीरसागरे। तया तत्रैव चोत्पन्नं कालकूट महाविषम् ।
प्रलयानलसङ्काश क्रुद्ध काल इवोत्कट । त दृष्ट्वा विबुधा सर्वे दानवाश्च महाबला ॥
विषण्णवदना सद्य प्राप्ताश्चैव मदन्तिकम्। ततस्तै प्रार्थ्यमानोऽहमपिबं विषमुत्तमम् ॥
ततोऽवशिष्टमभवन्मूलरूपेण तद्विषम् । पत्ररूपेण कुत्रापि मृत्तिकारूपत क्वचिद् ॥
कुत्रचित्तोयरूपेण धातुरूपेण कुत्रचित् । कन्दरूपेण कुत्रापि त्रयोदशविध विषम् ॥

इति विषोत्पत्ति ।

अथ विषनामानि तद्भेदाश्च—

विष क्ष्वेडश्च गरलं कालकूटश्च तन्मतम् । स्थावर जङ्गमश्चैव द्विविध विषमुच्यते ॥
दशाधिष्ठानमाद्यन्तु द्वितीयं षोडशाश्रयम् ॥ इति सुश्रुत ।

वाग्भटेन तु "कृत्रिमम् , अकृत्रिमश्चेति द्विविधं विषं प्रतिपादितं, यथा—

स्थावर जङ्गमं चेति विष प्रोक्तमकृत्रिमम्। कृत्रिम गरसंज्ञन्तु क्रियते विविधौषधै ॥ इति ।

अथ स्थावरविषस्य कानि दशाधिष्ठानानीत्याह सुश्रुत —

मूलं पत्र फलं पुष्प त्वक् क्षीर सार एव च। निर्यासो धातवश्चैव कन्दश्च दशम स्मृत ॥

तत्र क्लीतक–अश्वमार–गुञ्जा–सुगन्ध–गर्गरक–करघाट–विद्युच्छिखा–विजयानीत्यष्टौ मूलविषाणि । विषपत्रिकालम्बाखरदारुकरम्भमहाकरम्भाणि पञ्च पत्रविषाणि । कुमुद्वतीवेणुकाकरम्भमहाकरम्भकर्कोटकरेणुकखद्योतकचर्मरीभगन्धासर्पघातिनन्दनसारपाकानीति द्वादश फलविषाणि । वेत्रकादम्बवल्लीजकरम्भमहाकरम्भाणि पञ्च पुष्पविषाणि । अन्त्रपाचककर्तरीयसौरीयककरघाटकरम्भनन्दननाराचकानि सप्त त्वक्सारनिर्यासविषाणि । कुमुदघ्नोस्नुहीजालक्षीरीणि त्रीणि क्षीरविषाणि । फेनाश्म ( भस्म ) हरितालश्च द्वे धातुविषे । कालकूटवत्सनाभसर्षपपालककर्दमकवैराटकमुस्तकश्रृङ्गीविषप्रपुण्डरीकमूलकहालाहलमहाविषकर्कटकानीति त्रयोदश कन्दविषाणि ।

अथ केषाञ्चिन्मते कन्दजविषस्याष्टादशभेदा यथा—दार्विक वत्सनाभश्च सैकत शक्तुक मुस्तक सार्षप कौर्म श्रृङ्गी कालकूट दर्दुर हालाहल यमदंष्ट्रा मेषश्रृङ्गी हारिद्र कर्कट रक्तश्रृङ्गी ग्रन्थिक केशरश्च कन्दजविषम् ।

अथ केषाञ्चित्कन्दविषाणां तन्त्रान्तरोक्तानि लक्षणानि यथा कालकूट —

दैत्यासुररणे देवैर्हतस्य पृथुमालिन । दैत्यस्य रुधिराज्जातस्तरुरश्वत्थसन्निभ ॥
निर्यास कालकूटोऽस्य मुनिभि परिकीर्तित । सोऽहिक्षेत्रे श्रृङ्गवेरे कोङ्कणे मलये भवेत् ॥

इति कालकूट ।

अथ वत्सनाभ —

सिन्दुवारसदृक्पत्रो वत्सनाभ्याकृतिस्तथा । यत्पार्श्वे न तरोर्वृद्धिर्वत्सनाभ स भाषित
नीलपुष्प कन्दविषो क्षुपो हस्तद्वयोच्छ्रित । गढपाले च काश्मीरे नेपालादौ प्रजायते ।
कृष्णाभ कपिश पाण्डुर्वर्णतस्त्रिविधो मत । वत्सनाभो विशेषेण क्रमेण गुणवत्तम ॥

इति वत्सनाभ ।

अथ श्रृङ्गिक —

यस्मिन्गोश्रृङ्गके बद्धे दुग्ध भवति लोहितम् । स श्रृङ्गिक इति प्रोक्तो द्रव्यतत्वविशारदै ॥

इति श्रृङ्गिक ।

अथ हालाहल —

गोस्तनाभफलो गुच्छस्तालपत्रच्छदस्तथा । तेजसा यस्य दह्यन्ते समीपस्था द्रुमादय ॥
असौ हालाहलो ज्ञेय किष्किन्धाया हिमालये । दक्षिणाब्धितटे देशे कोकणेऽपि च जायते ॥

इति हालाहल ।

अथ प्रदीपनः—

प्रदीपलोहितो यः स्याद्दीप्तिमान् दहनप्रभः। महादाहकरः पूर्वं कथितः स प्रदीपनः॥

इति प्रदीपनः।

अथ सौराष्ट्रकः—सुराष्ट्रविषये ( देशे ) यः स्यात् स सौराष्ट्रिक उच्यते।

अथ हारिद्रः—

हरिद्रातुल्यमूलो यो हारिद्रः स उदाहृतः॥

अथ सक्तुकः—

यद्ग्रन्थिः शक्तुकेनेव पूर्णमध्यः स सक्तुकः।

अथ प्रकारान्तरेण कन्दविषाणां नामानि लक्षणानि च यथा—

तेषु श्रेष्ठं कन्दविषं त्रयोदशविधं स्मृतम्। कर्कटं कालकूटञ्च वत्सनाभं हलाहलम्॥
वालुकं कर्दमञ्चैव सक्तुकं मूलकं तथा। सर्षपं शृङ्गिकं देवि मुस्तकञ्च महाविषम्॥
हारिद्रकमिति प्रोक्तं त्रयोदशविधं विषम्॥

कर्कटं कपिवर्णं स्यात् कालचञ्चुनिभं पुनः। कालकूटं ततो ज्ञेयं वत्सनाभन्तु पाण्डुरम्॥
भङ्गुराकन्दवत् देवि ( भङ्गुरा अतिविषा ) नीलवर्णं हलाहलम्।
वालुकं वालुकाभञ्च कर्दमं कर्दमोपमम्॥

साक्तुकं श्वेतवर्णं स्याच्छुक्लकन्दन्तु मूलकम्। सर्षपं पीतवर्णं स्याच्छृङ्गिकं कृष्णपिङ्गलम्॥
मुस्ताभं मुस्तकं प्रोक्तं रक्तवर्णं महाविषम्। हारिद्रकं पीतवर्णं विषभेदाः प्रकीर्तिताः॥

इति स्थावरविषप्रकरणम्।

अथ जङ्गमविषप्रकरणम्—

सर्पादिजन्तुप्रभवं विषं जङ्गमसञ्ज्ञकम्।

जङ्गमविषस्य षोडश अधिष्ठानानि तान्येवाह—

दृष्टिनिश्वासदंष्ट्राश्चनखमूत्रमलानि च। शुक्रं लालामुखस्पर्शः सन्दंशश्चावमर्दितम्॥
गुदास्थिपित्तशूकानि दशषट् जङ्गमाश्रयाः॥

तत्र दृष्टिनिश्वासविषा दिव्याः सर्पाः, भौमास्तु दंष्ट्राविषाः, मार्जारश्ववानरमकरमण्डूकपाकमत्स्यगोधाशम्बूकप्रचलाकगृहगोधिकाचतुष्पादकीटास्तथाऽन्ये दंष्ट्रानखविषाः, ( अन्ये व्याघ्राद्यो दंष्ट्रानखविषा ज्ञेयाः ), चिपिटपिच्चिटककषायवासिकसर्षपकतोटकवर्चःकीटकौण्डिन्यकाः शकृन्मूत्रविषाः, ( अन्येऽपि गृहगोधिकादयो मूत्रपुरीषविषा ज्ञेयाः ), मूषिकाः शुक्रविषाः, लूता लालानखशुक्रमूत्रपुरीषार्तवमुख

सन्दंशविषा , वृश्चिकविश्वम्भरवरटीराजीवमत्स्योच्चिटिङ्गा समुद्रवृश्चिकाश्चाल ( र )-विषा , चित्रशिर सरावकुर्दिशतदारुकारिमेदकसारिकामुखामुखसन्दशविशर्धितमूत्र-पुरीषविषा , माक्षिकाकणभजलायुका मुखसन्दशविषा , विषहतास्थि सर्पकण्टकवर-टीमत्स्यास्थि चेत्यस्थिविषाणि, शकुलिमत्स्यरक्तराजिवरको ( टी ) मत्स्याश्च पित्त-विषा , सूक्ष्मतुण्डोच्चिटिङ्गवरटीशतपदीशुकवलभिकाश्यङ्गिभ्रमरा शुकतुण्डविषा , कीटसर्पदेहा गतासव शवविषा , शेषास्त्वनुक्ता मुखसन्दशविशेष्वेवगणयितव्या । इति जङ्गमविषप्रकरणम् ।

अथ स्थावरविषाणा मध्ये अष्टविधकन्दविषस्य सशोधनमाह यथा—कन्दवि-षागा चणकसदृश खण्ड कृत्वा मृण्मयहण्डिकाया गोमूत्र प्रपूर्य त्रिदिवसपर्यन्त ती-व्रातपे स्थापनीयम् । प्रत्यहञ्च नवान गोमूत्र प्रदेय तदनु यत्नतस्त्वचमपनयेत् । पश्चात् समानटङ्गणेन सह पिष्ट्वा योगेषु योजयेत् ॥ ३६५ ॥

मतान्तरम्—

**अथवा त्रैफले क्वाथे विष शुद्ध्यति पाचितम् ।**<br>
**दोलायां त्रिफलाक्वाथे छागीक्षीरे च पाचितम् ॥ ३६६ ॥**<br>
**गोमूत्रपूर्णपात्रे च दोलायन्त्रे विषं पचत् ।**<br>
**दशतोलकमानेन चादौ वैद्यो दिवानिशम् ॥ ३६७ ॥**

अथवा त्रिफलाक्वाथे पोट्टलीगत कन्दविष कृत्वा दोलायन्त्रविधिना यामैकं यामद्व-यपर्यन्त वा स्वेदयेत् । अथवा केवल छागीक्षीरेण यामैक सस्वेदित कन्दविष विशु-द्ध्यति । अथवा सर्वप्रथम दशतोलकप्रमाण कन्दविषं गोमूत्रपूरितभाण्डे दिवानिश पाचित विशुद्ध्यति ॥ ३६६–३६७ ॥

मतान्तरम—

**विषभागांश्चणकवत् स्थूलान् कृत्वा तु भाजने ।**<br>
**तत्र गोमूत्रकं दत्त्वा प्रत्यहं नित्यनूतनम् ॥ ३६८ ॥**<br>
**शोषयेत् त्रिदिनादूर्ध्वं धृत्वा तीव्रातपे ततः ।**<br>
**प्रयोगेषु प्रयुञ्जीत भागमानेन तद्विषम् ॥ ३६९ ॥** [ इति विषशुद्धि । ]

मतान्तरेण विषशोधनमाह—विषभागानिति—कन्दविषस्य छुरिकया चणक-सदृश खण्ड २ कृत्वा मृण्मयभाण्डे निक्षिप्य गोमूत्रेण च प्रपूर्य तीव्रातपे त्रिदि-

वर्स स्थापयित्वा गोमूत्र शोपयेत, प्रत्यहम्यावशिष्ट गोमूत्र वहि प्रक्षिप्य नूतनगोमूत्रेण पात्र पूरणीयम्, तदनु त्रिदिनादूर्ध्वं तीव्रातपे सशोष्य शुद्ध विप सर्वत्र यथोद्दिष्टप्रमाणेन प्रयोजयेत् ॥ ३६८-३६९ ॥

अथोपविषमाह—

**अर्कसेहुण्डधुस्तूर-लाङ्गलीकरवीरका ।**
**गुञ्जाऽहिफेनावित्येता सप्तोपविषजातयः ॥ ३७० ॥**

अथोपविषमाह अर्केत्यादि—अर्क –मदार (आक), सेहुण्ड –वज्री (थूहर), धुस्तूर –कनक ( धतूरा ), लाङ्गला–कलिहारी, करवीरक–अश्वमारक ( श्वेतरक्तपुष्पकनेर), गुञ्जा–रक्तिका, अहिफेनम्–आफूकम् ( अफीम ), एते सप्तपदार्था उपविषान्तर्गतास्तथा स्थावरविषाङ्गा एवेति ॥ ३७० ॥

तच्छुद्धि —

**धुस्तूरस्य च यद्बीजमन्यच्चोपविषञ्च तत् ।**
**तच्छोध्य दोलिकायन्त्रे क्षीरपूर्णेऽथ पात्रके ॥ ३७१ ॥** [ इत्युपविषशुद्धि । ]

अथोपविषाणां शुद्धिमाह—धुस्तूरस्येत्यादि । धुस्तूरस्य बीजानि तथा अन्यदप्युपविष दुग्धपरितपात्रे दोलायन्त्रविधिना यामैक सस्वेद्य शोधयेत् ॥ ३७१ ॥

अथ जैपालशुद्धि —

**निस्तुष जयपालञ्च द्विधा कृत्वा विचक्षण ।**
**एतद्बीजस्य मध्यन्तु पत्रवत् परिवर्जयेत् ॥ ३७२ ॥**
**अष्टमांशेन चूर्णेन टङ्कणस्य च मेलयेत् ।**
**केशयन्त्रे च तद्वाव्य पाच्यं दुग्धेन सप्लुतम् ।**
**त्रिरात्र शुद्धिमायाति जैपालममृतोपमम् ॥ ३७३ ॥**

अथ फलविषाणां मध्ये जैपालस्य शोधनमाह—निस्तुषमित्यादि—अथ जैपालस्य परिचय —

नात्युच्छ्रितो नातिह्रस्वो दन्तीजातीयकस्तरुः । अधुना तु विशेषेण देशे पश्चनदाह्वये ॥
तथैव सिंहलद्वीपे द्वीपेष्वन्येषु जायते । बीज तस्य भिषग्वर्यैर्जयपाल इति स्मृत ॥
दन्तीबीजात् क्षुद्रतर बीजमस्य तु यद्यपि । पर तीव्रतरा शक्तिर्दृश्यते मलभेदने ॥

केषाञ्चिन्मतेन तु दन्तीबीजमेव जयपाल यथा भावप्रकाशे—"जयपालो दन्तिबीजं विख्यातमिति" ।

अथास्य शोधनम्, पूर्वं जयपाल निस्तुष कृत्वा छुरिकया द्विधा कुर्यात्, ततो हरिद्वर्णा नातिदीर्घा पत्ररचनायुक्ता जिह्वा परित्यज्य बीजापेक्षया वस्वंग शुद्ध टङ्कण सम्मेल्य पोट्टलिस्थ कृत्वा एकस्मिन् मृत्तिकापात्रे गादुग्ध प्रपूर्य दोलायत्रमिव केशयन्त्रेण यामैकं यामद्वय वा स्वेदयेत्। एव त्रिवार स्वेदयित्वा पश्चात् खल्वे सम्पेष्य नूतनखर्पराभ्यन्तरप्रदेशे लेपयेत्। आतपे च सशुष्क कृत्वा विशुद्ध जयपालचूर्णं गृह्णीयात्। केशयन्त्रन्तु केवल कचाना छिक्कामेका कृत्वा तदुपरि जयपालपोट्टला स्थापयेत् । केशयत्रनिर्माण यथेच्छ तेन विनापि दोलायन्त्रविधिना शोधन कुर्यात् ॥ ३७२–३७३ ॥

अथ स्नुहीक्षीरशुद्धि —

**चिञ्चापत्ररसे कर्षे वस्त्रपूते पलद्वयम् ।**
**स्नुहीक्षीर रौद्रयन्त्रे भावयेद् यत्नतः सुधीः ।**
**द्रवे शुष्के समुद्धार्य्य सर्वरोगेषु योजयेत् ॥ ३७४ ॥**

अथ क्षीरविषाणा मध्ये स्नुहीक्षीरशोधनमाह चिञ्चापत्रेत्यादि–द्विपल स्नुहीक्षीर वस्त्रगालिते कर्षपरिमिते चिञ्चापत्ररसे निक्षिप्य तीव्रातपे स्थापयेत, ततो द्रवं शुष्क ज्ञात्वा शुद्ध स्नुहीक्षीर समादाय सर्वत्र प्रयोजयेत् ॥ ३७४ ॥

अथ जलौकाशोधनम्—

**चिरन्तनीं जलौकान्तु ताम्रपात्रेषु रक्षयेत् ।**
**चतुर्माष निशाचूर्णं जलाष्टकपले क्षिपेत् ॥ ३७५ ॥**
**तस्मिन् क्षिपेत् जलौकां तां स्वयं लालां परित्यजेत् ।**
**त्यक्तलाला जलौका च सा योज्या रक्तमोक्षणे ॥ ३७६ ॥**
**रोमपृष्ठा च कपिला रक्तरेखा च दुर्बला ।**
**वर्जनीया विशेषेण भिषजा कीर्त्तिमिच्छता ॥ ३७७ ॥**

अथ जलौकाशोधनमाह चिरन्तनमित्यादि–बहुकालादेव सजलकाचपात्रस्थापिता जलौकामादाय चतुर्माषहरिद्राचूर्णयुक्ताष्टपलजलपूरिते ताम्रपात्रे निक्षिपेत् यदा जलौका ताम्रपात्रीयजले स्वमुखलालोत्सर्गं कुर्यात्तदा ता विशुद्धा ज्ञात्वा अशुद्धरक्तमोक्षणस्थाने स्थापयेत् ।

धात्रीफलरसेनैव महाकालस्य शोधनम् ।
करञ्जयुग्मयोर्बीजं भृङ्गराजेन शोधयेत् ॥ ३८४ ॥
गुञ्जादिसर्वबीजानां नरमूत्रै. पटु विना ।
नारिकेलाम्बुना शोध्यं बीजं भल्लातकोद्भवम् ॥ ३८५ ॥
गुडूचीत्रिफलाक्काथे क्षीरे चैव विशेषत ।
पक्त्वा च खण्डशः शुद्धं गृह्णीयात् मृदु गुग्गुलम् ॥ ३८६ ॥

[ इति विपोपविषादिशोधनम । ]

इति रसेन्द्रसारसंग्रहे प्रथमोऽध्यायः ॥ १ ॥

---

अथान्येषा बीजाना साधारणशोधनमाह—अपामार्गेत्यादि–अपामार्गस्वरसेन क्काथेन वा दोलायन्त्रविधिना निम्बुबीजानि निम्बबीजानि वा शोधयेत् । घृतकुमारी-मूलक्काथेन जैपालशोधन कुर्यात् । इन्द्रायणक्काथेन राजवृक्षस्य ( अमलतास ) बीजाना शोधन तथा इन्द्रायणमूलक्काथेन धुस्तूरबीजानाञ्च शोधन कुर्यात् । शिग्रु-कार्पासापामार्गबीजाना केवल घर्मे स्थापनेनैव शुद्धिर्भवति, तेपु सैन्धवलवणादिना सह मर्दनपाचनादीना नास्ति प्रयोजनम् । तिक्ताकोषातकी ( कड़वी तरोई ) दन्ती-पटोलीन्द्रवारुणीकटुतुम्बीदेवदालीकाकतुण्डीना बीजानि तथा रक्तेन्द्रायणबीजानि च आमलकीस्वरसभावनादिभि शोधयेत् । तथा करञ्जघृतकरञ्जबीजाना शोधन भृङ्गराजस्वरसे भावयित्वा शोधयेत् । तथा गुञ्जाबीजाना शोधन लवण विना नरमूत्रे स्वदनेन कुर्यात्, अथवा गुञ्जाबीजाना चूर्ण कृत्वा गोदुग्धे दोलायन्त्रवि-धिना शोधन कुर्यात् । भल्लातकफलाना नारिकेलोदकपूरितभाण्डे दोलायन्त्रेण स्वेदन कृत्वा शोधयेत् । अथवा—

इष्टिकाचूर्णसयुक्त फल भल्लातकोद्भवम् । पोट्टलीमध्यनिहित घर्षयेन्नातिवेगत ॥
तत प्रतप्ततोयेन क्षालयेदतियत्नत । इत्थ तैलत्वचाहीन भल्लात शुद्धिमाप्नुयात् ॥

त्रिफलाक्काथे गुडूचीक्काथे वा दोलायन्त्रविधिना लौहनिर्मितकटाहे मृण्मयभाण्डे वा गुग्गुलु शोधयेत् । अथवा दुग्धे गुग्गुलु शोधयेत् । दुग्धे गुग्गुलुशोधनविधिर्यथा रसतरङ्गिण्याम्—

चतुर्गुणे गव्यदुग्धे गुग्गुलु स्वेदयेद्भृगम् । वस्त्रपूत विधायाथ मल वस्त्रस्थमुत्सृजेत् ॥

...थ शातन्तु विज्ञाय दुग्धपात्रतलस्थितम् ।
समाहरेद् गुग्गुलुन्तु सर्वदोषसमुज्झितम् ॥ १८०-१८१ ॥

मेदपाटदेशान्तर्गतमण्डपियाग्रामनिवासिना गुर्जरगौडवंशावतंसेन ...यायव्याकरणसाहित्यायुर्वेदादिशास्त्रविशारदेन स्वधायुर्वेदोपाध्यायपदवाक्येन श्रीअम्बिकादत्तशास्त्रिणा कृताया रसेन्द्रसारसंग्रहस्य गूढार्थसन्दीपिकाव्याख्याया

प्रथमोऽध्याय ।

# द्वितीयोऽध्यायः ।

## अथ विरेकाधिकारः—

क्षीराब्धेरुत्थितं देवं पीतवस्त्रं चतुर्भुजम् ।
वन्दे धन्वन्तरिं भक्त्या नानागदनिषूदनम् ॥ १ ॥

द्रव्यादीनां शोधनमारणकथनानन्तरं धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम् । रोगास्तस्यापहर्तारः श्रेयसो जीवितस्य च ॥ इति—

सर्वत्र निर्व्याधिशरीरस्य परमावश्यकत्वाच्छरीरान्तरावभूतानां रोगाणां प्रशमनार्थं चिकित्साप्रदर्शनप्रधानं रसेन्द्रसारसंग्रहस्य द्वितीयाध्यायं चिकीर्षुर्गोपालकृष्णो निर्विघ्नपरिसमाप्तये ग्रन्थमध्ये कृतस्य चतुर्भुजस्वरूपधन्वन्तरिनमस्कारात्मकमङ्गलस्य "शिष्या अप्येवं कुर्युः" इति शिष्यशिक्षायै ग्रन्थतो निबध्नाति क्षीराब्धेरित्यादिना— 'मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते' इति भूवादिसूत्रभाष्योक्तेर्मङ्गलस्य परमावश्यकत्वादिति भावः । क्षीराब्धेः क्षीरसमुद्रादुत्थितं हस्तगृहीतामृतकुम्भमाविर्भूतं नानारोगाणां चिकित्सया स्वदर्शनदानेन वा निषूदनं नाशकं, पीतवस्त्रं, चतुर्भुजञ्च विष्णोरवतारविशेषत्वादिति भावः । धन्वन्तरिं देवमादिदेवं भक्तिपूर्वकं वन्दे ॥ १ ॥

प्रायशो वपुषः शुद्धिं कृत्वा देयं तदौषधम् ।
अतः पूर्वं चिकित्सायां रेचकौषधमुच्यते ॥ २ ॥

प्रायो विशुद्धदेहे सर्वौषधानामाशुगुणकारित्वाद्देहशुद्धिकरं विरेचनं प्रधानतः पूर्वं

विरेचनकरमौपधमुच्यते, विरेचनफल यथा सुश्रुते—

बुद्धे प्रसाद बलमिन्द्रियाणा धातुस्थिरत्व बलमग्निदीप्तिम्। चिराच्चपाकं वय-श्च करोति, विरेचन सम्यगुपास्यमानम् ॥ २ ॥

अथ इच्छाभेदी रस —

**तुल्यं टङ्कणपारदं समरिचं तुल्यांशकं गन्धकं**
**विश्वा च द्विगुणा ततो नवगुणं जैपालचूर्णं क्षिपेत्।**
**गुञ्जैकप्रमितो रसो हिम जलैः संसेवितो रेचयेत्।**
**यावन्नोष्णजलं पिबेदपि वरं पथ्यञ्च दध्योदनम् ॥ ३ ॥**

अथ इच्छाभेदीरसनिर्माणमाह–तुल्यमिति–शुद्धपारद, शुद्धटङ्कण, मरिचचूर्ण, शुद्धगन्धकञ्च प्रत्येक द्रव्यमेकैकभाग ( समानमित्यर्थ ) तथा विश्वा-शुण्ठी द्विभागयुक्ता तस्या वस्त्रपूत सूक्ष्मचूर्णं, तथा शुद्धस्य जेपालचूर्णस्य नवभाग गृहीत्वा ( शुद्धपारद १ तो०, शुद्धटङ्कण १ तो० मरिचचूर्ण १ तो०, शुद्धगन्धक १ तो०, शुण्ठीचूर्णं २ तो०, जैपालचूर्णं ९ तो०, ) सर्वप्रथम पारदगन्धकयो कज्जलीं कृत्वा तदनु सर्वाणि द्रव्याणि सम्मेल्य दृढ खल्वे विमर्द्य च जलेन सह पेषण कृत्वा गुञ्जैकप्रमिता वटिका कार्या, एष एव इच्छाभेदीनामकरस। रक्तिकैकपरिमित शीतलजलेन सेवितोऽय रसो विरेचयति। उष्णोदकपानेन च अतिविरेचन निवारयेत्। विरेचनानन्तर पथ्य दध्योदन सेवयेत्। विरेचनसमये वारम्वार स्वल्प शीतलजल पेयम् ॥ ३ ॥

प्रकारान्तरम्—

**जेपालाष्टौ द्विको गन्धस्त्रिशुण्ठी मरिचं द्विकम्।**
**एकः सूतः टङ्कणैको गुञ्जामात्रा वटी कृता ॥ ४ ॥**
**शूलव्याधिप्रभृतय. कुष्ठैकादशपित्तजा·।**
**भगन्दरादिहृद्रोगाः सर्वे नश्यन्ति भक्षणात् ॥ ५ ॥**

अथ मतान्तरेण इच्छाभेदीरसनिर्माणमाह–जैपालेत्यादि–शुद्धजेपाल ८ तो०, शुद्धगन्धक २ तो०, शुण्ठीचूर्ण ३ तो०, मरिचचूर्ण २ तो०, शुद्धसूत १ तो०, शुद्धटङ्कण १ तो०, पूर्वं खल्वे गन्धकपारदयो कज्जला कृत्वा तत कज्जलिकाया सर्वाणि द्रव्याणि सम्मेल्य जलेन सह विमर्द्य गुञ्जामात्रपरमिता वटी कृत्वा सशोष्य च

काचपात्रे स्थापयेत्। इच्छाभेदीनाम्नोऽस्य रसस्यैका वटी शीतलजलेन सह सेविता विरेचनं करोति। मुहुर्मुहु स्वल्पं २ शीतलजलपानं कर्तव्यम्, सम्यग्विरेचनानन्तरं कोष्णोदकेन अतिविरेचनं निवारयेत्। सेवितोऽयं रसः शूलादिकोदररोगान्, पित्तजन्यरोगान्, एकादशकुष्ठान्, भगन्दरं, हृदयरोगांश्च नाशयति ॥ ४–५ ॥

अथ गदमुरारिः इच्छाभेदी—

रसबलिगगनार्कं शुद्धतालं विषञ्च
त्रिकटुत्रिफलमेतत् टङ्कणं भृङ्गमेभिः।
सममिह जयपालोद्भूतचूर्णं विमर्द्य
द्विनिशमनिशमेतद् भृङ्गराजोत्थवारा ॥ ६ ॥
भवति गदमुरारिः स्वेच्छया भेदकोऽयं
हरति सकलरोगान् सन्निपातानशेषान्।
इह हि भवति पथ्यं मत्स्यमांसादि सर्वं
घृतविलुलितमस्मिन् भोजनं भूरि देयम् ॥ ७ ॥

अथ गदमुरारिः इच्छाभेदीरसनिर्माणमाह–रसेत्यादि–शुद्धरस १ तो०, शुद्धगन्धक १ तो०, अभ्रकभस्म १ तो०, ताम्रभस्म १ तो०, शुद्धहरितालचूर्णं १ तो०, शुद्धवत्सनाभ १ तो०, त्रिकटुचूर्णं १ तो०, त्रिफलाचूर्णं १ तो०, शुद्धटङ्कण १ तो०, भृङ्गराजचूर्णं १ तो०, शुद्धजैपालबीजचूर्णञ्च सर्वचूर्णसमं १० तो०, पूर्वं रसगन्धकयोः कज्जलीं कृत्वा ततः सर्वमेकीकृत्य भृङ्गराजस्वरसेन सम्यगाप्लाव्य दिनद्वयं निरन्तरं विमर्द्य रक्तिकैकपरिमिताश्च वटीः कृत्वा संशोष्य च काचपात्रे संस्थापयेत्। रसोऽयं पूर्वोक्तविधिना गुञ्जैकपरिमितः शीतलजलेन सह सेवितो विरेचयति, तथाचायं सकलरोगान्, समग्रसन्निपातांश्च नाशयति। विरेचनानन्तरं मत्स्यमांसादिकं यथेच्छं घृतयुक्तं भोजनादिकं वा पथ्यं देयम् ॥ ६–७ ॥

अथ रुक्मिणो रसः—

अभयाचूर्णमादाय नूतनैर्जयपालकैः।
पञ्चमांशेन मिलितैः स्नुहीदुग्धेन मर्दिताः ॥ ८ ॥
गुडिकास्तस्य कर्त्तव्या वर्त्तुलाश्चणकप्रभाः।
एकैकस्यास्य टङ्कस्य रेचनैश्च रसैस्तथा ॥ ९ ॥

रुक्मिशो न च दाहः स्यान्न च मूर्च्छा भ्रमः क्लमः ।
वेगतः सारयेदेषा विशेषादामनाशिनी ॥ १० ॥
निरूहेण तथा नैव तथा बिन्दुघृतेन च ।
विवृता न तथा रेच्या यथा स्याद् गुडिकोत्तमा ॥ ११ ॥
अतिशुद्धं भवेद् देहमतिप्रबलमुत्तमम् ।
अतिरूपमतिप्रौढमत्यायुष्करमुत्तमम् ॥ १२ ॥
विष्टम्भे गुडिका देया चोदरे दारुणामये ।
अधोदेशेषु सर्वेषु गुदेषु च महौषधिः ।
दीयते क्षीयते सामः कामकायविवर्द्धनः ॥ १३ ॥

अथ रुक्मिशारसस्य निर्माणमाह—अभयेत्यादि—अभयाचूर्ण (बड़ीहर्र) ५ तो०, नूतनशुद्धजयपालबीजचूर्ण हरीतक्यपेक्षया पञ्चमाश १ तो०, उभय खल्वे निक्षिप्य शुद्धसेंहुण्डदुग्धेन सह दृढं विमर्द्य वर्त्तुलाकाराश्चणकसदृशवटिका कृत्वा संशोष्य च काचपात्रे स्थापयेत् । अस्य रसस्य टङ्कपरिमितसेवनेन रेचन भवति, तथा चाय रसो भ्रम, ग्लानि, मूर्च्छा, दाहञ्च नैव करोति, शीघ्रञ्च विरेचयति, आमदोष नाशयति, यथा सेवितेय गुडिका रेचयति, तथा निरूहवस्तिना, बिन्दुघृतेन, त्रिवृच्चूर्णेनापि रेचन नैव भवति । अनेन देह यथेष्टशुद्ध—सौन्दर्ययुक्त बलयुक्तञ्च भवति, वयसो वृद्धिश्च जायते । अस्या उपयोगो विष्टम्भयुक्ते ( मलावरोधे ) आमदोषपरिपूर्णे उदररोगे, अधोभागजन्येषु सर्वेषु रोगेषु देहशुद्ध्यर्थं वा कर्तव्य ॥ ८—१३ ॥

अथ इच्छाभेदी-गुडिका—

पारदं गन्धकं कुर्य्यात् सौभाग्यं पिप्पलीसमम् ।
समानि जयपालानि क्रियन्ते रेचनाय च ।
शीतेन रेचयेत् सम्यगुष्णेनैव प्रशाम्यति ॥ १४ ॥

अथ इच्छाभेदिगुडिकानिर्माणमाह—पारदमित्यादि—शुद्धपारद १ तो०, शुद्धगन्धक १ तो०, शुद्धटङ्कण १ तो०, शुद्धपिप्पलीचूर्ण १ तो०, शुद्धजैपालबीजचूर्ण सर्वसम ४ तो०, प्रथम पारदगन्धकयो खल्वे कज्जलीं कृत्वा अवशिष्टद्रव्याणि कज्जलिकाया निक्षिप्य जलेन सह विमर्द्य गुञ्जापरिमिता वटी कार्या । वटीय शीतलजलेन सह सेविता रेचयति, सम्यग्रेचनानन्तरमुष्णोदक पीत्वा अतिरे

निरोधयेन ॥ १४ ॥

अन्यश्चेच्छाभेदी रस

शुण्ठी मरिचसंयुक्त रसगन्धकटङ्कणम् ।
जैपालास्त्रिगुणा. प्रोक्ता. सर्वमेकत्र चूर्णयेत् ॥ १५ ॥
इच्छाभेदी द्विगुञ्जः स्यात् सितया सह दापयेत् ।
यावन्तश्चुलुकाः पीतास्तावद्वारान् विरेचयेत् ।
तक्रौदनं खादितश्चमिच्छाभेदी यथेच्छया ॥ १६ ॥

अन्यविधेच्छाभेदीरसनिर्माणमाह–शुण्ठीत्यादि–शुद्धपारद १ तो०, शुद्धगन्धक १ तो०, शुद्धटङ्कण १ तो०, वस्त्रपूत शुण्ठीचूर्ण १ तो०, मरिचचूर्ण १ तो०, शुद्धजेपालवीजचूर्ण ३ तो०, पूर्व रसगन्धकयो कज्जलीं कृत्वा तदनु सर्व सम्मेल्य शीतलजलेन सह दृढ विमर्द्य द्विगुञ्जपरिमिता वटीं कृत्वा संशोष्य च काचपात्रे स्थापयेत् । विरेचनार्थमस्य रसस्य रक्तिद्वयमादाय सितया सह भक्षण कृत्वा शीतल जल पिवेत् । यावन्तश्चुलुका शीतलजलस्य पीतास्तावद्वारान् विरेचयति । विरेचननिवारणाय कोष्णोदक पिवेत् । विरेचनानन्तर तक्रौदनं पथ्य कुर्यात् । इच्छानुकूलविरेचनकारित्वादिच्छाभेदीनाम्ना विख्यातोऽय रस ॥ १५-१६ ॥

अथ पुष्परेचनी गुडिका—

देवदाली स्वर्णपुष्पं गुडेन गुडिका कृता ।
गुदमध्ये प्रदेयैषा पातयेच्च महागदम् ॥ १७ ॥
अधश्च साममायाति पुनः सा दीयते गुदे ।
प्रक्षाल्य वारिणा चैषा वारं वा रं प्रयच्छति ॥ १८ ॥
अनेन क्रमयोगेन मलमामविरेचनम् ।
जायते सकल देहं शुद्धवर्णं निरामयम् ॥ १९ ॥

अथ पुष्परेचनी गुडिकाया निर्माणमाह–देवदालीत्यादि–देवदाली–हस्तिकर्णपत्र ( वन्दालडोडा ) १ तो०, स्वर्णपुष्पमारग्वधस्तस्य फलमज्जा १ तो०, गुड ४ तो०, पूर्व खल्वे सर्व निक्षिप्य दृढ विमर्द्य च माषकैकपरिमिता वटी कार्या , विरेचनार्थं गुदमध्ये एषा वटी स्थाप्या तेन विरेचन भवति, आमसमूहमपि नि सारयति, आमेन सह इय गुडिकाऽपि वहिरायाति, अतस्ता जलेन प्रक्षाल्य पुनर्गुदमध्ये प्रवेश्या, इत्थ

वारम्वारं करणेन मामसकलमलनि सरण भवति देहश्च शुद्ध निरामयश्च जायते १७-१९॥

अथ सर्वाङ्गसुन्दरो रस —

**शुद्धसूतञ्च गन्धञ्च विषञ्च जयपालकम्।**
**कटुत्रयञ्च त्रिफला टङ्कणञ्च समांशकम्॥ २०॥**
**अस्य मात्रा प्रयोक्तव्या गुञ्जात्रयसमा ततः।**
**सर्वेषु ज्वररोगेषु सामवाते विशेषतः॥ २१॥**
**नाशयेत् श्वासकासञ्च अग्निमान्द्य विशेषत।**
**ब्रह्मणा निर्मितः पूर्वं रसः सर्वाङ्गसुन्दरः॥ २२॥**

अथ सर्वाङ्गसुन्दररसनिर्माणमाह—शुद्धसूतमित्यादि—शुद्धपारद १ तो०, शुद्धगन्धक १ तो०, शुद्धवत्सनाभ १ तो०, शुद्धजैपालवीजचूर्ण १ तो०, त्रिकटुचूर्ण-३ तो०, त्रिफलाचूर्ण १ तो०, शुद्धटङ्कण १ तो०, प्राक् पारदगन्धकयो कज्जलीं कृत्वा तत्र सर्वं सम्मेल्य शुद्धपरिश्रुतजलेन सह विमर्द्य त्रिगुञ्जपरिमिता वटी कार्या। अस्य रसस्य त्ररक्तिकापरिमितमात्रया सेवनेन सर्वाणि ज्वराणि विशेषेणामदोष, श्वासकासौ, अग्निमान्द्यादिकोदरव्याधयश्च नश्यन्ति, पूर्वं ब्रह्मणा निर्मितोऽय रस सर्वाङ्गसुन्दरनाम्ना ख्यात॥ २०-२२॥

निषिद्धविरेचकानाह—

**वालवृद्धकृशक्षीण-पीनसार्त्तभयार्दिताः।**
**रूक्षशोषतृषायुक्ताः गर्भिणी च नवज्वरी॥ २३॥**
**अधो गच्छति यस्यासृक् सूतिकाऽऽतङ्कपीडिता।**
**नैते विरेकयोग्याः स्युरन्येषाञ्च वलावलम्॥ २४॥**
**नवज्वरे च ये योगाः भेदकाः परिकीर्त्तिताः।**
**ते तथैव प्रयोक्तव्याः वीक्ष्य देहवलादिकम्॥ २५॥** [ इति विरेकाधिकार। ]

अथ विरेचनानर्हानाह—वालवृद्धेत्यादि—वाला, स्वभावतोऽङ्गप्रत्यङ्गान्त्रादीना सुकुमारत्वात्, वृद्धा क्षीणरक्तमासादिधातुत्वात् कृशा क्षीणप्राणत्वात्, पीनसभयार्ताश्च, तथा रूक्षदेहा, क्षयग्रस्ता, तृषापीड़िता, गर्भिणी गर्भपातभयात्, नवज्वरी सामदोषत्वात्, यस्य च गुदायोनिमूत्रमार्गैश्चाधोरक्त गच्छति, सूतिकारोग-

ग्रस्ता स्त्री च इमे विरेचनस्यायोग्या । पुनरन्येषां बलाबलं वीक्ष्य विरेचनं दद्यात् । नवज्वरनिवृत्त्यर्थं ये भेदकौषधयुक्ता योगाः प्रदर्शितास्तेषामुपयोगोऽपि देहबलं मलादिकञ्च वीक्ष्य कर्तव्यः । विरेचनात्पूर्वदिवसे घृतादिस्निग्धपदार्थसेवनं श्रेयस्करम् ॥ २३-२५ ॥

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण अम्बिकादत्तशास्त्रिणा कृतायां
गूढार्थसन्दीपिकाव्याख्यायां विरेकाधिकारः ॥

## अथ ज्वरचिकित्सा—

नवज्वराङ्कुशः —

**क्रमेण वृद्धान् रसगन्धहिङ्गुलान् नैकुम्भबीजान्यथ दन्तिवारिणा ।**
**पिष्ट्वाऽस्य गुञ्जाऽभिनवज्वरापहा जलेन चार्द्रा सितया प्रयोजिता ॥१॥**

सर्वेषु रोगेषु ज्वरस्य प्राधान्यात्पूर्वं ज्वरचिकित्सार्थं नवज्वराङ्कुशरसनिर्माणमाह—क्रमेण इत्यादि—शुद्धपारद १ तो०, शुद्धगन्धक २ तोला, शुद्धहिङ्गुल ३ तो०, शुद्धदन्तीबीजचूर्णं ४ तो०, प्राक् पारदगन्धकयोः कज्जलीं कृत्वा तदनु सर्वं निक्षिप्य दन्तीमूलस्वरसेन क्वाथेन वा दृढं विमर्द्य गुञ्जापरिमितां वटीं कृत्वा संशोष्य च काचकूप्यां स्थापयेत् । प्रतिदिनमेकैका वटीयं आर्द्रकरसेन सितया च सह सेविता कोष्ठबद्धपूर्वकं नवज्वरं दूरीकरोति । यद्यपि विरेकाधिकारे नवज्वरिणो विरेचनं निषिद्धं तथापि चिरकालीनकोष्ठबद्धजन्यनवज्वरे रोगिणो बलाबलं वीक्ष्य अस्योपयोगः कर्तव्यः ॥ १ ॥

हिङ्गुलेश्वरो रसः —

**तुल्यांशं मर्दयेत् खल्ले पिप्पली हिङ्गुलं विषम् ।**
**द्विगुञ्जा मधुना देया वातज्वरनिवृत्तये ॥ २ ॥**

अथ हिङ्गुलेश्वररसस्य-निर्माणविधिमाह तुल्यांशमित्यादि—शुद्धपिप्पलीचूर्णं १ तो०, शुद्धहिङ्गुल १ तो०, शुद्धवत्सनाभ १ तो०, खल्वे सर्वं निक्षिप्य जलेन सह दृढं विमर्द्य द्विगुञ्जपरिमिता वटी कार्या । हिङ्गुलेश्वरोऽयं रसो द्विगुञ्जमात्रया मधुना सह सेवितो वातिकं ज्वरं निवारयति ॥ २ ॥

ज्वरधूमकेतु रस —

भवेत् समं सूतसमुद्रफेनहिङ्गुलगन्धं परिमर्द्य यत्नात् ।
नवज्वरे वल्लमितं त्रिघस्रमार्द्राम्बुनाऽयं ज्वरधूमकेतुः ॥३॥

अथ ज्वरधूमकेतुरसस्य निर्माणविधिमाह—भवेदित्यादि—शुद्धपारद १ तो०, शुद्धसमुद्रफेन १ तो०, शुद्धहिङ्गुल १ तो०, शुद्धगन्धक १ तो०, पूर्वं पारदगन्धहिङ्गुलादीना कज्जलीं कृत्वा तदनु समुद्रफेनञ्च निक्षिप्य त्रिदिनपर्यन्तमार्द्रकस्वरसेनाऽऽलाव्य विमर्दयेत्, ततश्च सार्द्धरक्तिपरिमिता वटी कृत्वा संशोष्य च काचपात्रे स्थापयेत् । अस्य रसस्य नवज्वरे प्रतिदिवस वारत्रयं एकैका वटी आर्द्रकस्वरसमधुभ्या देया ॥ ३ ॥

मृत्युञ्जयो रस —

अव्यक्तः सिद्धिदः शुद्धो रोगघ्नः कीर्त्तिवर्द्धनः ।
यशः प्रदः शिवः साक्षात् मृत्युञ्जयरसः स्मृतः ॥ ४ ॥
विषस्यैकस्तथा भागो मरिचं पिप्पलीकणः ।
गन्धकस्य तथा भागो भागः स्यात् टङ्कणस्य च ॥ ५ ॥
सर्वत्र समभागः स्यात् हिङ्गुलन्तु द्विभागिकम् ।
चूर्णयेत् खल्लमध्ये तु मुद्गमानां वटीं चरेत् ॥ ६ ॥
जम्बीरस्य रसेनात्र कार्य्यं हिङ्गुलशोधनम् ।
रसश्चेत् समभागः स्यात् हिङ्गुलं नेष्यते तदा ॥ ७ ॥
गोमूत्रशोधितञ्चात्र विषं सौरविशोधितम् ।
मृत्युरूपं ज्वरं हन्ति मृत्युञ्जयरसः स्मृतः ॥ ८ ॥
मृत्युर्विनिर्जितो यस्मात् तेन मृत्युञ्जयो रसः ।
मधुना लेहनं प्रोक्तं सर्वज्वरनिवृत्तये ॥ ९ ॥
दध्युदकानुपानेन वातज्वरनिवर्हणः ।
आर्द्रकस्य रसैः पानं दारुणे सान्निपातिके ॥ १० ॥
जम्बीरद्रवयोगेन अजीर्णज्वरनाशनः ।
अजाजीगुडसंयुक्तो विषमज्वरनाशनः ॥ ११ ॥
तीव्रज्वरे महाघोरे पुरुषे यौवनान्विते ।

पूर्णमात्रा प्रदातव्या पूर्णं वटीचतुष्टयम् ॥ १२ ॥
स्त्रीबालवृद्धक्षीणेषु चार्द्धमात्रा प्रकीर्त्तिता ।
अतिवृद्धे च क्षीणे च शिशौ चाल्पवयस्यपि ॥ १३ ॥
तुर्य्यमात्रा प्रदातव्या व्यवस्थासारनिश्चिता ।
नवज्वरे महाघोरे यामैकात् नाशयेद् ध्रुवम् ॥ १४ ॥
मध्यज्वरे तथा जीर्णे त्रिरात्रात् नाशयेत् ध्रुवम् ।
सप्ताहात् सन्निपातोत्थ ज्वराजीर्णकसञ्ज्ञकम् ॥ १५ ॥

अथ मृत्युञ्जयरसनिर्माणविधिमाह—अव्यक्तेत्यादि—मृत्युञ्जयनामकोऽयं रस अव्यक्तो गोप्य, देहसिद्धिप्रद, शुद्धिकर्ता, रोगहर्ता, कीर्तिवर्द्धक, यशःप्रद, तथा साक्षाच्छिव कल्याणकारक इत्यर्थ, शुद्धवत्सनाभ १ तो०, मिरचचूर्ण १ तो०, पिप्पलीचूर्ण १ तो०, शुद्धगन्धक १ तो०, शुद्धटङ्कण १ तो०, शुद्धहिङ्गुल २ तो०, सर्वं खल्वे निक्षिप्य जलेन सह दृढ विमर्द्य मुद्गपरिमिता वटी कृत्वा संशोष्य च काचपात्रे स्थापयेत् । मृत्युञ्जयरसे जम्बीरनिम्बुरसेन शुद्धस्य हिङ्गुलस्य निक्षेप कर्तव्य, यदि च हिङ्गुलाभावे शुद्धपारद दातु स्पृहा चेत्तदा गन्धकतुल्यमेव पारदमादाय पूर्वं पारदगन्धकयो कज्जला कृत्वा तदनु शेषद्रव्याणि निक्षिप्य जलेन-विमर्द्य मुद्गपरिमिता वटी कार्या । वत्सनाभञ्च यथाविधि गोमूत्रे शोधयित्वा घर्मे संशोष्य प्रक्षिपेत् । रसोऽयं मृत्युरूपज्वरनाशकत्वाद्, अथ वा यस्य सेवनात् मृत्युरपि विनिर्जितस्तेन मृत्युञ्जयनाम्ना ख्यात । प्राय सर्वेषा ज्वराणा नाशार्थं मधुना सह सेवन कर्तव्यम् । वातज्वरशान्त्यर्थं दध्युदकेन सह, भयङ्करसन्निपातज्वरनिवृत्त्यर्थमार्द्रकस्वरसेन, तथा चिरकालीनाजीर्णजन्यज्वरनिवारणार्थं जम्बीरनिम्बुरसेन सह, विषमज्वरनाशार्थञ्च गुडजीरकाभ्या सह, अस्योपयोग कर्तव्य । युवावस्थान्वित-पुरुषाणा तीव्रज्वरनिवृत्त्यर्थमस्य रसस्य पूर्णमात्रा प्रदेया, सा च पूर्णमात्रा वटीचतुष्टयेन भवति प्राय एकैका वटी चतुर्वार प्रदेया । स्त्रीबालवृद्धक्षीणाना तीव्रज्वरनाशार्थमर्द्धमात्रा वटीद्वयस्य द्विवार प्रदेया । अतिवृद्धपुरुषे, क्षीणपुरुषे, अल्पवयस्के शिशौ च दिवसे चतुर्वार मुद्गपरिमितवटिकायास्तुर्यांश प्रदेयम् । महाघोरस्य नवीनज्वरस्यावेगोऽस्य सेवनेन यामैकमध्य एव न्यूनो भवति, मध्यमावेगस्य जीर्णज्वरस्य निवृत्तिरस्य सेवनेन त्रिदिनाभ्यन्तर एव जायते, सान्निपातिकं ज्वर, अजीर्ण-जन्यज्वरश्चास्य सेवनेन सप्ताहमध्य एव नश्यति ॥ ८–१५ ॥

जयावटी—

**विषं त्रिकटुकं मुस्तं हरिद्रा निम्बपत्रकम् ।**
**विड़ङ्गमष्टम चूर्ण छागमूत्रैः समं समम् ।**
**चणकाभा वटी कार्य्या स्यात् जया योगवाहिका ॥ १६ ॥**

अथ जयावटीनिर्माणमाह–विषमित्यादि—शुद्धवत्सनाभ १ तो०, शुण्ठीचूर्ण १ तो०, मरीचचूर्ण १ तो०, पिप्पलीचूर्ण १ तो०, मुस्तकचूर्ण १ तो०, हरिद्राचूर्ण १ तो०, निम्बपत्रचूर्ण १ तो०, वायविडङ्गचूर्ण १ तो०, जयन्तीमूलचूर्णं च सर्वद्रव्य-सम ८ तो०, पूर्वं सर्वं खल्वे दृढ सम्पेष्य अजामूत्रेण सह भावयित्वा विमर्दयेत्, ततश्चणकसदृशवटी कृत्वा संशोष्य च काचपात्रे स्थापयेत् । इय जयानाम्नी वटी योगवाहिका वर्तते, अर्थात् यथाविहितरोगानुपानैं सह सर्वरोगेषु व्यवहार कर्तव्य ॥ १६ ॥

जयन्ती वटिका—

**विष पाठाऽश्वगन्धा च वचा तालीशपत्रकम् ।**
**मरिचं पिप्पली निम्बमजामूत्रेण तुल्यकम् ।**
**वटिका पूर्ववत् कार्य्या जयन्ती योगवाहिका ॥ १७ ॥**

अथ जयन्तीवटिकानिर्माणविधिमाह–विषमित्यादि—शुद्धवत्सनाभ १ तो०, मरिचचूर्ण १ तो०, पिप्पलीचूर्ण १ तो०, अश्वगन्धचूर्ण १ तो०, वचाचूर्ण १ तो०, तालीशपत्रचूर्ण १ तो०, पाठाचूर्ण १ तो०, निम्बपत्रचूर्ण १ तो०, सर्व-द्रव्यसमश्च जयामूलचूर्ण ८ तो०, सर्वं खल्वे सम्मेल्य अजामूत्रेण भावयित्वा दृढ विमर्द्य च चणकसमाना वटी कृत्वा सशोष्य च काचपात्रे स्थापयेत् । इयमपि योग-वाहिका ॥ १७ ॥

जया जयन्ती वटीप्रयोगविधि —

**जयन्ती वा जया वाऽथ क्षीरैः पित्तज्वरापहा ।**
**मुद्गामलकयूषेण पथ्यं देयं घृतं विना ॥ १८ ॥**
**जयन्ती वा जया वाऽथ सक्षौद्रमरिचान्विता ।**
**सन्निपातज्वरं हन्ति रसश्चानन्दभैरवः ॥ १९ ॥**
**जयन्ती वा जया वाऽथ विषमज्वरनुद् घृतैः ।**

सर्वज्वरं मधुत्र्योषैः गवां मूत्रेण शीतकम् ॥ २० ॥
चन्दनस्य कषायेण रक्तपित्तज्वरापहा ।
जयन्ती वा जया वाऽथ माक्षिकेण च कामजित् ॥ २१ ॥
जयन्ती वा जया नीरैः पाण्डुशोथविनाशिनी ।
जयन्ती वा जया वाऽथ तण्डुलोदकपानत ॥ २२ ॥
अश्मरीं हन्ति नो चित्रं मूत्रकृच्छ्रन्तु दारुणम् ।
जयन्तीं वा जयां वाऽथ गोमूत्रेण युतां पिबेत् ॥ २३ ॥
हन्त्याशु काकणं कुष्ठं तुलेपेन च तद्द्रुतम् ।
द्विनिष्कं केतकीमूलं पिष्ट्वा तोयेन पाययेत् ॥ २४ ॥
जयन्ती वा जया वाऽथ मेहं हन्ति सुदारुणम् ।
जयन्ती वा जया वाऽथ मधुना मेहजित् भवेत् ॥ २५ ॥
लोध्रमुस्ताऽभयातुल्यं कट्फलञ्च जलैः सह ।
क्वाथयित्वा पिबेच्चानु मधुना सर्वमेहजित् ॥ २६ ॥
जयन्तीं वा जयां वाऽथ गुडैः कोष्णजलै पिबेत् ।
त्रिदोषोत्थं हरेत् गुल्मं रसश्चानन्दभैरवः ॥ २७ ॥
जयन्ती वा जया हन्ति शुण्ठ्या सर्वं भगन्दरम् ।
जयन्ती वा जया वाऽथ तक्रेण ग्रहणीप्रणुत् ॥ २८ ॥
जयन्ती वा जया वाऽथ रसश्चानन्दभैरव. ।
रक्तपित्ते त्रिदोषोत्थे शीततोयेन पाययेत् ॥ २९ ॥
जयन्ती वा जया वाऽथ भृङ्गद्रावैर्निशान्ध्यनुत् ।
जयन्तीं वा जयां वाऽथ घृष्ट्वा स्तन्येन चाञ्जयेत् ।
स्रावणं सर्वदोषोत्थं मांसवृद्धिञ्च नाशयेत् ॥ ३० ॥

अथ जयाजयन्तीवटीप्रयोगविधिमाह—जयन्तीत्यादि—प्रत्यहमेकैका जयावटी जयन्तीवटी वा दुग्धेन सह ( विशेषेणाजदुग्धेन सह ) सेविता पित्तज्वरं नाशयति पञ्चच्छ सुच्यूर, धारोष्णस्यञ्च देयम् । प्रत्यहमेकैका जयावटी जयन्ती वटी वा मरिचचूर्णेन मधुना च सह सेविता सन्निपातज्वरं विनाशयति । तथैव आनन्दभैरवनामकरसोऽपि सर्वदेश्या चूर्णेन्या सह सेवित सन्निपातज्वरं निवारयति ।

जयन्ती जया वा घृतेन सह विषमज्वरं, तथा मधुना त्रिकटुचूर्णेन च सह सर्व-ज्वराणि, गोमूत्रेण च सह शीतज्वरं नाशयति, रक्तचन्दनक्वाथेन सह रक्तपित्त-ज्वरं विनाशयति । जया जयन्ती वा मधुना सह कासं नाशयति, दुग्धेन सह पाण्डु-रोगं शोथञ्च हन्ति, तण्डुलोदकेन सह वृक्कान्तर्गता, मूत्रप्रणाल्यन्तर्गता, वस्त्यन्तर्गता-श्मरी, दारुणं मूत्रकृच्छ्रं च नाशयति, गोमूत्रेण सह जया जयन्ती वा पीता कारुणसञ्ज-ककुष्ठं नाशयति, यदि च कुष्ठोपरि लेपः स्यात्तदा शीघ्रं तं निवारयति, जया जयन्ती वा जलपिष्टेन द्विनिष्कमितेन शमीमूलेन सह सेविता सुराभिधानं प्रमेहं हन्ति, मधुना सह सेवनेन सर्वविधं प्रमेहं नाशयति, जया जयन्ती वा मधुना सह लीढ्वा तदु-परि लोध्रमुस्तकाभयाकट्फलानां क्वाथं पिबेत् तेन सर्वविधप्रमेहा नश्यन्ति, तथा गुडेन कोष्णजलेन च सह सेविता जया जयन्ती वा त्रिदोषप्रकोपजातं गुल्मं हन्ति, तथैव आनन्दभैरवोऽपि उक्तानुपानैस्सह गुल्मं हन्ति, शुण्ठीचूर्णेन सह भगन्दरं, तक्रानुपानेन च सह ग्रहणीविकारं हन्ति, जया जयन्ती वा शीतलजलेन सह पीता त्रिदोषप्रकोपजन्यं रक्तपित्तं हन्ति, तथैवानन्दभैरवरसोऽपि रक्तपित्ते हितकरः, जया जयन्ती वा भृङ्गराजस्वरसेन सह सेविता निशान्ध्यं हन्ति, तथा स्त्रीदुग्धेन सह घृष्ट्वा नेत्रयोरञ्जनेन सर्वदोषप्रकोपजन्यं नेत्रस्रावं हन्ति, तथा नेत्रप्रान्तीयमांसपेशीनां दार्ढ्यं करोति, इदानीं विशेषेण जयावट्याः पित्तज्वरे, रक्तपित्तज्वरे च विशेषतया प्रयोगो भवति ॥ १८–३० ॥

भस्मेश्वरयोग —

**भस्म षोडशनिष्कं स्यादारण्योपलकोद्भवम् ।**
**निष्कत्रयञ्च मरिचं विषनिष्कञ्च चूर्णयेत् ॥ ३१ ॥**
**अयं भस्मेश्वरो नाम सन्निपातनिकृन्तनः ।**
**पञ्चगुञ्जामितं खादेदार्द्रकस्य रसेन तु ॥ ३२ ॥**

अथ भस्मेश्वरयोगमाह—भस्मेत्यादि—वन्योपलानां कृतं भस्म षोडशनिष्कं, (चतुर्भिर्माषकैः शाणः स निष्कष्टङ्क एव च ) वस्त्रपूतं मरिचचूर्णं त्रिनिष्कं, शुद्धव-त्सनाभं निष्कमात्रम्, प्राक् सर्वं खल्वे निक्षिप्य जलेन सह दृढं विमर्द्य पञ्चरक्तिका-परिमिता वटीः कृत्वा काचपात्रे स्थापयेत् । अथ भस्मेश्वरसञ्ज्ञकरसः पञ्चरक्तिपरि-मितः आर्द्रकस्वरसेन सह सेवितः सन्निपातं निकृन्तयति ॥ ३१–३२ ॥

स्वच्छन्दभैरवरस

**ताम्रभस्म विषं हेम्न शतधा भावित रसैः ।**
**गुञ्जार्द्धं सन्निपातादि नवज्वरहरं परम् ॥ ३३ ॥**
**आर्द्राम्बुशर्करासिन्धु-युत. स्वच्छन्दभैरवः ।**
**इक्षुद्राक्षासिताश्चापि दधि पथ्य रुचौ ददेत् ॥ ३४ ॥**

अथ स्वच्छन्दभैरवरसनिर्माणविधिमाह—शुद्धताम्रभस्म १ पल, शुद्धवत्सनाभ-पलं, द्वय खल्वे निक्षिप्य दृढ पिष्ट्वा तदनु हेम्नो-धुत्तूरस्य स्वरसे शतधा भावयित्वा अर्द्धरक्तिपरिमिता वटीं कृत्वा काचपात्रे स्थापयेत् । अथ स्वच्छन्दभैरव-रसोऽर्द्धगुञ्जापरिमित आर्द्रकस्वरसेन सितया सैन्धवेन च सह सेवित सन्निपातं नवज्वरञ्च विनाशयति पथ्यञ्च इक्षुस्वरस, कृष्णद्राक्षा, शर्करा, दधि च यथा रुचि देयम् ॥ ३३–३४ ॥

ज्वरमुरारिरस —

**हिंगुलञ्च विष व्योषं टङ्कणं नागराभये ।**
**जयपालसमायुक्त सद्यो ज्वरविनाशनम् ॥ ३५ ॥**

अथ ज्वरमुरारिरसमाह—हिङ्गुलमित्यादि—शुद्धहिङ्गुल शुद्धवत्सनाभ, शुण्ठीचूर्णं, मरिचचूर्णं, पिप्पलीचूर्णं, शुद्धटङ्कण, शुण्ठीचूर्णं, हरीतकीचूर्णं, शुद्धजयपालबीजचूर्णञ्च प्रत्येकं समभागमादाय खल्वे निक्षिप्य जलेन सह दृढ पिष्ट्वा रक्तिपरिमिता वटीं कृत्वा काचपात्रे स्थापयेत् । अथ ज्वरमुरारिरस कोष्ठबद्धताजन्यनवज्वरं यथाविधि-सेवितो विनाशयति ॥ ३५ ॥

नवज्वरेभाङ्कुश —

**सगन्धटङ्क रसतालकञ्च विमर्दित भावय मीनपित्तैः ।**
**दिनत्रय वल्लमित प्रदद्यात् वृन्ताकतक्रौदनमेव पथ्यम् ।**
**नवज्वरेभाङ्कुशनामधेय क्षणेन घर्मोद्गममातनोति ॥ ३६ ॥**

अथ नवज्वरेभाङ्कुशनामकरसमाह–सगन्धटङ्कमित्यादि—शुद्धगन्धक, शुद्ध-टङ्कण, शुद्धपारद शुद्धतालकञ्च प्रत्येक समभागमादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा तत सर्वं सम्मेल्य पिष्ट्वा च मत्स्यपित्ते त्रिदिनं भावयित्वा सार्द्धर-क्तिपरिमिता वटी कृत्वा काचपात्रे स्थापयेत् । नवज्वरेभाङ्कुशनामकोऽय रसो

वल्लपरिमित सेवितो नवज्वरं हन्ति, सेवनानन्तरं क्षणेनैव स्वेदं निःसारयति, पथ्ये च वृन्ताकशाकं तक्रञ्च देयम् ॥ ३६ ॥

त्रैलोक्यडुम्बररस —

**सूतार्कगन्धचपलाजयपालतिक्ता**
**पथ्या त्रिवृच्च विषतिन्दुकज समांशम् ।**
**संमर्द्य वज्रिपयसा मधुना द्विगुञ्ज-**
**त्रैलोक्यडुम्बररसोऽभिनवज्वरघ्नः ॥ ३७ ॥**

अथ त्रैलोक्यडुम्बररसनिर्माणविधिमाह–सूतेत्यादि––शुद्धपारद, शुद्धगन्धकं, शुद्धताम्रभस्म, चपलाचूर्ण–पिप्पलीचूर्णं, शुद्धजैपालबीजचूर्णं, तिक्ता–कुटकीचूर्णं, पथ्या–हरीतकीचूर्णं, त्रिवृच्चूर्णं, शुद्धविषतिन्दुकचूर्णं [कुचेलकचूर्णं), प्रत्येकं समभागमादाय पूर्वं खल्वे पारदगन्धकयो कज्जलीं कृत्वा ततोऽन्यानि द्रव्याणि प्रक्षिप्य स्नुहीदुग्धेन भावयित्वा विमर्द्य च द्विगुञ्जपरिमिता वटी कृत्वा स्थापयेत् । अयं त्रैलोक्यडुम्बररसो द्विरक्तिपरिमितो मधुना सह सेवितो नवीनज्वरं हन्ति । अस्योपयोगो विबन्धाजीर्णादियुक्तज्वरे कर्तव्य । विषतिन्दुकं कुचेलकं तस्य शोधनं यथा–किञ्चिदाज्येन सम्भृष्टं कुचेलं शुद्धिमाप्नुयात् । अथवा कुचेलकं पञ्चदशदिनपर्यन्तं सप्तदिनपर्यन्तं वा गोमूत्रे निक्षिपेत्, प्रत्यहं नवीनं गोमूत्रं देयं, पूर्वदिवसीयञ्च परित्याज्यम्, सम्यक् प्रफुल्लितकुचेलकानि ज्ञात्वा गोमूत्रादुद्धृत्य बहिस्त्वचमपनायाभ्यन्तरिकरसज्ञां परिहृत्य च जलेन प्रक्षाल्य सशोष्य चूर्णयित्वा च सर्वत्र प्रयोजयेत् । अथवा विषतिन्दुकबीजानि पोट्टलिकायां बद्ध्वा गोदुग्धे यामैकं दोलायन्त्रविधिना संस्वेद्य प्रक्षाल्य बहिस्त्वचमपनीय गृह्णीयात् ॥ ३७ ॥

प्रतापमार्त्तण्डरस —

**विषहिंगुलजैपाल-टङ्कण क्रमवर्द्धितम् ।**
**रसः प्रतापमार्त्तण्डः सद्यो ज्वरविनाशनः ॥ ३८ ॥**

अथ प्रतापमार्त्तण्डरसनिर्माणविधिमाह–शुद्धविष १ तो०, शुद्धहिङ्गुलं २ तो०, शुद्धजयपालबीजचूर्णं ३ तो०, शुद्धटङ्कण ४ तो०, पूर्वं हिङ्गुलं खल्वे सम्पेष्य ततोऽन्यशेषं द्रव्यजातं निक्षिप्य जलेन सह पिष्ट्वा रक्तिपरिमिता वटी कृत्वा स्थापयेत् । अयं प्रतापमार्त्तण्डरसो रक्तिपरिमितः प्रत्यहं सेवितः सद्योज्वरं विनाशयति । अस्य

प्रयोग कोष्ठबद्धजन्यज्वरे कर्तव्यस्तेन विरेचनपूर्वक ज्वर नश्यति ॥ ३८ ॥

तरुणज्वरारिरस —

**जैपालगन्ध विषपारदञ्च तुल्य कुमारीस्वरसेन पिष्टम् ।**
**अस्य द्विगुञ्जा हि सितोदकेन ख्यातो रसोऽय तरुणज्वरारि' ॥ ३९ ॥**
**दातव्य एषोऽहनि पञ्चमे वा षष्ठेऽथवा सप्तम एव चाऽपि ।**
**जाते विरेके विजितो ज्वर' स्यात् पटोलमुद्गाम्बुनिषेवणेन ॥ ४० ॥**

अथ तरुणज्वरारिरसनिर्माणमाह जैपालेत्यादि—शुद्धजयपालबीजचूर्ण, शुद्धगन्धक, शुद्धवत्सनाभ, शुद्धपारदञ्च प्रत्येक सममादाय पूर्व पारदगन्धकयो कज्जलीं कृत्वा शेष द्रव्यजात निक्षिप्य पिष्ट्वा घृतकुमारीस्वरसेन सह भावयित्वा दृढं विमर्द्य च द्विरक्तिपरिमिता वटी कृत्वा काचपात्रे स्थापयेत् । अथ तरुणज्वरारिरस स्यात , अस्योपयोगो ज्वरागमनादिवसात्पञ्चमे, षष्ठे, सप्तमे वा दिवसे द्विगुञ्जमात्रया सितया उदकेन च सह ( अथवा मिश्री के शर्बत मे ) कृतो विरेक कृत्वा ज्वर नाशयति, पथ्ये च पटोलयूष, मुद्गयूष वा दद्यात ॥ ३९—४० ॥

गदमुरारि —

**रसबलिशिललोहव्योषताम्राणि तुल्या-**
**न्यथ सदरदनागाभ्याञ्च भागः प्रदिष्ट' ।**
**भवति गदमुरारिश्चास्य गुञ्जाद्वयं वै**
**क्षपयति दिवसेन प्रौढमामज्वराख्यम् ॥ ४१ ॥**

अथ गदमुरारिरसनिर्माणविधिमाह—रसेत्यादि—शुद्धपारद १ तो०, शुद्धगन्धक १ तो०, शुद्धमन शिला १ तो०, लौहभस्म १ तो०, व्योष—त्रिकटुचूर्ण १ तो०, ( अथ वा शुण्ठी चूर्ण १ तो०, मिर्चचूर्ण १ तो०, पिप्पलीचूर्ण १ तो० ), ताम्रभस्म १ तो०, शुद्धहिङ्गुल १ तो०, सीसभस्म १ तो०, पूर्व खल्वे पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि निक्षिप्य जलेन सह पिष्ट्वा द्विगुञ्जपरिमिता वटी कृत्वा काचपात्रे स्थापयेत् , अथ गदमुरारिरसो द्विगुञ्जपरिमित प्रत्यह सेवित साम(जीर्ण)-ज्वरं हन्ति ॥ ४१ ॥

विद्याधररस —

**रसो गन्धस्ताम्रस्त्रिकटुकटुकीटङ्कणवरा-**

**त्रिवृद्दन्ती हेम द्युमणिविषमेतत्सममिदम् ।**
**समस्तैस्तुल्यं स्याद्विमलजयपालोद्भवरजः**
**ततः स्नुक्क्षीरेण प्रचुरमृदितं दन्तिसलिलैः ॥ ४२ ॥**
**द्विगुञ्जाऽस्य प्रौढ़ं जयति वटिका साममतुलं**
**ज्वरं पाण्डुं गुल्मं ग्रहणिगुदकीलोद्भवरुजः ।**
**मरुच्छूलाजीर्णं प्रबलमथ सामं क्रिमिगदं**
**विबन्धं प्लीहानं प्रबलमपि विद्याधररसः ॥ ४३ ॥**

अथ विद्याधररसनिर्माणमाह रस इत्यादि—शुद्धपारद १ तो०, शुद्धगन्धक १ तो०, ताम्रभस्म १ तो०, त्रिकटुचूर्ण १ तो०, कुटकीचूर्ण १ तो०, शुद्ध टङ्कणं १ तो०, त्रिफलाचूर्ण १ तो०, त्रिवृच्चूर्ण १ तो०, दन्तीमूलचूर्ण १ तो०, शुद्धधुस्तूरबीजचूर्ण १ तो०, द्युमणि —अर्कमूलचूर्ण १ तो०, शुद्धवत्सनाभचूर्ण १ तो०, तथा शुद्धजयपालबीजचूर्णञ्च सर्वसम, पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि निक्षिप्य स्नुहीदुग्धेन सम्यगाप्लाव्य भावयित्वेत्यर्थ दृढ विमर्दयेत्, तदनु दन्तीमूलस्वरसेन क्वाथेन वा भावयित्वा द्विरक्तिपरिमिता वटी कृत्वा स्थापयेत् । अय विद्याधररसो द्विगुञ्जमात्रया प्रत्यह सेवित तीव्र साम ज्वर विरेचनपूर्वक हन्ति तथा पाण्डु, गुल्म, ग्रहणीविकार, अर्शोरोग, वातिक शूल, वातरोग, अजीर्ण, आम, क्रिमिरोग, मलावरोध, चिरप्रवृद्धा प्लीहाञ्च विनाशयति ॥ ४२–४३ ॥

अमृतमञ्जरी—

**हिङ्गुलं मरिचं टङ्कं पिप्पली विषमेव च ।**
**जातीकोषं समं सर्वं जम्बीराद्भिर्विमर्दितम् ॥ ४४ ॥**
**गुञ्जाद्वयं त्रयं वापि देयञ्च सान्निपातिके ।**
**कासश्वासौ जयत्याशु सर्वज्वरविनाशनः ॥ ४५ ॥**

अथामृतमञ्जरीरसनिर्माणमाह हिङ्गुलमित्यादि—शुद्धहिङ्गुल, मरिचचूर्ण, शुद्धटङ्कणं, पिप्पलीचूर्ण, शुद्धवत्सनाभचूर्ण, जावित्रीचूर्ण, प्रत्येक सममादाय खल्वे निक्षिप्य जम्बीरनिम्बुरसेन सम्यगाप्लाव्य दृढ पेषयेत् । ततश्च गुञ्जाद्वयपरिमिता, त्रिगुञ्जपरिमिता वा वटी कृत्वा यथाबल सान्निपातिके ज्वरे प्रत्यह वटिकैका देया, तथास्य कासश्वासघ्नानुपानैस्सह सेवनेन कासश्वासौ नश्यत, सर्वज्वराणि च विवि

वानुपानं शाम्यन्ति ॥ ४४-४५ ॥

महाज्वराङ्कुश —

सूत गन्ध विष तुल्य धूर्त्तबीज त्रिभिः समम् ।
चतुर्णां द्विगुण व्योष-चूर्णं गुञ्जाद्वय हितम् ॥ ४६ ॥
जम्बीरस्य च मज्जाभिरार्द्रकस्य रसैर्युतम् ।
महाज्वराङ्कुशो नाम ज्वराष्टकनिषूदन ॥ ४७ ॥
ऐकाहिक द्व्याहिकं वा त्र्याहिकञ्च चतुर्थकम् ।
विषमञ्च त्रिदोषोत्थ हन्ति सर्वं न सशय ॥ ४८ ॥

अथ महाज्वराङ्कुशमाह सूतमित्यादि—शुद्धपारद १ तो०, शुद्धगन्धक १ तो०, शुद्धविष १ तो०, त्रिभि समञ्च शुद्धधुस्तूरबीजचूर्णं ( अर्थात् ३ तो० ), तथा चतुर्णां द्विगुण व्योषचूर्णं ( अर्थात् १२ तो० ) पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि च निक्षिप्य जम्बीरनिम्बूरसेन आर्द्रकस्वरसेन वा पिष्ट्वा गुञ्जाद्वयपरिमिता वटी कृत्वा स्थापयेत्, अयं महाज्वराङ्कुशनामको रस आर्द्रकस्वरसेन, जम्बीरस्वरसेन वा गुञ्जाद्वयप्रमाणेन प्रत्यह सेवितो ज्वराष्टक हन्ति, तथा एकाहिक, द्व्याहिक, त्र्याहिक, चतुर्थकं विषमञ्च ज्वर त्रिदोषोत्पन्न वा ज्वर विनाशयति ॥ ४६-४८ ॥

ज्वरकेशरिका—

शुद्धसूत विष व्योष गन्ध त्रैफलमेव च ।
जयपाल सम कुर्य्याद् भृङ्गातोयेन मर्दयेत् ॥ ४९ ॥
वटिकां गुञ्जमात्रान्तु कृत्वा वैद्य· प्रयत्नत. ।
प्रमाण सर्षपाकार बालानाञ्च प्रशस्यते ॥ ५० ॥
नारिकेलाम्बुना वाऽपि सर्वज्वरविनाशिनी ।
नारिकेजजलं शस्तं कर्षत्रय पिबेदनु ॥ ५१ ॥
सितया च सम पीता पित्तज्वरविनाशिनी ।
मरिचेन च पीता सा सन्निपातज्वर जयेत् ॥ ५२ ॥
पिप्पलीजीरकाभ्यान्तु दाहज्वरविनाशिनी ।
विषमज्वरभूतोत्थं ज्वर प्लीहानमेव च ॥ ५३ ॥

स्यते ॥ ५५-५७ ॥

## अथ निरामज्वरे ।

उदकमञ्जरीरस —

**सूतो गन्धष्टङ्कणः सोषणः स्यादेतैस्तुल्या शर्करा मत्स्यपित्तैः ।**
**भूयो भूयो भावयेत्तु त्रिरात्र वल्लो देयः शृङ्गवेरस्य वारा ॥ ५८ ॥**
**सम्यक् तापे वारिभक्त सतक्र वृन्ताकाढ्यं पथ्यमेतत् प्रदिष्टम् ।**
**आशु रोग हन्ति सामं प्रभावात् पित्ताधिक्ये मूर्ध्नि वारिप्रयोगः ॥५९॥**

अथ उदकमञ्जरीरसनिर्माणविधिमाह सूत इत्यादि—शुद्ध पारद , शुद्धगन्धक, शुद्धटङ्कण, मरिचचूर्ण, प्रत्येक द्रव्य समानभागमादाय पूर्व खल्वे पारदगन्धकयो कज्जलीं कृत्वा तत्रान्यान्यवशिष्टानि द्रव्याणि सम्मेल्य सर्वद्रव्यसमाना शर्करा च निक्षिप्य मत्स्यपित्तैस्त्रिरात्रं भावयित्वा त्रिवारं वा भावयित्वा—सार्द्धरक्तिपरिमिता वटी कृत्वा काचपात्रे स्थापयेत्, प्रत्यह वल्लमिता एका वटी आर्द्रकस्वरसेन सह-सेविता साम ज्वर हन्ति, ज्वरतापे निवृत्ते जलस्विन्न भक्त, तक्रं, वृन्ताकशाकञ्च पथ्ये देयम्, यदि शरीरे पित्तसञ्चयेनौष्ण्याधिक्य भवेत्तदा मूर्ध्नि जलसेचन कार्यम् ॥ ५८-५९ ॥

चन्द्रशेखरो रस —

**विहाय शर्करां यदा प्रदीयते मन. शिला ।**
**तदा निरामकज्वरारिरेष चन्द्रशेखर· ॥ ६० ॥**

अथ चन्द्रशेखररसनिर्माणमाह विहायेत्यादि—यदि उदकमञ्जरीरसस्य शर्करास्थाने तन्मानयुक्ताया शुद्धमन शिलाया प्रक्षेप स्यात्तदा निरामकज्वरविनाशी चन्द्रशेखररसो जायते, अस्य मात्रा अर्द्धगुञ्जपरिमिता कार्या ॥ ६० ॥

पञ्चवक्त्ररस —

**रसो गन्धकष्टङ्कण. सोषणोऽयं फणी पिप्पलीत्येष धुस्तूरपिष्टः ।**
**जयेत सन्निपान द्विगुञ्जानुपानं भवेदर्कमूलाम्बु सव्योषचूर्णम् ॥६१॥**

अथ पञ्चवक्त्ररसनिर्माणविधिमाह रस इत्यादि—शुद्धपारद १ तो०, शुद्धगन्धक १ तो०, शुद्धटङ्कण १ तो०, मरिचचूर्ण १ तो०, नागभस्म १ तो०, पिप्पलीचूर्ण १ तो०, पूर्व पारदगन्धकया कज्जलीं कृत्वा तत सर्वं सम्मेल्य धुस्तूर-

रसेन पिष्ट्वा द्विरक्तिपरिमिता वटी कृत्वा काचपात्रे स्थापयेत् । अस्य रसस्य प्रत्यह-मेकैका वटी अर्कमूलक्वाथेन त्रिकटुचूर्णेन च सह सेविता सन्निपातं विनिहन्ति ॥ ६१ ॥

पर्पटरस —

शुद्धसूतं द्विधा गन्धं मर्द्यं भृङ्गरसेन च ।
मृतं ताम्रं लोहभस्म पादांशेन तयोः क्षिपेत् ॥ ६२ ॥
लौहपात्रे च विपचेत् चालयेत् लौहचाटुना ।
तत् क्षिपेत् कदलीपत्रे गोमयोपरिसंस्थिते ॥ ६३ ॥
पश्चात् सञ्चूर्णयेत् खल्ले निर्गुण्ड्या भावयेद्दिनम् ।
जयन्तीत्रिफलाकन्या-वासाभार्गीकटुत्रिकैः ॥ ६४ ॥
भृङ्गाग्निमूलमुण्डीभिर्भावयेत् दिनसप्तकम् ।
अङ्गारैः स्वेदयेत् किञ्चित् पर्पटाख्यो महारसः ॥ ६५ ॥
चतुर्गुञ्जामितो भक्ष्यः सम्यक् श्लेष्मज्वरं हरेत् ।
पथ्याशुण्ठ्यमृताक्वाथमनुपानं प्रयोजयेत् ॥ ६६ ॥

अथ पर्पटरसनिर्माणमाह शुद्धसूतमित्यादि—शुद्धपारद १ तो०, शुद्धगन्धक २ तो०, उभयो खल्वे कज्जली कृत्वा भृङ्गराजरसेन च दृढ पिष्ट्वा पारदगन्धकयो श्चतुर्थांश ताम्रभस्म, लौहभस्म च सम्मेल्य लौहनिर्मितबृहदाकारगम्भीरान्तर्भागाया दर्व्यां सर्वं द्रव्य निक्षिप्य वह्नौ प्रतापयेत्, सर्वं द्रवीभूत ज्ञात्वा गोवरस्यार्द्रकदली-पत्रोपरि द्रव्यपङ्क स्थापयित्वा पुनर्विस्तृत पङ्क अन्त स्थितगोवरकदलीपत्रेणाच्छाद्य किञ्चिद्भार दद्यात् । इत्थ कदलीपत्रसम्पुटे चिप्पिटाकारभूता पर्पटी समादाय खल्वे चूर्णिता कृत्वा निर्गण्डीस्वरसेन दिनैक भावयेत्, तदनु पृथक् २ सप्तवार जयन्ती-त्रिफलाघृतकुमारीवासकभार्ङ्गीत्रिकटुभृङ्गराजचित्रकमूलमुण्डीनिर्मितक्वाथैर्भावयित्वा वह्नौ स्वेदयेत्, अय पर्पटनामको महारस स्तूर्यरक्तिकापरिमित प्रत्यह पथ्या-शुण्ठीगुडूचीक्वाथानुपानपूर्वक सेवित कफजज्वर विनाशयति ॥ ६२—६६ ॥

वातपित्तान्तकरस —

मृतसूताभ्रमुस्तार्क-तीक्ष्णमाक्षिकतालकम् ।
गन्धकं मर्दयेत् तुल्यं यष्टिद्राक्षाऽमृतारसैः ॥ ६७ ॥
धात्रीशतावरीद्रावैः द्रवैः क्षीरविदारिजैः ।

दिन दिन विभाव्याथ सिताक्षौद्रयुता वटी ॥ ६८ ॥
माषमात्र निहन्त्याशु वातपित्तज्वरं क्षयम् ।
दाहं तृषा भ्रमं शोष वातपित्तान्तको रसः ।
सिताक्षीर पिबेच्चानु यष्टिक्काथं सितायुतम् ॥ ६९ ॥

अथ वातपित्तान्तकरसनिर्माणविधिमाह मृतेत्यादि—मृतसूत—रससिन्दूर, अभ्रकभस्म, नागरमुस्तकचूर्ण, ताम्रभस्म, लौहभस्म, स्वर्णमाक्षिकभस्म, शुद्धहरतालचूर्ण, शुद्धगन्धक, प्रत्येकं द्रव्य समं सममादाय खल्वे निक्षिप्य पिष्ट्वा च तत पृथक् २ एकैक दिन मधुयष्टीक्वाथेन कृष्णद्राक्षाक्वाथेन, गुडूचीक्वाथेन, आमलकीस्वरसेन, शतावरीस्वरसेन, तथा क्षीरविदारीस्वरसेन क्वाथेन वा भावयित्वा माषकैकपरिमिता वटी कृत्वा काचपात्रे स्थापयेत्। (यद्यपि माषकपरिमिता मात्रा साम्प्रतम ोग्या तथापि यथारोग, यथाबल रक्तिकैकादारभ्य मात्राकल्पन कर्तव्य, माषकमात्र पञ्चरक्तिपरिमित सोश्रुत ग्राह्यम्) अस्य रसस्य प्रत्यहमेकैका वटी सितामधुभ्या सह सेवित्वा तदुपरि सितायुक्त कोष्णदुग्ध, सितायुक्त मधुयष्टिक्वाथ वा पिबेत्, तेन वातिक, पैत्तिकश्च ज्वर, क्षय, दाह, तृषा, भ्रम, शोषश्च नश्यति, अयं रसो नाम्ना वातपित्तान्तक ख्यात ॥ ६७–६९ ॥

विश्वेश्वररस —

मृतसूतार्कतीक्ष्णञ्च ताल गन्धश्च कट्फलम् ।
मेषशृङ्गी वचा शुण्ठी भार्गी पथ्या च वालकम् ॥ ७० ॥
धन्याक मर्दयेत् तुल्य पर्पटोत्थद्रवैर्दिनम् ।
मद्यं माष लिहेत् क्षौद्रै कफपित्तमदात्यये ॥ ७१ ॥
रसो विश्वेश्वरो नाम प्रोक्तो नागार्जुनेन च ।
काकमाचीरसं चानु सैन्धवेन युत पिबेत् ॥ ७२ ॥

अथ विश्वेश्वररसनिर्माणविधिमाह मृतसूतेत्यादि—मृतसूत—रससिन्दूर, ताम्रभस्म, लौहभस्म, शुद्धहरिताल, शुद्धगन्धक, कट्फलचूर्ण, मेषशृङ्गीचूर्ण, वचाचूर्ण, शुण्ठीचूर्ण, भार्गीचूर्ण, हरीतकीचूर्ण, सुगन्धवालाचूर्ण, धन्याक=कुस्तुम्बुरु (धनिया) तस्य चूर्ण, प्रत्येक द्रव्य समभागमादाय खल्वे निक्षिप्य पर्पटक्वाथेनाप्लाव्य दिनैक मर्दयेत्, ततश्च माषकपरिमिता वटी कृत्वा काचपात्रे स्थापयेत्, अस्य

रसस्य प्रत्यहमेकैका वटी मधुना सह भक्षयेत् तदनु स्वल्पसैन्धवलवणयुत काकमाचीस्वरस क्वाथ वा पिबेत्, नागार्जुनेन प्रोक्तोऽय रस उपर्युक्तविधिना सेवित कफज्वर, पित्तज्वर, मदात्ययञ्च विनाशयति ॥ ७०-७२ ॥

शीतारिरस —

पारदं गन्धकं शुद्धं टङ्कणञ्च समं समम् ।
पारदात् द्विगुणं देयं जैपालं तुषवर्जितम् ॥ ७३ ॥
सैन्धवं मरिच चिञ्चा-त्वग्भस्म शर्कराऽपि च ।
प्रत्येकं सूतकं तुल्य जम्बीरैर्मर्दयेत् दिनम् ॥ ७४ ॥
द्विगुञ्जस्तप्ततोयेन वातश्लेष्मज्वरापह' ।
रस शीतारिनामायं शीतज्वरहरः पर ॥ ७५ ॥

अथ शीतारिरसनिर्माणप्रकारमाह पारदमित्यादि—शुद्धपारद १ तो०, शुद्धगन्धक १ तो०, शुद्धटङ्कण १ तो०, पारदद्विगुण निस्तुष जयपालचूर्ण, तथा सैन्धवलवण १ तो०, मरिचचूर्ण १ तो०, चिञ्चात्वग्भस्म ( इमली को छाल की राख ) १ तो०, शर्करा-सिता १ तो०, एतत्सर्व समादाय पूर्व खल्वे रसगन्धकयो कज्जलीं कृत्वा तत सर्वं सम्मेल्य दिनैक जम्बीरनिम्बुरसेनाप्लाव्य मर्दयेत्, अयं रसो यथाबल यथारोग यथावयश्च रक्तिकैकादारभ्य द्विरक्तिपरिमित कोष्णोदकेन सह प्रत्यह सेवित शीतज्वर निश्चयेन हन्ति ॥ ७३-७५ ॥

चिन्तामणिरस —

रसविषगन्धकटङ्कणताम्रयवक्षारकञ्च सव्यषोम् ।
तालकफलत्रयञ्च क्षौद्रं दत्त्वा शतं वारान् ॥ ७६ ॥
संमर्द्य रक्तिनिर्मिता वटिका कार्य्या भिषग्वरैः प्राज्ञैः ।
शुण्ठीपिष्टेन समं चैकां द्वे वाऽथवा तिस्रः ॥ ७७ ॥
संप्राश्य नारिकेलज-लमनुपेयञ्च विमलमतिमद्भिः ।
सैन्धवजीरकसहितं तक्रं पथ्य प्रयोक्तव्यम् ॥ ७८ ॥
प्रशमयति सन्निपातज्वर तथा जीर्णकज्वरं विविधम् ।
प्लीहानं चाध्मानं कासं श्वासं वह्निमान्द्यम् ।
चिन्तामणी रसोऽयं किल स्वयं भैरवेण निर्दिष्टः ॥ ७९ ॥

अथ चिन्तामणिरसनिर्माणमाह रसविषेत्यादि—शुद्धपारद १ तो०, शुद्धगन्धक १ तो०, शुद्धवत्सनाभचूर्णं १ तो०, शुद्धटङ्कण १ तो०, ताम्रभस्म १ तो०, यवक्षार १ तो०, त्रिफलाचूर्णं १ तो० (प्रत्येकम्वा तोलकैकमितं ग्राह्यम्), प्राक् पारदगन्धकयो कज्जलीं कृत्वा तदनु शेषद्रव्याणि निक्षिप्य मधुना सह (तथा आर्द्रकस्वरसेनापि सह) दृढ वहुयामपर्यन्त मर्दयित्वा रक्तिकैकपरिमिता वटीं कृत्वा स्थापयेत्। अस्य रसस्य यथारोग, यथावल, एका, द्वे, तिस्रश्च वटिका प्रत्यह शुण्ठीचूर्णेन (वा चन्दनपङ्कवच्छिलाया शुण्ठीपिष्टं कृत्वा) सह भुक्त्वा तदुपरि नारिकेलोदकं पेयम्, पथ्यञ्च सैन्धवलवणभृष्टजीरकोपेत तक्र ग्राह्यम्, तेनाय सन्निपातज्वर, जीर्णज्वर, प्लीहवृद्धि, आध्मान, श्वास, कास, अग्निमान्द्यञ्च नाशयति, चिन्तामणिनामकोऽयं रस स्वय भैरवेणोपदिष्ट ॥ ७६–७९ ॥

चिन्तामणिरस —(प्रकारभेदेन)

रस गन्ध विष लौहं धूर्त्तवीजन्तु तत्समम्।
द्वौ भागौ ताम्रवह्निश्च व्योषचूर्णश्च तत्समम् ॥ ८० ॥
जम्वीरस्य च मज्जाभिरार्द्रकस्य रसैर्युतम्।
अस्यानुपानेन वटीं ज्वरे देया प्रयत्नतः ॥ ८१ ॥
गुञ्जाढ्यां वटीं खादेत् सद्यो ज्वरविनाशिनीम्।
वातिक पैत्तिकञ्चापि श्लैष्मिक सान्निपातिकम् ॥ ८२ ॥
ऐकाहिक द्व्याहिकञ्च चातुर्थकविपर्य्ययम्।
असाध्यञ्चापि साध्यञ्च ज्वरञ्चैवातिदुस्तरम् ॥ ८३ ॥
अग्निमान्द्येऽप्यजीर्णे च आध्मानेऽनिलसम्भवे।
अतिसारे च्छर्दिते च अरोचकनिपीडिते ॥ ८४ ॥
ज्वरान् सर्वान् निहन्त्याशु भास्करस्तिमिरं यथा।
चिन्तामणिरसो नाम सर्वज्वरकुलान्तक ॥ ८५ ॥

अथान्यप्रकारेण चिन्तामणिरसनिर्माणमाह रसमित्यादि—शुद्धपारद १ तो०, शुद्धगन्धक १ तो०, शुद्धवत्सनाभचूर्णं १ तो०, लौहभस्म १ तो०, शुद्धधुस्तूरबीजचूर्णं ४ तो०, ताम्रभस्म २ तो०, चित्रकमूलचूर्णं २ तो०, त्रिकटुचूर्णं ४ तो०, पूर्वं रसगन्धकयो खल्वे कज्जलीं कृत्वा तदनु सर्वं सम्मेल्य जलेन सह पिष्ट्वा रक्तिद्वयपरिमिता वटीं कृत्वा काचपात्रे स्थापयेत्, अस्य रसस्यैका वटी प्रत्यह जम्वीररसेन तत्खण्डेन

वा, तथा आर्द्रकस्वरसेन वा सह सेवनेन ज्वरावेगं नश्यति, वटीद्वयं सेवितमाशु ज्वरवेगं नाशयेत्, विशेषेण वातिकं, पैत्तिकं, श्लैष्मिकं, सान्निपातिकं, ऐकाहिकं द्व्याहिकं, चातुर्थकं, चातुर्थकविपर्यय, असाध्य, साध्य, दुस्तरमपिज्वरं विनाशयति, तथा वह्निमान्द्य, अजीर्ण, वातोत्थमाध्मान, आन्त्रवातविकृतिं वा, अतिसारं, वमनं अरुचिञ्च नाशयति । किमधिकं यथा रविः स्वतेजसा विविधान्धकारं विनाशयति तथैवायं रसो निश्चयेन सर्वाणि ज्वराणि हन्ति ॥ ८०–८५ ॥

## अथ सन्निपातज्वरे

कुलवधूरस —

**शुद्धसूतं मृतं ताम्रं मृतं नागं मनःशिला ।**<br>**तुत्थकं तस्य तुल्यांशं दिनमेकं विमर्दयेत् ॥ ८६ ॥**<br>**द्रवैश्चोत्तरवारुण्याश्चणमात्रा वटी कृता ।**<br>**सन्निपातं निहन्त्याशु नस्यमात्रेण दारुणम् ।**<br>**एषा कुलवधूर्नाम जले घृष्ट्वा प्रयोजयेत् ॥ ८७ ॥**

अथ कुलवधूरसस्य निर्माणप्रकारमाह शुद्धसूतमित्यादि—शुद्धपारद १ तो०, ताम्रभस्म १ तो०, नागभस्म १ तो०, शुद्धमनःशिला १ तो०, शुद्धतुत्थकं १ तो० सर्वं द्रव्यजात खल्वे निक्षिप्य दिनमेकमिन्द्रायणस्वरसेन क्वाथेन वा सह विमर्द्य चणकसदृशवटी कृत्वा स्थापयेत् । एना वटीं जले घृष्ट्वा नस्ययोगेन प्रयोजयेत् तेन दारुण सन्निपात विशेषेण तज्जन्यमूर्च्छाञ्च नाशयति, रसोऽयं नाम्ना कुलवधू ख्यात ॥ ८६–८७ ॥

जयमङ्गलरस —

**भस्मसूताभ्रकं तारं मुण्डतीक्ष्णालमाक्षिकम् ।**<br>**वह्निटङ्कणकट्वोषं समं समर्दयेत् दिनम् ॥ ८८ ॥**<br>**पाठानिर्गुण्डिकायष्टि बिल्वमूलकषायकैः ।**<br>**ततो मूषागतं रुद्ध्वा विपचेद् भूधरे पुटे ॥ ८९ ॥**<br>**माषैकं दशमूलस्य कषायेण प्रयोजयेत् ।**<br>**अञ्जनेनाथवा नस्यात् सन्निपातं जयेद् ध्रुवम् ॥ ९० ॥**

अथ जयमङ्गलरसस्य निर्माणविधिमाह भस्मेत्यादि—रससिन्दूरं

अभ्रकभस्म १ तो०, रजतभस्म १ तो०, मुण्डलौहभस्म १ तो०, तीक्ष्णलोहभस्म १ तो०, शुद्धहरताल १ तो० स्वर्णमाक्षिकभस्म १ तो०, चित्रकमूलचूर्ण १तो०, शुद्धटङ्कण १ तो०, त्रिकटुचूर्ण १ तो० सर्वं द्रव्य खल्वे सम्मेल्य दृढ पिष्ट्वा च, पृथक् ७ दिनैक पाठानिर्गुण्डामधुयष्टीना क्वाथै स्तथा विल्वमूलक्वाथैश्च भावयित्वा मर्दयेत्। ततो मूषान्तर्गत कृत्वा मृत्कर्पटजलादिभि सम्यक् सन्धिबन्धन कृत्वा भूधरयन्त्रे पुटेत्। प्रत्यह मांशुतमाषकपरिमित, आहोस्विद्रक्तिद्वयमितमेव दशमूलक्वाथेन सह सेवयेत्, अथवा दशमूलक्वाथेन नेत्रयोरञ्जन, वा नस्ययोगेन सन्निपात तज्जन्यमूर्च्छाश्च विनिहन्ति ॥ ८८-९० ॥

नस्यभैरवरस —

मृतसूतार्कतीक्ष्णाग्नि टङ्कण खर्परं समम्।
सव्योषमर्कदुग्धेन दिनञ्च मर्दयेत दृढम्।
अर्कक्षीरयुतं नस्य सन्निपातहर परम् ॥ ९१ ॥

अथ नस्यभैरवरसनिर्माणविधिमाह मृतसूतेत्यादि—मृतसूत—रससिन्दूरम्, ताम्रभस्म, तीक्ष्णलौहभस्म, चित्रकमूलचूर्ण शुद्धटङ्कण, शुद्धखर्पर, त्रिकटुचूर्णञ्च, एतत्सर्व सम गृहीत्वा खल्वे निक्षिप्य शुद्धेन रविदुग्धेन दिनैक विमर्द्य सशुष्क कृत्वा काचपात्रे स्थापयेत्। रसोऽयमुपयुक्तमात्रया अर्कदुग्धेन सह नस्ययोगेन सह सन्निपातमूर्च्छामपाकरोति ॥ ९१ ॥

अञ्जनभैरवरस —

सूततीक्ष्णकणागन्धमेकांशं जयपालकम्।
सर्वैस्त्रिगुणितं जम्बू वारिणा च सुपेषितम्।
नेत्राञ्जनेन हन्त्याशु सर्वोपद्रवमुद्धतम् ॥ ९२ ॥

अथाञ्जनभैरवरसनिर्माणमाह सूतेत्यादि—शुद्धपारद १ तो०, तीक्ष्णलौहभस्म १ तो०, पिप्पलीचूर्ण १ तो०, शुद्धगन्धक १ तो०, सर्वैस्त्रिगुणित ( १२ तो० ) शुद्धजयपालबीजचूर्णञ्च समादाय खल्वे पूर्व पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य जम्बूवृक्षत्वच क्वाथेन च दृढ सम्पेष्य शुष्कञ्च कृत्वा काचपात्रे स्थापयेत्। अस्य रसस्य नेत्रयोरञ्जनेन सर्वोपद्रवयुक्त सन्निपात तथा तज्जन्यमूर्च्छा च ध्रुव नश्यति ॥ ९२ ॥

---

अञ्जनो रस —

**गन्धेशं लशुनाम्भोभिर्मर्दयेद् याममात्रकम् ।**
**तस्योदकेन संयुक्तं नस्यं तत् प्रतिबोधकृत् ।**
**मरिचेन समायुक्तं हन्ति तन्द्राप्रलापकान् ॥ ९३ ॥**

अथाञ्जनरसनिर्माणविधिमाह गन्धेशमित्यादि—शुद्धपारद, शुद्धगन्धकञ्च सममादाय खल्वे कज्जलीं कृत्वा लशुनस्वरसेन यामैकं दृढं विमर्द्य स्थापयेत् । अस्याञ्जनरसस्य लशुनस्वरसेन सह नस्ययोगेन सन्निपातजन्यमूर्च्छया सुप्तपुरुषः प्रतिबोधमाप्नोति, तथा कृष्णमरिचचूर्णेन लशुनोदकेन च सह नस्ययोगेन तन्द्रा प्रलापञ्च नाशयति ॥ ९३ ॥

अञ्जनो रस —( प्रकारभेदेन )

**वाह्लीकं रसकं तुत्थं कर्पूरं मृतशुल्बकम् ।**
**कासमर्दरसं मर्द्यं दिनार्द्धं वटकीकृतम् ।**
**अञ्जनं ज्वरदाहघ्नं सर्वदोषनिसूदनम् ॥ ९४ ॥**

अथ प्रकारान्तरेण अञ्जनरसस्य निर्माणविधिमाह वाह्लीकमित्यादि—शुद्धहिङ्गु, शुद्धखर्परक, शुद्धतुत्थक, कर्पूर, ताम्रभस्म एतत्सर्वं समभागप्रमाणेनादाय कासमर्दरसेन क्वाथेन वा सम्यगाप्लाव्य दिनार्द्धपर्यन्तं दृढं पिष्ट्वा रक्तिपरिमितानि वटकानि कुर्यात् । रसोऽयमञ्जनयोगेन ज्वरदाहमपाकरोति तथा नेत्राणां सर्वदोषञ्च नाशयति ॥ ९४ ॥

त्रैलोक्यसुन्दर रस —

**रसगन्धकयोर्माषौ प्रत्येकं कज्जलीकृतौ ।**
**शक्रश्च मुषलो चैव धुस्तूरं केशराजकम् ॥ ९५ ॥**
**देवदाली जयन्ती च तथा मण्डूकपर्णिका ।**
**एषां पत्ररसैः शाणैः शिलायां खल्लयेत् पुनः ॥ ९६ ॥**
**शोषयित्वा वटी कार्या त्वनेका राजिकोपमा ।**
**त्रिदोषजं ज्वरं हन्ति तथा प्रबलकोष्ठकम् ॥ ९७ ॥**
**तप्ते तु नारिकेलस्य जलं देयं प्रयत्नतः ।**
**यदा वटी न कार्य्या तु तदा खाद्या तु रक्तिका ।**
**त्रैलोक्यसुन्दरो नाम सन्निपातहरो रसः ॥ ९८ ॥**

अथ त्रैलोक्यसुन्दररसनिर्माणविधिमाह रसगन्धकयोरित्यादि—शुद्धपारद १-मापा, शुद्धगन्धक १ माषा, उभयो खल्वे कज्जलीं कृत्वा शक्र कुटज, मुषली, धुस्तूर, केशराजो भृङ्गराज, देवदाली हस्तिघोषक, जयन्ती, मण्डूकपर्णा—आखु-पर्णा, एतेषां पृथक् २ शाणपरिमितेन—अर्द्धतोलकेन स्वरसेन क्रमशो विमर्दनं कृत्वा संशोष्य च राजिकोपमिता वटो कृत्वा प्रत्यहमेकैकवटिकाया सेवनेन त्रिदोषोत्पन्न-ज्वरस्य तथा प्रचलकोष्ठस्य ( अतीवमलोत्सर्गस्येत्यर्थ ) शान्तिर्भवति, अस्य रसस्य सेवनेन रागकारणाद्वा सन्तापप्रतीतौ तस्य शान्त्यर्थं पानार्थं नारिकेलोदकं प्रदेयम् । यदि च वटिकानिर्माण न स्यात्तदा रक्तिकैकपरिमितो यथानुपानसेवितोऽयं रस सन्निपात विनाशयति । रसोऽयं त्रैलोक्यसुन्दरनाम्ना ख्यात ॥ ९५-९८ ॥

अन्यस्वच्छन्दभैरवरस —

**रसगन्धकयो शाण प्रत्येकं कज्जलीकृतम् ।**
**सुवर्णमाक्षिक शाण शुद्धञ्चैकत्र कारयेत् ॥ ९९ ॥**
**रुद्रजटा निसिन्धुश्च नागदाऽऽमलकी तथा ।**
**विषकण्टालिका चषां स्वरस शाणमात्रकम् ॥ १०० ॥**
**दत्त्वा सशोष्य समर्द्य कार्य्या मुद्गसमा वटी ।**
**आर्द्रकस्य रसैः पेया जीरकञ्चानु भक्षयेत् ॥ १०१ ॥**
**स्वच्छन्दभैरवाख्योऽयं सन्निपातोग्रयहृत् मतः ।**
**ग्रहणीसूतिकाऽऽतङ्क नाशयेदविचारतः ॥ १०२ ॥**

अथ स्वच्छन्दभैरवरसनिर्माणविधिमाह रसेत्यादि—शुद्धपारद, शुद्धगन्धकञ्च प्रत्येक कर्षपरिमित ( १ तो० ) समादाय खल्वे कज्जलीं कृत्वा तत्र शाणमितं ( ४ मा० ) स्वर्णमाक्षिकभस्म निक्षिप्य मर्दयेत् । ततश्च रुद्रजटा—ईश्वरीलता ( खवल्लीति केचित् ), निसिन्धु =निर्गुण्डी, नागदा=हरीतकी, आमलकी, विष-कण्टालिका, एतेषां शाणमित ( ४ मा० ) स्वरस क्वाथं वा पृथक् २ निक्षिप्य मर्दयेत्, ततश्च मुद्गपरिमिता वटी कृत्वा स्थापयेत् । रसस्यास्य एकैका वटीं प्रत्यह आर्द्रकस्वरसेन सह संसेव्य तदुपरि किञ्चिद्भृष्टजीरकं भक्षयेत्, इत्थमयं रस उग्र सन्निपात, ग्रहणीविकार, सूतिकोपद्रवञ्च निवारयेत् । नाम्ना चायं रस स्वच्छन्द-भैरवो ख्यात ॥ ९९-१०२ ॥

अथ शीताङ्गसन्निपातलक्षणम्—

शीतं शरीरं शीताङ्गे छर्द्यतीसारकम्पनम् ।
क्षुद्विघातोऽङ्गमर्दश्च हिक्का श्वासः क्लमो वमिः ।
सर्वाङ्गशिथिलत्वञ्च सन्निपाते प्रजायते ॥ १०३ ॥

अथ शीताङ्गसन्निपातलक्षणमाह शीतमित्यादि—वक्ष्यमाणानन्दभैरवी रसः शीताङ्गसन्निपातं नाशयति, किञ्च शीताङ्गसन्निपातमिति जिज्ञासानिवारणार्थं तल्लक्षणमुच्यते शीतमिति, शीताङ्गे सन्निपाते शरीरं शीतलं जायते, तथा वमन, मूर्च्छा, अतीसार, अङ्गकम्प, बुभुक्षानाश, सर्वाङ्गमर्द, ( विशेषेण सन्धिषु ), हिक्का, श्वास, क्लम (क्लमलक्षणन्तु यथा सुश्रुते "योऽनायासः श्रमो देहे प्रवृद्धः श्वासवर्जितः । क्लमः स इति विज्ञेय इन्द्रियार्थप्रबाधकः") सर्वाङ्गशैथिल्यञ्च भवति ॥ १०३ ॥

आनन्दभैरवो रसः—

हिङ्गुलञ्च विषं व्योषं मरिचं टङ्कणं कणा ।
जातीकोषसमं चूर्णं जम्बीरद्रवमर्दितम् ।
रक्तिमानां वटीं कुर्य्यात् खादेदार्द्रकसंयुताम् ॥१०४ ॥
वटीद्वयं त्रयं वाऽपि संन्निपाते सुदारुणे ।
ज्वरमष्टविधं हन्ति तथाऽतीसारनाशनः ॥ १०५ ॥
जीर्णज्वरहरश्चैव तथा सर्वाङ्गभेदकः ।
आमवातादिरोगञ्च नाशयेदविकल्पतः ॥ १०६ ॥

अथानन्दभैरवरसनिर्माणविधिमाह हिङ्गुलमित्यादि—शुद्ध हिङ्गुलम्, शुद्ध विषम्, त्रिकटुचूर्णम्, मरिचचूर्णम्, शुद्धटङ्कणम्, कणा—पिप्पलीचूर्णम्, जातिकोष—जातिफलत्वचश्चूर्णम्, एतत्सर्वं सममादाय खल्वे पिष्ट्वा च जम्बीरनिम्बुरसेन सह यामैक विमर्द्य रक्तिप्रमाणवटिका कृत्वा स्थापयेत् । अस्य रसस्य प्रत्यहमेकैका वटी, तीव्रसन्निपातज्वरे च वटीद्वय, वटीत्रयम्वा आर्द्रकस्वरसेन सह भक्षयेत् । रसोऽयमष्टविध ज्वर, अतिसार, जीर्णज्वरञ्च निश्चयेन विनिहन्ति, तथा आमवातादिकरोगानपि हन्ति ॥ १०४–१०६ ॥

आनन्दभैरवी वटिका—

विषं त्रिकटुकं गन्धं टङ्कणं मृतशुल्वकम् ।

धुस्तूरस्य च वीजानि हिङ्गुलं नवमं स्मृतम् ॥ १०७ ॥
एतानि समभागानि दिनैकं विजयाद्रवैः ।
मर्दयेत् चणकाभान्तु वटीश्चानन्दभैरवीम् ॥ १०८ ॥
भक्षयेच्च पिवेच्चानु रविमूलकषायकम् ।
सद्योऽपि हन्ति नो चित्रं सन्निपातं सुदारुणम् ।
शीताङ्गे सन्निपाते वा सामान्ये वा त्रिदोषजे ॥ १०९ ॥
धन्याकपिप्पलीशुण्ठी-कटुकीकण्टकारिका ।
पिप्पलीसंयुतं क्वाथं चतुर्गुञ्जा च पर्पटी ॥ ११० ॥
सन्निपातज्वरं हन्ति वटिकाऽऽनन्दभैरवी ।
मूलञ्च कटुरोहिण्याः समं विल्वं सजीरकम् ॥ १११ ॥
दध्ना पिष्टं पिवेच्चानु वटीं चानन्दभैरवीम् ।
सन्निपातातीसारघ्नीं पथ्यं शाकविवर्जितम् ॥ ११२ ॥
आनन्दभैरवीं पीत्वा क्वाथं वरुणसम्भवम् ।
पाययेदश्मरीं हन्ति सप्तरात्रात् न संशयः ॥ ११३ ॥
वागुजीसम्भवैस्तैलैर्वटीश्चानन्दभैरवीम् ।
लेहयेत् निष्कमात्रान्तु गलत्कुष्ठञ्च नाशयेत् ॥ ११४ ॥
दधिमस्तुसितालोड्रैः वटीश्चानन्दभैरवीम् ।
भक्षयेत् मूत्रकृच्छ्रार्त्तो यवक्षारं सिताऽन्वितम् ॥ ११५ ॥
गोदुग्धं क्वथितञ्चानु शीतलं मधुना पिवेत् ।
गुञ्जामूलं पिवेत् क्षीरैरनुपानं प्रशस्यते ॥ ११६ ॥
अनेन चानुपानेन वटिकाऽऽनन्दभैरवी ।
देया रुद्रजटालोड्रै सर्वमेहप्रशान्तये ॥ ११७ ॥

अथानन्दभैरवीरसनिर्माणविधिमाह विषमित्यादि—शुद्धवत्सनाभचूर्णं, शुण्ठी चूर्णं, मरिचचूर्णं, पिप्पलीचूर्णं, शुद्धगन्धकं, शुद्धसौभाग्यं, ताम्रभस्म, शुद्धधुस्तूरबीजचूर्णं, शुद्धहिङ्गुलञ्च, सर्वमेतत् पृथक् २ सममादाय खल्वे पिष्ट्वा दिनैकं विजयाम्बरसेन क्वाथेन वा सम्यगाप्लाव्य मर्दयेत्, ततश्च चणकसमानवटिकाः कृत्वा संगोप्य च काचपात्रे स्थापयेत्। अस्य रसस्य प्रत्यहमेवैका वटी त्रिकटुचूर्णसहितेनार्कमूलक्वाथेन सह सेविता दारुणं सन्निपातं निहन्ति, तथा शीताङ्गसन्निपात,

सामान्यसन्निपात, अथवा त्रिदोषजसन्निपातमपि निवारयति। चतुर्गुञ्जपरिमिता रसपर्पटी, आनन्दभैरवी वटी वा वन्याक–कुस्तुम्बुरू , पिप्पली, शुण्ठी, कटुकी, कण्टकारिका, पिप्पली, एतेषा क्वाथें स्सह सेविता सन्निपातज्वर हन्ति, आनन्दभैरवी वटी ससेव्य तदनु कटुरोहिण्या =कटुक्या मूलचूर्ण, विल्वं, भृष्टजीरकञ्च, एतत् सर्वं सममादाय दध्ना पिष्ट्वा पिवेत्, तेन सन्निपात, अतिसारञ्च नाशयति, शाकविवर्जितञ्च पथ्य देयम् , आनन्दभैरवीं ससेव्य तदनु वरूणक्वाथपानेन सप्तदिवसाभ्यन्तर एक निश्चयेनाश्मरीरोगो नश्यति, निष्कमात्रा ( ४ मा० ) आनन्दभैरवी वटी वाकुचीतैलेन सह सेविता गलत्कुष्ठमपाकरोति, आनन्दभैरवीं वटी दधिजलेन सितया मधुना च सह ससेव्य मूत्रकृच्छ्ररोगान्नरो विमुच्यते तथा तदनु उष्णगोदुग्धं स्वाङ्गशीतं कृत्वा तस्मिन् यवक्षारं, मधु, शर्कराञ्च निक्षिप्य पिवेत्तेन मूत्रकृच्छ्ररोगः सशमनमेति, तथा चानन्दभैरवीं दुग्धपिष्टेन गुञ्जामूलेन तथा मधुमिश्रितरुद्रजटाचूर्णेन च सह भक्षयेत् तेन सर्वे प्रमेहा नश्यन्ति ॥ १०७–११७ ॥

प्राणेश्वरो रस —

शुद्धसूतं तथा गन्धं सूतार्द्धं विषसंयुतम् ।
समं तत् मर्दयेत् ताल–मूलीनीरैस्त्र्यहं बुधः ॥ ११८ ॥
पूरयेत् कूपिकाऽन्तश्च सन्निरुध्य विशोषयेत् ।
सप्तभिर्मृत्तिकावस्त्रै वेष्टयित्वा तु शोधयेत् ॥ ११९ ॥
पुटेत् कुम्भीप्रमाणेन स्वाङ्गशीतं समुद्धरेत् ।
गृहीत्वा कूपिकायाश्च मर्दयेच्च दिनं ततः ॥ १२० ॥
अजाजी जीरकं हिङ्गु–सर्जिकाटङ्कणैर्युतम् ।
गुग्गुलुः पञ्चलवणं यवक्षारो यमानिका ॥ १२१ ॥
मरिच पिप्पली चैव प्रत्येकञ्च समांशतः ।
एषां कषायेण पुनर्भावयेत् सप्तधाऽऽतपे ॥ १२२ ॥
नागवल्लीदलयुतं पञ्चगुञ्जं रसेश्वरम् ।
दद्यात् नवज्वरे तीव्रे कोष्णं वारि पिवेदनु ॥ १२३ ॥
प्राणेश्वररसो नाम्ना सन्निपातप्रकोपजित् ।
शीतज्वरे दाहपूर्वे गुल्मे शूले त्रिदोषजे ॥ १२४ ॥
वाञ्छितं भोजनं दद्यात् कुर्याच्चन्दनलेपनम् ।

**गुञ्जाचतुष्टयश्चास्य नवज्वरहरं परम् ।**
**ज्वराङ्कुशः सन्निपात भैरवोऽयं प्रकाशितः ॥ १२७ ॥**

अथ सन्निपातभैरवरसनिर्माणमाह ताम्रमित्यादि—ताम्रभस्म, शुद्धगन्धक, शुद्धपारद, शुद्धश्वेतगुञ्जाचूर्ण, मरिचचूर्ण, पूतना-हरीतकीचूर्ण, मत्स्यपित्त, शुद्ध-जयपालवीजचूर्ण, एतान् पृथक् २ समभागेनादाय पूर्वं पारदगन्धकयो कज्जली कृत्वा शेषद्रव्याणि सम्मेल्य दृढ पिष्ट्वा काचपात्रे स्थापयेत्। अस्य रसस्य गुञ्जा-चतुष्टय नवज्वर हन्ति । अथ सन्निपातभैरवरसो ज्वरनाशार्थं विशेषेण प्रदीयते । अस्य यथारोगं यथावयश्च वीक्ष्य मात्रा प्रकल्पयेत् ॥ १२६–१२७ ॥

शीतभञ्जीरस —

**रसो हिङ्गुलगन्धश्च जैपालं सम्मितं त्रिभिः ।**
**दन्तीक्वाथेन संमर्द्य रसो ज्वरहरः परः ॥ १२८ ॥**
**आर्द्रकस्य रसेनैव दापयेद्रक्तिकाद्वयम् ।**
**नवज्वरं महाघोरं नाशयेद् याममात्रतः ॥ १२९ ॥**
**शर्करादधिभक्तञ्च पथ्यं देयं प्रयत्नत ।**
**शीततोयं पिबेच्चानु इक्षुमुद्गरसो हितः ।**
**शीतभञ्जीरसो नाम सर्वज्वरकुलान्तकः ॥ १३० ॥**

अथ शीतभञ्जीरसनिर्माणविधिमाह रस इत्यादि–शुद्धपारद ( १ तो० ), शुद्ध-हिङ्गुल ( १ तो० ), शुद्धगन्धक ( १ तो० ), त्रिभि सम शुद्धजयपालवीजाना चूर्ण ( ३ तो० ) पूर्व रसगन्धकयो खल्वे कज्जलीं कृत्वा शेप द्रव्यजातं निक्षिप्य मर्दयेत् । ततश्च दन्तीमूलस्वरसेन क्वाथेन वा सह दिनैकं विमर्द्य द्विरक्तिपरिमित-वटिका कृत्वा काचपात्रे स्थापयेत् । रसोऽय प्रत्यहं द्विरक्तिमात्रया आर्द्रकस्वरसेन सह सेवितो महाघोर नवज्वरवेग यामाभ्य तरे न्यून करोति । पथ्ये शर्करादधि-मिश्रितमौदनं देयम्, तथा तृषानिवारणार्थं तापनिवृत्त्यर्थम्वा शीतल वारि, इक्षुस्वरस, मुद्गयूषञ्च पाययेत् । अथ शीतभञ्जीनामकरसो यथानुपानेन सर्वज्व-रनाशक ॥ १२८–१३० ॥

उन्मत्तरस —

**रसं गन्धञ्च तुल्यांशं धुस्तूरफलजैर्द्रवैः ।**

मर्दयेत् दिनमेकन्तु तुल्यं त्रिकटुकं क्षिपेत् ॥ १३१ ॥
उन्मत्ताख्यो रसो नाम नस्ये स्यात् सन्निपातजित् ।
सन्निपातार्णवे मग्नं योऽभ्युद्धरति रोगिणम् ।
कस्तेन न कृतो धर्मः काञ्च पूजां न सोऽर्हति ? ॥ १३२ ॥

अथोन्मत्तरसनिर्माणविधिमाह रसमित्यादि—शुद्धपारद, शुद्धगन्धक, प्रत्येकं समभागमादाय खल्वे कज्जलीं कृत्वा धुस्तूरफलक्वाथेन दिनैकं दृढं विमर्द्य पारदगन्धकतुल्यं त्रिकटुचूर्णं सम्मेल्य काचपात्रे स्थापयेत्। रसोऽयमुन्मत्ताख्यो नस्ययोगेन सन्निपातं तज्जन्यमूर्च्छाञ्च हन्ति। अथ सन्निपातचिकित्साफलमाह—यो दयालुश्चिकित्सकः सन्निपातसमुद्रमग्नं नरं तारयति तेन कस्य धर्मस्य सेवनं पालनं वा न कृतमपि तु सर्वधर्मसेवनं कृतमेव, तथा काञ्च पूजां स नार्हति, अपि तु सर्वविधपूजनीयः ॥ १३१–१३२ ॥

मृतसञ्जीवनो रसः—

म्लेच्छस्य भागाश्चत्वारो जैपालस्य त्रयो मताः ।
द्वौ भागौ टङ्कणस्यैव भागैकममृतस्य च ॥ १३३ ॥
तत्सर्वं मर्दयेत् श्लक्ष्णं शुष्कं यामं भिषग्वरः ।
शृङ्गवेराम्बुना देयो व्योपचित्रकसैन्धवैः ॥ १३४ ॥
माषद्वयमितस्तापं हरत्येष विनिश्चयः ।
घनसारेण सारेण चन्दनेन विलेपनम् ॥ १३५ ॥
विदध्यात् कांस्यपात्रे च सेचयेद्रोगिणं भिषक् ।
शाल्यन्नं तक्रसहितं भोजयेदिक्षुसंयुतम् ॥ १३६ ॥
सन्निपाते महाघोरे त्रिदोषे विषमज्वरे ।
आमवाते वातशूले गुल्मे प्लीहि जलोदरे ॥ १३७ ॥
शीतपूर्वे दाहपूर्वे विषमे सततज्वरे ।
अग्निमान्द्ये च वाते च प्रयोज्योऽयं रसेश्वरः ।
मृतसञ्जीवनो नाम विख्यातोऽयं रसायने ॥ १३८ ॥

अथ मृतसञ्जीवनरसनिर्माणमाह म्लेच्छस्येत्यादि—ताम्रभस्म (४ तो०), शुद्धजयपालचूर्ण (३ तो०), शुद्धटङ्कण (२ तो०), शुद्धवत्सनाभचूर्ण (१ तो०),

एतत् सर्वं खल्वे निक्षिप्य यामैकं सूक्ष्मं विचूर्ण्य काचपात्रे स्थापयेत् । अस्य रसस्य रक्तिद्वयं तथा त्रिकटुचित्रकसैन्धवैस्सह सम्मिलितं माषकद्वयं कृत्वा आर्द्रकस्वरसेन सह देयम् । तेन निश्चयेन ज्वरतापं न्यूनं करोति । यदि च रोगिणस्तापाधिक्यं स्यात्तदा तस्य शिरसि सर्वाङ्गे वा कर्पूरेण सह पिष्टस्य चन्दनपङ्कस्य लेपः कार्यः, कांस्यपात्रे च रोगिणं स्नापयेत् । षष्टिकौदनं तक्रसहितमिक्षुरससहितञ्च भोजयेत् । अयं रसेश्वरो दारुणे सन्निपाते, त्रिदोषप्रकोपयुक्ते ज्वरे, विषमज्वरे, आमवाते, वातिकशूले, गुल्मरोगे, प्लीहवृद्धौ, जलोदरे, शीतपूर्वज्वरे, दाहज्वरे, विषमज्वरे, सततज्वरे, अग्निमान्द्ये, वातविकारे च अनुपानभेदेन प्रयोज्यः । तथाऽयं मृतसञ्जीवननाम्ना रसायनौषधेषु प्रख्यातः ॥ १३३–१३८ ॥

स्वल्पवडवानलरसः —

**शुद्धताम्रस्य भागैकं मरिचस्य तथैव च ।**
**विषं तत्तुल्यकं दद्यात् तत्सर्वं श्लक्ष्णचूर्णितम् १३९ ॥**
**लाङ्गलीरससंयुक्तं तत्सर्वं पुटके पचेत् ।**
**रक्तिकाद्वितयं वाऽपि त्रितयं वा प्रकल्पयेत् ॥ १४० ॥**
**दोषे व्योषसमायुक्तो त्रिदोषशमनो भवेत् ।**
**भक्षयेत् पवने चोग्रे वडवानलसंज्ञितम् ॥ १४१ ॥**

अथ स्वल्पवडवानलरसनिर्माणविधिमाह शुद्धेत्यादि—ताम्रभस्म ( १ तो० ), मरिचचूर्णं ( १ तो० ), शुद्धवत्सनाभचूर्णं ( १ तो० ), एतत् सर्वं खल्वे विमर्द्य कलिहारीस्वरसेन क्वाथेन वा सह दृढं पिष्ट्वा सम्पुटस्थं गजपुटे पचेत् । वडवानलनामकोऽयं रसो यथारोगं यथाबलं रक्तिमितो रक्तिद्वयमितो रक्तित्रयमितो वा त्रिकटुचूर्णेन सह सेवितस्त्रिदोषं हन्ति, तथा वाताधिक्यरोगेऽपि विशेषेण हितकरः प्रायेणास्य मात्रा रक्तिकार्द्धादारभ्य रक्तिद्वयमिता पर्याप्ता, यत्र तु रक्तित्रयपर्यन्तं मात्राकथनं कृतम्, तत्तु त्रिकटुचूर्णसम्मिलिताभिप्रायेण ज्ञेयम् ॥ १३९–१४१ ॥

बृहद्वडवानलो रसः —

**सूतकं गन्धकञ्चैव हरितालं मनः शिला ।**
**अभ्रकं वत्सनाभञ्च दारु जङ्गमजं विषम् ॥ १४२ ॥**
**जैपालात् सार्द्धशतकं सर्वं सञ्चूर्ण्य मर्दयेत् ।**

मात्स्यमाहिषमायूर-च्छागपित्तैर्विभावयेत् ॥ १४३ ॥
वटिकां शीततोयेन कुर्य्यात् गुञ्जाप्रमाणतः ।
वडवानलनामाऽयं नारिकेलजलेन वै ।
भक्षयेत् सन्निपातार्त्तो मुक्तस्तस्मात् सुखी भवेत् ॥ १४४ ॥

अथ वृहद्वडवानलरसनिर्माणविधिमाह सूतकमित्यादि—शुद्धपारद (१तो०), शुद्धगन्धक (१तो०), शुद्ध हरितालक (१तो०), शुद्धमन शिला (१तो०), अभ्रकभस्म-(१तो०), शुद्ध वत्सनाभचूर्ण (१तो०), शुद्धदारूजविष (१तो०), शुद्ध सर्पविषं (१तो०), सार्द्धशतकाना शुद्धजयपालवीजाना चूर्णम्। प्राक् पारदगन्धकयो कज्जलीं कृत्वा शेषाणि द्रव्याणि निक्षिप्य सञ्चूर्ण्य च मात्स्यमाहिषमायूरच्छागपित्तै पृथक् ? दिनैक विभावयेत्। ततश्च रक्तिपरिमिता वटिका कृत्वा काचपात्रे स्थापयेत्। अस्य रसस्य प्रत्यहमेकैका वटी शीतलजलेन सह सेवयेत्। तथा नारिकेलोदकेन सह सेवितोऽय रस- सन्निपातज्वर मूर्च्छाञ्च नाशयति ॥ १४२-१४४ ॥

सूचिकाभरणो रस —

रसगन्धकनागञ्च विष स्थावरजङ्गमम् ।
मात्स्यवाराहमायूर-च्छागपित्तैर्विभावयेत् ॥ १४५ ॥
सूचिकाभरणो नाम भैरवेण प्रकीर्त्तित. ।
सूचिकाग्रेण दातव्य· सन्निपातनिवर्हणः ॥ १४६ ॥

अथ सूचिकाभरणरसस्य निर्माणविधिमाह रसेत्यादि—शुद्धपारद (१ तो शुद्धगन्धक (१ तो० ), नागभस्म (१ तो० ), शुद्धवत्सनाभचूर्ण (१ तो शुद्ध सर्पविषं (१ तो० ), पूर्वं रसगन्धकयो कज्जलीं कृत्वा सर्वाणि द्रव सम्मेल्य मर्दयेत्। ततश्च मात्स्यवाराहमायूरच्छागपित्तै पृथक् २ दिनैक यित्वा सशोष्य च काचपात्रे स्थापयेत्। रसोऽय सूचिकाभरणो नाम भैरवाचार्येण प्रकीर्तित । अस्य रसस्य सूचिकाग्रभागपरिमिता मात्रा यथानुपानेन सह सन्निपातादिज्वरनाशार्थं प्रयोजयेत् ॥ १४५-१४६ ॥

पञ्चाननरस —

शम्भो कण्ठविभूषणं समरिच दैत्येन्द्ररक्तं रवि
पक्षौ सागरलोचन शशियुग भागोऽर्कसङ्ख्यान्वित ।

**खल्ले तत् परिमर्दितं रविजलैर्गुञ्जैकमात्रं ददेत्**
**सिंहोऽयं ज्वरदन्तिदर्पदलनः पञ्चाननाख्यो रसः ॥ १४७ ॥**

अथ पञ्चाननरसनिर्माणमाह शम्भोरित्यादि—शम्भो कण्ठविभूषणं = शुद्धवत्सनाभचूर्णं ( सर्पविषमितिकेचित् ) पक्षौ = ( २ तो० ), मरिचचूर्णं सागरं = ( ४ तो० ), दैत्येन्द्र –शुद्धगन्धक लोचन ( २ तो० ) या ( ३ तो० ), रक्त— शुद्धहिङ्गुल ( १ तो० ), ताम्रभस्म २ तो० ), इत्यमर्कसख्यान्वितानि—द्वादशतोलकानि जातानि सर्वाणि द्रव्याणि खल्वे निक्षिप्य विमर्दयेत् । ततश्च शुद्धमदारदुग्धेन सह पिष्ट्वा सशोष्य च काचपात्रे स्थापयेत् । रसोऽय गुञ्जपरिमित सेवितो गजरूपज्वरनाशाय सिंह एव, अतो नाम्ना पञ्चाननरस ख्यात ॥ १४७ ॥

त्रिदोषनीहारविनाशसूर्य्यो रस —

**रसेन गन्धं द्विगुणं कृशानो रसैर्विमर्द्याष्टदिनानि घर्मे ।**
**रसाष्टभागन्त्वमृतञ्च दद्यात् विमर्दयेत् वाह्निरसेन किञ्चित् ॥१४८॥**
**पित्तैस्तु सम्भावित एष देय' त्रिदोषनीहारविनाशसूर्य्यः ॥ १४६ ॥**

अथ त्रिदोषनीहारविनाशसूर्यरसमाह रसेनेत्यादि—शुद्धपारद ( १ तो० ), शुद्धगन्धक ( २ तो० ), पूर्वमुभयो कज्जलीं कृत्वा कृशानोश्चित्रकस्य मूलस्वरसेन क्वाथेन वा सम्यगाप्लाव्य अष्टदिनपर्यन्त निदाघे मर्दयेत् , ततस्तस्मिन् पारदस्यापेक्षयाष्टमाश शुद्धवत्सनाभचूर्णं ( ०॥ मा० ) दत्वा चित्रकमूलरसेन पेषयेत्, ततश्च पञ्चपित्तैरपि भावयित्वा संशोष्य च काचपात्रे स्थापयेत् । रसोऽय रक्तिकैकमात्रया त्रिदोषज्वरे सन्निपाते च देय ।

पित्त पञ्चविध मत्स्यगवाश्वरूरुवर्हिजम् ॥ १४८–१४९ ।'

रसराजेन्द्र रस —

**पलं शुद्धस्य सूतस्य पलं ताम्रमयस्तथा ।**
**अभ्रं नागं पलं वङ्गं पलं गन्धकतालकम् ॥ १५० ॥**
**पलं शुद्धविषं चूर्णं सर्वमेकत्र कारयेत् ।**
**मर्दयेत् काकमाच्याश्च आर्द्रकस्य रसेन च ॥ १५१ ॥**
**मात्स्यवाराहमायूर-च्छागमाहिषपित्तकैः ।**
**मर्दयेद् भिन्नभिन्नञ्च त्रिकटोरम्बुभिस्तथा ॥ १५२ ॥**

सिद्धोऽय रसराजेन्द्रो धन्वन्तरिसुसंस्कृत. ।
गुञ्जामात्रं रस दद्यात् सुरसारससयुतम ॥ १५३ ॥
मेघवारिप्रवाहेण धारित वारि मस्तके ।
अनिवारो यदा दाहस्तदा देया च शर्करा ।
भोजन दधिसयुक्त वारमेकन्तु दापयेत् ॥ १५४ ॥
ईश्वरेण हत काम. केशवेन च दानवः ।
पावकेन यथा शीतमनेन च तथा ज्वरः ॥ १५५ ॥

अथ रसराजेन्द्ररसनिर्माणमाह पलमित्यादि–शुद्धपारद ( १ पल ), ताम्रभस्म ( १ प० ), लौहभस्म ( १ प० ), अभ्रकभस्म ( १ प० ), नागभस्म ( १ प० ), वङ्गभस्म ( १ प० ), शुद्धगन्धक ( १ प० ), शुद्धहरितालचूर्ण ( १ प० ) शुद्धवत्सनाभचूर्ण ( १ प० ) पूर्वं पारदगन्धकयो कज्जलीं कृत्वा तत शेषद्रव्याणि निक्षिप्य मर्दयेत् । तदनु काकमाच्या स्वरसेन दिनैक मर्दयेत्, तथैव आर्द्रक स्वरसेन दिनैकं तथैव मात्स्यवाराहमायूरच्छागमाहिषपित्तैरपि पृथक् २ दिनैक विमर्द्य तथा त्रिकटुक्काथेनापि विमर्द्य रक्तिपरिमिता वटी कृत्वा काचपात्रे स्थापयेत् । अस्य रसस्य नाम रसराजेन्द्रस्तथा पूर्वं धन्वन्तरिणा निर्मित । रसोऽय प्रत्यहं तुलसीस्वरसेन सह गुञ्जामात्रया ज्वरनाशार्थं देय । रोगिणो मूर्ध्नि मेघवर्षणधारावज्जलसेचन कर्तव्यम् । यदि च दाहनिवृत्ति र्न स्यात्तदा वारमेक शर्करादधिसयुक्त भोजन दद्यात् । यथा ईश्वरेण शिवेन कामदेवो हत केशवेन–विष्णुना–कृष्णेन वा दानवो हत, तथा वह्निना च शैत्य नष्टम्, तथैव रसेनानेन ज्वरं नश्यति ॥ १५०–१५५ ॥

मृतसञ्जीवनो रस —

शुद्धसूत द्विधा गन्धं खल्ले तत् कज्जलीकृतम् ।
अभ्रलौहकयोर्भस्म ताम्रभस्म समं समम् ॥ १५६ ॥
विषं तालं वराटञ्च शिलाहिङ्गुलचित्रकान् ।
हस्तिशुण्डी चातिविषा त्र्यूषणं हेममाक्षिकम् ॥ १५७ ॥
चूर्णं विमर्दयेद् द्रावैरार्द्रकस्य दिनत्रयम् ।
निर्गुण्डीविजयाद्रावैस्त्रिदिनं मर्दयेत् पुन ॥ १५८ ॥

काचकूप्यां निवेश्याथ वालुकायन्त्रके पचेत् ।
द्वियामान्ते समुद्धृत्य मर्दयेदार्द्रकैर्द्रवैः ॥ १५९ ॥
मृतसञ्जीवनो नाम रसोऽयं शङ्करोदितः ।
मृतोऽपि सन्निपातार्त्तो जीवत्येव न संशयः ॥ १६० ॥

अथ मृतसञ्जीवनरसनिर्माणविधिमाह शुद्धसूतमित्यादि—शुद्धपारद (१ तो०), शुद्धगन्धक ( २ तो० ), उभयो कज्जलीं कृत्वा तत्र अभ्रकभस्म ( २ तो० ), लौहभस्म ( २ तो० ), ताम्रभस्म ( २ तो० ), शुद्धवत्सनाभचूर्ण ( २ तो० ), शुद्धहरितालक ( २ तो० ), कपर्दभस्म ( २ तो० ), शुद्धमनःशिला ( २ तो० ), शुद्ध हिङ्गुल ( २ तो० ), चित्रकचूर्ण ( २ तो० ), हस्तिशुण्डीचूर्ण ( २ तो० ), शुद्धातीविषाचूर्ण ( २ तो० ), त्रिकटुचूर्ण प्रत्येक तोलकद्वय ( २ तो० ), स्वर्णमाक्षिकभस्म ( २ तो० ), इमानि द्रव्याणि निक्षिप्य दिनत्रयमार्द्रकस्वरसेनाप्लाव्य मर्दयेत् । तथैव त्रिदिनं निर्गुण्डीपत्रस्वरसेनाप्लाव्य मर्दयेत् । तथैव च दिनत्रय विजयास्वरसेन क्वाथेन वा सम्यगाप्लाव्य मर्दयेत् । ततश्च संशुष्कं कृत्वा स्निग्धमृत्तिकापङ्कलिप्तवस्त्रखण्डैः सप्तवार परिलेपिताया काचकूप्या स्निग्धकर्गलनालिकासाहाय्येन निक्षिप्य वालुकायन्त्रे द्वियाम पचेत् । स्वाङ्गशीतमवतार्य कूपिकां विभिद्य च काचकणविवर्जितं गृहीत्वा खल्वे चार्द्रकस्वरसेन विमर्द्य रक्तिपरिमितवटिका कृत्वा संशोष्य च काचपात्रे स्थापयेत्। अयं शङ्करभगवता प्रोक्तो मृतसञ्जीवननामको रसः सन्निपातजन्यमूर्च्छया मृतवत् सुप्तं पुरुषं प्रबोधयति । अस्य मात्रा तु रक्तिमिता वटी आर्द्रकस्वरसमनुपान्या देया ॥ १५९–१६० ॥

गन्धककज्जलीविधि —

कण्टकारी सिन्धुवारस्तथा नाटाकरञ्जकम् ।
अमीषां रसमादाय कृत्वा खर्परखण्डके ॥ १६१ ॥
प्रक्षिप्य गन्धकं तत्र ज्वालां मृद्वग्निना ददेत् ।
गन्धके स्नेहतापन्ने पारदं तत्समं क्षिपेत् ॥ १६२ ॥
मिश्रीकृत्य ततो द्वाभ्यां द्रवं तमवतारयेत् ।
आमर्दयेत् तथा तन्तु यथा स्यात् कज्जलप्रभम् ॥ १६३ ॥
ततस्तु रक्तिकामस्य जीरकस्य च माषकम् ।

माषैकं लवणस्यापि पर्णे कृत्वा प्रदापयेत् ॥ १६४ ॥
ज्वरे त्रिदोषजे घोरे जलमुष्णं पिबेदनु ।
छर्द्यां शर्करया दद्यात् सामे दद्यात् तथा गुडम् ॥ १६५ ॥
क्षये च च्छागदुग्ध स्यादनुपानं प्रयोजितम् ।
रक्तातिसारे कुटज-मूलवल्कलजं रसम् ॥ १६६ ॥
रक्तक्षये तथा दद्यादुडुम्बरभव रसम् ।
सर्वव्याधिहरश्चाय गन्धकः कज्जलीकृतः ।
आयुर्वृद्धिकरश्चाय मृतश्चापि प्रबोधयेत् ॥ १६७ ॥

अथ गन्धककज्जलीनिर्माणविधिमाह कण्टकारीत्यादि–कण्टकारी–क्षुद्रा ( छोटी कटेली ), सिन्धुवार=निर्गुण्डी, नाटाकरञ्जक एतेषा समं २ आर्द्रभागमादाय रसञ्च निष्कास्य मृच्छरावे ( लघुमृण्मयहण्डिकाखण्डे वा ) निक्षिप्य चुल्या खर्पर विन्यस्य रसे च शुद्ध गन्धकं प्रक्षिप्य मन्दाग्निं दद्यात् । विद्रुत गन्धकमालोक्य गन्धकसमान शुद्धपारद क्षिप्त्वा द्वयोर्मिश्रण कृत्वा अवतारयेत् । ततश्च खल्ले तेनैव-रसेन सह स्निग्धा कज्जलीं कृत्वा स्थापयेत् । इमा पारदगन्धकयो कज्जली रक्ति-परिमिता माषकपरिमितभृष्टजीरकचूर्णेन तथा माषकपरिमितसैन्धवलवणेन च सह ताम्बूलपत्रमध्ये निक्षिप्य दारुणे त्रिदोषज्वरे सेवयेत् ।तदुपरि च कोष्ण जल पिबेत् । तेन सन्निपातावेगो न्यूनो भवति । छर्दियुक्तज्वरे शर्करया सह तथा सामज्वरे गुडेन सह दद्यात् । क्षयरोगे च अजाक्षीरानुपानेन दद्यात् । रक्तातिसारे कुटज-मूलत्वच क्वाथेन तथा अर्शोभगन्दरादिजन्यरक्तक्षये उदुम्वरस्वरसेन सह दद्यात् ।

इय गन्धककज्जली यथानुपाने सह सेविता सर्वरोगान्निवारयेत् । तथेयमायुषो वृद्धिं करोति । तथा सन्निपातादिमूर्च्छाया मृतवत् सुप्तञ्च नर प्रबोधयति । येषु रसेषु पित्तभावना प्रदीयते तेषामुपयोगसमये रोगिण शीतलजलस्नानं, शीतोदकपूरितपात्रप्रवेश , शीताहारादिकं कर्म च समाचरेत् ॥ १६१–१६७ ॥

पित्तभावितौषधप्रयोगे उपचार —

ये रसाः पित्तसयुक्ताः प्रोक्ताः सर्वत्र शम्भुना ।
जलसेकावगाहैश्च बलिनस्ते तु नान्यथा ।
यथालाभेन पित्तेन रसाः सर्वे भवन्ति हि ॥ १६८ ॥

अथ पित्तभावितौषप्रयोगे विशेषोपचारमाह ये रसा इत्यादि—श्रीशम्भुना ये रसा —रसप्रयोगा , पित्तसयुक्ता —पित्तभावनाविशिष्टा प्रोक्तास्तेषा सेवनसमये रुजाभिभूतपुरुषस्य शरीरे विशेषेण मूर्ध्नि जलसेक , तथा शीतलजलावगाहनञ्च कार्यम्, इत्थं ते रसा बलिनो—विशेषप्रभावोत्पादका भवन्ति । प्राय सर्वे रसा यथासम्भवलब्धपित्तैर्भावयित्वा निर्मापणीया ॥

पित्तवर्गो यथा—

पित्त पञ्चविध मत्स्यगवाश्वरुरुबर्हिजम् ॥ इति ॥ १६८ ॥

वेतालो रस —

**रस गन्धं विषञ्चैव मरिचाऽऽल समांशिकम् ।**
**शिलायां मर्दयेत् तावद् यावज्जायेत कज्जलम् ॥ १६९ ॥**
**गुञ्जामात्रं प्रयोक्तव्य हरेद्द्वादशसंज्ञकम् ।**
**साध्यासाध्यं निहन्त्याशु सन्निपात सुदारुणम् ॥ १७० ॥**
**दन्तपङ्क्तिर्दृढा यस्य लोचने भ्रान्ततारके ।**
**चलिते चेन्द्रियग्रामे वेतालं विनियोजयेत् ॥ १७१ ॥**
**म्लानेषु लिप्तदेहेषु मोहग्रस्तेषु देहिषु ।**
**दातुमर्हति वेताल यमदूतनिवारकम् ॥ १७२ ॥**

अथ वेतालरसनिर्माणविधिमाह रसमित्यादि—शुद्धपारद ( १ तो० ), शुद्धगन्धक ( १ तो० ), शुद्धवत्सनाभचूर्ण ( १ तो० ), मरिचचूर्ण ( १ तो० ), शुद्धहरिताल ( १ तो० ), प्राक् पारदगन्धकयो कज्जलीं कृत्वा तदनु शेषद्रव्याणिनिक्षिप्य सम्यक् पिष्ट्वा च काचपात्रे संस्थापयेत् । वेतालनामकोऽय रसो यथानुपानै सह रक्तिकैकमात्रया प्रत्यहं सेवित साध्यमसाध्य वा द्वादशसञ्ज्ञक सन्निपात निहन्ति । सन्निपातग्रस्तस्य यस्य रोगिणो दशनपङ्क्ति परस्पर ससक्ता भवेत्, नेत्रतारके स्वस्थानाद्भ्रष्टे स्याताम्, तथा कर्मेन्द्रियाणि विशेषेण ज्ञानेन्द्रियाणि च स्वस्वविषयग्रहणशक्तिरहितानि स्यु , तत्र वेतालरसं प्रयोजयेत् । एव स्वशक्तिनाशेन निष्प्रभेषु, प्रलेपकज्वरेण (१)सार्द्रगात्रेषु मूर्छितेषु च रोगिषु यमदूतनिवारकं वेताल दातुमर्हति ॥ १६९–१७२ ॥

---

(१)तल्लक्षण यथा—

प्रलिम्पन्निव गात्राणि घर्मेण गौरवेण च । मन्दज्वरविलेपी च सशीत स्यात्प्रलेपक ॥

चन्द्रशेखरो रसः—

शुद्धसूतं समं गन्धं मरिचं टङ्कणं तथा ।
चतुस्तुल्या शिला योज्या मत्स्यपित्तेन भावयेत् ॥ १७३ ॥
त्रिदिनं मर्दयेत् तेन रसोऽयं चन्द्रशेखरः ।
द्विगुञ्जमार्द्रकद्रावैर्देयं शीतोदकं पुनः ॥ १७४ ॥
तक्रभक्तञ्च वृन्ताकं भिषक् तत्र प्रयोजयेत् ।
त्रिदिनात् श्लेष्मपित्तोत्थमत्युग्रं नाशयेत् ज्वरम् ॥ १७५ ॥

अथ चन्द्रशेखररसनिर्माणमाह शुद्धसूतमित्यादि—शुद्धपारद (१ तो०), शुद्धगन्धक (१ तो०), मरिचचूर्ण (१ तो०), शुद्धटङ्कण (१ तो०), चतुस्तुल्या शुद्धमनःशिला (४ तो०), पूर्वं पारदगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य मत्स्यपित्तेन भावयित्वा त्रिदिनं मर्दयेत् । ततश्च यथोक्तं च काचपात्रे स्थापयेत् । अयं चन्द्रशेखरनामको रसो रक्तिकामारभ्य द्विरक्तिपर्यन्तं आर्द्रकस्वरसेन सह सेवयितव्यः । तदुपरि शीतलं जलं पिबेत् । पथ्ये च तक्रौदनं, वृन्ताकशाकञ्च प्रयोजयेत् । इत्थं त्रिदिवसाभ्यन्तर एव श्लेष्मजं पित्तजं, द्वन्द्वजन्यं, अत्युग्रं नानारूपञ्च ज्वरं विनिहन्ति ॥ १७३-१७५ ॥

कस्तूरीभैरवो रसः—

हिङ्गुलञ्च विषं टङ्कः जातिकोषफलं तथा ।
मरिचं पिप्पली चैव कस्तूरी च समांशिका ।
रक्तिद्वयं ततः खादेत् सन्निपाते सुदारुणे ॥ १७६ ॥

अथ कस्तूरीभैरवरसनिर्माणविधिमाह हिङ्गुलमित्यादि—शुद्धहिङ्गुलं, शुद्धवत्सनाभचूर्णं, शुद्धटङ्कणं, जातिकोषफलं ( जातिकोषचूर्णं जातीफलचूर्णञ्च ), जातीफलचूर्णं, मरिचचूर्णं, पिप्पलीचूर्णं, कस्तूरीं, प्रत्येकं समभागमादाय खल्वे निक्षिप्य जलेन सह दृढं पिष्ट्वा रक्तिद्वयपरिमितवटीः कृत्वा काचपात्रे स्थापयेत् । प्रत्यहमेकैका वटी दारुणे सन्निपाते सेवयेत् । अनेन ज्वरवेगो न्यूनो भवति ॥ १७६ ॥

बृहत्कस्तूरीभैरवो रसः—

सूतं वङ्गं खर्परञ्च कस्तूरी स्वर्णतारके ।
एतेषां समभागेन कर्षमेकं पृथक् पृथक् ॥ १७७ ॥

मृतं कातं पलं देयं हेमसारं द्विकार्षिकम् ।
रसभस्म लवङ्गञ्च जातिकाफलमेव च ॥ १७८ ॥
वक्ष्यमाणौषधैर्भाव्यं प्रत्येकं दिनसप्तकम् ।
द्रोणपुष्परसर्वाऽपि नागवल्ल्या रसेन च ॥ १७९ ॥
दत्त्वा द्विचन्द्रत्रिकटू यत्नतो वटिकां चरेत् ।
वातात्मके सन्निपाते महाश्लेष्मगदेषु च ॥ १८० ॥
त्रिदोषजनिते घोरे सन्निपाते सुदारुणे ।
नष्टगर्भे नष्टशुक्रे प्रमेहे विषमज्वरे ।। १८१ ।।
कासे श्वासे क्षये गुल्मे महाशोथे महागदे ।
स्त्रीणां शतं गच्छतश्च न च शुक्रक्षयो भवेत् ।
एतान् सर्वान् निहन्त्याशु भास्करस्तिमिरं यथा ॥ १८२ ॥

अथ बृहत्कस्तूरीभैरवरसनिर्माणविधिमाह मृतमित्यादि—वङ्गभस्म ( १ क० ), शुद्धखर्परभस्म ( १ क० ), कस्तूरी ( १ क० ), स्वर्णभस्म ( १ क० ), रजतभस्म ( १ क० ), कान्तलौहभस्म ( १ पल ), स्वर्णमाक्षिकभस्म ( १ क० ), रससिन्दूरं ( २ क० ), लवङ्गचूर्णं ( २ क० ), जातीफलचूर्णं ( २ क० ), इमानि द्रव्याणि खल्वे विचूर्ण्य द्रोणपुष्पीस्वरसेन सप्तदिन भावयेत् । तथैव ताम्बूलपत्रस्वरसेन सप्तदिन क्रमशो भावयेत् । तत कर्पूर द्विकर्ष शुण्ठीचूर्ण द्विकर्ष, मरिचचूर्ण द्विकर्ष, पिप्पलीचूर्ण द्विकर्ष दत्वा यथाविधि रक्तिपरिमितवटिका कृत्वा काचपात्रे स्थापयेत् । रसोऽय वातिकज्वरे, सन्निपातज्वरे, कफरोगेषु, त्रिदोषजे दारुणे सन्निपातज्वरे, नष्टगर्भे, शुक्रहीनपुरुषे, सर्वप्रमेहे, विषमज्वरे, कासे, श्वासे, क्षये, गुल्मे, शोथरोगे, अर्शोरोगे, च प्रयोज्य । अस्य प्रभावेण पुमान् ललनाशत द्रावितु शक्नोति । रसोऽयमुपयुक्तव्याधीन् शीघ्र निहन्ति यथा सूर्यस्तिमिरम् , विशेषेण रसोऽय कफवातपित्ते कण्ठावरोधनविधौ, नाडीक्षये, सर्वाङ्गशीतदशाया च प्रयोज्यस्तेन पुरुष पुन स्मृतिमाप्नोति ॥ १७७–१८२ ॥

अन्यबृहत्कस्तूरीभैरवो रस —

मृगमदशशिसूर्य्या धातकी शूकशिम्बी
कनकरजतमुक्ता विद्रुमो लौहपाठाः ।

क्रिमिरिपुघनविश्वातोयतालाभ्रधात्री-
रविदलरसपिष्टः कस्तुरीभैरवोऽयम् ॥ १८३ ॥
कस्तूरीभैरवः ख्यातः सर्वज्वरविनाशनः ।
आर्द्रकस्य रसे. पेयो विषमज्वरनाशनः ॥ १८४ ॥
द्वन्द्वजान् भौतिकान् वाऽपि ज्वरान् कामादिसम्भवान् ।
अभिचारकृतांश्चैव तथा शुक्रकृतान पुनः ।
निहन्याद्दर्शनादेव डाकिन्यादियुतांस्तथा ॥ १८५ ॥

अथान्यबृहत्कस्तूरीभैरवरसनिर्माणविधिमाह मृगेत्यादि-(१)शुभकस्तूरी, कर्पूर, ताम्रभस्म, धातकीपुष्पं ( धायफूल ), (२)शुद्धकौञ्चबीजचूर्ण, स्वर्णभस्म, रजतभस्म, मुक्ताभस्म, विद्रुमभस्म, लौहभस्म, पाठाचूर्ण, क्रिमिरिपुविडङ्गचूर्णं, घन=मुस्तक-चूर्ण, विश्वा=शुण्ठीचूर्णं, तोय सुगन्धवालाचूर्ण, शुद्धतालकं, अभ्रकभस्म, धात्रीचूर्ण, प्रत्येकं द्रव्य समभागेनादाय खल्वे निक्षिप्य मदारपत्रस्वरसेन पिष्ट्वा रक्तिकैकपरि-मिता वटी कृत्वा काचपात्रे स्थापयेत् । कस्तूरीभैरवोऽय रस सर्वज्वरविनाशक । आर्द्रकस्वरसेन सह विषमज्वर हन्ति, तथा द्वन्द्वजं, भौतिकं क्रिमिजन्यमित्यर्थं, कामक्रोधाद्युत्पन्न, अभिचारकृत च ज्वर, शुक्रकृतज्वराणि च, डाकिन्यादिभयोत्पन्न ज्वरञ्च विनाशयति ॥ १८३-१८५ ॥

सौभाग्यवटी—

सौभाग्यामृतजीरपञ्चलवणव्योषाभयाक्षामला-
निश्चन्द्राभ्रकशुद्धगन्धकरसानेकीकृतान् भावयेत् ।

---

(१)श्रेष्ठकस्तूरीलक्षणम्—

स्वादे तिक्ता पिंजरा केतकीनां गन्ध धत्ते लाघव तोलकेन ।
याप्सु न्यस्ता नैव वैवर्ण्यमीयात् कस्तूरी सा राजभोग्या प्रशस्ता ॥ इति ।
या स्निग्धा धूमगन्धा वहति विनिहिता पीतता पावकेऽन्त ।
नि शेष या निविष्टा भवति हुतवहे भस्मसादेव सद्य ।
या च न्यस्ता तुलाया कलयति च गुरुतां मर्दिता रूक्षताञ्च ॥
ज्ञेया कस्तूरिकेय खलु कृतमतिभि कृत्रिमा नैव सेव्या इति ।

(२)कौञ्चबीजानि पोट्टलिकान्त कृत्वा दुग्धमध्ये यामैकं दोलायन्त्रविधिना संस्वेद्य वहिस्त्वचमपनीय वि ूर्ण्य संशोष्य च गृह्णीयात् ।

निर्गुण्डीयुगभृङ्गराजकवृषापामार्गपत्रोल्लसत्-
प्रत्येकस्वरसेन सिद्धगुडिका हन्ति त्रिदोषोदयम् ॥ १८६ ॥
येषां शीतमतीव देहमखिलं स्वेदद्रवार्द्रीकृतं
निद्रा घोरतरा समस्तकरणव्यामोहमुग्धं मनः ।
शूलश्वासबलासकाससहितं मूर्च्छाऽरुचिस्तृड्ज्वरं
तेषां वै परिहृत्य मृत्युवदनात् प्रत्यानयेत् जीवनम् ॥ १८७ ॥

अथ सौभाग्यवटीनिर्माणविधिमाह सौभाग्यमित्यादि—शुद्ध टङ्कण, शुद्धवत्सनाभचूर्ण, जीरकचूर्ण, लवणपञ्चक,
(सैन्धवञ्चाथ सामुद्र विड सौवर्चल तथा। रोमकञ्चेति विज्ञेय बुधैर्लवणपञ्चकम् ॥ इति।)
त्रिकटुचूर्ण ( विश्वोपकुल्या मरिच त्रय त्रिकटु कथ्यते ) अभया–हरीतकीचूर्ण, अक्ष =विभीतकचूर्ण, आमलकीचूर्ण, निश्चन्द्रीकृतमभ्रकभस्म, शुद्धगन्धक , शुद्धपारद , एतत्सर्वं समभागेनादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य मर्दयेत्, तदनु निर्गुण्डी, युगभृङ्गराजक =भृङ्गराज केशराजश्च, वृष =वासक , अपामार्ग , एतेषा पृथक् २ स्वरसै क्वाथैर्वा विभाव्य रक्तिकैकपरिमिता वटिका कृत्वा काचपात्रे स्थापयेत् । प्रत्यह सेवितोऽय रस सन्निपातं मूर्च्छाञ्च नाशयति । येषा शीतपूर्वक दाहपूर्वक ज्वर स्तेन च शरीर स्वेदार्द्रीकृतं भवेत् तेषा कृते रसोऽयं प्रयोज्य । तथा येषा ज्वरे प्रगाढनिद्रोदय स्यात् तथा समस्तेन्द्रियाणि मनश्च व्यामोहेन–मूर्च्छया मुग्ध मूढ ( स्वस्वविषयग्रहणशक्तिरहितमित्यर्थ ) भवेत्तेषा कृतेऽय रसोऽद्भुतगुणकर । तथा येषाञ्च ज्वरे शूलश्वासकफकासा , मूर्च्छा, अरुचि , तृषाविकय एते उपद्रवा स्युस्तेषा कृते वटीय प्रयोज्या ॥ १८६– ८७ ॥

सन्निपातहरो रस —

पारदं गन्धकं टङ्कं सोषणं गजपिप्पली ।
व्योषञ्च धुस्तूरजलैः पिष्टं गुञ्जाद्वयं द्रुतम् ।
सन्निपातं निहन्त्यर्क कषायैर्व्योषचूर्णितैः ॥ १८८ ॥

अथ सन्निपातहररसनिर्माणविधिमाह पारदमित्यादि—शुद्धपारद , शुद्धगन्धक , शुद्धटङ्कण, मरिचचूर्ण, गजपिप्पलीचूर्ण, व्योप = शुण्ठीमरिचपिप्पलीचूर्ण,

प्रत्येकं समभागेनादाय पूर्वं पारदगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि निक्षिप्य धुस्तूरबीजक्वाथेनालोड्य दिनैकं पिष्ट्वा गुञ्जाद्वयपरिमिता वटिका कृत्वा काचपात्रे स्थापयेत् । द्विगुञ्जमितो रसोऽयं प्रत्यहं त्रिकटुचूर्णेन मन्दारमूलक्वाथेन सह सेवितः सन्निपातं हरति ॥ १८८ ॥

सन्निपातवडवानलो रसः —

रसाभ्रकोऽमृतं सप्त स्यात् षष्ठो गन्धस्तयोः ।
दन्तीबीजानि षड्भागाः पञ्चभागन्तु टङ्कणम् ॥ १८९ ॥
चत्वारि धूर्त्तबीजस्य व्योषस्य त्रितयो भवेत् ।
एतानि वह्निमूलस्य क्वाथेन परिमर्द्दयेत् ॥ १९० ॥
आर्द्रकस्य रसेनाथ देयं गुञ्जाद्वयं हितम् ।
वडवानलसञ्ज्ञोऽयं सन्निपातहरः परः ॥ १९१ ॥

अथ सन्निपातवडवानलरसनिर्माणमाह रसेत्यादि—शुद्धपारद (८ तो०), शुद्धवत्सनाभचूर्ण (७ तो०) शुद्धगन्धक (६ तो०), शुद्धहरितालक (६ तो०) शुद्धदन्तीबीजचूर्ण (६ तो०), शुद्धटङ्कण (५ तो०), शुद्धधुस्तूरबीजचूर्ण (४ तो०) त्रिकटुचूर्ण प्रत्येक (३ तो०), पूर्वं पारदगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि निक्षिप्य वह्निमूलस्य चित्रकमूलक्वाथेन भावयित्वा गुञ्जाद्वयपरिमिता वटिका कृत्वा काचपात्रे स्थापयेत् । वडवानलसञ्ज्ञकोऽयं रसः आर्द्रकस्वरसेन प्रत्यहं गुञ्जाद्वयपरिमितः सेवितः सन्निपातं हरति ॥ १८९-१९१ ॥

सिंहनादरसः —

लौहपात्रगते गन्धे द्राविते तत्र निक्षिपेत् ।
शुद्धसूतं समं चात्र भार्गीद्रावं तयोः समम् ॥ १९२ ॥
निर्गुण्ड्याः पल्लवोत्थञ्च तुल्यं तुल्यं प्रदापयेत् ।
पचेन्मृद्वग्निना तावत् यावत् शुष्कं द्रवद्वयम् ॥ १९३ ॥
विषपादयुतः सोऽयं सिंहपादरसोत्तमः ।
गुञ्जामात्रः प्रदातव्यः सन्निपातज्वरान्तकः ।
अनुपानं पिबेद् व्याघ्री-क्वाथं पुष्करचूर्णितम् ॥ १९४ ॥

अथ सिंहनादरसनिर्माणविधिमाह लौहपात्रेत्यादि—लौहकटाहे एकतोलकं शुद्ध-गन्धकं निक्षिप्य वन्हौ कटाहं स्थापयेत् । विद्रुते गन्धके शुद्धपारद ( १ तो० ). अभ्रकभस्म ( १ तोलकं ) तथा भार्गीस्वरस २ द्वितोलक, तथा निर्गुण्डीपत्र-स्वरस द्वितोलकं निक्षिप्य मन्दाग्निना पचेत् । वन्हियोगेन शुष्के जलभागे माषक-त्रयं शुद्धवत्सनाभचूर्णं दत्वा दृढ विमर्दयेत् । ततश्च रक्तिपरिमितवटिका कृत्वा काचपात्रे स्थापयेत् । अयमुत्तम सिंहनादरसो गुञ्जमात्रया प्रत्यह पुष्करमूलचूर्णस-हितलघुकण्टकारीक्वाथानुपानपूर्वकसेवित सन्निपातज्वरं विनिहन्ति ॥ १९२–१९४॥

सन्निपातसूर्य्यो रस —

**रसेन गन्धं द्विगुणं विमर्द्य तत्पादभागं रवितारहेम ।**
**भस्मीकृतं योजय मर्द्दयेत्तु दिनत्रयं वह्निरसेन घर्मे ॥ १९५ ॥**
**विषञ्च दत्त्वाऽत्र कलाप्रमाणं मत्स्यादिपित्तैः परिभावयेच्च ।**
**वल्लद्वयं चास्य ददीत वह्निकटुत्रयार्द्रद्रवसंप्रयुक्तम् ॥ १९६ ॥**
**तैलेन चाभ्यञ्जनमेव कुर्य्यात् स्नानं जलेनापि च शीतलेन ।**
**यावद्भवेद् दुःसहशीतमस्य मूत्र पुरीषञ्च शरीरकम्प ॥ १९७ ॥**
**पथ्ये यदीहा परिजायतेऽस्य मरीचखण्ड दधिभक्तकञ्च ।**
**स्वल्पं ददीतार्द्रकमत्स्यशाकं दिनान्तरं स्नानविधिञ्च कुर्य्यात् ॥१९८॥**

अथ सन्निपातसूर्यरसनिर्माणमाह रसेनेत्यादि—शुद्धपारद ( १ तो० ), शुद्धगन्धक ( २ तो० ), उभयो कज्जलीं कृत्वा कज्जल्यपेक्षया चतुर्थांशभाग ताम्रभस्म ( ९ मा० ), रजतभस्म ( ९ मा० ), स्वर्णभस्म ( ९ मा० ) सम्मेल्य दृढ परिपेष्य चित्रकस्वरसेन निदाघे दिनत्रय विमर्द्य सर्वचूर्णापेक्षया षोडशभागमित ( ४ मा० ) शुद्धवत्सनाभचूर्णं निक्षिप्य मत्स्यमयूरादिकाना पित्तै भावयित्वा वल्लद्वयमिता वटी ( ३ रक्तिपरिमिता ) कृत्वा काचपात्रे स्थापयेत् । रसमेन यथा-रोग यथाबलञ्च रक्तिकैकादारभ्य रक्तित्रयपर्यन्त चित्रकत्रिकटुचूर्णेन आर्द्रकस्वरसेन च सह प्रत्यह दत्वा शरीर तैलेन विमर्द्य शीतलजलेन तावत्स्नपन कार्यं यावद्भवेद् दु-सहशीत, मूत्रपुरीषोत्सर्गप्रवृत्ति , शरीरकम्पश्च, सञ्जातभोजनस्पृहाया पथ्य दधि-युक्तमोदन मरिचचूर्णेन सितया च सह देय, तथा आर्द्रक मत्स्यशाकादिकमपि स्वल्पं देयम् , स्नानञ्च प्रत्यह नैव कार्यमपि तु द्वितीये, तूर्ये, सप्तमे वा दिने कारयेत् । उपर्युक्तविधिना सेवितोऽय रस सन्निपात हन्ति ॥ १९५–१९८ ॥

## अभिन्यासे—

स्वच्छन्दनायको रसः—

सूतगन्धकलौहानि रौप्यं संमर्दयेत् त्र्यहम् ।
सूर्य्यावर्त्तश्च निर्गुण्डी तुलसी गिरिकर्णिका ॥ १९९ ॥
अग्निवल्ल्यार्द्रकं वह्निः विजयाऽथ जया सह ।
काकमाचीरसैरेषां पञ्चपित्तैश्च भावयेत् ॥ २०० ॥
अन्धमूषागतं पश्चात् वालुकायन्त्रगं दिनम् ।
विपचेत् चूर्णितं खादेत् माषैकं चार्द्रकद्रवैः ॥ २०१ ॥
निर्गुण्डीदशमूलानां कषायं सोषणं पिबेत् ।
अभिन्यासं निहन्त्याशु रसः स्वच्छन्दनायकः ।
छागीदुग्धेन मुद्गं वा पथ्यमत्र प्रयोजयेत् ॥ २०२ ॥
मायूरमात्स्यवाराह-च्छागमाहिषमेव च ।
पञ्चपित्तमिदं देयं भावनासु च सर्वदा ॥ २०३ ॥

अथाभिन्यासज्वरचिकित्सामाह सूतेत्यादि—अभिन्यासज्वरलक्षणन्तु यथा—,
त्रयः प्रकुपिता दोषा उरः स्रोतोऽनुगामिनः । आमाभिरुद्ध्या ग्रथिता बुद्धिन्द्रियमनोगताः ॥
जनयन्ति महाघोरमभिन्यासं ज्वरं दृढम्। शुभ्रौ नेत्रे प्रसुप्तिः स्याच्च चेष्टा काचिदीहते॥
न च दृष्टिर्भवेत्तस्य समर्था रूपदर्शने । न घ्राणं न च संस्पर्शं शब्दं वा नैव बुद्ध्यते ॥
शिरो लोठयतेऽभीक्ष्णमाहारं नाभिनन्दति । कूजति तुद्यते चैव परिवर्तनमीहते ॥
अल्पं प्रभाषते किञ्चिदभिन्यासः स उच्यते ॥

अथ स्वच्छन्दनायकरसनिर्माणमाह—शुद्धपारदं, शुद्धगन्धकं, लोहभस्म, रजतभस्म, प्रत्येकं द्रव्यं समभागेनादाय रसगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य सर्यावर्त —सूर्यमुखी, निर्गुण्डी, तुलसी, गिरिकर्णिका = अपराजिता, अग्निवल्ली ( अग्निः शुण्डी, वल्ली = नागरवेलपत्रमिति केचित् ) । आर्द्रकं, वह्निश्चित्रकः, विजया—शुद्धभङ्गा ( भङ्गाशोधनविधिः यथा—

भङ्गां विशुष्कामादाय बब्बूलत्वक्कषायतः । स्वेदयेद् घटिकार्द्धन्तु मध्यमानल्योगतः ॥
विज्ञाय विजयां स्विन्नां घर्मे खलु विशोषयेत्। एवं विशोधिता भङ्गा पिष्टा गोदुग्धयोगतः ।
कामोद्दीपनयोगेषु विशेषेण नियोजयेत् ॥

अथवा भङ्गां जले दिनैकं संस्थाप्य कटाहे घृतेन सह मन्दाग्नौ भर्जयित्वा

सशुद्धा गृह्णीयात् ) जया, काकमाची, एतेषां स्वरसैः क्वाथैर्वा त्रिदिनं भावयित्वा पञ्चपित्तयोगेनापि त्रिदिनं भावयेत् । तदनु संशुष्कं कृत्वा अन्धमूषायां संस्थाप्य सम्पुटं कृत्वा संशोष्य च वालुकायन्त्रे दिनैकं विपचेत् । स्वाङ्गशीतमवतार्य, खल्वे विचूर्ण्य संस्थापयेत् । रसमेनं माषकपरिमितं आर्द्रकरसेन सह संसेव्य तदुपरि मरिचचूर्णयुक्तं निर्गुण्डीदशमूलकृतं क्वाथं पिबेत्, तेनायं रसः अभिन्यासज्वरं हन्ति । पथ्ये अजादुग्धं मुद्गयूषं वा यथारुचि देयम् । भावनायां सर्वदा मायूरमात्स्यवाराहच्छागमाहिषं पञ्चपित्तं प्रयोज्यम् ॥ १९९–२०३ ॥

सन्निपातान्तको रसः —

शुद्धसूतः समो गन्धः दरदः शुद्धखर्परम् ।
रसस्य द्विगुणौ देयौ मृतताम्राम्लवेतसौ ॥ २०४ ॥
भृङ्गराजद्रवैर्भाव्यं प्रत्यहं भावना पृथक् ।
दातव्यं तच्चतुर्गुञ्जमार्द्रकस्य रसैः सह ।
सन्निपातं निहन्त्याशु सन्निपातान्तको रसः ॥ २०५ ॥

अथ सन्निपातान्तकरसनिर्माणमाह शुद्धेत्यादि–शुद्धपारदं, शुद्धगन्धकं, शुद्धहिङ्गुलं, शुद्धखर्परभस्म, प्रत्येकं तोलकैकं तथा ताम्रभस्म (१ तो०) अम्लवेतसचूर्णं ( १ तो० ), पारदगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि निक्षिप्य भृङ्गराजस्वरसेन भावयित्वा शुष्कचूर्णञ्च कृत्वा स्थापयेत् । रसोऽयं यथारोगं यथाबलं रक्तिकैकादारभ्य तूर्यरक्तिपरिमितं आर्द्रकस्वरसेन प्रत्यहं सेवितं सन्निपातं हन्ति । अयं नाम्ना सन्निपातान्तको रसः ख्यातः ॥ २०४–२०५ ॥

## विषमजीर्णज्वरे—

विषमज्वरलक्षणम्—

यः स्यादनियतात् कालाच्छीतोष्णाभ्यां तथैव च ।
वेगतश्चापि विषमः स ज्वरो विषमः स्मृतः ॥ २०६ ॥

अथ विषमज्वरलक्षणं य स्यादित्यादि—योऽनियतकाले शीतपूर्वकं कदाचिच्च दाहपूर्वकं तीव्रवेगतश्च ज्वरो भवेत् स ज्वरो विषमः स्मृतः ॥ २०६ ॥

अथ जीर्णज्वरलक्षणम्—

त्रिसप्ताहव्यतीतस्तु ज्वरो यस्तनुतां गतः ।
प्लीहाग्निसादं कुरुते स जीर्णज्वर उच्यते ॥ २०७ ॥

अथ जीर्णज्वरलक्षणमाह त्रिसप्ताहेत्यादि—य एकविंशतिदिनानन्तरं मन्दवेगमाप्नोति तथाऽल्पतापपूर्वकं शरीरे तिष्ठति, तथा यस्मिन् प्लीहवृद्धिः, मन्दाग्निश्च भवेत् । एवं लक्षणयुक्तो ज्वरो जीर्णज्वर उच्यते ॥ २०७ ॥

अथ ज्वराङ्कुशो रसः—

रसस्य द्विगुणं गन्धं गन्धतुल्यञ्च टङ्कणम् ।
रसतुल्यं विषं योज्यं मरिचं पञ्चधा विषात् ॥ २०८ ॥
दन्तीवीजं कट्फलञ्च प्रत्येकं मरिचोन्मितम् ।
ज्वराङ्कुशो रसो नाम मर्दयेद् याममात्रकम् ।
मासैकेन निहन्त्याशु ज्वरं जीर्णं त्रिदोषजम् ॥ २०९ ॥

अथ ज्वराङ्कुशरसनिर्माणमाह रसस्येत्यादि—शुद्धपारद (१ तो०), शुद्धगन्धक (२ तो०), शुद्धटङ्कण (२ तो०), शुद्धवत्सनाभचूर्ण (१ तो०), मरिचचूर्ण (५ तो०), शुद्धदन्तीवीजचूर्ण (५ तो०), कट्फलत्वचदचूर्ण (५ तो०), पूर्वं पारदगन्धकयोः कज्जलां कृत्वा शेषद्रव्याणि सम्मेल्य यामैकं सम्यक् पिष्ट्वा काचपात्रे स्थापयेत् । ज्वराङ्कुशनामकोऽयं रसो मापकपरिमितो योग्यानुपानेः सह प्रत्यहं सेवितो जीर्णज्वरं, त्रिदोषज्वरञ्च हन्ति, अस्य मात्रा रक्तिकैकादारभ्य त्रिरक्तिपरिमिता पर्याप्ता ॥ २०८–२०९ ॥

अथ ज्वरारि अभ्रम्—

अभ्रं ताम्रं रसं गन्धं विषञ्चैव समं समम् ।
द्विगुणं धूर्त्तवीजञ्च व्योपं पञ्चगुणं मतम् ॥ २१० ॥
आर्द्रकस्य रसेनैव वटी कार्य्या द्विगुञ्जिका ।
अनुपानं प्रयोक्तव्यं यथादोषानुसारतः ॥ २११ ॥
अभ्रं ज्वरारिनामेदं सर्वज्वरविनाशनम् ।
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् ॥ २१२ ॥

**विषमाख्यान् ज्वरान् सर्वान् धातुस्थान् विषमज्वरान्।**
**प्लीहानं यकृतं गुल्ममग्रमांसं सशोथकम्॥ २१३॥**
**हिक्कां श्वासञ्च कासञ्च मन्दानलमरोचकम्।**
**नाशयेन्नात्र सन्देहो वृत्रमिन्द्राशनिर्यथा॥ २१४॥**

अथ ज्वरारि-अभ्रनिर्माणमाह अभ्रमित्यादि—अभ्रकभस्म (१ तो०), ताम्रभस्म (१ तो०), शुद्धपारद (१ तो०), शुद्धगन्धक (१ तो०), शुद्धधुस्तूरबीजचूर्ण (२ तो), त्रिकटुचूर्ण (५ तो०), पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि निक्षिप्य आर्द्रकस्वरसेन सह दिनद्वय सम्यग्विमर्द्य रक्तिद्वयपरिमितवटिका कृत्वा काचपात्रे स्थापयेत्। अय ज्वरारिनामकाभ्र प्रत्यह द्विगुञ्जमितं यथादोषानुपानपूर्वक सेवित सर्वाणि ज्वराणि हन्ति। तथा वातिक, पैत्तिक, श्लैष्मिक, सान्निपातिक, विषमज्वर, सप्तधातुस्थज्वराणि च नाशयेत्। एव प्लीहवृद्धिं, यकृतवृद्धि, गुल्म, अग्रमास (मासवृद्धिमित्यर्थ), शोथ, हिक्का, कास श्वास, मन्दाग्नि, अरुचि, यथायोग्यानुपानं नाशयति। अग्रमासशब्देन विशेषत उपजिह्विकावृद्धि, तालुमूलग्रन्थिकाशोथ च जानीयात्। एषु विशेषफलद॥ २१०-२१४॥

अथ ज्वराशनि-रस —

**रसं गन्धं सैन्धवञ्च विषं ताम्रं समांशिकम्।**
**सर्वचूर्णसमं लौहं तत्समं शुद्धमभ्रकम्॥ २१५॥**
**लौहे च लौहदण्डे च निर्गुण्डीस्वरसेन च।**
**मर्दयेत् यत्नतः पश्चात् मरिचं सूततुल्यकम्॥ २१६॥**
**नागवल्ल्या दलेनैव दातव्यो रक्तिसम्मितः।**
**सर्वज्वरहरः श्रेष्ठो ज्वरान् हन्ति सुदारुणान्॥ २१७॥**
**कासं श्वासं महाघोरं विषमाख्यं ज्वरं वमिम्।**
**धातुस्थं परमं दाहं ज्वरं दोषत्रयोद्भवम्॥ २१८॥**

अथ ज्वराशनिरसनिर्माणमाह रसमित्यादि—शुद्धपारद (१ तो०), शुद्धगन्धक (१ तो०), सैन्धवलवणं (१ तो०), शुद्धवत्सनाभचूर्णं (१ तो०), ताम्रभस्म (१ तो०), लोहभस्म (५ तो०), अभ्रकभस्म (५ तो०), पूर्वं पारदगन्धकयो, कज्जलीं कृत्वा शेषद्रव्याणि निक्षिप्य लौहखल्ले लौहदण्डेनैव निर्गु-

ण्डीस्वरसेन दृढ विमर्द्य पारदतुल्य मरिचचूर्णं निक्षिप्य रक्तिपरिमितवटिका कृत्वा काचपात्रे स्थापयेत्। रसोऽय प्रत्यह रक्तिमितो नागवल्लीपत्रस्वरसेन सह सेवित सर्वज्वराणि दारुणानि वा ज्वराणि हन्ति तथा कास, श्वास तीव्र विषमज्वरं, धातुगतज्वर, त्रिदोषजज्वर, दाह, वमिञ्च यथानुपाने नाशयेत् ॥ २१५-२१८ ॥

अथ अर्द्धनारीश्वरो रस —

**रसगन्धौ समौ शुद्धौ विषं ग्राह्यञ्च तत्समम्।**
**जैपाल तत्समं ग्राह्यं मरिचञ्च चतुर्गुणम् ॥ २१९ ॥**
**त्रिफलाया रसै मर्द्यं भावना पञ्चधा तथा।**
**जम्बीराणां द्रवै र्नस्यमेकस्मिन् नासिकापुटे ॥ २२० ॥**
**शरीरार्द्धगत घोरं ज्वरं हन्ति न संशयः।**
**अर्द्धनारीश्वरो नाम रस शम्भुप्रकीर्त्तितः ॥ २२१**

अथ अर्द्धनारीश्वररसनिर्माणमाह रसेत्यादि—शुद्धपारद (१ तो०), शुद्धगन्धकः (१ तो०), शुद्धवत्सनाभचूर्ण (१ तो०), शुद्धजयपालबीजचूर्णं (१ तो०), मरिचचूर्णं (८ तो०), पूर्वं रसगन्धकयो कज्जला कृत्वा शेषवस्तु निक्षिप्य त्रिफलाक्वाथेन पञ्चवारं भावयित्वा सशोष्य च काचपात्रे स्थापयेत्। रसोऽय जम्बीरनिम्बुस्वरसेन सह एकस्मिन्नासिकापुटे नस्ययोगेन प्रयुक्त शरीरार्द्धगत दारुण ज्वर हन्ति, द्वितीयवारप्रयुक्तनस्येन च शेषमपि ज्वर हन्ति। अर्द्धनारीश्वरनामकोऽय रस शम्भुना प्रोक्त ॥ २१९-२२१ ॥

अथ चन्दनादिलौहम्—

**रक्तचन्दनह्रीवेर-पाठोशीरकणाशिवा-**
**नागरोत्पलधात्रीभिस्त्रिमदेन समन्वितम्।**
**लौहं निहन्ति विविधान् समस्तान् विषमज्वरान् ॥ २२२ ॥**

अथ चन्दनादिलौहनिर्माणविधिमाह रक्तेत्यादि—रक्तचन्दनचूर्णं (१ तो०), सुगन्धवालाचूर्णं (१ तो०), पाठाचूर्णं (१ तो०), उशीरचूर्णं (१ तो०), पिप्पलीचूर्णं (१ तो०), हरीतकीचूर्णं (१ तो०), शुण्ठीचूर्णं (१ तो०), नीलकमलचूर्णं (नीलोफरचूर्णं वा १ तो०), धात्रीचूर्णं (१ तो०), त्रिमदचूर्णम् प्रत्येकं (१ तो०) [ विडङ्गमुस्तचित्रैश्च त्रिमद समुदाहृत ]। लौहभस्म सर्वतो

सम गृहीत्वा सर्वे निक्षिप्य विमर्द्य च काचपात्रे स्थापयेत् । रसोऽयं रक्तिकैकादा रभ्य यथारोग यथावलं रक्तिनियमित प्रत्यह सेवितो विविधान विषमज्वरान्नि- हन्ति ॥ २२२ ॥

अथ ज्वरारिरस —

शुद्धसूतं द्विधा गन्धं विषञ्चैव कटुत्रयम् ।
नागभस्म शिला चैव प्रत्येकं कर्षमानकम् ॥ २२३ ॥
शुद्धतालार्द्धकर्षञ्च शुल्वमेकत्र कारयेत् ।
धुस्तूरस्य च बीजानि कार्षिकाणि प्रकल्पयेत् ॥ २२४ ॥
रोहितमत्स्यपित्तेन अर्कक्षीरार्द्रकाम्बुना ।
मर्द्दयेदुदयास्तञ्च चणकाभा वटी कृता ॥ २२५ ॥
आर्द्रकस्य रसैः कर्ष मधुमापसमायुतम् ।
भक्षयेत् प्रातरुत्थाय ज्वरारिरससंज्ञितम् ॥ २२६ ॥
वातिकं पैत्तिकञ्चैव कफजं नाशयेत् ध्रुवम् ।
वातपित्तसमुद्भूतं वातश्लेष्मिकमेव च ॥ २२७ ॥
भयादुत्पत्तिकं वाऽपि शोकोत्पन्नमथापि वा ।
अभिचाराभिशापोत्थं भूतोत्थञ्च ज्वरं जयेत् ॥ २२८ ॥
मेदःप्राप्तं सन्ततञ्च रसस्थे तु ज्वरे तथा ।
सन्निपातज्वरे देयो मधुव्योपसमायुतः ॥ २२६ ॥
घर्मं पित्तं तथा कम्पं दाहं हन्ति न संशय. ।
इन्द्रवज्रो यथा वृक्षं तथा ज्वरविनाशनः ॥ २३० ॥
वर्जयेत् क्षीरमांसञ्च दधितक्रसुराघृतम् ।
ज्वरे मांसास्थिगे चैव रक्तस्थे तु ज्वरे नृणाम् ॥ २३१ ॥
शैत्ये दाहे तथा घर्मे प्रलापे चातुराहिके ।
महावेगे ज्वरे चैव जीर्णे चापि प्रदापयेत् ॥ २३२ ॥

अथ ज्वरारिरसनिर्माणमाह शुद्धसूतमित्यादि—शुद्धपारद ( १ क० ), शुद्ध गन्धक ( २ क० ), शुद्धवत्सनाभचूर्ण ( १ क० ), शुण्ठीचूर्ण ( १ क० ), मरिचचूर्ण, पिप्पलीचूर्ण प्रत्येक कर्षमितं, नागभस्म ( १ क० ), शुद्धमन शिला

( १ क० ), शुद्धहरितालक कर्षार्द्धम्, ताम्रभस्म कर्षार्द्धम्, शुद्धधुस्तूरबीजचूर्णं ( १ क० ), पूर्वं रसगन्धकाभ्यां कज्जलीं कृत्वा तदनु शेषद्रव्याणि सम्मेल्य दिनैकं सूर्योदयादस्तं यावद्रोहितमत्स्यपित्तेन भावयित्वा मर्दयेत् । तत अर्कक्षीरेण दिनैकं, आर्द्रकस्वरसेनापि दिनैकं विमर्द्य चणकप्रमाणां वटीं कृत्वा काचपात्रे स्थापयेत् । अयं ज्वरारिरसः प्रत्यहं प्रभाते कर्षपरिमित आर्द्रकस्वरसेन मापकोन्मितमधुना च सह सेवितो वातिकं, पैत्तिकं श्लैष्मिकं वातपित्तोत्पन्नं, वातश्लेष्मोद्भवं त्रयोत्पन्नं, शोकोत्पन्नं, अभिचारोत्थं, अभिशापोत्थं भूतोत्थञ्च ज्वरं हन्ति । तथा मेद आमज्वरे, सन्ततज्वरे, रसगतज्वरे, सन्निपातज्वरे च मधुना त्रिकटुचूर्णेन च सह देयः । रसोऽयं शरीरदाहं, पित्तविकारं, शरीरकम्पं, स्वेदञ्च निश्चयेन नाशयति । यथेन्द्रवज्रको वृक्षं ध्रुवं हन्ति तथायं रसो ध्रुवं ज्वरं हन्ति । अस्य रसस्य सेवनकाले क्षीरं मांसं, तक्रं, दधि, मद्यं, घृतञ्च वर्जयेत् । रसमेनं मांसगतज्वरे, अस्थिगतज्वरे, रक्तस्थज्वरे, शैत्यान्वितज्वरे, दाहपूर्वकज्वरे, स्वेदान्वितज्वरे, प्रलापयुक्तज्वरे, चातुर्थिकज्वरे, तीव्रज्वरे, जीर्णज्वरे च विशेषेण प्रयोजयेत् ॥ २२३-२२९ ॥

अथ सर्वज्वरहरलौहम्—

चित्रकं त्रिफला व्योषं विडङ्गं मुस्तकं तथा ।
श्रेयसी पिप्पलीमूलमुशीरं देवदारु च ॥ २३३ ॥
किराततिक्तकं पाठा कटुकी कण्टकारिका ।
शोभाञ्जनस्य बीजानि मधुकं वत्सकं समम् ॥ २३४ ॥
लौहतुल्यं गृहीत्वा तु वटिकां कारयेद्भिषक् ।
सर्वज्वरहरं लौहं सर्वरोगहरं तथा ॥ २३५ ॥
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् ।
द्वन्द्वजं विषमाख्यञ्च धातुस्थञ्च ज्वरं जयेत् ॥ २३६ ॥
शीतं कम्पं तृषां दाहं घर्मञ्चातिविभ्रमान् ।
रक्तपित्तमतीसारं मन्दाग्निं कासमेव च ॥ २३७ ॥
प्लीहानं यकृतं गुल्मं सामवातं सुदारुणम् ।
अर्शांसि घोरमुदरं मूर्च्छां पाण्डुं हलीमकम् ॥ २३८ ॥
अजीर्णं ग्रहणीञ्चैव यक्ष्माणं शोथमेव च ।

वल्यं वृष्यं पुष्टिकरं सर्वरोगनिसूदनम् ।
सर्वज्वरहरं लौहं चन्द्रनाथेन भाषितम् ॥ २३९ ॥

अथ सर्वज्वरहरलौहमाह चित्रकमित्यादि—चित्रकचूर्ण, हरीतकीचूर्ण, विभीतकचूर्ण, आमलकीचूर्ण, शुण्ठीचूर्ण, मरिचचूर्ण, पिप्पलीचूर्ण, वायविडङ्गचूर्ण, शुद्धमुस्तकचूर्ण, श्रेयसी—गजपिप्पलीचूर्ण, पिप्पलीमूलचूर्ण, उशीरचूर्ण, देवदारुचूर्ण, किराततिक्त–भूनिम्बत्वचश्चूर्ण, पाठाचूर्ण, कटुकीचूर्ण, क्षुद्रकण्टकारिकाचूर्ण, शिग्रुवीजचूर्ण, मधुयष्टिकाचूर्ण, वत्सक–कुटजत्वचश्चूर्ण प्रत्येक द्रव्य तोलकैकमादाय, लौहभस्म च सर्वसम गृहीत्वा खल्वे निक्षिप्य सूक्ष्म पिष्ट्वा जलेन विमर्द्य च वटिका कृत्वा काचपात्रे स्थापयेत्। सर्वज्वरहरलोहोऽय यथारोगप्रयुक्तानुपानैस्सह सेवित सर्वरोगान् हन्ति । तथा वातिक, पैत्तिक, श्लैष्मिक, सान्निपातिक, द्वन्द्वज, विषम, धातुगतञ्च ज्वर हन्ति । एव शीत, कम्प, तृषा, दाह, स्वेदोद्गम, वमि, भ्रम, रक्तपित्त, अतीसार, अग्निमान्द्य कास, प्लीहवृद्धि, यकृद्वृद्धि, गुल्म आमवात, सर्वाण्यर्शांसि, भयङ्करमुदररोग, मूर्च्छा , पाण्डु , हलीमक, अजीर्ण, ग्रहणी, राजयक्ष्माणं, शोथञ्च अनुपानभेदेन नाशयति । तथास्य सेवनेन वल, वृष्यशक्ति , पुष्टि , सर्वरोगनाशश्च भवति । सर्वज्वरहरोऽय लोहश्चन्द्रनाथेन प्रोक्त ॥ २३३–२३९ ॥

अथ बृहत्सर्वज्वरहरलौहम्—

पारदं गन्धकञ्चैव ताम्रमभ्रञ्च माक्षिकम् ।
हिरण्य तारतालञ्च कर्षमेकं पृथक् पृथक् ॥ २४० ॥
कान्तलौहं पलं देयं सर्वमेकीकृतं शुभम् ।
वक्ष्यमाणौषधैर्भाव्य प्रत्येकं दिनसप्तकम् ॥ २४१ ॥
कारवेल्लरसैर्वाऽपि दशमूलरसेन च ।
पर्पट्याश्च कषायेण त्रिफलाक्वाथकेन वा ॥ २४२ ॥
गुडूच्याः स्वरसेनैव नागवल्लीरसेन च ।
काकमाचीरसेनैव निर्गुण्ड्याः स्वरसैस्तथा ॥ २४३ ॥
पुनर्नवाऽऽर्द्रकाम्भोभिर्भावना परिकीर्त्तिता ।
रक्तिकादिक्रमेणैव वटिकां कारयेद्भिषक् ॥ २४४ ॥
पिप्पलीगुडसंयुक्ता वटिका ज्वरनाशिनी ।

ज्वरमष्टविधं हन्ति जीर्णज्वरहरं तथा ॥ २४५ ॥
वारिदोषोद्भवञ्चैव नानादोषोद्भवं तथा ।
सततादि ज्वरं हन्ति साध्यासाध्यमथापि वा ॥ २४६ ॥
क्षयोद्भवञ्च धातुस्थं कामशोकभवं तथा ।
भूतावेशभवञ्चैव त्रिदोषजनितं तथा ॥ २४७ ॥
अभिघातज्वरञ्चैव तथाऽभिचारसम्भवम् ।
अभिन्यासं महाघोरं विषमं ञ्याहिकं तथा ॥ २४८ ॥
शीतपूर्वं दाहपूर्वं त्रिदोषं विषमज्वरम् ।
प्रलेपकज्वरं घोरमर्द्धनारीश्वरं तथा ॥ २४९ ॥
प्लीहज्वरं तथा कासं चातुर्थकविपर्य्ययम् ।
पाण्डुरोगं कामलाञ्च अग्निमान्द्यं महागदम् ।
एतान् सर्वान् निहन्त्याशु पक्षार्द्धेन न संशयः ॥ २५० ॥
शाल्यन्नं तक्रसहितं भोजयेद्धिङ्गसंयुतम् ।
ककारपूर्वकं सर्वं वर्जनीयं न संशयः ॥ २५१ ॥
मैथुनं वर्जयेत् तावद् यावन्न बलवान् भवेत् ।
सर्वज्वरहरं लौहं दुर्लभं परिकीर्त्तितम् ॥ २५२ ॥

अथ बृहत्सर्वज्वरहरलौहनिर्माणमाह पारदमित्यादि–शुद्धपारद (१ तो०॥), शुद्धगन्धक (१ तो०), ताम्रभस्म (१ तो०), अभ्रकभस्म (१ तो०), स्वर्णमाक्षिकभस्म (१ तो०), स्वर्णभस्म (१ तो०), रजतभस्म (१ तो०), शुद्धहरिताल (१ तो०), कान्तलौहभस्म (१ पल), पूर्वं रसगन्धकयो कज्जलीं कृत्वा तत शेषद्रव्याणि निक्षिप्य वक्ष्यमाणद्रव्यक्वार्थै पृथक् २ दिनसप्तकं भावयेत् अथ क्वाथद्रव्याणि । कारवेल्लोस्वरस, दशमूलद्रव्यक्वाथ, पर्पटीक्वाथ, त्रिफलाक्काथ, गुडूचीक्वाथ, नागवल्लीस्वरस, काकमाचीस्वरस, निर्गुण्डीस्वरस, पुनर्नवास्वरस, आर्द्रकस्वरस एतै क्वार्थैर्यथाविधि भावयित्वा रक्तिकपरिमिता वटिका कृत्वा काचपात्रे स्थापयेत् । अस्य रसस्य प्रत्यहमेकैका वटी पिप्पलीचूर्णगुडसहिता सेविता ज्वरं विनाशयति । तथाय रसोऽष्टविधज्वर, जीर्णज्वरं, जलदोषजज्वर, बहुविधदोषोत्थ ज्वरं, सततादिज्वरं, साध्यमसाध्य वा ज्वर, क्षयोद्भव, धातुगतज्वरं, कामशोकोद्भव ज्वरं, भूतावेशभवं ज्वर, त्रिदोषजं ज्वर, अभिघाताभिचाराभ्या-

मुत्पन्न ज्वर, महाघोरमभिन्यासज्वरं, विषमज्वरं, तृतीयकज्वरं, शीतपूर्वकज्वर, दाहपूर्वकज्वर, त्रिदोषज विषमज्वर, प्रलेपकज्वर, अर्धनारीश्वर ज्वर ( य शरीरस्यार्धभाग व्याप्य समायाति ), प्लीहवृद्धिजन्यज्वर, कास, चातुर्थिकविपर्ययज्वर, पाण्डुरोग, कामला, अग्निमान्द्य, इत्यादिमहारोगान् विविधानुपानपूर्वकं सेवितोऽय रस सप्ताहमध्य एव विनाशयति । पथ्ये च विडलवणयुक्ततक्रसहित शाल्यन्न दद्यात् । ककारपूर्वक वस्तु ( कलिङ्गं कारवेल्लञ्च कदली काकमाचिका । कुसुम्भिका च कर्कोटी कुष्माण्डं कर्कटी तथा ॥ ककाराष्टकमेतद्धि वर्जयेद्रससेवक ॥ ) वर्जयेत्, तथा अष्टविधमैथुन ( स्मरण कीर्तन केलि प्रेक्षण गुह्यभाषणम् । सकल्पोऽध्यवसायश्च क्रियानिर्वृतिरेव ॥ एतन्मैथुनमष्टाङ्ग वर्जयेद्रससेवक ॥ ) तावद्वर्जयेत् यावन्न बलवान्भवेत् । इद सर्वज्वरहर लौह परम दुर्लभम् ॥ २४०–२५२ ॥

अथ महाराजवटी—

रसगन्धकमभ्रञ्च प्रत्येकं कर्षसम्मितम् ।
वृद्धदारकवङ्गञ्च लौहं कर्षार्द्धकं क्षिपेत् ॥ २५३ ॥
स्वर्णं ताम्रञ्च कर्पूरं प्रत्येकं कर्षपादिकम् ।
शक्राशनं वरी चैव श्वेतसर्ज-लवङ्गकम् ॥ २५४ ॥
कोकिलाक्षं विदारी च मुषली शूकशिम्बिकम् ।
जातीफलं तथा कोषं बला नागबला तथा ॥ २५५ ॥
माषद्वयमितं भागं तालमूल्या रसेन च ।
पिष्ट्वा च वटिका कार्य्या चतुर्गुञ्जाप्रमाणतः ॥ २५६ ॥
मधुना भक्षयेत् प्रातर्विषमज्वरशान्तये ।
धातुस्थांश्च ज्वरान् सर्वान् हन्त्यादेव न संशयः ॥ २५७ ॥
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् ।
ज्वरं नानाविधं हन्ति कासं श्वासं क्षयं तथा ॥ २५८ ॥
बलपुष्टिकरं नित्यं कामिनीं रमयेत् सदा ।
न च शुक्रं क्षयं याति न बलं ह्रासतां व्रजेत् ॥ २५९ ॥
ऊर्द्ध्वगश्लेष्मजं हन्ति सन्निपातं सुदारुणम् ।
कामलां पाण्डुरोगञ्च प्रमेहं रक्तपित्तकम् ।

महाराजवटी ख्याता राजयोग्या च सर्वदा ॥ २६० ॥

अथ महाराजवटीनिर्माणविधिमाह रसेत्यादि—शुद्धपारद ( १ कर्ष ), शुद्ध-गन्धक ( १ कर्ष ), अभ्रकभस्म ( १ क० ), वङ्कदारक =शुद्धविधारबीजचूर्ण कर्षार्द्ध, वङ्गभस्म कर्षार्द्ध, लौहभस्म कर्षार्द्ध, स्वर्णभस्म कर्षपाद ( माषकत्रयम् ), ताम्रभस्म ( २ मा० ), शुद्धखर्पूर ( ३ मा० ), शक्राशन =शुद्धविजयाबीजचूर्ण ( २ मा० ), वरी-शतावरीचूर्ण ( २ मा० ), श्वेतगर्ज्ज =श्वेतधूनक ( श्वेत-राल २ मा० ), लवङ्गचूर्ण ( २ मा० ), काकिलाक्षक ( तालमखानाचूर्ण २ मा ) विदारीकन्दचूर्ण (२ मा०) मुषली =तालमूलीचूर्ण ( २ मा० ), शुकशिम्बिक = शुद्धकौंचबीजचूर्ण ( २ मा० ) जातीफलचूर्ण ( २ मा० ), कोष =जातीकोषचूर्ण ( जावित्रीचूर्ण २ मा० ), बलाचूर्ण ( २ मा० ) नागबलाचूर्ण ( २ मा० ), पूर्व पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि निक्षिप्य तालमूलीरसेन सह विमर्द्य तूर्यरक्तिकापरिमितवटिका कृत्वा काचपात्रे स्थापयेत्। प्रत्यहमेकैका वटी प्रभाते मधुना सह सेविता विषमज्वर हन्ति। तथा धातुस्थज्वरान, वातपित्तश्लेष्मज ज्वरान्, सन्निपातज्वरं, सर्वविधाश्च ज्वरान् हन्ति। तथा अनुपानभेदेन कास, श्वास क्षयं, उर्ध्वगश्लेष्मजसन्निपात, कामला, पाण्डुरोग, प्रमेह, रक्तपित्तञ्च हन्ति, बल पुष्टिञ्च करोति। अस्या सेवक सदा कामिनी रमयेत्, नच तस्य शुक्रं, बलञ्च क्षय याति, इय महाराजवटी राज्ययोग्या वर्तते। विशेषेण वटीय क्षीणमांसबलस्य रोगिणो महाघोर चिरकालिक विषमज्वरं, जीर्णज्वरञ्च हन्ति ॥ २५३-२६० ॥

अथ अपरचिन्तामणिरस —

हाटक राजत ताल मुक्ता गन्धकपारदौ।
त्रिकटु कुनटी चैव कस्तूरी च पृथक् समम् ॥ २६१ ॥
जलेन वटिका कार्य्या द्विगुञ्जाफलमानत·।
चिन्तामणिरसो ह्येष ज्वराग्नीनां निकृन्तन ॥ २६२ ॥

अथ अपरचिन्तामणिरसनिर्माणमाह हाटकमित्यादि–स्वर्णभस्म, रजतभस्म, शुद्धतालक, मुक्ताभस्म, शुद्धगन्धक, शुद्धपारद, शुण्ठीचूर्ण, मरिचचूर्ण, पिप्पली-चूर्ण, शुद्धमनःशिला, कस्तूरी, प्रत्येकं द्रव्य समभागेनादाय पूर्व पारदगन्धकयो। कज्जलीं कृत्वा शेषद्रव्याणि निक्षिप्य जलेन सह दृढ पिष्ट्वा द्विगुञ्जापरिमिता वटी

कृत्वा सशोष्य च काचपात्रे स्थापयेत् । अथ चिन्तामणिरसोऽनुपानभेदतोऽष्टविध-ज्वराणा नाशक ॥ २६१–२६२ ॥

अथ त्रैलोक्यचिन्तामणिरस —

**भागद्वयं स्वर्णभस्म द्विभागं तारमभ्रकम् ।**
**लोहात् पञ्च प्रवालञ्च मौक्तिकं त्रयसम्मितम् ॥ २६३ ॥**
**भस्मसूतं सप्तकञ्च सर्वं मर्द्यन्तु कन्यया ।**
**छायाशुष्का वटी कार्य्या छागीदुग्धानुपानत· ॥ २६४ ॥**
**क्षयं हन्ति तथा कासं गुल्मञ्चापि प्रमेहनुत् ।**
**जीर्णज्वरहरश्चायं उन्मादस्य निकृन्तनः ।**
**सर्वरोगहरश्चापि वारिदोषनिवारण ॥ २६५ ॥**

अत्र त्रैलोक्यचिन्तामणिरसनिर्माणमाह भागद्वयमित्यादि—स्वर्णभस्म ( २-तो० ), रजतभस्म ( २ तो० ), अभ्रकभस्म ( २ तो० ), लौहभस्म ( ५ तो० ), प्रवालभस्म ( ३ तो० ), मुक्ताभस्म ( ३ तो० ), भस्मसूत–रससिन्दूर (७ तो०), इमानि द्रव्याणि खल्वे निक्षिप्य घृतकुमारीस्वरसेन पिष्ट्वा द्विरक्तिपरिमितवटिका कृत्वा छायाया सशोष्य च काचपात्रे स्थापयेत् । रसोऽय प्रत्यह रक्तिपरिमितश्छागो-दुग्धानुपानेन सेवित क्षय, कासं, गुल्मं, प्रमेह च हन्ति । तथा जीर्णज्वर, उन्माद, वारिदोषोद्भवज्वरान्, सर्वरोगाश्च विनाशयति ॥ २६३–२६५ ॥

अथ बृहच्चिन्तामणिरस —

**रसं गन्धं विषञ्चैव त्रिकटु त्रैफलं तथा ।**
**शिलाह्वा रौप्यकं स्वर्ण मौक्तिक तालकं समम् ॥ २६६ ॥**
**मृगकस्तूरिकायाश्च ग्राह्यं षण्माषिकं भिषक् ।**
**भृङ्गराजरसेनैव तुलस्याः स्वरसेन वा ॥ २६७ ॥**
**आर्द्रकस्य रसेनैव वटीं कुर्य्यात् द्विगुञ्जिकाम् ।**
**चिन्तामणिरसो ह्येष सर्वरोगकुलान्तकः ॥ २६८ ॥**
**सन्निपातज्वरहरः कफरोगं विनाशयेत् ।**
**एकजं द्वन्द्वजञ्चैव विविधं विषमज्वरम् ॥ २६९ ॥**
**अग्निमान्द्यं शिर· शूलं विद्रधिं सभगन्दरम् ।**

एतान्येव निहन्त्याशु भास्करस्तिमिर यथा ॥ २७० ॥

अथ वृहचिन्तामणिरसनिर्माणमाह रसमित्यादि—शुद्धपारद (१ तो०), शुद्धगन्धक (१ तो०), शुद्धवत्सनामचूर्णं (१ तो०), त्रिकुटचूर्णं (प्रत्येक १ तो०), त्रिफलाचूर्णं (१ तो०), (प्रत्येकमिति केचित्), शुद्धमन शिला (१ तो०), रजतभस्म (१ तो०), स्वर्णभस्म (१ तो०), मुक्ताभस्म (१-तो०), शुद्धहरितालचूर्णं (१ तो०), मृगकस्तूरी (६ मा०), पूर्वं पारदगन्धक्यो कज्जलीं कृत्वा शेषद्रव्याणि निक्षिप्य भृङ्गराजस्वरसेन तथा तुलसीस्वरसेन च सम्यगाप्लाव्य मर्दन कृत्वा पुनश्च आर्द्रकस्वरसेनापि सम्यगाप्लाव्य मर्दयित्वा द्विगुञ्जापरिमितवटिका कृत्वा काचपात्रे स्थापयेत्। अयं चिन्तामणिरस सर्वरोगाणा नाशक । तथा सन्निपातज्वर, कफरोग च हन्ति। एवमेकदोपज, द्वन्द्वज, विविधप्रकारकञ्च विषमज्वर, अग्निमान्द्य, शिर शूल, विद्रधि, भगन्दर, इत्या दकान् रोगान् तथा हन्ति यथा भास्करस्तिमिर हन्ति ॥ २६६–२७० ॥

अथ पुटपाक-विषमज्वरान्तकलौहम्—

हिङ्गुलसम्भवं सूतं गन्धकेन सुकज्जलम्।
रसपर्पटीवत् पाच्यं सूताङ्घ्रि हेमभस्मकम् ॥ २७१ ॥
लौहं ताम्रमभ्रकञ्च रसस्य द्विगुणं क्षिपेत्।
वङ्गञ्चैव प्रवालञ्च रसार्द्धञ्च विनिक्षिपेत् ॥ २७२ ॥
मुक्ता शङ्खं शुक्तिभस्म रसपादिकमेव च।
मुक्तागृहे च संस्थाप्य पुटपाकेन साधयेत् ॥ २७३ ॥
भक्षयेत् प्रातरुत्थाय द्विगुञ्जाफलमानत.।
अनुपानं प्रयोक्तव्यं कणाहिङ्गु ससैन्धवम् ॥ २ ४ ॥
ज्वरमष्टविधं हन्ति वातपित्तकफोद्भवम्।
प्लीहानं यकृतं गुल्मं साध्यासाध्यमथापि वा ॥ २७५ ॥
सन्ततं सतताख्यञ्च त्र्याहिक चतुराहिकम्।
कामला पाण्डुरोगञ्च शोथं मेहमरोकचम॥ २७६ ॥
ग्रहणीमामदोषञ्च कासं श्वासञ्च दारुणम्।
मूत्रकृच्छ्रातिसारञ्च नाशयेदविकल्पत· ॥ २७७ ॥

अथ पुटपाकविषमज्वरान्तकलौहनिर्माणमाह हिङ्गुलसम्भवमित्यादि—शुद्धहिङ्गुलोत्थपारद (१ तो०), शुद्धगन्धक (१ तो०), उभयो कज्जलीं कृत्वा लौहपात्रे मन्दाग्निना रसपर्पटीनिर्माणमिव पर्पटीं कृत्वा स्वाङ्गशीताञ्च पर्पटीं खल्वे वचूर्णयेत्। ततस्तत्र सूतापेक्षया अङ्घ्रि-चतुर्थांश स्वर्णभस्म (३ मा०), लौहभस्म (२ तो०), ताम्रभस्म ( २ तो० ), अभ्रकभस्म ( २ तो० ), वङ्गभस्म पारदापेक्षयार्धं ( ६-मा०), प्रवालभस्म ( ६ मा० ), तथा मुक्ताभस्म रसपादिकं ( ३ मा० ), शङ्खभस्म ( ३ मा० ), मुक्ताशुक्तिभस्म ( ३ मा० ), एतत्सर्वं सम्मेल्य घृतकुमारीस्वरसेन सम्यगाप्लाव्य दिनद्वयं विमर्दयेत्। सशुष्कञ्च कृत्वा शुक्तिद्वयान्तर्गतं विधाय शरावसम्पुटं कृत्वा वन्योपलैः लघुपुटं दद्यात्। रसोऽयं द्विगुञ्जमात्रया प्रत्यह पिप्पलीचूर्णशुद्धहिङ्गुसैन्धवानुपानैस्सह सेवितो वातोत्थ, पित्तोत्थ, कफज, अष्टविध च ज्वरं हन्ति। तथा प्लीहवृद्धिं, यकृद्वृद्धिं, गुल्म, साध्यमसाध्यम्वा सततं, सन्ततं, त्र्याहिक, चातुर्थक च ज्वर, कामला, पाण्डुरोग, शोथ, प्रमेहं, ग्रहणीविकारं, अरुचिं, आमदोष, दारुण कासं, श्वास, मूत्रकृच्छ्रं, अतीसारञ्च निश्चयेन विनाशयति ॥ २७१-२७७ ॥

अथ बृहद्विषमज्वरान्तकलौहम्—

शुद्धसूत तथा गन्ध कारयेत् कज्जलीं शुभाम्।
मृतसूत हेम तार लौहमभ्रञ्च ताम्रकम् ॥ २७८ ॥
तालसत्त्व वङ्गभस्म मौक्तिक सप्रवालकम्।
सुवर्णमाक्षिकञ्चापि चूर्णयित्वा विभावयेत् ॥ २७९ ॥
निर्गुण्डी नागवल्ली च काकमाची सपर्पटी।
त्रिफला कारवेल्लश्च दशमूली पुनर्नवा ॥ २८० ॥
गुडूची वृषकश्चापि सभृङ्गकेसराजकः।
एतेषाञ्च रसेनैव भावयेत् त्रिदिनं पृथक् ॥ २८१ ॥
गुञ्जामात्रां वटीं कुर्यात् शास्त्रवित् कुशलो भिषक्।
पिप्पलीगुडकेनैव हि देया वटिका शुभाम् ॥ २८२ ॥
ज्वरमष्टविधं हन्ति निराम सामेव वा।
सप्तधातुगतञ्चापि नानादोषोद्भव तथा ॥ २८३ ॥
सततादि ज्वरं हन्ति साध्यासाध्यमथापि वा।

अभिघाताभिचारोत्थं ज्वर जीर्णं विशेषतः ॥ २८४ ॥

अथ बृहद्विषमज्वरान्तकलौहनिर्माणमाह शुद्धसूतमित्यादि—शुद्धपारद, शुद्ध-गन्धक, प्रत्येक तोलकैक समादाय कज्जलीं कृत्वा तत्र मृत सूत–रससिन्दूर (१तो०) स्वर्णभस्म ( १ तो० ) रजतभस्म ( १ तो० ), लौहभस्म ( १ तो० ), अभ्रक-भस्म ( १ तो० ), ताम्रभस्म ( १ तो० ), हरितालसत्व ( १ तो० ), वङ्गभस्म ( १ तो० ), मुक्ताभस्म ( १ तो० ), प्रवालभस्म ( १ तो० ), स्वर्णमाक्षिकभस्म ( १ तो० ), इमानि द्रव्याणि सम्मेल्य पूर्वं निर्गुण्डीपत्रस्वरसेनाप्लाव्य त्रिदिनं मर्दयेत्, ततश्च नागवल्लीस्वरसेन, काकमाचीस्वरसेन, पर्पटस्वरसेन, त्रिफला-क्वाथेन, कारवेल्लस्वरसेन, दशमूलक्वाथेन, पुनर्नवास्वरसेन, गुडूचीस्वरसेन, वासकस्वरसेन, भृङ्गराजरसेन, केशराजरसेन पृथक् २ त्रिदिन भावयित्वा रक्ति परिमिता वटिका कृत्वा सशोष्य च काचपात्रे स्थापयेत्। अस्य रसस्यैकैका वटी प्रत्यह पिप्पलीचूर्णमिश्रितगुडेन सह सेविता अष्टविधज्वर, निरामज्वर आमज्वर, सप्तधातुगत ज्वर, नानादोषज ज्वर, साध्यमसाध्यम्वा ज्वर, सतता-दिज्वर, अभिघाताभिचारोद्भव ज्वर, जीर्णज्वरञ्च हन्ति ॥ २७८–२८४ ॥

अथ शीतभञ्जीरस (प्रकारभेदेन)—

तालकं दरदोद्भूत–पारदो गन्धकः शिला ।
क्रमवृद्ध्या ताम्रपात्रीं द्रव्यैरेतैर्विलेपयेत् ॥ २८५ ॥
अधोमुखीं दृढे भाण्डे तां निरुध्याथ पूरयेत् ।
चुल्ल्या वालुकया यत्नमग्निं प्रज्वालयेद्दृढम् ॥ २८६ ॥
शीते संचूर्ण्य माषोऽस्य नागवल्लीदले स्थित. ।
भक्षितो मरिचैः सार्द्धं समस्तान् विषमज्वरान् ।
शीतदाहादिकं हन्यात् पथ्यं शाल्योदन पय ॥ २८७ ॥

अथ प्रकारभेदेन शीतभञ्जीरसनिर्माणमाह तालकमित्यादि—शुद्धहरिताल भस्म तस्य वा ( १ तो० ), शुद्धहिङ्गुलोत्थपारद ( २ तो० ), शुद्धगन्धक ( ३ तो० ), शुद्धमन शिला ( ४तो० ), पूर्वं पारदगन्धकयोः कज्जला कृत्वा शेषद्रव्याणि सम्मेल्य जलेन सह पिष्ट्वा तदनु पिष्टीमेना लघुकटोरिकास्वरूपताम्रपात्रस्याभ्यन्तरिकप्रदेशे लिप्त्वा संशोष्य च ताम्रकटोरिकामधोमुखीं कृत्वा दृढमृण्मयभाण्डस्याभ्यन्तरे संस्था-

प्य भाण्डाभ्यन्तरप्रदेशेन सह कटोरिकाया सन्धिबन्धनं कृत्वा भाण्डावकाश सूक्ष्म-वालुकाभि प्रपूर्य भाण्ड चूल्यामास्थापयेत्। ततश्च दिनैकमग्निं दत्वा स्वाङ्गशीतम-वतार्य वालुका दूरीकृत्य औषधञ्च समादाय विचूर्ण्य काचपात्रे स्थापयेत्। शीत-भञ्जीरसमिमं प्रत्यह रक्तिमित नागवल्लीदले मरिचचूर्णं निक्षिप्य भक्षयेत्। इत्थमय समस्तविषमज्वरान् शीतदाहादिकं च हन्ति पथ्ये च सदुग्ध षष्टिकौदनं देयम् ॥ २८५–२८७ ॥

अथ चिन्तामणि (प्रकारभेदेन)—

**तालकं शुल्वक चूर्णं शिखिग्रीवं समांशिकम् ।**
**संपिष्य कारयेत् सर्वं चक्रिकासन्निभ शुभम् ॥ २८८ ॥**
**शरावपिहितं रात्रौ पचेद् गजपुटेन तु ।**
**स्वाङ्गशीतं समुद्धृत्य भक्षयेत् माषमात्रकम् ।**
**शर्करासहितं सेव्यं सर्वज्वरहरं परम् ॥ २८९ ॥**

अथ प्रकारभेदेन चिन्तामणिरसनिर्माणमाह तालकमित्यादि—शुद्धहरितालकं ( १ तो० ), ताम्रभस्म ( १ तो० ), चूर्ण—शुक्तिभस्म ( १ तो० ), शिखिग्रीव शुद्धतुत्थक ( १ तो० ), एतत् सर्वं खल्वे सञ्चूर्ण्य जलेन सह पिष्ट्वा चक्रिकाश्च कृत्वा शरावसम्पुटस्थ रात्रौ गजपुटे पचेत्। स्वाङ्गशीत सम्पुटादुद्धृत्य विचूर्ण्य च काच-पात्रे स्थापयेत्। रसोऽयं शर्करासहित सेवित सर्वज्वरान् हन्ति ॥ २८८–२८९ ॥

अथ ज्वराङ्कुश —

**ताम्रतो द्विगुणं तालं मर्दयेत् सुषवीद्रवैः ।**
**प्रपुटेत् भूधरे शीते वज्रीक्षीरविमर्दयेत् ॥ २९० ॥**
**प्रपुटेत् भूधरे पश्चात् पञ्चगुञ्जामितं शुभम् ।**
**आर्द्रकस्य रसेनैव सर्वज्वरनिकृन्तनः ॥ २९१ ॥**
**ऐकाहिकं द्व्याहिकञ्च त्र्याहिकञ्चातुराहिकम् ।**
**विषमञ्चापि शीताढ्यं ज्वरं हन्ति ज्वराङ्कुशः ॥ २९२ ॥**

अथ ज्वराङ्कुशरसनिर्माणमाह ताम्रत इत्यादि—ताम्रभस्म ( १ तो० ), शुद्ध-हरितालक ( २ तो० ), उभयं खल्वे सञ्चूर्ण्य कारवेल्लकस्वरसेन विमर्द्य भूधर-यन्त्रे पुटेत्। स्वाङ्गशीत पुन खल्वे निक्षिप्य वज्री = स्नुही तस्या क्षीरेण विमर्द्य

चक्रिकाश्च कृत्वा भूधरयन्त्रे पुटेत्। इत्थं सम्पुटितं खल्वे विचूर्ण्य काचपात्रे सुरक्षयेत्। रसोऽयं यथारोगं यथाबलञ्च गुञ्जैकादारभ्य पञ्चगुञ्जापरिमितं आर्द्रकस्वरसानुपानेन सेवितः सर्वज्वरं हन्ति। तथा ऐकाहिकं, द्व्याहिकं, तृतीयकं, चातुर्थिकं, विषमं, शीतपूर्वकञ्च ज्वरं विनिहन्ति ॥ २९०–२९२ ॥

अथ मेघनादो रसः —

आरं कांस्यं मृतं ताम्रं त्रिभिस्तुल्यञ्च गन्धकम्।
रसेन मेघनादस्य पिष्ट्वा रुद्ध्वा पुटे पचेत् ॥ २९३ ॥
भक्षयेत् पर्णखण्डेन विषमज्वरनाशनम्।
अस्य मात्रा द्विगुञ्जा स्यात् पथ्यं दुग्धौदनं हितम्।
पञ्चामृतपलञ्चैकमनुपानं प्रयोजयेत् ॥ २९४ ॥

अथ मेघनादरसनिर्माणमाह आरमित्यादि—आरं = पित्तलभस्म ( १ तो० ), कांस्यभस्म ( १ तो० ), ताम्रभस्म ( १ तो० ), शुद्धगन्धकं त्रिभिस्तुल्यं ( ३ तो० ), सर्वं खल्वे पिष्ट्वा मेघनादो वन्यसकण्टकतण्डुलीयकस्तस्य स्वरसेन विमर्द्य चक्रिकाश्च कृत्वा शरावसम्पुटस्थं गजपुटे पचेत्। रसोऽयं द्विरक्तिकप्रमाणगृहीतो नागवल्ली पत्रस्वरसेन सेवितो विषमज्वरं हन्ति। पथ्ये च सदुग्धमौदनं पलपरिमितञ्च पञ्चामृतं पिबेत्। ( गव्यं क्षीरं दधि घृतं माक्षिकञ्चाथ शर्करा। एकत्र योजितं तुल्यं पञ्चामृतमिहोच्यते ) ॥ २९३–२९४ ॥

अथ शीतज्वरहरो रसः —

सूतमाक्षिकगन्धानां भागश्चारुष्करस्य च।
तथाऽष्टौ तालकाच्चूर्णात् रविदुग्धस्य षोडश ॥ २९५ ॥
स्नुहीक्षीरस्य चैवाष्टौ सर्वं मृद्वग्निना पचेत्।
स्वाङ्गशीतं समुद्धृत्य ततः खल्ले विमर्दयेत्।
शीतज्वरहरो नाम्ना रसोऽयं परिकीर्त्तितः ॥ २९६ ॥

अथ शीतज्वरहररसनिर्माणमाह सूतमित्यादि—शुद्धपारद ( १ तो० ), स्वर्णमाक्षिकभस्म ( १ तो० ), शुद्धगन्धक ( १ तो० ), शुद्धभल्लातकचूर्ण ( १ तो० ), शुद्धहरितालचूर्ण ( ८ तो० ), शुद्ध मदारदुग्धं ( १६ तो० ), शुद्धं स्नुहीदुग्धं ( ८ तो० ), पूर्वं रसगन्धकयो कज्जलीं कृत्वा ततः सर्वं सम्मेल्य पिष्ट्वा च पुटपा-

कविधिना मृदग्नौ पचेत्। स्वाङ्गशीतमवतार्य खल्वे पिष्ट्वा काचपात्रे स्थापयेत्। अय शीतज्वरहरनामको रस प्रत्यह रक्तिपरिमित सेवित शीतपूर्वकं ज्व हन्ति ॥ २९५–२९६ ॥

अथ अन्यशीतभञ्जीरस —

पारद रसक ताल तुत्थ टङ्कणगन्धकम्।
सर्वमेतत् सम शुद्धं कारवेल्लरसैर्दिनम् ॥ २९७ ॥
मर्दयेत् तेन कल्केन ताम्रपात्रोदरं लिपेत्।
अङ्गुलार्द्धार्द्धमानेन तं पचेत् सिकताह्वये ॥ २९८ ॥
यन्त्रे यावत् स्फुटन्त्येव व्रीहयस्तस्य पृष्ठत।
ततस्तत् शीतल ग्राह्य ताम्रपात्रोदरात् भिषक् ॥ २९९ ॥
माषैकं पर्णखण्डेन भक्षयेत् मरिचै. समम्।
शीतभञ्जीरसो नाम त्रिदिनान्नाशयेज्ज्वरम् ॥ ३०० ॥

अथान्यशीतभञ्जीरसनिर्माणमाह पारदमित्यादि—शुद्धपारद (१ तो०), शुद्धगन्धक (१ तो०) खर्परभस्म (१ तो०), शुद्धहरितालचूर्णं (१ तो०), शुद्धनीलतुत्यचूर्णं (१ तो०), शुद्ध टङ्गणं (१ तो०), पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य कारवेल्लस्वरसेन सम्यगाप्लाव्य दिनमेकं विमर्द्य पश्चादेकं ताम्रपात्रं (कटोरिकास्वरूपं) पारदादिषड्द्रव्यनिर्मितकल्केन अङ्गुलार्द्धार्द्धपरिमितस्थूल आभ्यन्तरिकप्रदेशे लिप्त्वा अधोमुख ताम्रपात्रं मृण्मयभाण्डस्याभ्यन्तरिकभागे संस्थाप्य बदरीपत्रकल्केन ताम्रपात्रस्य भाण्डप्रदेशेन सह सन्धिबन्धनं कृत्वा सशोष्य च भाण्डावकाशं सूक्ष्मवालुकाभि प्रपूर्य बालुकोपरि च किञ्चिद्धान्य निक्षिप्य भाण्ड चूल्यामारोप्य तावत्तीव्रवह्निं दद्यात् यावद्धान्यस्फोट भवेत्। धान्यप्रफुल्लनानन्तर पाकं जातमिति ज्ञात्वा स्वाङ्गशीतमवतार्य भेषजं खल्वे विचूर्ण्य काचपात्रे स्थापयेत्। (भाण्डमुख शरावेण निरुद्ध्य सन्धिबन्धन कृत्वा सशोष्य शरावे च धान्यं निक्षिप्य धान्यस्फोटावधि पाकं कुर्यादिति साधु पन्था) रसोऽय द्विगुञ्जपरिमितो मरिचचूर्णेन सह पर्णखण्डे सेवितस्त्रिदिनाभ्यन्तर एव ज्वरं विनिहन्ति ॥ २९७–३०० ॥

अथ पञ्चाननो रसः —

रसकं तालकं तुत्थं टङ्कणं रसगन्धकम् ।
तुल्यांशं सुपवीतोयैर्मर्दयेत् यामयुग्मकम् ॥ ३०१ ॥
कृत्वा गोलं ताम्रपात्रेणाधोवक्त्रेण रोधयेत् ।
स्थालीं मृत्कर्पटैर्लिप्त्वा पचेत् चुल्ल्यां दिनं ततः ॥ ३०२ ॥
तच्छीतं ताम्रभस्मापि गृहीयात् सुरसाजलैः ।
याम मर्द्यं ततो वल्लं तुलसीमरिचैर्युतम् ॥ ३०३ ॥
हन्ति सर्वं ज्वरं घोरं विषमञ्च त्रिदोषजम् ।
धात्रीकल्केन वा युक्तः दाहाख्यं विषमं जयेत् ॥ ३०४ ॥
पथ्यं दुग्धौदनं दद्यात् मुद्गयूषं सशर्करम् ।
ज्वरे धातुगते दद्यात् पिप्पलीक्षौद्रसंयुतम् ।
अयं पञ्चाननो नाम विषमज्वरनाशनः ॥ ३०५ ॥

अथ पञ्चाननरसनिर्माणमाह रसकमित्यादि—रसक—खर्परभस्म, शुद्धतालक, शुद्धतुत्थकचूर्णं, शुद्धटङ्कण, शुद्धपारद, शुद्धगन्धक, प्रत्येक द्रव्य तोलकैकं समादाय पारदगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि निक्षिप्य कारवेल्लकस्वरसेन यामद्वयं विमर्द्य गोलकं कृत्वा मृण्मयभाण्डे संस्थाप्य तदुपरि ताम्रपात्रनिर्मितकटोरिकामाच्छाद्य द्वयोः सन्धिबन्धनं कृत्वा भाण्डस्यावकाशप्रदेशे वालुका प्रपूर्य तस्याधोभागे च स्निग्धमृत्पङ्कलिप्तवस्त्राणां वेष्टनं ( लेपन ) कृत्वा संशोष्य च चुल्ल्यामास्थापयेत् । ततो दिनैकं वह्निं दत्त्वा पाकं कुर्यात् । स्वाङ्गशीतमवतार्य चूर्णञ्च कृत्वा ताम्रभस्म ( १ तोलक ) दत्त्वा तुलसीस्वरसेन यामैकं पिष्ट्वा संशोष्य च काचपात्रे स्थापयेत् । पञ्चाननाख्योऽयं रसो वल्लमितो ( १॥ रत्ती भर ) मरिचचूर्णमिश्रिततुलसीस्वरसानुपानेन सेवितः सर्वज्वरं, विषमज्वरं त्रिदोषज्वरञ्च नाशयति । पाषाणघृष्टधात्रीकल्केन सह सेवितो दाहपूर्वकं विषमज्वरं हन्ति । पथ्ये दुग्धौदनं सशर्करं मुद्गयूषञ्च देयम् । धातुगतज्वरे रसोऽयं पिप्पलीचूर्णमधुभ्यां देयः । विशेषेण पञ्चाननाख्योऽयं रसो विषमज्वरं विनिहन्ति ॥ ३०१–३०५ ॥

अथ वमनयोगः —

कुमारीमूलकर्षैकं पिबेत् कोष्णजलेन तु ।

**विषमन्तु ज्वरं हन्ति वमनेन चिरन्तनम् ॥ ३०६ ॥**

अथ वमनयोगमाह कुमारीत्यादि—दृषदि पिष्ट घृतकुमारीमूलकल्कं कर्षमितमादाय कोष्णोदकेन सह पिबेत। योगोऽयं वमनयोगेन चिरन्तन विषमज्वरं हन्ति ॥ ३०६ ॥

अथ विश्वेश्वरो रस —

**दरदं गन्धकं सूतं तुल्यांशं मर्दयेद् द्रवैः।**
**अश्वत्थजैस्त्र्यहं पश्चात् रसैः कोलकमूलजैः ॥ ३०७ ॥**
**निदिग्धिकारसैः काकमाचिकाया रसैः पुनः।**
**द्विगुञ्जां वा त्रिगुञ्जां वा गोक्षीरेण प्रदापयेत्।**
**रात्रिज्वरं निहन्त्याशु नाम्ना विश्वेश्वरो रस ॥ ३०८ ॥**

अथ विश्वेश्वररसनिर्माणमाह दरदमित्यादि—शुद्धहिङ्गुल शुद्धपारद, शुद्धगन्धक प्रत्येक समभागेनादाय पारदगन्धकयो कज्जलीं कृत्वा हिङ्गुलञ्च निक्षिप्य दृढं पेषयेत्। ततश्च पिप्पलत्वक्कषायेण त्रिदिन भावयित्वा कोलकमूल = बदरवृक्षमूलत्वक् तस्या क्वाथेनापि दिनत्रय भावयित्वा त्रिदिन लघुकण्टकारीरसैस्तथा त्रिदिनञ्च काकमाचीस्वरसेन भावयेत्। विश्वेश्वरनामकोऽयं रसो यथारोग यथाबलञ्च गुञ्जैकादारभ्य त्रिगुञ्जापर्यन्त गोदुग्धानुपानेन प्रत्यह सेवितो रात्रिज्वर शीघ्र नाशयति ॥ ३०७–३०८ ॥

अथ त्र्याहिकारिरस —

**रसकेन समं शङ्खं शिखिग्रीवञ्च पादिकम्।**
**गोजिह्वया जयन्त्या च तण्डुलीयैश्च भावयेत् ॥ ३०९ ॥**
**प्रत्येकं सप्त सप्ताथ शुष्कं गुञ्जाचतुष्टयम्।**
**जरणेन घृतेनाद्यात् त्र्याहिकज्वरशान्तये ॥ ३१० ॥**

अथ त्र्याहिकारिरसनिर्माणमाह रसकेनेत्यादि—शुद्धखर्परभस्म ( १ तो० ), शङ्खभस्म ( १ तो० ), शुद्धनीलतुत्थचूर्ण रसशङ्खापेक्षया पादिक तुर्यांश ( ६ मा० ) समादाय सर्वद्रव्य खल्वे पिष्ट्वा गोजिह्वा ( गाजवा ) तस्या स्वरसेन दिनसप्तकं भावयेत्, जयन्तीपत्रस्वरसेन च दिनसप्तकं भावयेत्। ततश्च वन्यतण्डुलीयकस्वरसेनापि सप्तदिन भावयित्वा संशोष्य च काचपात्रे स्थापयेत्। रसोऽयं यथाबलं यथारोगञ्च रक्तिकैकादारभ्य तुर्यरक्तिमितो जरणेन भृष्टजीरकचूर्णेन ( जीरको

जरणोऽजाजीति भावप्रकाश ) घृतेन च सह प्रत्यहं सेवितस्त्र्याहिकं ज्वरं हन्ति ॥ ३०९-३१० ॥

अथ चातुर्थकारि —

हरिताल शिला तुत्थ शङ्खचूर्णञ्च गन्धकम् ।
समांशं मर्दयेत् प्राज्ञः कुमारीरसभावितम् ॥ ३११ ॥
शरावसम्पुटे कृत्वा पश्चाद् गजपुटे पचेत् ।
कुमारिकारसेनैव वल्लमात्रा वटी कृता ॥ ३१२ ॥
दत्ता शीतज्वरं हन्ति चातुर्थकं विशेषतः ।
मरिचघृतयोगेन तक्रं पीत्वा चरेद्वमीम् ॥
एतया वमनं भूत्वा ज्वरस्तस्मात् विनश्यति ॥ ३१३ ॥

अथ चातुर्थिकारिरसनिर्माणमाह हरितालमित्यादि—शुद्धहरिताल, शुद्धमनःशिला, शुद्धनीलतुत्थक, शङ्खभस्म, शुद्धगन्धक, प्रत्येकं समभागेनादाय खल्वे सञ्चूर्ण्य घृतकुमारीस्वरसेन सम्यगाप्लाव्य दृढं पिष्ट्वा सशोष्य च शरावसम्पुटस्थं कृत्वा गजपुटे पचेत् । गजपुटलक्षणं यथा—

राजहस्तप्रमाणेन चतुरस्रञ्च निम्नकम् । पूर्णञ्चोपलसाठीभिः कण्ठावध्यथ विन्यसेत् ॥
विन्यसेत् सम्पुटं तत्र पुटनद्रव्यपूरितम् । पूर्णच्छगणतोऽर्द्धानि गिरिण्डानि विनिःक्षेपेत् ॥
एतद्गजपुटं प्रोक्तं महागुणविधायकम् ॥

अन्यत्रापि—

सपादहस्तमानेन कुण्डे निम्ने तथाऽऽतते । वनोपलसहस्रेण पूर्णे मध्ये विधारयेत् ॥
पुटनद्रव्यसंयुक्ता कोष्ठिका मुद्रिता मुखे । अथार्द्धानि करण्डानि अर्द्धान्युपरि निक्षिपेत ॥
एतद्गजपुटं प्रोक्तं ख्यातं सर्वपुटोत्तमम् ॥ इति ।

स्वाङ्गशीतपुटादौषधिं गृहीत्वा खल्वे घृतकुमारिकास्वरसेन सह घोटयित्वा वल्लपरिमितवटिकां कृत्वा काचपात्रे स्थापयेत् । अस्य रसस्य प्रत्यहमेकैका वटी पूर्वं तक्रं पीत्वा मरिचचूर्णगोघृतेन सह सेविता वमनयोगेन शीतपूर्वकज्वरं, विशेषेण चातुर्थिकं ज्वरं च विनिहन्ति ॥ ३११-३१३ ॥

अथ चिन्तामणिरसः ( प्रकारभेदेन )—

रसः गन्धं विषं शुल्वं मृतमभ्रं फलत्रिकम् ।

त्र्यूषणं दन्तीबीजञ्च समं खल्ले विमर्दयेत् ॥ ३१४ ॥
द्रोणपुष्पीरसैर्भाव्य शुष्कं तद् वस्त्रगालितम् ।
चिन्तामणिरसोऽजीर्णे ह्येष वै शस्यते सदा ॥ ३१५ ॥
ज्वरमष्टविधं हन्ति सर्वशूलहरः परः ।
गुञ्जैकं वा द्विगुञ्जं वा देयमार्द्रकवारिणा ॥ ३१६ ॥

अथ प्रकारान्तरेण चिन्तामणिरसनिर्माणमाह रसमित्यादि—शुद्धपारद ( १ तो० ), शुद्धगन्धक ( १ तो० ), शुद्धवत्सनाभचूर्ण ( १ तो० ), ताम्रभस्म ( १ तो० ), अभ्रकभस्म ( १ तो० ), त्रिफलाचूर्ण ( १ तो० ), त्रिकटुचू० ( १ तो० ), शुद्धदन्तीवीजचूर्ण ( १ तो० ), पूर्वं रसगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि निक्षिप्य द्रोणपुष्पीस्वरसेन सम्यगाप्लाव्य दृढं विमर्द्य संशोष्य वस्त्र - तत्र कृत्वा काचपात्रे स्थापयेत् । अथ चिन्तामणिरसो गुञ्जपरिमितो द्विगुञ्जपरिमितो वा आर्द्रकस्वरसेन प्रत्यहं सेवितोऽजीर्णं हन्ति । तथा अष्टविधं ज्वरं तथा सर्वविधं शूलञ्च हन्ति ॥ ३१४–३१६ ॥

अथ बृहच्चिन्तामणिरसः—( प्रकारभेदेन )

रसगन्धकलोहानि ताम्रं तारं हिरण्यकम् ।
हरितालं खर्परञ्च कांस्यं वङ्गञ्च विद्रुमम् ॥ ३१७ ॥
मुक्तामाक्षिककाशीशं शिला च टङ्कणं समम् ।
कर्पूरञ्च समं दत्त्वा भावना सप्त सप्तकम् ॥ ३१८ ॥
भार्गी वासा च निर्गुण्डी नागवल्ली जयन्तिका ।
कारवेल्लं पटोलञ्च शक्राशनपुनर्नवे ॥ ३१९ ॥
आर्द्रकञ्च ततो दद्यात् प्रत्येकं वारसप्तकम् ।
चिन्तामणिरसो नाम सर्वज्वरविनाशनः ॥ ३२० ॥
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् ।
द्वन्द्वजं विषमाख्यञ्च धातुस्थञ्च ज्वरं जयेत् ॥ ३२१ ॥
कासं श्वासं तथा शोथं पाण्डुरोगं हलीमकम् ।
प्लीहानमग्रमांसञ्च यकृतञ्च विनाशयेत् ॥ ३२२ ॥

अथ प्रकारभेदेन बृहच्चिन्तामणिरसनिर्माणमाह रसेत्यादि—शुद्धपारद ( १

तो० ), शुद्धगन्धक ( १ तो० ), लौहभस्म ( १ तो० ), ताम्रभस्म ( १ तो० ), रजतभस्म ( १ तो० ), सुवर्णभस्म ( १ तो० ), शुद्धहरितालचूर्ण ( १ तो० ), खर्परभस्म ( १ तो० ), कास्यभस्म ( १ तो० ), वङ्गभस्म ( १ तो० ), प्रवाल-भस्म ( १ तो० ), मुक्ताभस्म ( १ तो० ), स्वर्णमाक्षिकभस्म ( १ तो० ), शुद्धकाशीशचूर्ण ( १ तो० ), शुद्धमन शिलाचूर्ण ( १ तो० ), शुद्धटङ्कण (१ तो०) कर्पूरं ( १ तो० ), पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि निक्षिप्य भार्गी, वासक , निर्गुण्डी, नागवल्ली, जयन्तिका, कारवेल्लक पटोलं शक्राशन-भङ्गा, पुनर्नवा, आर्द्रकं एपा द्रव्याणा स्वरसैं क्वाथैर्वा पृथक ७ सप्तवार भावयित्वा रक्तिपरिमितवटिकाश्च कृत्वा काचपात्रे स्थापयेत् । अय चिन्तामणिरस सर्वज्वर-विनाशकस्तथा वातिक, पैत्तिक श्लैष्मिकं, सान्निपातिकं द्वन्द्वजं, विषमं, धातुस्थ ज्वर, कासं, श्वास, राजयक्ष्माण, पाण्डुरोगं, हलीमक, प्लीहवृद्धि, अपस्मारं, यकृत्-वृद्धिञ्च विनाशयेत् ॥ ३१७-३२२ ॥

महाज्वराङ्कुश —

पारद गन्धक ताम्र हिङ्कुलं तालमेव च ।
वङ्ग लौह माक्षिकञ्च खर्परञ्च मन शिला ॥ ३२३ ॥
मृताभ्रक गैरिकञ्च टङ्कण दन्तिवीजकम् ।
सर्वाण्येतानि द्रव्याणि चूर्णयित्वा विभावयेत् ॥ ३२४ ॥
जम्वीरविजयाचित्र-तुलसीतिन्तिडीरसै ।
एभिर्दिनत्रय भाव्यं निर्जने रौद्रसङ्कुले ॥ ३२५ ॥
चणमात्रा वटीं कृत्वा छायाशुष्काञ्च कारयेत् ।
मन्दाग्निदीपनी चैव सर्वज्वरविनाशिनी ॥ ३२६ ॥
द्वन्द्वजं सर्वजञ्चैव चिरकालसमुद्भवम् ।
ऐकाहिक द्व्याहिकञ्च ज्वरञ्च सान्निपातिकम् ॥ ३२७ ॥
चातुर्थकं तथाऽत्युग्र जलदोपसमुद्भवम् ।
सर्वान् ज्वरान निहन्त्याशु भास्करस्तिमिरं यथा ।
महाज्वराङ्कुशो नाम रसोऽय मुनिभाषित ॥ ३२८ ॥

अथ महाज्वराङ्कुशनिर्माणमाह पारदमित्यादि—शुद्धपारदं, शुद्धगन्धक, ता-

भ्रभस्म, शुद्धहिङ्गुल, शुद्धतालक, वङ्गभस्म, लौहभस्म, स्वर्णमाक्षिकभस्म, खर्परभस्म, शुद्धमनःशिला, अभ्रकभस्म, शुद्धगैरिक, शुद्धटङ्कणं, शुद्धदन्तीवीजचूर्णं, प्रत्येकद्रव्यं समभागेनादाय पूर्वं पारदगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि निक्षिप्य सूक्ष्म विचूर्ण्य च जम्बीरनिम्बुरसेनाप्लाव्य घर्मयुक्ते निर्जने स्थाने त्रिदिन भावयेत्। तथैव विजयाचित्रकतुलसीतिन्तडीनां स्वरसैः क्वाथैर्वा पृथक् २ त्रिदिन भावयेत्। तदनु चणकप्रमाणवटिकां कृत्वा छायायाञ्च संशोष्य काचपात्रे स्थापयेत्। अस्य रसस्य प्रत्यहमेकैका वटी सेविता मन्दाग्नि दीपयति, सर्वज्वरञ्च विनाशयति। तथा द्वन्द्वजं, सर्वदोषोद्भव, चिरकालोत्पन्नं ऐकाहिकं, द्व्याहिक, सान्निपातिकं, चातुर्थिकं, जलदोषोत्पन्न, किम्बहुना सर्वान् ज्वरान् हन्ति यथा सूर्यस्तिमिरम्। महाज्वराङ्कुशनामकोऽयं रसो मुनिभाषितः। रसोऽयं ज्वराणां निश्चयेन नाशकर्ता ॥ ३२३–३२८ ॥

अथ तन्त्रान्तरोक्तमहाज्वराङ्कुशो रसः —

पारदं हिङ्गुलं ताम्रं माक्षिकं तुल्यमेव च।<br>
वङ्गं मृतञ्च गन्धश्च खर्परञ्च मनःशिला ॥ ३२९ ॥<br>
तालकं घनपाषाणं गैरिकं टङ्कणं तथा।<br>
दन्तीवीजानि सर्वाणि चूर्णयित्वा विभावयेत्।<br>
भावना पूर्ववत् देया वटीं कुर्य्याच्च पूर्ववत् ॥ ३३० ॥

अथ तन्त्रान्तरोक्तमहाज्वराङ्कुशरसनिर्माणमाह—पारदमित्यादि—शुद्धपारदं (१ तो०), शुद्धहिङ्गुल (१ तो०), ताम्रभस्म (१ तो०), स्वर्णमाक्षिकभस्म (१ तो०), वङ्गभस्म (१ तो०), शुद्धगन्धकं (१ तो०), खर्परभस्म (१ तो०) शुद्धमनःशिला (१ तो०), शुद्धहरतालचूर्णं (१ तो०), घनपाषाण—कान्तपाषाणभस्म (१ तो०), अथवा घनमभ्रकभस्म (१ तो०), कान्तपाषणभस्म च (१ तो०), शुद्धगैरिकचूर्णं (१ तो०) शुद्धटङ्कण (१ तो०), शुद्धदन्तीवीजचूर्णं (१ तो०) पूर्वं पारदगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य सर्वमेकत्रे सूक्ष्म विमर्द्य च जम्बीरविजयाचित्रतुलसीतिन्तिडीरसैः पृथक्२ दिनत्रयं तीव्रनिदाघे भावयित्वा दृढ विमर्द्य च चणकप्रमाणा वटीश्च कृत्वा छायाया संशोष्य काचपात्रे स्थापयेत्। अयं तन्त्रान्तरोक्तमहाज्वराङ्कुशरसो महाज्वराङ्कुशरस इव सर्वज्वराणां नाशकः ॥ ३२९–३३० ॥

अथ सर्वतोभद्ररस —

विशुद्ध गगन ग्राह्यं द्विकर्षं शुद्धगन्धकम् ।
तोलकं तोलकार्द्धञ्च हिङ्गुलोत्थरस तथा ॥ ३२१ ॥
कर्पूरं केशर मासी तेजपत्रं लवङ्गकम् ।
जातीकोषफलञ्च व सूक्ष्मैला करिपिप्पली ॥ ३२२ ॥
कुष्ठ तालीशपत्रञ्च धातकीचोचमुस्तकम् ।
हरीतकी च मरिच शृङ्गवेर विभीतकम् ॥ ३२३ ॥
पिप्पल्यामलकञ्चैव शाणभागं विचूर्णितम् ।
सर्वमेकीकृत पिष्ट्वा वटीं कुर्य्याद् द्विगुञ्जिकाम् ॥ ३२४ ॥
भक्षयेत् पर्णखण्डेन मधुना सितयाऽपि वा ।
रोग ज्ञात्वाऽनुपानञ्च प्रातः कुर्य्याद् विचक्षण ॥ ३२५ ॥
हन्ति मन्दानलान् सर्वान् आमदोष विसूचिकाम् ।
पित्तश्लेष्मभव रोग वातश्लेष्मभव तथा ॥ ३२६ ॥
आनाहं मूत्रकृच्छ्रञ्च सग्रहग्रहणीं वमिम् ।
अम्लपित्तं शीतपित्तं रक्तपित्तं विशेषत ॥ ३२७ ॥
चिरज्वर पित्तभवं धातुस्थं विषमज्वरम् ।
कास पञ्चविध हन्ति कामलां पाण्डुमेव च ॥ ३२८ ॥
सर्वलोकहितार्थाय शिवेन कथित. पुरा ।
सर्वतोभद्रनामायं रसः साक्षात् महेश्वर· ॥ ३२९ ॥

अथ सर्वतोभद्ररसनिर्माणमाह विशुद्धमित्यादि—अभ्रकभस्म द्विकर्ष, शुद्धगन्धक ( १ तो० ), शुद्धहिङ्गुलोत्थपारद तोलकार्द्ध, तथा कर्पूर, केशर, जटामासी, तेजपत्र, लवङ्गकं, जातीफलचूर्णं, जातिकोषचूर्णं, सूक्ष्मैला, गजपिप्पला, शुद्ध मिष्टकुष्ट, तालीशपत्र, धातकीपुष्प, चोच = त्वक्, शुद्धमुस्तक, हरीतकी, मरिच, आर्द्रकं विभीतकं, पिप्पली, आमलकम् एषा द्रव्याणा पृथक् २ शाणपरिमितं ( चतुर्माशक-मित्यर्थ ) वस्त्रपूत चूर्णं समादाय पारदगन्धकयो कज्जला कृत्वा शेषद्रव्याणि निक्षिप्य जलेन सह दृढं पिष्ट्वा द्विगुञ्जापरिमितवटिका कृत्वा सशोष्य च काचपात्रे स्थापयेत् । अस्य रसस्य प्रभाते प्रत्यहमेकैका वटीं ताम्बूलवीटिकाया ताम्बूलदलरसेन

वा, मधुना, शर्करया च सह संसेव्य तदुपरि यथारोगमनुपान पिबेत् । इत्थमयं रस. सर्वविधमन्दाग्नि, आमदोषं, विसूचिका, पित्तश्लेष्मजरोग, वातश्लेष्मजरोगं, आनाहं, मूत्रकृच्छ्र, ग्रहणीं, वमनं, अम्लपित्त, शीतपित्त, विशेषेण रक्तपित्त, चिरन्तनज्वरं, पित्तज्वर, सप्तधातुगतज्वरं, विषमज्वरं, पञ्चविध कास, कामला, पाण्डुरोगम् , अनुपानभेदेन विनाशयति । सर्वजनमङ्गलकामनया पुरा सर्वतोभद्रनामकोऽयं रस शिवेन प्रोक्त , तस्मात् साक्षान्महेश्वरस्तद्वद् लोकाना कल्याणकर-इत्यर्थ ॥ ३३१-३३९ ॥

अथ बृहज्ज्वरान्तकलौहम्—

रस गन्ध तोलकञ्च जातीकोषफले तथा ।
हेमभस्म तु पादैक तोलार्द्ध रूप्यलौहकम् ॥ ३४० ॥
शिलाजत्वभ्रकञ्चैव भृङ्गराजञ्च मुस्तकम् ।
केशराजमपामार्ग लवङ्गञ्च फलत्रिकम् ॥ ३४१ ॥
वराङ्गवल्कलञ्चैव पिप्पलीमूलमेव च ।
सैन्धवञ्च विडञ्चैव गुडूचीचूर्णमेव च ॥ ३४२ ॥
कण्टकारीं रसोनञ्च धान्यक जीरकद्वयम् ।
चन्दन देवकाष्ठञ्च दार्वींन्द्रयवमेव च ॥ ३४३ ॥
किराततिक्तक वाल तोलकञ्च समाहरेत् ।
द्वितोल मरिचं देय भावयेदार्द्रकद्रवैः ॥ ३४४ ॥
माषार्द्ध भक्षयेत् प्रातर्मधुना मधुरीकृतम् ।
ज्वरं नानाविधं हन्ति शुक्रस्थं चिरकालजम् ॥ ३४५ ॥
साध्यासाध्यविचारोऽत्र नैव कार्य्यो भिषग्वरैः ।
अन्तर्धातुगतञ्चैव नाशयेन्नात्र संशयः ॥ ३४६ ॥
भूतोत्थ श्रमजञ्चापि सन्निपातज्वर तथा ।
असाध्यञ्च ज्वरं हन्ति यथा सूर्य्योदयस्तमः ॥ ३४७ ॥
गरुडञ्च समालोक्य यथा सर्पः पलायते ।
तथैवास्य प्रसादेन ज्वरः सोपद्रवो ध्रुवम् ॥ ३४८ ॥
बलद पुष्टिदञ्चैव मन्दाग्निनाशन परम् ।
वार्य्यस्तम्भकरञ्चैव कामलापाण्डुरोगनुत् ॥ ३४९ ॥

पिष्ट्वा जलेन वटिका कार्य्या वल्लप्रमाणतः।
धातुस्थं सन्निपानोत्थं ज्वरं विषमसम्भवम् ॥ ३५२ ॥
कामशोकसमुद्भूतं त्रिदोषजनितं तथा।
कासं श्वासञ्च विविध शूल सर्वाङ्गसम्भवम् ॥ ३५३ ॥
शिरोरोग कर्णशूलं दन्तशूलं गलग्रहम्।
वातपित्तसमुद्भूतं ग्रहणीं सर्वसम्भवाम् ॥ ३५४ ॥
आमवातं कटीशूलमग्निमान्द्यं विसूचिकाम्।
अर्शांसि कामलां मेहं मूत्रकृच्छ्रादिकञ्च यत् ॥ ३५५ ॥
तत्सर्वं नाशयत्याशु विष्णुचक्रमिवासुरान्।
चूडामणिरसो ह्येष शिवेन परिकीर्त्तितः ॥ ३५६ ॥

अथ चूडामणिरसनिर्माणमाह मृतमित्यादि—मृतं सूतं = रससिन्दूर (१-तो०), प्रवालभस्म (१ तो०), स्वर्णभस्म (१ तो०), रजतभस्म (१ तो०) वङ्गभस्म (१ तो०), ताम्रभस्म (१ तो०), मुक्ताभस्म (१ तो०), तीक्ष्ण-लौहभस्म (१ तो०), अभ्रकभस्म (१ तो०), एतत् सर्वं खल्वे निक्षिप्य जलेन सह दृढ पिष्ट्वा वल्लपरिमिता वटी कृत्वा सशोष्य च काचपात्रे स्थापयेत्। अस्य रसस्य प्रत्यहमेकैका वटी यथारोगानुपानैस्सह सेविता सर्वधातुगत ज्वर, सन्निपात-ज्वर, विषमज्वर, कामशोकसम्भूत ज्वर, त्रिदोषज ज्वर, कास, श्वास, सर्वाङ्गस-म्भव विविध शूल, शिरोरोग, कर्णशूल, दन्तशूल, गलग्रह (गलावरोधमिति) वातपि-त्तसम्भवग्रहणीविकार, सर्वदोषसम्भवा वा ग्रहणी, आमवात, कटीशूल, अग्निमा-न्द्य, विसूचिका, सर्वविधार्शांसि, कामला, प्रमेह, मूत्रकृच्छ्रादिकञ्च नाशयति। चूडा-मणिसञ्ज्ञकोऽय रस शिवेन परिकीर्तितस्तथा स्वप्रभावेण विष्णुचक्र सुदर्शनमसुरा न्निव सर्वरोगान् नाशयति ॥ ३५१-३५६ ॥

अथ भानुचूडामणि —

सुवर्णं रससिन्दूरं प्रवालं वङ्गमेव च।
लौह ताम्र तेजपत्रं यमानीं विश्वभेषजम् ॥ ३५७ ॥
सैन्धवं मरिच्चं कुष्ठ खदिरं द्विहरिद्रकम्।
रसाञ्जनं माक्षिकञ्च समभागञ्च कारयेत् ॥ ३५८ ॥

वारिणा वटिका कार्य्या रक्तिद्वयप्रमाणतः ।
भक्षयेत् प्रातरुत्थाय सर्वज्वरकुलान्तकृत् ॥ ३५६ ॥

अथ भानुचूडामणिरसनिर्माणमाह सुवर्णमित्यादि—सुवर्णभस्म, रससिन्दूर, प्रवालभस्म, वङ्गभस्म, लौहभस्म, ताम्रभस्म, तेजपत्रचूर्ण, यमानीचूर्ण, शुण्ठीचूर्ण, सैन्धवलवण, मरिचचूर्ण शुद्धकूटचूर्ण, खदिरचूर्ण, हरिद्राचूर्ण, दारुहरिद्राचूर्ण, रसाञ्जनचूर्ण, स्वर्णमाक्षिकभस्म प्रत्येकं द्रव्य समभागेनादाय खल्वे निक्षिप्य जलेन सह दृढ पिष्ट्वा द्विरक्तिपरिमितवटिका कृत्वा सशोष्य च काचपात्रे स्थापयेत् । अय रस प्रत्यह सेवित सर्वज्वरसमूह विनाशयति ३५७–३५९ ॥

अथ बृहच्चूडामणिरस —

कस्तूरिकाविद्रुमरौप्यलौह ताल हिरण्य रससिन्दुरञ्च ।
सुवर्णसिन्दूरलवङ्गमुक्ताः चोच घन माक्षिकराजपट्टम ॥३६०॥
गोक्षुरजातीफलजातिकोष मरीचकर्पूरशिखिग्रिवञ्च ।
प्रगृह्य सर्वं हि सम प्रयत्नात् अथाश्वगन्धाद्विगुणं हि वैद्यै ॥३६१॥
वक्ष्यमाणौषधैर्भाव्य प्रत्येकं मुनिसंख्यया ।
निर्गुण्डीफञ्जिकावासा–रविमूलत्रिकण्टकै ॥ ३६२ ॥
तद्वीर्य्यं कथयिष्यामि वातिकं पैत्तिक ज्वरम् ।
कफोद्भव द्विदोषोत्थ त्रिदोषजनित तथा ॥ ३६३ ॥
सन्ततं सतत हन्ति तृतीयकचतुर्थकौ ।
ऐकाहिक द्व्याहिकञ्च विषम भूतसम्भवम् ॥ ३६४ ॥
नाशयेदचिरादेव वृत्तमिन्द्राशनिर्यथा ।
चूडामणिरसो ह्येष शिवेन परिभाषित ॥ ३६५ ॥

अथ बृहच्चूडामणिरसनिर्माणमाह कस्तूरिकेत्यादि—कस्तूरी, प्रवालभस्म, रजतभस्म, लौहभस्म, शुद्धहरितालक, स्वर्णभस्म, रससिन्दूर, स्वर्णसिन्दूर, लवङ्गचूर्ण, मुक्ताभस्म, चोच–त्वक्पत्रचूर्ण, घन–शुद्धमुस्तकचूर्ण, स्वर्णमाक्षिकभस्म, कान्तपाषाणभस्म, गोक्षुरचूर्ण, जातीफलचूर्ण, जातीफलत्वचरचूर्ण, मरिचचूर्ण, कर्पूर, शुद्धनीलतुत्थकचूर्णं प्रत्येकं द्रव्य तोलकपरिमित तथा द्विगुणमश्वगन्धाचूर्णं समादाय खल्वे विचूर्ण्य, निर्गुण्डी, फञ्जिका–ब्राह्मणयष्टिका, वासकं, अर्कमूलं, गोक्षुरञ्च एषा

द्रव्याणां क्वाथैं पृथक् २ सप्तवारं भावयित्वा दृढं विमर्द्य सशोष्य च काचपात्रे स्थापयेत् । रसोऽयं प्रत्यहं यथारोगं, यथाबलं रक्तिकैकादारभ्य त्रिरक्तिपरिमितः सेवितो वातिकं, पैत्तिकं, कफजं, द्विदोषजं त्रिदोषजं, सन्ततं, सततं, तृतीयकं, चातुर्थिकं, ऐकाहिकं, द्व्याहिकं, विषमज्वरं, भूतज्वरञ्च विनाशयति, अयं चूडामणि-रसः श्रीशिवेन प्रोक्तः ॥ ३६०–३६५ ॥

अथ बृहज्ज्वरचूडामणिरसः —

स्वर्णं स्वर्णसिन्दूरं लौहं तारं मृगाण्डजाम् ।
जातीफलं जातीकोषं लवङ्गञ्च त्रिकण्टकम् ॥ ३६६ ॥
कर्पूरं गगनञ्चैव चोचं मुषलतालकम् ।
प्रत्येकं कर्षमानन्तु तुरङ्गञ्च द्विकार्षिकम् ॥ ३६७ ॥
विद्रुमं भस्मसूतञ्च मौक्तिकं माक्षिकं तथा ।
राजपट्टं शिखिग्रीवं सर्वं सञ्चूर्ण्य यत्नतः ।
खल्ले तु चूर्णमादाय भावयेत् परिकीर्त्तितैः ॥ ३६८ ॥
निर्गुण्डीफञ्जिकावासा- रविमूलत्रिकण्टकैः ।
ज्वरमष्टविधं हन्ति साध्यासाध्यमथापि वा ॥ ३६९ ॥

इति रसेन्द्रसारसङ्ग्रहे ज्वराधिकारः ।

अथ बृहज्ज्वरचूडामणिरसनिर्माणमाह स्वर्णमित्यादि—स्वर्णभस्म, स्वर्णसि-न्दूर, लौहभस्म, रजतभस्म, मृगाण्डजा–कस्तूरी, जातीफलचूर्णं, जातीकोषमिति जातीफलत्वचश्चूर्णं, लवङ्गचूर्णं, गोक्षुरचूर्णं, कर्पूरं, अभ्रकभस्म, चोच = त्वक्पत्र-चूर्णं, मुषलतालकं तालमूलीचूर्णं ( केषाञ्चिन्मते मूषली तालकश्चेति गृह्यते तदयुक्तं यतस्तन्त्रान्तरेषु हरितालस्य पृथक्तया निर्देशाभावात् ), एषु प्रत्येकं द्रव्यं कर्ष-मितं ( १ तो० ) तथा तुरङ्ग—शुद्धगन्धकं द्विकर्षं, प्रवालभस्म ( २ क० ), रस-सिन्दूर ( २ क० ), मुक्ताभस्म ( २ क० ), स्वर्णमाक्षिकभस्म ( २ क० ), राज पट्ट–कान्तपाषाणभस्म ( २ क० ), शिखिग्रीव–शुद्धनीलतुत्थकचूर्णं ( २ क० ), एतत् सर्वं समादाय खल्वे निक्षिप्य दृढं विचूर्ण्य च निर्गुण्डी, फञ्जिका—ब्राह्मण-यष्टिका, वासक , रविमूल, त्रिकण्टक , एषां द्रव्याणां स्वरसैः क्वाथैर्वा पृथक् २ सप्त-वारं भावयित्वा रक्तिकैकपरिमितवटिकाश्च कृत्वा सशोष्य च काचपात्रे स्थापयेत् ।

परिषेकान् प्रदेहांश्च स्नानसंशोधनानि च। दिवास्वप्नं व्यवायञ्च व्यायामं शिशिरं जलम् ॥१६॥
क्रोधप्रवातभोज्यानि वर्जयेत्तरुणज्वरी । शोथच्छर्दिमदा मूर्च्छा भ्रमस्तृष्णा ह्यरोचकः ।
आप्नोत्युपद्रवानेतान् परिषेकादिसेवनात् ॥ १७ ॥
न द्विरद्यान्न पूर्वाह्णे नाभिष्यन्दि कदाचन । न नक्तं न गुरुप्रायं भुञ्जीत तरुणज्वरी ॥१८॥

अथ मध्यमज्वरे हितानि—

पुरातनाः षष्टिकशालयश्च वार्ताकशोभाञ्जनकारवेल्लम् ।
वेत्राग्रमापाढफलं पटोलं कर्कोटकं मूलकगोजिका च ॥ १ ॥
मुद्गैर्मसूरैश्चणकैः कुलत्थैर्मकुष्टकैर्वा विहितश्च यूषः ।
पाठामृता वास्तुकतण्डुलीयजीवन्तिशाकानि च काकमाची ॥ २ ॥
द्राक्षा कपित्थानि च दाडिमानि वैकङ्कतान्येव परूषकाणि ।
लघूनि सात्म्यानि च भेषजानि पथ्यानि मध्यज्वरिणाममूनि ॥ ३ ॥

अथ पुराणज्वरे हितानि—

विरेचनं छर्दनमञ्जनञ्च नस्यं च धूमोऽप्यनुवासनञ्च ।
शिराव्यधः संशमनं प्रदेहोऽभ्यङ्गोऽवगाहः शिशिरोपचारः ॥ १ ॥
एणः कुरङ्गः हरिणो मयूरो लावः शशस्तित्तिरकुक्कुटौ च ।
क्रौञ्चः कुरङ्गः पृषतश्चकोरः कपिञ्जलो वर्तककालपुच्छौ ॥ २ ॥
गवामजायाश्च पयो घृतं च हरीतकी पर्वतनिर्झराम्भः ।
एरण्डतैलं सितचन्दनञ्च द्रव्याणि सर्वाणि पुरेरितानि ।
ज्योत्स्ना प्रियालिङ्गनमप्ययं स्याद्वर्गः पुराणज्वरिणां सुखाय ॥ ३ ॥

अथागन्तुकज्वरे हितानि—

आगन्तुके ज्वरे नैव नरः कुर्वीत लङ्घनम् । अभिचाराभिशापोत्थे जपहोमादिभेषजम् ॥१॥
उत्पातग्रहपीडोत्थे दानस्वस्त्ययनादिभिः । कामशोकभयोद्भूते सर्वा वातहरी क्रिया ॥२॥
आश्वासनं चेष्टलाभो हर्षदायीनि यानि च। हर्षेण च शमं यान्ति कामशोकभयज्वराः ॥३॥
क्रोधजे पित्तजित्कार्यं प्रियासद्वाक्यमेव च । ओषधीगन्धविषजो विषपित्तप्रसादनैः ॥४॥
अध्वश्रान्तेषु चाभ्यङ्गं दिवानिद्राञ्च कारयेत् । मनः क्षोभसमुत्पन्ने मनसः सान्त्वनानि च ॥५॥
अभिघातसमुत्थाने पानाभ्यङ्गौ च सर्पिषः । रक्तावसेकमर्यैश्च तथा मांसरसौदनैः ॥६॥
क्षतजे व्रणजे चापि क्षतव्रणचिकित्सितम् । इत्यागन्तुकज्वरे पूर्वं भिषग्भिः पथ्यमीरितम् ॥७॥

अथ विषमज्वरे हितानि—

विष्णोर्नाम सहस्रस्य पठनं श्रवणं श्रुतेः । देवानां ब्राह्मणानाञ्च गुरूणामपि पूजनम् ॥ १ ॥
ब्रह्मचर्यं तपो दानं स्नानं नियमो जपः । साधूनां दर्शनं श्रेष्ठं रत्नौषधिविधारणम् ॥ २ ॥
मङ्गलाचरणञ्चेति वर्गः सर्वान्ज्वराञ्जयेत् ॥ ३ ॥
व्यायामञ्च व्यवायञ्च स्नानं चङ्क्रमणानि च । ज्वरमुक्तो न सेवेत यावन्नो बलवान् भवेत् ४
ज्वरे लङ्घनमेवादावुपदिष्टमृते ज्वरात् । क्षयानिलभयक्रोधकामशोकश्रमोद्भवात् ॥ ५ ॥
तत्र सान्नक्षुत्तृष्णामुखशोषभ्रमान्विते । कार्यं न बाले वृद्धे नो न गर्भिण्यां न दुर्बले ॥ ६ ॥

अतिलङ्घनं वर्ज्यं यथोक्तम्—

पर्वभेदोऽङ्गमर्दश्च कासः शोषो मुखस्य च । क्षुत्प्रणाशोऽरुचिस्तृष्णा दौर्बल्यं श्रोत्रनेत्रयोः ॥
मनसः सम्भ्रमोऽभीक्ष्णमूर्ध्ववातस्तमो हृदि । देहाग्निबलहानिश्च लङ्घनेऽतिकृते भवेत् ॥
तस्मादितकरं लङ्घनं सर्वदा ज्वरादौ कार्यम् ॥

तथा च सम्यग्लङ्घितलक्षणानि—

वातमूत्रपुरीषाणां विसर्गे गात्रलाघवे । हृदयोद्गारकण्ठास्यशुद्धौ तन्द्राक्लमे गते ॥ १ ॥
स्वेदे जाते रुचौ चापि क्षुत्पिपासासहोदये । कृतं लङ्घनमादेश्यं निर्व्यथे चान्तरात्मनि २
अथ दोषविशेषे शीतोष्णजलपानव्यवस्था—

तृष्यते सलिलं चोष्णं दद्याद्वातकफज्वरे । मद्योत्थे पैत्तिके वाऽथ शीतलं तिक्तकैः शृतम् १

अथोष्णजललक्षणं यथा—

क्वाथ्यमानन्तु यत्तोयं निष्फेनं निर्मलीकृतम् । भवत्यर्द्धावशिष्टञ्च तदुष्णोदकमुच्यते ॥ १ ॥

इति ज्वरे पथ्यापथ्यादिविमर्शः ।

इति श्री कृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृतायां
गूढार्थसन्दीपिकाव्याख्यायां ज्वराधिकारः ।

## अथ ज्वरातीसार-चिकित्सा ।

अथ मृतसञ्जीवनी वटी—

मागधी वत्सनाभश्च तयोस्तुल्यञ्च हिङ्गुलम् ।
मृतसञ्जीवनी ख्याता जम्बीररसमर्दिता ॥ १ ॥
मूलकस्य च बीजानां वटिका तुल्यरूपिणी ।

**पानीया शीततोयेन ज्वरातीसारनाशिनी ।**
**विसूच्यां सन्निपाते च ज्वरे चैवातिदुस्तरे ॥ २ ॥**

ज्वरानन्तरमुपद्रवस्वरूपेणातीसारस्य स्वतन्त्ररूपेण वा सम्भवात्पूर्वं ज्वरातीसारचिकित्सा लिख्यते । यद्यपि ज्वरातीसारयोः पृथक्२ लक्षणं माधवेन नोक्तम् उक्तं —
"ज्वरातिसारयोरुक्तं निदानं यत्पृथक् २ । तस्याज्ज्वरातीसारस्य तेन नात्रोदितं पुनः ॥
तथापि ज्वरेण अतिसारेण च संयुक्तज्वरातीसारचिकित्सायाः भिन्नविषयत्वात् । पृथक् ज्वरातिसारचिकित्सा । उक्तं हि—
"ज्वरातिसारयोरुक्तं भेषजं यत्पृथक् पृथक् । न तन्मिलितयोः कार्यमन्योऽन्यं वर्द्धयेद्यतः"॥
अनुभवेन दृश्यते हि यत्केवलं ज्वरहरं तत्प्रायेणानुलोमनं, अतीसारहरञ्च स्तम्भनमिति परस्परविरुद्धत्वान्मिलितयोः न कार्यमित्यर्थः ।

अथ मृतसञ्जीवनीवटीनिर्माणमाह मागधीत्यादि—मागधी = पिप्पलीचूर्णं ( १ तो० ), शुद्धवत्सनाभचूर्णं ( १ तो० ), तयोः तुल्यं शुद्धं हिङ्गुलं ( २ तो० ) समादाय सर्वं खल्वे निक्षिप्य सूक्ष्मं विचूर्ण्य जम्बीररसेनाप्लाव्य दृढं पिष्ट्वा मूलिकाबीजसदृशीः वटीः कृत्वा संशोष्य च काचपात्रे स्थापयेत् । वटीयं शीततोयानुपानेन सह सेविता ज्वरातीसारं हन्ति ॥ १–२ ॥

अथ आनन्दभैरवो रसः —

**हिंगुलञ्च विषं व्योषं टङ्कणं गन्धकं समम् ।**
**जम्बीररससंयुक्तं मर्दयेत् यामकद्वयम् ॥ ३ ॥**
**कासश्वासातिसारेषु ग्रहण्यां सान्निपातिके ।**
**अपस्मारेऽनिले मेहे ऽप्यजीर्णे वह्निमान्द्यके ।**
**गुञ्जामात्रः प्रदातव्यो रस आनन्दभैरवः ॥ ४ ॥**

अथ आनन्दभैरवरसनिर्माणमाह हिङ्गुलमित्यादि—शुद्धहिङ्गुलं ( १ तो० ), शुद्धवत्सनाभचूर्णं ( १ तो० ), शुण्ठीचूर्णं ( १ तो० ), मरिचचूर्णं ( १ तो० ), पिप्पलीचूर्णं ( १ तो० ), शुद्धटङ्कणं ( १ तो० ), शुद्धगन्धकं ( १ तो० ), एतत् सर्वं खल्वे निक्षिप्य सूक्ष्मं विचूर्ण्य जम्बीररसेनाप्लाव्य यामद्वयं विमर्दयेत् । ततः रक्तिपरिमितवटिकाः कृत्वा काचपात्रे स्थापयेत् । अयमानन्दभैरवरसो यथानुपानं सह सेवितः कासं, श्वासं, अतीसारं, ग्रहणीं, सान्निपातिकज्वरं, अपस्मारं, वातरोगं, प्रमेहं, अजीर्णं, अग्निमान्द्यञ्च विनिहन्ति ॥ ३–४ ॥

अथ अमृतार्णवो रस —

हिंगुलोत्थो रसो लौह टङ्कण गन्धक शटी ।
धान्यक वालक मुस्त पाठाऽजाजी घुणप्रिया ॥ ५ ॥
प्रत्येक तोलकं चूर्ण छागीदुग्धेन पेषयेत् ।
माषैका वटिका कार्य्या रसोऽयममृतार्णव ॥ ६ ॥
वटिका भक्षयेत् प्रातर्गहनानन्दभाषिताम् ।
धान्यजीरकयूषेण विजयाशणवीजत ॥ ७ ॥
मधुना च्छागदुग्धेन मण्डेन शीतवारिणा ।
कदलीमोचकरसैः कञ्चटद्रवकेण च ॥ ८ ॥
अतिसार जयेदुग्रमेकज द्वन्द्वज तथा ।
दोषत्रयसमुद्भूतमुपसर्गसमन्वितम् ॥ ९ ॥
शूलघ्नो वह्निजननो ग्रहण्यर्शोविकारनुत् ।
अम्लपित्तप्रशमन. कासघ्नो गुल्मनाशनः ॥ १० ॥

अथ अमृतार्णवरसनिर्माणमाह—हिङ्गुलोत्थ इत्यादि—शुद्धहिङ्गुलोत्थपारद (१ तो० ), लौहभस्म ( १ तो० ), शुद्धटङ्कण (१ तो०), शुद्धगन्धक (१तो०), शटीचूर्ण ( कर्चूरचूर्ण १ तो० ), धान्यकचूर्ण ( १ तो० ), सुगन्धवालकचूर्ण ( १ तो० ), शुद्धमुस्तकचूर्ण ( १ तो० ), पाठाचूर्ण ( १ तो० ), अजाजी=जीरकचूर्ण ( १ तो० ), घुणप्रिया = अतिविषाचूर्ण ( १ तो० ), पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि निक्षिप्य छागीदुग्धेनाप्लाव्य दृढ विमर्द्य माषकैकपरिमिता वटिका कृत्वा सशोष्य च काचपात्रे स्थापयेत् । गहनानन्दभाषितोऽयममृतार्णवनामको रस प्रत्यह वटी१कमितो धान्यजीरकचूर्णमिश्रितमुद्गयूषानुपानेन, विजयाशणवीजचूर्णेन, मधुना, छागदुग्धानुपानेन, स्विन्नतण्डुलोदकेन, शीतलजलेन, कदलीस्वरसेन, कदलीफलेन, तण्डुलीयकस्वरसेन वा सह सेवितो दारुण एकदोषज, द्विदोषज, दोषत्रयोद्भूत, अन्योपद्रवजुष्टश्चातीसार विनिहन्ति । तथायं शूलनाशको वह्निदीपको ग्रहण्यर्शोविकारहन्ता, कासघ्नो गुल्मनाशकस्तथा अम्लपित्तप्रशमनश्च वर्तते ॥ ५-१० ॥

अथ सिद्धप्राणेश्वरो रस —

स्वर्जिटङ्कयवक्षाराः पञ्चैव लवणानि च ॥ ११ ॥
वराव्योषेन्द्रबीजानि द्विजीराग्नियमानिकाः ।
सहिङ्गुबीजसारश्च शतपुष्पा सुचूर्णिता ॥ १२ ॥
सिद्धप्राणेश्वरः सूतः प्राणिनां प्राणदायकः ।
माषकं भक्षयेदस्य नागवल्लीदलैर्युतम् ॥ १३ ॥
उष्णोदकानुपानञ्च दद्यात् तत्र पलत्रयम् ।
ज्वरातिसारेऽतिसृतौ केवले वा ज्वरेऽपि वा ॥ १४ ॥
ज्वरे त्रिदोषजे घोरे ग्रहण्यादिगदेऽपि च ।
वातरोगे तथा शूले शूले च परिणामजे ॥ १५ ॥

अथ सिद्धप्राणेश्वररसनिर्माणमाह—गन्धेशेत्यादि—शुद्धगन्धक ( ४ तो० ), शुद्धपारद ( ४ तो० ), अभ्रकभस्म ( ४ तो० ) स्वर्जिक्षार ( १ तो० ), शुद्ध टङ्क ( १ तो० ), यवक्षार ( १ तो० ), पञ्चलवणानि तोलकैकमितानि, हरीतकीचूर्ण ( १ तो० ), विभीतकचूर्ण ( १ तो० ), आमलकीचूर्ण ( १ तो० ), शुण्ठीचूर्ण ( १ तो० ), मरिचचूर्ण (१तो०), पिप्पलीचूर्ण ( १ तो० ), इन्द्रबीजं=इन्द्रयवचूर्ण ( १ तो० ), श्वेतजीरक ( १ तो० ), कृष्णजीरकं ( १ तो० ), चित्रकमूलचूर्ण (१तो०), यमानीचूर्ण (१ तो०) बीजसार=विडङ्गचूर्ण, ( १ तो० ), शुद्धहिङ्गुचूर्ण ( १ तो० ), शतपुष्पाचूर्ण ( १ तो० ), पूर्व पारदगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य जलेन सह सम्यक् पिष्ट्वा माषकैकपरिमितवटिका कृत्वा सशोष्य च काचपात्रे स्थापयेत् । रसोऽयं यथारोग, यथावल, रक्तिद्वयमित प्रत्यहं नागवल्लीस्वरसेन सह सेवितस्तदुपरि च पलत्रय उष्णोदकानुपानकरणेन ज्वरातिसारे, मलातिप्रवृत्तौ, केवले ज्वरे, दारुणे त्रिदोषज्वरे, ग्रहण्यादिरोगे, वातरोगे, शूले, परिणामशूले च विशेषहितकर ॥ ११–१५ ॥

अथ अभ्रवटिका—

अथ शुद्धस्य सूतस्य गन्धकस्याभ्रकस्य च ।
प्रत्येकं कर्षमानन्तु ग्राह्यं रसगुणैषिणा ॥ १६ ॥
ततः कज्जलिकां कृत्वा व्योषचूर्णं प्रदापयेत् ।
केशराजस्य भृङ्गस्य निर्गुण्ड्याश्चित्रकस्य च ॥ १७ ॥

ग्रीष्मसुन्दरकस्याथ जयन्त्याः स्वरसं तथा ।
मण्डूकपर्ण्या स्वरसं तथा शक्राशनस्य च ॥ १८ ॥
श्वेतापराजितायाश्च स्वरसं पर्णसम्भवम् ।
दापयेद्रसतुल्यञ्च विधिज्ञः कुशलो भिषक् ॥ १९ ॥
रसतुल्यं प्रदातव्यं चूर्णं मरिचसम्भवम् ।
देयं रसार्द्धभागेन चूर्णं टङ्कणसम्भवम् ॥ २० ॥
शुभे शिलामये पात्रे घर्षणीयं प्रयत्नतः ।
शुष्कमातपसंयोगाद् वटिकां कारयेद् भिषक् ॥ २१ ॥
कलायपरिमाणान्तु खादेत् तान्तु प्रयत्नत. ।
दृष्ट्वा वयश्चाग्निबलं यथाव्याध्यनुपानत. ॥ २२ ॥
हन्ति कासं क्षयं श्वासं वातश्लेष्मभवां रुजम् ।
परं वाजीकरः श्रेष्ठो बलवर्णाग्निवर्द्धक ॥ २३ ॥
ज्वरे चैवातिसारे च सिद्ध एष प्रयोगराट् ।
नात परतर. श्रेष्ठो विद्यतेऽभ्ररसायनात् ॥ २४ ॥
भोजने शयने पाने नास्त्यत्र नियम. क्वचित् ।
दधि चावश्यकं भक्ष्यं प्राह नागार्जुनो मुनिः ॥ २५ ॥

अथ अभ्रवटिकानिर्माणमाह—अथेत्यादि—शुद्धपारद (१ क० ), शुद्धगन्धक (१ क० ), अभ्रकभस्म (१ क० ), शुण्ठीचूर्णं (१ क० ), मरिचचूर्णं (१ क० ), पिप्पलीचूर्णं (१ क० ), पूर्वं रसगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि निक्षिप्य सूक्ष्मं विचूर्ण्य केशराजस्य, भृङ्गराजस्य, निर्गुण्ड्या, चित्रकस्य, ग्रीष्मसुन्दरक,=तिक्तरस (गीमाशाक इति वङ्गभाषाया प्रसिद्ध )तस्य, जयन्त्या, मण्डूकपर्ण्या, शक्राशन=ब्राह्मणयष्टिका तस्य (भङ्गेति केचित्), श्वेतापराजितायाश्च, प्रत्येकैकस्य द्रव्यस्य कर्षपरिमितं स्वरसं क्वाथं वा समादाय तस्मिन्निक्षिप्य मर्दयेत् । ततश्च मरिचचूर्णं कर्षमितं, शुद्धटङ्कणचूर्णञ्च कर्षार्द्धं दत्वा शुभे पाषाणखल्वे सर्वं सूक्ष्मं विमर्द्य कलायप्रमाणा वटिकाश्च कृत्वा संशोष्य च काचपात्रे स्थापयेत् । अस्य रसस्य प्रत्यहमेकैका वटी वयोऽग्निबलञ्च दृष्ट्वा यथारोगानुपानपूर्वकं सेविता कास, क्षय, श्वास, वातश्लेष्मजरोगांश्च हन्ति । अयं रस परं वृष्यशक्तिकर, बलाग्निवर्द्धक, देहवर्णवर्द्धक, ज्वरे, अतीसारे च परमगुणकर वर्तते । अस्मादभ्ररसायनादन्य-

कोऽपि रसो नास्ति श्रेष्ठ । भोजने, शयने, पाने च कोऽपि विशेषनियमो नास्ति, परन्तु दधिसेवन परमावश्यकमिति नागार्जुनमुनिना प्रोक्तम् ॥ १६–२५ ॥

अथ कनकसुन्दरो रस —

हिङ्गुलं मरिचं गन्ध टङ्कणं पिप्पली विषम् ।
कनकस्य च वीजानि समांशं विजयाद्रवैः ।
मर्दयेद् याममात्रन्तु चणमात्रा वटी कृता ॥ २६ ॥
भक्षणाद् ग्रहणीं हन्ति रसः कनकसुन्दरः ।
अग्निमान्द्यं ज्वर तीव्रमतिसारञ्च नाशयेत् ।
दध्यन्नं दापयेत् पथ्यं सदा तक्रौदनं हितम् ॥ २७ ॥

अथ कनकसुन्दररसनिर्माणमाह—हिङ्गुलमित्यादि—शुद्धहिङ्गुल, मरिचचूर्ण, शुद्धगन्धक, शुद्धटङ्कण, पिप्पलीचूर्ण, शुद्धवत्सनाभचूर्ण, शुद्धधुस्तूरबीजचूर्णम् । प्रत्येकं द्रव्यं समभागेनादाय खल्वे सूक्ष्म पिष्ट्वा विजयास्वरसेन क्वाथेन वा सम्यगाप्लाव्य यामैक विमर्द्य चणकप्रमाणा वटिकाश्च कृत्वा सशोष्य च काचपात्रे स्थापयेत् । अय कनकसुन्दरो रस प्रत्यह सेवितो ग्रहणीं, अग्निमान्द्य, ज्वर, तीव्रातीसारञ्च यथानुपानप्रयोगतो विनाशयति ॥ २६–२७ ॥

अथ कनकप्रभा वटी—

सुवर्णवीजं मरिच मरालपादं कणा टङ्कणक विषञ्च ।
गन्धं जयाऽद्भिर्दिवसं विमर्द्य गुञ्जाप्रमाणां वटिकां विदध्यात् ॥२८॥
ज्वरातिसारग्रहणीं ज्वराग्नि-मान्द्यं निहन्यात् कनकप्रभेयम् ।
दध्योदनं भोज्यमनुष्णवारि मांसं भजेत्तित्तिरिलावकानाम् ॥२९॥

अथ कनकप्रभावटीनिर्माणमाह—सुवर्णेत्यादि—शुद्धधुस्तूरबीजचूर्णं, मरिचचूर्णं, मरालपाद–हसपदीचूर्णं, पिप्पलीचूर्णं, शुद्धटङ्कण, शुद्धवत्सनाभचूर्णं, शुद्धगन्धकम् । प्रत्येकं द्रव्य समभागेनादाय खल्वे पिष्ट्वा विजयास्वरेनाप्लाव्य दिनैक दृढ विमर्द्य गुञ्जाप्रमाणवटिका कृत्वा काचपात्रे स्थापयेत् । वटीयं प्रत्यहं सेविता अतीसार, ग्रहणीं, ज्वर, अग्निमान्द्य विनिहन्ति, पथ्ये च दधिसयुक्तमोदन शीतलजलं, तित्तिरिलावकाना मासञ्च देयम् ॥ २८–२९ ॥

अथ कारुण्यसागररसः—

भस्मसूताद्द्विधा गन्धं तथा द्वित्वं मृताभ्रकम् ।
दिनं सार्षपतैलेन पिष्ट्वा याम विपाचयेत् ॥ ३० ॥
रसैर्मार्कवमूलोत्थैः पिष्ट्वा याम विपाचयेत् ।
त्रिक्षारपञ्चलवणविषत्र्योषाग्निजीरकैः ॥ ३१ ॥
सविडङ्गैस्तुल्यभागैरयं कारुण्यसागरः ।
माषमात्रं ददीताऽस्य भिषक् सर्वातिसारके ॥ ३२ ॥
सज्वरे विज्वरे चापि सशूले शोणितोद्भवे ।
निरामे शोथयुक्ते वा ग्रहण्यां सान्निपातिके ।
अनुपानं विनाप्येष कार्यसिद्धिं करिष्यति ॥ ३३ ॥

अथ कारुण्यसागररसनिर्माणमाह-भस्मेत्यादि-भस्मसूत-रससिन्दूरं (१तो०), शुद्धगन्धक (२ तो०), अभ्रकभस्म (२ तो०) एतत्त्रयं खल्वे पिष्ट्वा सार्षपतैलेनाप्लाव्य दिनमेकं विमर्द्य वालुकायन्त्रे याममेकं पचेत्, ततश्च भृङ्गराजरसेन दिनैकं विमर्द्य प्रहरैकं वालुकायन्त्रे पचेत्। ततस्तत्र यवक्षार, शुद्धटङ्कण, स्वर्जिक्षार, पञ्चलवणानि, शुद्धवत्सनाभचूर्णं, त्रिकटुचूर्णं, चित्रकचूर्णं, जीरकचूर्णं, विडङ्गचूर्णम्, इमानि द्रव्याणि मिलित्वा मिलितरसादीना समानि गृहीत्वा सम्मेल्य च जलेन सह दृढं पिष्ट्वा माषकैकपरिमितवटिका कृत्वा काचपात्रे स्थापयेत्। रसस्यास्य प्रत्यहमेकैका वटी सानुपाना निरनुपाना वा सेविता सज्वरातिसारे, निर्ज्वरातिसारे, सशूलातिसारे, हस्तपादादिशोथयुक्तातिसारे, सरक्तातिसारे, निरामातिसारे, सन्निपातप्रकोपयुक्तातिसारे, ग्रहण्यां च लाभं करोति ॥ ३०-३३ ॥

अथ बृहत्कनकसुन्दरो रसः—

शुद्धसूतं समं गन्धं मरिचं टङ्कणं तथा ।
स्वर्णबीजं समं मर्द्यं भार्गीद्रावैर्दिनार्द्धकम् ॥ ३४ ॥
सूततुल्यं मृतञ्चाभ्रं रसः कनकसुन्दरः ।
अस्य गुञ्जाद्वयं हन्ति पित्तातीसारमुग्रकम् ॥ ३५ ॥

अथ बृहत्कनकसुन्दररसनिर्माणमाह-शुद्धेत्यादि-शुद्धपारद (१ तो०), शुद्धगन्धक (१ तो०), मरिचचूर्णं (१ तो०), शुद्धटङ्कण (१ तो०), शुद्धकृष्णधुस्तर-

वीजचूर्ण ( १ तो० ), पूर्व रसगन्धकयाः कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य भार्ङ्गी-स्वरसेन क्वाथेन वा अर्द्धदिनपर्यन्त दृढ विमर्द्य तस्मिन् सूततूल्य, मृताभ्रक (अभ्रकभस्म १ तो०) दत्वा सम्पेष्य द्विगुञ्जापरिमितवटिका कृत्वा काचपात्रे स्थापयेत् । अय कनकसुन्दररसो द्विगुञ्जामित सेवेत उग्र पित्तातीसार विनिहन्ति ॥३४-३५॥

अथ मृतसञ्जीवनो रस —

रसगन्धौ समौ ग्राह्यौ सूतपादं विषं क्षिपेत् ।
सर्वतुल्यं मृतञ्चाभ्रं मर्द्य धुस्तुरजैर्द्रवैः ॥ ३६ ॥
सर्पाक्ष्याश्च द्रवैर्यामं कषायेणाथ भावयेत् ।
धातक्यतिविषा मुस्तं शुण्ठीजीरकवालकम् ॥ ३७ ॥
यमानी धान्यकं विल्वं पाठा पथ्या कणान्विता ।
कुटजस्य त्वचं वीजं कपित्थं दाडिमं वलाम् ॥ ३८ ॥
प्रत्येकं कर्षमात्रं स्यात् कुट्टितं क्वाथयेत् जलैः ।
चतुर्गुणं जलं दत्त्वा यावत् पादावशेषितम् ॥ ३९ ॥
अनेन त्रिदिनं भाव्यं पूर्वोक्तं मर्दितं रसम् ।
रुद्ध्वा तद्वालुकायन्त्रे क्षणं मृद्वग्निना पचेत् ॥ ४० ॥
मृतसञ्जीवनो नाम चास्य गुञ्जाचतुष्टयम् ।
दातव्यमनुपानेन चासाध्यमपि साधयेत् ॥ ४१ ॥
षट्प्रकारमतीसारं साध्यासाध्यं जयेत् ध्रुवम् ।
नागरातिविषा मुस्तं देवदारु कणा वचा ॥ ४२ ॥
यमानी वालकं धान्यं कुटजत्वक् हरीतकी ।
धातकीन्द्रयवौ विल्वं पाठा मोचरसं समम् ।
चूर्णितं मधुना लेह्यमनुपानं सुखावहम् ॥ ४३ ॥

अथ मृतसञ्जीवनरसनिर्माणमाह—रसेत्यादि—शुद्धपारद ( १ तो ), शुद्धगन्धक ( १ तो० ), सूतपाद शुद्धवत्सनाभचूर्ण ( ३ मा० ), सर्वतुल्यं अभ्रकभस्म ( सपादद्वयतोलकमित्यर्थ ), पूर्व पारदगन्धकयो कज्जलीं कृत्वा विषमभ्रकञ्च सम्मेल्य धुस्तूरक्वाथैर्विमर्दयेत्, ततश्च सर्पाक्ष्या स्वरसेन क्वाथेन वा यामैकं विमर्द्य, धातकीपुष्प, अतिविषा, शुद्धमुस्तक, शुण्ठी, जीरक, वालकं नेत्रवालक, यमानी

ज्वरातीसारलक्षणम्—

**पित्तज्वरे पित्तभवोऽतिसारस्तथातिसारे यदि वा ज्वरः स्यात् ।**
**दोषस्य दूष्यस्य समानभावात् ज्वरातिसारः कथितो भिषग्भिः॥४६॥**

इति ज्वरातीसार चिकित्सा ।

अथ ज्वरातीसारलक्षण—दोषस्य वातादे, दूष्यस्य रसरक्तादे समानभावेन दुष्टत्वाज्ज्वरातीसारो भवति ॥ ४६ ॥

अथ ज्वरातीसारे पथ्यम्—

ज्वरातिसारिणामादौ कुर्याल्लङ्घनपाचने । प्रायस्तावामसम्बन्धं विना न भवतो यतः १

अन्यच्च ज्वरातीसारयोरिव पथ्यापथ्यमवगन्तव्यम् ।

॥ इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृताया गूढार्थसन्दीपिकाव्याख्याया ज्वरातीसाराधिकारः ॥

---

## अथ अतीसार-चिकित्सा ।

अथ अतीसारवारणो रसः—

**दरदं कृतकर्पूरं मुस्तेन्द्रयवसंयुतम् ।**
**सर्वातीसारशमनं खाखसीक्षीरभावितम् ॥ १ ॥**

ज्वरातिसारस्य चिकित्साप्रतिपादनानन्तरं सम्प्रति स्वतन्त्रस्य अतीसारस्य चिकित्सार्थं अतिसारवारणरसमाह—दरदमित्यादि—दरद=शुद्धहिङ्गुलं, कृतकर्पूर=पक्वकर्पूरं, शुद्धमुस्तकचूर्णं, इन्द्रयवचूर्णम्, प्रत्येकं द्रव्यं समभागेनादाय खल्वे सञ्चूर्ण्य खाखसीक्षीर—अहिफेनस्वरसं तेन सम्यगाप्लाव्य दृढं विमर्द्य रक्तिकैकपरिमिता वटीं कृत्वा काचपात्रे स्थापयेत् । रसोऽयं सर्वविधातीसारं विनाशयति ॥ १ ॥

अथ पूर्णचन्द्रोदयो रसः—

**शुद्धञ्च तालकं लौहं गगनञ्च पलं पलम् ।**
**कर्पूरं पारदं गन्धं प्रत्येकं वटकोन्मितम् ॥ २ ॥**
**जातीकोषमुरापत्रं शटीतालीशकेशरम् ।**
**व्योषं चोचं कणामूलं लवङ्गं पिचुसम्मितम् ॥ ३ ॥**

भक्षयेत् प्रातरुत्थाय गुरुदेवद्विजार्च्चकः ।
नानारूपमतीसारं ग्रहणीं सर्वरूपिणीम् ॥ ४ ॥
अम्लपित्तं तथा शूलं शूलञ्च परिणामजम् ।
हन्याद्रसायनश्चाय वाजीकरण उत्तमः ॥ ५ ॥

अथ पूर्णचन्द्रोदयरसनिर्माणमाह-शुद्धमित्यादि-शुद्धहरिताल ( १ पल ), लौह भस्म ( १ पल ), अभ्रकभस्म ( १ पल ) कर्पूर ( ८ मा० ), शुद्धपारद- ( ८ मा० ), शुद्धगन्धक ( ८ मा० ), जातिकोष=जातीफलत्वचश्चूर्ण ( १ क० पिचु कर्षक ) मुरापत्र=मुरामासीचूर्ण (१ क०), शटी कर्चूरचूर्ण ( १क० ), तालीशपत्रचूर्ण (१ क०) नागकेशरचूर्ण (१ क०), त्रिकटुचूर्ण ( १ क० ), चोच= त्वक्पत्रचूर्ण (१क०), पिप्पलीमूलचूर्ण ( १ क० ), लवङ्गचूर्ण ( १ क० ), पूर्वं रसगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य जलेन सह पिष्ट्वा वटिका कुर्यात् । रसोऽयं प्रत्यह प्रभाते गुरुदेवद्विजार्चन कृत्वा यथानुपानैस्सह सेवितो विविधातीसार, सर्वप्रकारा ग्रहणी, अम्लपित्त, शूल, परिणामशूल विनिहन्ति, तथा यमुत्तमो वाजीकरणो रसायनश्च वर्तते ॥ १-५ ॥

अथ कणाद्य लौहम्—

कणानागरपाठाभिस्त्रिवर्गत्रितयेन च ।
बिल्वचन्दनह्रीवेरः सर्वातीसारजिद्भवेत् ॥ ६ ॥
सर्वोपद्रवसंयुक्तामपि हन्ति प्रवाहिकाम् ।
नानेन सदृशं लौहं विद्यते ग्रहणीहरम् ॥ ७ ॥

अथ कणाद्यलौहनिर्माणमाह कणेत्यादि-कणा-पिप्पलीचूर्णं, शुण्ठीचूर्णं, पाठाचूर्णं, त्रिवर्गत्रितयेन च इति त्रिफला-त्रिकटु-त्रिमदै ( पथ्याविभीतधात्रीणां फलैः स्यात्त्रिफलासमैः । पिप्पली शृङ्गवेरञ्च मरिचं त्र्यूषणं (त्रिकटु ) विदु । विडङ्गमुस्तचित्रैश्च त्रिमद समुदाहृत ) त्रिकटुचूर्णं, त्रिफलाचूर्णं, त्रिमदचूर्णं, बिल्वफलमज्जा, रक्तचन्दन, चूर्णं, ह्रीवेर=नेत्रवालाचूर्णं, प्रत्येक द्रव्य सममागेनादाय सर्वचूर्णसमञ्च लौहभस्म निक्षिप्य खल्वे जलेन सह पिष्ट्वा द्विरक्तिपरिमितवटिका कृत्वा काचपात्रे स्थापयेत् । इदं कणाद्यलौह सर्वोपद्रवसंयुक्तां प्रवाहिका हन्ति । अनेन कणाद्यलौहेन सदृश ग्रहणीहर लौहान्तर नास्ति ॥ ६-७ ॥

अथ बृहद्गगनसुन्दरो रसः—

पारदं गन्धकञ्चाभ्रं लौहञ्चापि वराटकम् ।
रूप्यं चातिविषं कर्षं समभागं प्रकल्पयेत् ॥ ८ ॥
धान्यशुण्ठीकृतक्वाथैर्भावयेच्च पृथक् पृथक् ।
गुञ्जाप्रमाणां वटिकां कारयेत् कुशलो भिषक् ॥ ९ ॥
भक्षयेत् प्रातरुत्थाय गुरुदेवद्विजार्चकः ।
दग्धबिल्वं गुडेनैव कुर्य्यात् तदनुपानकम् ॥ १० ॥
अजादुग्धेन वा पेयं जम्बूत्वक्साधितं रसम्
अतीसारे ज्वरे घोरे ग्रहण्यामरुचौ तथा ॥ ११ ॥
सामे सशूले रक्ते च पिच्छास्रावे भ्रमे तथा ।
शोथे रक्तातिसारे च सग्रहग्रहणीषु च ॥ १२ ॥

अथ बृहद्गगनसुन्दररसनिर्माणमाह पारदमित्यादि-शुद्धपारद (१ कर्ष), शुद्धगन्धक (१ क०), लौहभस्म (१ क०), वाराटभस्म (१ क०), रजतभस्म (१ क०), अतिविषाचूर्ण (१ क०), पूर्वं रसगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि च सम्मेल्य विचूर्ण्य च धान्यक्वाथेन, शुण्ठीक्वाथेन च पृथक् भावयित्वा गुञ्जाप्रमाणा वटिका कृत्वा काचपात्रे स्थापयेत् । रसोऽयं प्रत्यहं देवद्विजगुरूणां पूजनं कृत्वा रक्तिपरिमितो वह्निदग्धेनापक्वबिल्वफलान्तर्भागेन गुडेन च सह सम्मेल्य अथवा जम्बूत्वक्साधितछागदुग्धानुपानेन वा सेवितः अतीसार, दारुणज्वर, ग्रहणी, अरुचि, साम, सशूल, सरक्तश्चातीसार, भ्रम, सशोथातीसार, ग्रहणीश्च विनिहन्ति ॥८–१२॥

लोकनाथो रसः—

भस्मसूतस्य भागैकं चतुरः शुद्धगन्धकात् ।
लिप्त्वा वराटिकागर्भे टङ्कणेन निरुध्य च ॥ १३ ॥
भाण्डे रुद्ध्वा पुटे पाच्यं स्वाङ्गशीतं समुद्धरेत् ।
लोकनाथरसो नाम क्षौद्रैर्गुञ्जाचतुष्टयम् ॥ १४ ॥
नागरातिविषामुस्तं देवदारुवचान्वितम् ।
कषायमनुपानन्तु सर्वातीसारनाशनः ॥ १५ ॥

अथ लोकनाथरसनिर्माणमाह भस्मसूतेत्यादि—भस्मसूतस्य रससिन्दुरस्य एकं

भाग ( १ तो० ), शुद्धगन्धक ( ४ तो० ), द्वय खल्वे सपिष्य शुद्धकपर्दिका-कोटरे प्रपूर्य तासाञ्च मुख अजादुग्धपिष्टशुद्धटङ्कणपिष्टया रुद्ध्वा वृहच्छरावद्वय-मध्ये सस्थाप्य सम्पुट कृत्वा गजपुटे पचेत्, स्वाङ्गशीत समादाय काचपात्रे स्था-पयेत्। अयं लोकनाथसज्ञको रसश्चतुर्गुञ्जपरिमितो मधुना सह तथा शुण्ठयतिविषा-मुस्तकदेवदारुवचाक्वाथानुपानपूर्वक सेवित सर्वविधातीसार विनिहन्ति ॥१३-१५॥

चिन्तामणिरस —

शुद्धसूतं मृत ताम्रं गन्धकं प्रतिकार्षिकम्।
चूर्णयेद्विषकर्षार्द्धं विषार्द्धं तिन्तिडीफलम् ॥ १६ ॥
मर्द्दयेत् खल्लमध्ये तु चाम्लेन गोलकीकृतम्।
गर्त्तं षडङ्गुल कुर्य्यात् सर्वतो वर्त्तुलं शुभम् ॥ १७ ॥
नागवल्ल्याः क्षिपेत् पत्रमादौ पात्रे च गोलकम्।
आच्छाद्य तच्च पात्रेण रुद्ध्वा गजपुटे पचेत् ॥ १८ ॥
स्वाङ्गशीतं समुद्धृत्य सपत्रञ्च विशेषतः।
कर्षार्द्धं मरिचं दत्त्वा कर्षार्द्धं तिन्तिडीफलम् ॥ १९ ॥
गुञ्जामितां वटीं कुर्य्यात् चिन्तामणिरसो महान्।
अतिसारे त्रिदोषोत्थे सग्रहग्रहणीगदे।
अनुपान विधातव्य यथादोषानुसारत ॥ २० ॥

अथ चिन्तामनिरसनिर्माणमाह शुद्धसूतमित्यादि—शुद्धपारद ( १ क० ), शुद्ध-गन्धक ( १ क० ), ताम्रभस्म ( १ क० ), शोधितविषचूर्णं कर्षार्द्ध, तिन्ति-डीफलचूर्ण कर्षपादं ( ३ मा० ) पूर्वं रसगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि-निक्षिप्य सम्यक् खल्वे सञ्चूर्ण्य काञ्जिकेन सह पिष्ट्वा गोलक कुर्यात्। तस्य गोल-कस्याभ्यन्तरे षडङ्गुलमितं गर्त्तं कृत्वा तदन्तस्ताम्बूलपत्र निदध्यात्। ततस्तस्य पिण्डस्य सर्वाङ्ग ताम्बूलदलैराच्छाद्य स्निग्धमृत्पङ्कलिप्तखर्पराभ्यन्तरे निरुध्य मृदा सलिप्य च गजपुटे पचेत्। अथवा गोलक पात्रे निक्षिप्य पात्रान्तरेणाच्छाद्य सुनिव-बन्धन कृत्वा गजपुटे पचेत्। स्वाङ्गशीतं समुद्धृत्य नागवल्लीदलसहितस्य गोल-कस्य खल्वे चूर्णं कृत्वा तस्मिन् कर्षार्द्ध मरिचचूर्णं, कर्षार्द्धञ्च तिन्तिडीफलचूर्णं दत्वा जलेन सह पिष्ट्वा गुञ्जापरिमितवटिका कृत्वा काचपात्रे स्थापये —अयं चिन्ता-

सगिरसौ यथादोषानुपानपूर्वक प्रत्यह सेवितो ग्रहणीरोगे, अतीसारे, त्रिदोषातीसारे च हितकर ॥ १९-२० ॥

अहिफेनवटिका—

अहिफेन सखर्जूरं घृष्ट्वा गुञ्जैकमात्रकम् ।
रक्तस्रावमतीसारमतिवृद्ध विनाशयेत् ॥ २१ ॥

अथ अहिफेनवटिकानिर्माणमाह अहिफेनमित्यादि—शुद्धमहिफेन, खर्जुरञ्च, समभागेनादाय खल्वे सूक्ष्म विचूर्ण्य द्विरक्तिपरिमितवटिका कृत्वा काचपात्रे स्थापयेत् । इय वटी सरक्तमतिवृद्धमतीसार विनिहन्ति ॥ २१ ॥

महागन्धक सर्वाङ्गसुन्दरञ्च—

रसगन्धकयोः कर्ष ग्राह्यमेकं सुशोधितम् ।
ततः कज्जलिकां कृत्वा मृदुपाकेन साधयेत् ॥ २२ ॥
जातीफलं तथा कोषं लवङ्गारिष्टपत्रके ।
सिन्धुवारदलञ्चैव एलाबीजं तथैव च ॥ २३ ॥
एषाञ्च कर्षमात्रेण तोयेनाथ विमर्दयेत् ।
मुक्तागृहे पुनः स्थाप्यं पुटपाकेन साधयेत् ॥ २४ ॥
घनपङ्कं वहिर्लिप्त्वा पुटमध्ये निधापयेत् ।
गुञ्जाष्टकप्रमाणेन प्रत्यहं भक्षयेन्नरः ॥ २५ ॥
एतत् प्रोक्त कुमाराणां रक्षणाय महौषधम् ।
ज्वरघ्नं दीपनञ्चैव बलवर्णप्रसाधनम् ॥ २६ ॥
दुर्वार ग्रहणीरोगं जयत्येव प्रवाहिकाम् ।
सूतिकाञ्च जयेदेतद्रक्तार्शो रक्तसम्भवम ॥ २७ ॥
पिशाचा दानवा दैत्या बालानां विघ्नकारकाः ।
यत्रौषधवरस्तिष्ठेत् तत्र सीमां न यान्ति ते ॥ २८ ॥
बालानां गदयुक्तानां स्त्रीणाञ्चैव विशेषतः ।
महागन्धकमेतद्धि सर्वव्याधिनिसूदनम् ।
विना पाकेन सर्वाङ्गसुन्दरोऽयं प्रकीर्तितः ॥ २९ ॥
ग्रहण्यां ये रसाः प्रोक्तास्तेऽतीसारे प्रकीर्त्तिताः ॥ ३० ॥

इति रसेन्द्रसारसंग्रहे द्वितीयाध्यायेऽतीसारचिकित्सा ।

अथ महागन्धकस्य सर्वाङ्गसुन्दरस्य च निर्माणमाह-रसेत्यादि—शुद्धपारद (१ क०), शुद्धगन्धक (१ क०), उभयो कज्जलीं कृत्वा मृद्वग्नौ पर्पटीं कुर्यात्। ततस्ता पर्पटीं खल्वे विचूर्ण्य तत्र जातीफलचूर्णं (१ क०), जातीफलत्वचश्चूर्णं (१ क०), लवङ्गचूर्णं (१ क०), निम्बपत्रचूर्णं (१ क०), निर्गुण्डीपत्रचूर्णं (१ क०), बृहदेलाचूर्णं (१ क०), इमानि द्रव्याणि सम्मेल्य जलेन सह सम्यक् पिष्ट्वा संशोष्य च वृहदाकारमुक्ताशुक्तेराभ्यन्तरे संस्थाप्य शुक्त्यन्तरेणाच्छाद्य कदली पत्रेण वेष्टयित्वा स्निग्धमृत्तिकागाढपङ्केन वहि सर्वतो विलिप्य संशोष्य च लघुपुटे पुटेत्। यदा पाकेन सम्पुटस्य वहिरारक्तिमा स्याद्गन्धकस्य च धूम्र वहिर्निर्गच्छेत्, पाकगन्धश्च प्रतीयते तदौषध पक्व विज्ञाय वह्ने र्वहिराकृष्य स्वाङ्गशीत सम्पुटं विभिद्य महागन्धक गृह्णीयात्। इद महागन्धकरसायन यथाव्याध्यनुपान यथावलम् रक्तिकैकादारभ्य षड्रक्तिपरिमित नित्य सेवित वालाना रक्षणाय महौषध तथा ज्वरघ्न, दीपन, वलवर्णकर च भवति। तथा दुर्वारं ग्रहणीरोग, प्रवाहिका, सूतिका-रोगं, रक्तार्शश्च विनाशयति। एव यत्रास्य भेषजस्य स्थिति सेवन वा भवेत्तत्र वालाना विघ्नकारका पिशाचा, दानवा, दैत्याश्च नैव समायान्ति, अर्थादस्य सेवनेन वालका कीटाणुजन्यरोगोन्मुक्ता स्वस्थाश्च भवन्ति। रोगग्रस्ताना वालकाना स्त्रीणाञ्च ज्वर, अतीसार, सूतिकादयो रोगाश्च अस्य सेवनेन नश्यन्ति। यदि च शुक्तिस्थपुटपाककरणं विनैव रसगन्धकनिर्मितपर्पटिकाचूर्णे शेषद्रव्यादिकं निक्षिप्य जलेन सह पिष्ट्वा वटिका कुर्य्यात्तदा सर्वाङ्गसुन्दररसनिर्माण भवति। अस्योपयोगोऽपि वालाना स्त्रीणाञ्च ज्वरातीसारादिरोगेषु कर्तव्य। ग्रहणीरोगचिकित्सायां ये रसा प्रोक्तास्तेऽतीसारेऽपि लाभकरा सन्ति। पुटे मन्दाग्निदान प्रशस्तम्॥ २७-३०॥

अथातीसारे पथ्यानि—

लङ्घन वमन निद्रा पुराणा शालिषष्टिका। विलेपी लाजमण्डश्च मसूरी तुवरीरसा॥१॥
शशैणलावहरिणकपिञ्जलभवा रसा। सर्वक्षुद्रझषा शृङ्गी डिण्डिशो मधुनालिका॥२॥
तैल छागघृत क्षीर दधि तक्र गवामपि। दधिज वा पयोज वा नवनीत गवाजयो॥३॥
नवं रम्भापुष्पफलं क्षौद्र जम्बूफलानि च। भव्य महार्द्रक विश्व शालूक च विकङ्कतम्॥४॥
कपित्थ वकुल विल्वं तिन्दुक दाडिमद्वयम्। शालूकं कण्टकाढ्या च चाङ्गेरी विजयाऽरुणा॥५॥
जातीफलमफेन च जीरक गिरिमल्लिका। कुस्तुम्वरुर्महानिम्ब कषाय सकलो रस॥६॥
अन्नपानानि सर्वाणि दीपनानि लघूनि च। नाभे द्व्यङ्गुलतोऽधस्ताच्छलाकार्धेन्दुवद्दहेत्॥७॥

तथा वशास्थिमूलेऽपि पथ्यवर्गोऽतिसारिणाम् ॥ ७ ॥ इत्यतीसारे पथ्यानि ।

अथातीसारेऽपथ्यानि—

स्वेदोऽञ्जन रुधिरमोक्षणमम्बुपान स्नान व्यवायमपि जागरधूमनस्यम् ॥
अभ्यञ्जन सकलवेगविधारणञ्च रुक्षाण्यसात्म्यशयनञ्च विरुद्धमन्नम् ॥ १ ॥
गोधूममाषयववास्तुककाकमाचीनिष्पावकञ्च मधुशिग्रुरसालपूगम् ।
कूष्माण्डतुम्बिबदर गुरु चान्नपान ताम्बूलमिक्षुगुडमद्यमुपोदकी च ॥ २ ॥
द्राक्षाम्लवेतसफल लशुनञ्च धात्री दुष्टाम्बु मस्तु गृहवारि च नारिकेलम् ॥ ३ ॥
सस्नेहन मृगमदोऽखिलपत्रशाक क्षीर सराणि सकलानि पुनर्नवा च ।
उर्वारुक लवणमम्लमपि प्रकोपि वर्गोतिसारगदपीडितमाभवेषु ॥ ४ ॥
स्नानावगाहनमभ्यङ्गगुरुस्निग्धान्नभोजनम् । व्यायाममग्निसन्तापमतीसारी विवर्जयेत्॥

इत्यतीसारेऽपथ्यानि ।

अथातीसारे पानीयम्—

ह्रीवेरशृङ्गबेराभ्या मुस्तपर्पटकेन वा । मुस्तोदीच्यशृत तोय देय वापि पिपासवे ॥१॥

इत्यतीसारे पथ्यापथ्यविवेक ॥

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृताया गूढार्थसन्दीपिका-व्याख्यायामतीसाराधिकार ॥

---

## अथ ग्रहणीरोग-चिकित्सा ।

जातीफलादिग्रहणीकपाटो रस

**जातीफल टङ्कणमभ्रकञ्च धुस्तूरबीज समभागचूर्णम् ।**
**भागद्वयं स्यादहिफेनकस्य गन्धालिकापत्ररसेन मर्द्यम् ॥ १ ॥**
**चणप्रमाणा वटिका विधेया यत्नाद्भिदध्याद् ग्रहणीगदेषु ।**
**सामेषु रक्तेषु सशूलकेषु पक्वेष्वपक्वेषु गुदामयेषु ॥ २ ॥**
**रोगेषु दद्यादनुपानभेदैर्मधुप्रयुक्तां ग्रहणीगदेषु ।**
**पथ्यं सदध्योदनमत्र देयं रसोत्तमोऽयं ग्रहणीकपाटः ॥३॥**

अथ द्रवसरणसाधर्म्यात् परस्परानुबन्धित्वाच्चातीसारानन्तरं ग्रहणीरोगो भवति ।

( ४ मा० ), जातीफलचूर्णं ( ४ मा० ) शुष्कबिल्वफलमज्जाचूर्ण ( ४ मा० ), खदिरसत्व ( ४ मा० ), जीरकचूर्ण ( ४ मा० ), मधूलिका = मूर्वाचूर्णं ( ४ मा० ) कपिहस्तकबीज = शूकशिम्बीबीजचूर्ण ( ४ मा० कपिकच्छुरित्यर्थ ) चोरकपुष्पक–शङ्खिनीचूर्णं ( ४ मा० ), पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य तदनु बिल्वपत्राणि, कार्पासफलानि शालिञ्च शाकविशेष दुग्धिका, शालिनमूलं, कुटज, कनटपत्रक–जलतण्डुलीयक एषा द्रव्याणा स्वरसै क्वाथैर्वा सप्ताह भावयित्वा रक्तिकैकप्रमाणा वटिका कृत्वा काचपात्रे स्थापयेत् । अस्य रसस्य एकैका वटी त्रिदिनपर्यन्त ततोऽप्यधिकदिनपर्यन्तं वा पलप्रमाणदाधेजलानुपानपूर्वक सेविता योगशतैरपि नैव नष्टा दारुणा ग्रहणी हन्ति । तथा आमशूलं, ज्वर, कास श्वास, प्रवाहिकाञ्च नाशयति । तथा रक्तस्रावकर द्रव्य वर्जयेत् । पथ्ये च कृष्णवार्ताकुशाकं, मत्स्य, दधि, तक्र च दद्यात् । वायोश्च तीव्रगति मन्दगति वा ज्ञात्वा सशमनार्थं तैलोपयोग कुर्यात् वायुर्तीव्रगतौ शीतलजलपान तेन स्नानञ्च वर्जयेत् ॥४–१०॥

जातीफलाद्या वटिका—

अभ्रस्य सूतस्य च गन्धकस्य प्रत्येकशो माषचतुष्टयञ्च ।
विधाय शुद्धोपलपात्रमध्ये सुकज्जलीं वैद्यवरः प्रयत्नात् ॥ ११ ॥
जातीफलं शाल्मलिवेष्टमुस्त सटङ्कण सातिविषं सजीरम् ।
प्रत्येकमेषां मरिचस्य शाण–प्रमाणमेकं विषमाषकञ्च ॥ १२ ॥
विचूर्ण्य सर्वाण्यवलोड्य पश्चात् विभावयेत् पत्ररसैरमीषाम् ।
इन्द्राणिकेन्द्राशनकश्च जम्बू जयन्तिका दाडिम-केशराजौ ।
अविद्धकर्णाऽपि च भृङ्गराजो विभाव्य सम्यक् वटिका विधेया॥१३॥
कोलास्थिमानाथ बहुप्रकारं सामं निहन्यादनिलान् गदांश्च ।
कुर्याद्विशेषादनलप्रवृद्धिं कासञ्च पञ्चात्मकमम्लपित्तम् ॥ १४ ॥
इयं निहन्याद् ग्रहणीमसाध्यां मर्त्यस्य जीर्णग्रहणी प्रवृद्धाम् ।
असारकत्व त्वतिसारमुग्रं श्वासं तथा पाण्डुमरोचकञ्च ॥ १५ ॥
चिरोद्भवां सग्रहकोष्ठदुष्टिं जयेद्भृशं योगशतैरसाध्याम् ।
अनेकसम्भावितमर्त्यलोका नानाविधव्याधि-पयोधि-नौका ॥ १६ ॥

अथ जातीफलाद्यवटिकानिर्माणमाह—अभ्रस्येत्यादि—अभ्रकभस्म (४ मा०),

शुद्धपारद ( ४ मा० ), शुद्धगन्धक ( ४ मा० ), जातीफलचूर्ण ( ४ मा० ), शाल्मलिवेष्टक-मोचरसं ( ४ मा० ), शुद्धमुस्तकचूर्ण ( ४ मा० ), शुद्धटङ्कण ( ४ मा० ), अतिविषाचूर्ण ( ४ मा० ), जीरकचूर्ण ( ४ मा० ), मरिचचूर्ण (४ मा०) शुद्धवत्सनाभचूर्ण ( १ मा० ), पूर्वं पारदगन्धकयो कज्जली कृत्वा शेषद्रव्याणि सम्मेल्य खल्वे सूक्ष्म चूर्णयित्वा इन्द्राणिका = निर्गुण्डी, इन्द्राशन-विजया, जम्बू, जयन्तिका, दाडिम, केशराज , अविद्धकर्णा = अम्बष्ठका, भृङ्गराज , एषा द्रव्याणा स्वरसं क्वार्थैर्वा पृथक ७ क्रमशो भावयित्वा कोलास्थिप्रमाणा-वदरफलबीजप्रमाणा वटिका कृत्वा काचपात्रे स्थापयेत्। इय वटी प्रत्यहं यथारोगानुपान सेविता नानाविध साममतीसारं वातारोगाश्च निहन्ति । तथा विशेषेण पाचकशक्ति वर्द्धयति। पञ्चप्रकार कास, अम्लपित्त, असाध्यग्रहणी, अतिप्रवृद्धा जीर्णग्रहणी, अतीसारं, उग्रमतीसारं, श्वास, पाण्डुरोग, अरुचि, चिरकालीनं कोष्ठविकार संग्रहणीविकारञ्च निहन्ति, संग्रहणीरोगे अतीवप्रशस्ता । एव नानाविधानुपानैरिय वटी विविधव्याधिसागरोत्तीर्णाय नौकेव ज्ञेया ॥ १०-१६ ॥

पूर्णकलावटी—

रस गन्ध घन लौहं धातकीपुष्पबिल्वकम् ।
विष कुटजबीजञ्च पाठा जीरकधान्यकम् ॥ १७ ॥
रसाञ्जन टङ्कणञ्च शिलाजतु पल तथा ।
अभ्राशञ्च फल ग्राह्य प्रत्येक तोलकत्रयम् ॥ १८ ॥
भेकपर्णी पञ्चमूली बलकञ्चटदाडिमम् ।
शृङ्गाट केशर जम्बू दधिमस्तु जयन्तिका ॥ १९ ॥
केशराजो भृङ्गराज' प्रत्येक तोलकद्वयम् ।
ह्रिमाषा वटिका कार्य्या तक्रेण परिषेविता ॥ २० ॥
इय पूर्णकला नाम ग्रहणीगदनाशिनी ।
शूलघ्नी दाहशमनी वह्निदा ज्वरनाशिनी ।
भ्रमच्छर्दिच्छेदकरी संग्रहग्रहणीं जयेत् ॥ २१ ॥

अथ पूर्णकलावटीनिर्माणमाह—रसमित्यादि—शुद्धपारद ( १ प० ), शुद्धगन्धक ( १ प० ), शुद्धमुस्तकचूर्ण ( १ प० ), लौहभस्म ( १ प० ), धातकीपु

घनचूर्ण ( १ प० ), बिल्वफलशुष्कमज्जाचूर्ण ( १ प० ), शुद्धवत्सनाभचूर्ण (१प०), इन्द्रयवचूर्ण ( १ प० ), पाठाचूर्ण ( १ प० ) जीरकचूर्ण ( १ प० ), धान्यकचूर्ण ( १ प० ) रसाञ्जनं ( १ प० ) [ दार्वीक्वाथसमं क्षीरं पादं पक्त्वा यदा घनम् । तदा रसाञ्जनं ख्यातं नेत्रयोः परमं हितम् ॥
इति भावप्रकाशः । रसाञ्जनं खनिजविशेष इति केचित् । अस्य शोधनं यथा—
लोहेऽस्त्युष्णे परिक्षिप्य द्रवी कुर्याद्रसाञ्जनम् । वाससा स्रावयित्वा च शोधनं भानुरश्मिना॥
शुद्धटङ्कण ( १ प० ) शुद्धशिलाजतु ( १ प० ), अभ्रकभस्म ( १ प० ), फल=त्रिफला तत्र प्रत्येकं तोलकत्रयं ( त्रिफलाचूर्णं ९ तो० ) तथा मण्डूकपर्णी ( २ तो० ) पद्मनूली ( २ तो० ), बलाचूर्णं ( २ तो० ) कशट=जलीयतण्डुलीयकचूर्ण ( २ तो० ) दाडिमबीजचूर्ण ( २ तो० ) शृङ्गाटकचूर्ण ( २ तो० ), केशर=नागकेशरचूर्ण ( २ तो० ) जम्बूवृक्षत्वक्चूर्ण ( २ तो० ), जयन्तीचूर्ण ( २ तो० ) केशराजचूर्ण ( २ तो० ), भृङ्गराजचूर्ण ( २ तो० ) पूर्वं पारदगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि निक्षिप्य तोलकद्वयेन दधिजलेन ( अधिकेनापि नैव हानिः ) आप्लाव्य दृढं मर्दनं कृत्वा द्विमाषकपरिमिता वटिकाः कृत्वा काचपात्रे स्थापयेत् । इयं पूर्णकलानाम्नी वटी यथोरोगानुसारं यथोचितमात्रया तक्रानुपानेन सह सेविता ग्रहणीरोगं शूलं, दाहं ज्वरं, भ्रमं वमनं, सग्रहग्रहणीञ्च हन्ति, अग्निञ्च वर्द्धयति केचित्तु घनशब्देनात्र मुस्तकस्थाने अभ्रकभस्म इच्छन्ति तेषां मते पारदो गन्धकश्च पृथक् २ पलमितो ग्राह्यः । घनादिफलान्तानां तु प्रत्येकं तोलकत्रयं ग्राह्यमिति दिक् ॥ १७–२१ ॥

वज्रकपाटो रसः —

पारदं गन्धकञ्चैव अहिफेनं समोचकम् ।
त्रिकटु त्रैफलञ्चैव सममेकत्र कारयेत् ॥ २२ ॥
भङ्गभृङ्गद्रवैश्चैतद् भावयेच्च पुनः पुनः ।
रक्तित्रयं ततश्चास्य मधुना सह भक्षयेत् ।
असाध्यां ग्रहणीं हन्ति रसो वज्रकपाटकः ॥ २३ ॥

अथ वज्रकपाटरसनिर्माणमाह—पारदमित्यादि—शुद्धपारद ( १ तो० ), शुद्धगन्धक ( १ तो० ) शुद्धाहिफेनं ( १ तो० ), मोचरस ( १ तो० ) त्रिकटु चूर्णं

प्रत्येक ( १ तो० ), त्रिफलाचूर्ण प्रत्येक ( १ तो० ), पूर्वं पारदगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य भङ्गा = विजया तस्याः स्वरसेन सप्तदिनं भावयेत्। ततश्च भृङ्गराजरसेनापि सप्तदिनं सप्तवारं भावयित्वा रक्तित्रयमिता वटिकाः कृत्वा काचपात्रे स्थापयेत्। अयं वज्रकपाटरसो रक्तित्रयमितं प्रत्यहं मधुना सह सेवितो दुर्जयामपि ग्रहणीं विनिहन्ति ॥ २२–२३ ॥

जातीफलरसः —

पारदाभ्रकसिन्दूरं गन्धं जातीफलं समम्।
कुटजस्य फलञ्चैव धूर्त्तवीजानि टङ्कणम् ॥ २४ ॥
त्र्यूषं मुस्ताऽभया चैव चूतवीजं तथैव च।
बिल्वकं सर्जवीजञ्च दाडिमीफलवल्कलम् ॥ २५ ॥
एतानि समभागानि निक्षिपेत् खल्लमध्यतः।
विजयास्वरसेनैव मर्दयेत् श्लक्ष्णचूर्णितम् ॥ २६ ॥
गुञ्जाफलप्रमाणान्तु वटिकां कारयेद्भिषक्।
एकां कुटजमूलत्वक्कषायेण प्रयोजयेत् ॥ २७ ॥
आमातिसारं हरते कुरुते वह्निदीपनम्।
मधुना बिल्वशुण्ठेन रक्तग्रहणिकां जयेत् ॥ २८ ॥
शुण्ठीधान्यकयोगेन चातिसारं निहन्त्यसौ।
जातीफलरसो ह्येष ग्रहणीगदनाशनः ॥ २९ ॥

अथ जातीफलरसनिर्माणमाह—पारदेत्यादि—शुद्धपारदं, शुद्धगन्धकं, अभ्रकभस्म, रससिन्दूरं जातीफलचूर्णं इन्द्रयवचूर्णं, शुद्धधुस्तूरवीजचूर्णं, शुद्धटङ्कणं, शुण्ठीचूर्णं, मरिचचूर्णं, पिप्पलीचूर्णं, शुद्धमुस्तकचूर्णं, हरीतकीचूर्णं, आम्रवीजचूर्णं, आम्रास्थिमज्जेत्यर्थः। शुष्कबिल्वफलमज्जाचूर्णं, सर्जवीज—शालवीजचूर्णं, दाडिमफलवल्कलचूर्णम्। इमानि द्रव्याणि प्रत्येकं समभागेनादाय पारदगन्धकयोः कज्जलीं कृत्वा सर्वं सम्मेल्य विजयास्वरसेन क्वाथेन वा सम्यगाप्लाव्य मर्दनेन श्लक्ष्णचूर्णं कृत्वा गुञ्जाफलसमानाकारा वटिका कृत्वा काचपात्रे स्थापयेत्। अस्य रसस्य प्रत्यहमेकैका वटी कुटजमूलत्वक्क्वाथानुपानेन सह सेविता साममतीसारं हन्ति, वह्निदीपनञ्च करोति। तथा मधुना शुष्कबिल्वफलमज्जया शुण्ठीचूर्णेन च सह सेविता रक्त-

ग्रहणीं नाशयति । एवं शुण्ठीचूर्णेन धान्यकचूर्णेन मधुना च सह सेविता अतीसारं हन्ति । जातीफलरसोऽयं ग्रहणीरोगे विशेषेण हितकरः ॥ २४-२९ ॥

ग्रहणीगजेन्द्रो रसः—

रसगन्धकलौहानि शङ्खटङ्कणरामठम् ।
शटीतालीशमुस्तानि धान्यजीरकसैन्धवम् ॥ ३० ॥
धातक्यतिविषा शुण्ठी गृहधूमो हरीतकी ।
भल्लातकं तेजपत्रं जातीफललवङ्गकम् ॥ ३१ ॥
त्वगेला बालकं बिल्वं मेथी शक्राशनं समम् ।
छागीदुग्धेन वटिका रसवैद्येन कारिता ॥ ३२ ॥
गहनानन्दनाथेन भाषितेयं रसायने ।
वटी गजेन्द्रसंज्ञेयं श्रीमता लोकरक्षणे ॥ ३३ ॥
ग्रहणीं विविधां हन्ति ज्वरातिसारनाशिनी ।
शूलगुल्माम्लपित्तानि कामलाञ्च हलीमकम् ॥ ३४ ॥
बलवर्णाग्निजननी सेविता च चिरायुषी ।
कण्डू कुष्ठं विसर्पञ्च गुदभ्रंशं क्रिमिं जयेत् ॥ ३५ ॥
माषद्वयां वटीं खादेच्छागीदुग्धानुपानतः ।
वयोऽग्निबलमावीक्ष्य युक्त्या वा त्रुटिवर्द्धनम् ॥ ३६ ॥

अथ ग्रहणीगजेन्द्रवटिकानिर्माणमाह—रसेत्यादि—शुद्धपारद ( १ तो० ), शुद्धगन्धक ( १ तो० ), लौहभस्म ( १ तो० ), शङ्खभस्म ( १ तो० ), शुद्धटङ्कणचूर्णं ( १ तो० ), शुद्धहिङ्गु ( १ तो० ), शटीचूर्ण ( १ तो० ) तालीशचूर्ण ( १ तो० ), शुद्धमुस्तकचूर्णं ( १ तो० ), धान्यकचूर्ण ( १ तो० ), जीरकचूर्णं ( १ तो० ), सैन्धवलवण ( १ तो० ), धातकीपुष्पचूर्ण ( १ तो० ), शुद्धातिविषाचूर्ण ( १ तो० ), शुण्ठीचूर्ण ( १ तो० ), गृहधूम ( १ तो० ), हरीतकीचूर्णं ( १ तो० ) शुद्धभल्लातकचूर्ण ( १ तो० ), तेजपत्रचूर्णं ( १ तो० ), जातीफलचूर्ण ( १ तो० ), लवङ्गचूर्ण ( १ तो० ), त्वक्=दारुसिताचूर्ण ( १ तो० ), बृहदेलाचूर्ण ( १ तो० ), बालकचूर्ण ( नेत्रबालाचूर्ण १ तो० ), शुष्कबिल्वफलमज्जाचूर्ण ( १ तो० ), मेथिकाचूर्णं ( १ तो० ), शक्राशन—भङ्गा तस्या चूर्ण

(१तो०), पूर्वं रसगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य अजादुग्धेन सम्यगाप्लाव्य दृढं विमर्द्य च रक्तिद्वयप्रमाणा वटिका कृत्वा काचपात्रे स्थापयेत्। लोकानां हिताय गहनानन्देन प्रोक्तेयं वटी अजादुग्धानुपानेन सह सेविता विविधां ग्रहणीं, अतीसारं, शूलं, गुल्मं, अम्लपित्तं, कामलां, हलीमकं च हन्ति, तथा बलं, वर्णं, उदराग्निञ्च जनयति, तथैव कण्टं, कुष्टं, विसर्परोगं, गुदच्युतिं, क्रिमिरोगञ्च नाशयति। इयं वटी यथारोगं यथाबलं यथावयश्च माषद्वयपर्यन्तं अथवा युक्त्या त्रुटिवर्द्धनं सूक्ष्मेलाप्रमाणादारभ्य क्रमशो मात्राया वर्द्धनं ह्रासनञ्च कृत्वा प्रयोज्या ॥३०-३६॥

पीयूषवल्लीरसः —

सूतमभ्रं गन्धकञ्च तारं लौहं सटङ्कणम्।
रसाञ्जनं माक्षिकञ्च शाणमेकं पृथक् पृथक् ॥ ३७ ॥
लवङ्गं चन्दनं मुस्तं पाठं जीरकधान्यकम्।
समङ्गाऽतिविषा लोध्रं कुटजेन्द्रयवं त्वचम् ॥ ३८ ॥
जातीफलं विश्वबिल्वं कनकं दाडिमीच्छदम्।
समङ्गा धातकी कुष्ठं प्रत्येकं रससम्मितम् ॥ ३९ ॥
भावयेत् सर्वमेकत्र केशराजरसैः पुनः।
चणकाभा वटी कार्या छागीदुग्धेन पेषिता ॥ ४० ॥
अनुपानं प्रदातव्यं दग्धबिल्वं समं गुडैः।
हन्ति सर्वानतीसारान् ग्रहणीं चिरजामपि ॥ ४१ ॥
आमसम्पाचनो सम्यग् वह्निवृद्धिकरस्तथा।
पीयूषवल्लीनामायं ग्रहणीरोगनाशनः ॥ ४२ ॥

अथ पीयूषवल्लीरसनिर्माणमाह-सूतमित्यादि-शुद्धपारद (१शाण) (४मा०), अभ्रकभस्म (४ मा०), शुद्धगन्धक (४ मा०) तारं = रजतभस्म (४मा०), लौहभस्म (४ मा०), शुद्धटङ्कण (४ मा०), रसाञ्जन (४ मा०) स्वर्णमाक्षिकभस्म (४ मा०) तथा लवङ्गचूर्ण रससम्मित, (४ मा०) रक्तचन्दनचूर्ण (४ मा०), शुद्धमुस्तकचूर्ण (४ मा०), पाठाचूर्ण (४ मा०), जीरकचूर्ण (४ मा०), धान्यकचूर्ण (४ मा०), समङ्गा = मंजिष्ठाचूर्ण (४ मा०) (यच्च हिन्दीसंस्कृतटीकाकृद्भिः समङ्गा शब्दस्य 'वराहक्रान्ता'—इत्यर्थं कृतस्तच्चिन्त्यं

मञ्जिष्ठाया ग्रहण्यतीसारादिनाशने प्रसिद्धत्वात् । तथाह भावप्रकाशे—
"मञ्जिष्ठा विकसा जिंगी समङ्गा कालमेषिका । रक्तातीसारकुष्ठास्रवीसर्पव्रणमेहनुत् ॥ इति
अतिविषाचूर्ण ( ४ मा० ), लोध्रचूर्ण ( ४ मा० ), कुटजत्वचश्चूर्ण ( ४मा० ) इन्द्रयवचूर्ण ( ४ मा० ), त्वचश्चूर्ण ( दालचीनीचूर्ण ४ मा० ) जातीफलचूर्ण ( ४ मा० ), शुण्ठीचूर्ण ( ४ मा० ), बिल्व = बिल्वशलाटु ( ४ मा० ), कनक = शुद्ध धुस्तूरबीजचूर्ण ( ४ मा० ) ( कनकमित्यत्र बालकमित्यपि पाठान्तरम् ) दाडिमीच्छदमिति दाडिमफलत्वचश्चूर्ण ( दाडिमपत्रचूर्णमिति वा ४ मा० ), समङ्गा = मञ्जिष्ठाचूर्ण ( ४ मा० ), धातकीपुष्पचूर्ण (४ मा०), कुष्ठचूर्ण (४ मा०), ( "शाणमेकम्" इत्यत्र "कोलमेकम्" इत्यपि पाठान्तरम् ) पूर्व पारदगन्धकयो कज्जलं कृत्वा शेषद्रव्याणि सम्मेल्य केशराजस्वरसै सप्तवार भावयित्वा मर्दयेत्, ततश्छागीदुग्धेनाप्लाव्य दृढ पिष्ट्वा च चणकप्रमाणा वटिका कृत्वा काचपात्रे स्थापयेत् । अस्य रसस्य प्रत्यहमेकैका वटी वह्निमृष्टबिल्वफलमज्जया गुडेन च सह सेविता सर्वान् अतीसारान् , चिरकालीना ग्रहणीश्च हन्ति । पीयूषवल्लीनामकोऽयं रसो विशेषेण ग्रहणीरोगनाशक , आमसम्पाचन , वह्निवृद्धिकरश्च वर्तते ॥ ३७–४२ ॥

ग्रहणीशार्दूलरस —

**रसगन्धकयोश्चापि कर्षमेक सुशोधितम् ।**
**द्वयोः कज्जलिकां कृत्वा हाटकं षोडशांशतः ॥ ४३ ॥**
**लवङ्गं निम्बपत्रञ्च जातीकोषफले तथा ।**
**एतेषां कर्षचूर्णेन सूक्ष्मैलां सह मेलयेत् ॥ ४४ ॥**
**मुक्तागृहे च संस्थाप्य पुटपाकेन साधयेत् ।**
**गुञ्जापञ्चप्रमाणेन प्रत्यहं भक्षयेत् नरः ॥ ४५ ॥**
**सूतिकां ग्रहणीरोगं हरत्येष सुनिश्चितम् ।**
**अर्शोघ्नो दीपनश्चैव बलपुष्टिप्रसाधनः ॥ ४६ ॥**
**कासश्वासातिसारघ्नो बलवीर्य्यकरः परः ।**
**दुर्वारं ग्रहणीरोगमामशूलञ्च नाशयेत् ।**
**संसारलोकरक्षार्थं पुरा रुद्रेण भाषितः ॥ ४७ ॥**

अथ ग्रहणीशार्दूलरसनिर्माणमाह–रसगन्धकयोरित्यादि–शुद्धयो पारदगन्धकयो

मिलितयो कर्षमेकं (१तो०) समादाय कज्जलिकाञ्च कृत्वा कर्षैकस्यापेक्षया षोडशांसं स्वर्णभस्म ( ६ रक्तिमितमित्यर्थ ) तथा त्वक्चूर्णं ( १कर्षमितं १तो० ), निम्बत्वक्चूर्णं (१क०) जातीफलचूर्णं (१क०) जातीफलत्वक्चूर्णं ( जावित्रीचूर्णं १क० ) सूक्ष्मैलाचूर्णं ( १क० ) एतत् सर्वं कज्जलिकाया निक्षिप्य सूक्ष्मं विचूर्ण्य च सुपक्वगृहे सर्यातः शुद्धमुक्ताद्रुकेराभ्यन्तरे निक्षिप्य शुक्तयन्तरेण सन्धिबन्धनं कृत्वा लघुपुटे पचेत्। स्वाङ्गशीतपुटादौषधं गृहीत्वा खल्वे विचूर्ण्य च काचपात्रे स्थापयेत्। रसोऽयं यथारोग यथाबल, रक्तिकैकादारभ्य पञ्चरक्तिपरिमित प्रत्यह सेवितः सूतिकारोगं, ग्रहणी, अर्श कासं श्वासं अतीसारं आम शूल दुर्जयां ग्रहणीञ्च हन्ति। तथा बलपुष्टिं, वह्निदीप्ति करोति। अय रस पुराकाले ससारजनरक्षणाय रुद्रेण प्रोक्तः ॥४३—४७॥

अथ वैद्यनाथवटी—

शाणं रसस्य सगृह्य काञ्जिकेन तु शोधयेत्।
त्रिफलायाश्च बुद्धिमान् ॥ ४८ ॥
चित्रकस्य रसेनापि भृङ्गराजरसेन वै।
रसार्द्धं गन्धकं शुद्धं शाणसम्मितैः ॥ ४९ ॥
द्वाभ्यां समूर्च्छितं कृत्वा स्वरसैः
खल्लयेच्च शिलाखण्डे क्रमशो वक्ष्यमाणकैः।
निर्गुण्डीमधुकश्वेता–कुठेरग्रीष्मसुन्दरैः ॥ ५० ॥
भृङ्गाब्दकेशराजैश्च जयेन्द्राशनकोल्कटैः।
सर्षपाभां वटीं कृत्वा दद्यात् तां ग्रहणीगदे ॥ ५१ ॥
सामवातेऽग्निमान्द्ये च ज्वरे प्लीहोदरेषु च।
वातश्लेष्मविकारेषु तथा श्लेष्मगदेषु च।
अम्लतक्रादिसेवाञ्च कुर्वीत स्वेच्छया बहु ॥ ५२ ॥
श्रीमता वैद्यनाथेन लोकानुग्रहकारिणा।
स्वप्नान्ते ब्राह्मणस्येयं भाषिता लिखितेन तु ॥ ५३ ॥

अथ वैद्यनाथवटीनिर्माणमाह—शाणमित्यादि—शाणमितं ( ४मा० ) "कर्षैश्चतुर्भिः शाणः स्यादिति" पारदं समादाय खल्वे निक्षिप्य काञ्जिकेन सह मर्दयित्वा शोधयेत्। ततश्च चित्रकक्काथेन त्रिफलाक्काथेन च शोधयित्वा भृङ्गराजस्वरसेन शुद्धं रसार्द्धं ( अर्द्धशाणमित्यर्थ ) गन्धकं समादाय खल्वे रसगन्धकयोः कज्जलीं कृत्वा

वक्ष्यमाणौषधानां शाणमितैः स्वरसैः क्वाथैर्वा सह पृथक् २ सन्लयेत् । निर्गुण्डी, मधुको मधुयष्टी, श्वेततुलसी, कृष्णतुलसी, ग्रीष्मसुन्दरक, भृङ्गराज, नागरमुस्तक, केशराज, जयन्ती, इन्द्राशनक = विजया, उत्कट = सिंहली। एषां स्वरसेन भावना दत्वा सर्षपाकारसमाना वटिका कृत्वा काचपात्रे स्थापयेत्। वटीमेनां सामवाते, ग्रहणीरोगे, अग्निमान्द्ये, ज्वरे, प्लीहवृद्धौ, उदररोगेषु, वातश्लेष्मरोगेषु च प्रयोजयेत्। अम्लपदार्थानां तक्रस्य च सेवनं यथेष्टं कुर्यात् । लोकानुग्रहकारिणा श्रीमता वैद्यनाथेन स्वप्नान्ते ( ब्राह्ममुहुर्ते इत्यर्थः ) ब्राह्मणस्य कृते वटीयं प्रोक्ता निर्गुण्ड्यादि उत्कटान्तं पाठान्तरं तद्यथा—

"निर्गुण्डी मण्डुकी श्वेता कुचेला ग्रीष्मसुन्दरैः ।
भृङ्गाह्वकेशराजैश्च जयन्तीन्द्राशनोत्कटैः ॥ इति ।

तथा "उत्कटैः" इत्यत्र "इत्कटैः" इत्यपि, एवं "श्लेष्मगदेषु च" इत्यनन्तरं क्वचित्—
"दधि मस्तु विनिक्षिप्य मर्दयित्वा यथाक्रमम्। दातव्या गुटिका सप्त रोगिणे ग्रहणीगदे ॥"
इत्यधिकपाठान्तरं दृश्यते ॥ ४८–५३ ॥

रसपर्पटिका—

याऽम्लपित्ते विधातव्या गुडिका च क्षुधावती ।
तत्र प्रोक्तविधा शुद्धौ समानौ रसगन्धकौ ॥ ५४ ॥
संमर्द्य कज्जलाभौ तु कुर्य्यात् पात्रे दृढाश्रये ।
ततो बादरवह्निस्थ-लौहपात्रे द्रवीकृतम् ॥ ५५ ॥
गोमयोपरि विन्यस्त-कदलीपत्रपातनात् ।
कुर्यात् पर्पटिकाकारमस्य रक्तिद्वयं क्रमात् ॥ ५६ ॥
रक्तिद्वादशकं यावत् प्रयोगः प्रहरार्द्धतः ।
तदूर्द्ध्वं वहुपूगस्य भक्षणं दिवसे पुनः ॥ ५७ ॥
तृतीय एव मांसाज्य-दुग्धाद्यत्र विधीयते ।
वर्ज्यं विदाहि स्त्री रम्भा-मूलं तैलञ्च सार्षपम् ॥ ५८ ॥
कृष्णमत्स्याम्बुजखगांस्त्यक्त्वोन्निद्रः पयः पिबेत् ।
ग्रहणीक्षयकुष्ठार्शः-शोथाजीर्णविनाशिनी ॥ ५९ ॥
रसपर्पटिका ख्याता निबद्धा चक्रपाणिना ॥ ६० ॥

अथ रसपर्पटिकानिर्माणमाह याऽम्लेत्यादि—अम्लपित्तचिकित्साया क्षुधावती नाम्नी या वटिका प्रोक्ता, तत्र येन विधिना रसगन्धकयो शुद्धिर्भवति तेनैव विधिना शुद्धौ समानभागौ रसगन्धकौ समादाय खल्वे यथाविधि कज्जलीं कुर्यात् , क्षुधावती-वटिकाया इत्थं रसगन्धकयो शुद्धि

जयन्त्या वर्द्धमानस्य आर्द्रकस्य रसेन तु । वायस्याश्चानुपूर्व्येव मर्दनं रसशोधनम् ॥
गन्धकं नवनीताख्यं क्षुद्रितं लौहभाजने । त्रिधा चण्डातपे शुष्क भृङ्गराजरसाप्लुतम् ॥
ततो वह्नौ द्रवीभूतं त्वरितं वस्त्रगालितम् । यत्नाद् भृङ्गरसे क्षिप्तं पुन शुष्कं विशुद्ध्यति॥

इति क्षुधावतीवटिकोक्तरसगन्धकशुद्धि । ततो लौहदर्विकाया कज्जलीं निक्षिप्य वदराङ्गारोपरि दर्विकां विन्यस्य लौहशलाकया चालयन् कज्जलीं द्रावयेत् । द्रवीभूतां कज्जलीं गोमयोपरि विन्यस्तकदलीपत्रे ढालयित्वा गोमयान्तस्थकदलीपत्रान्तरेणा-च्छादयेत् । इत्थं स्वाङ्गशीता पर्पटिकाकारा पर्पटीं समादाय काचपात्रे स्थापयेत् । इय रसपर्पटी रक्तिद्वयादारभ्य क्रमशो दशरक्तिकापर्यन्तं मात्रां वर्द्धयन् सेव्या, प्रहरार्द्धा-न्तरञ्च पूगसेवनं कुर्यात् , तृतीयप्रहरे च मांसं, घृतं, दुग्धादिकं च पिबेत् , तथा विदा-हि अन्नं, स्त्रीसेवनं, रम्भामूलमिति कदलीशाकं पक्वकदलीफलादिकञ्च, तथा सर्षपतैलं, कृष्णमत्स्यं, अम्बुजजावान् , पक्षिणश्च वर्जयेत् । अधिकनिद्रा त्याज्या, दुग्धमधिकं ( बुभुक्षानिवृत्त्यर्थमिति ) पेयम् । इत्थं विधिपूर्वकं सेवितेयं पर्पटी ग्रहणीं, कुष्ठं, अर्शं , शोथं, अजीर्णं च हन्ति । इयं रसपर्पटी चक्रपाणिना प्रोक्ता ॥ ५४-६० ॥

विजयपर्पटी—

**हाटकं रजतं ताम्रं यद्यत्र परिदीयते ।**
**विजायाख्या तु सा ज्ञेया सर्वरोगनिसूदनी ॥ ६१ ॥**

*अथ विजयपर्पटिकानिर्माणमाह हाटकमित्यादि–हाटकं = स्वर्णभस्म ( १ तो० ),* रजतभस्म ( १ तो० ), ताम्रभस्म ( १ तो० ), शुद्धगन्धक ( १ तो० ), शुद्ध-पारद ( १ तो० ) क्षुधावतीवटिकाप्रोक्तशोधनविधिना पारदगन्धकौ संशोध्य तयो-कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य दृढं विमर्द्य च यथाविधि पर्पटिकां कुर्यात् । इयं विजयाख्या पर्पटी यथारोगानुपाने सर्वरोगविनाशिनी ॥ ६१ ॥

स्वर्णपर्पटी—

**रसोत्तमं पलं शुद्धं हेम तोलकसंयुतम् ।**
**शिलायां मर्द्दयेत् तावत् यावदेकत्वमागतम् ॥ ६२ ॥**

गन्धकस्य पलश्चैकमयःपात्रे ततो दृढे ।
मर्दयेत् दृढपाणिभ्यां यावत् कज्जलतां व्रजेत् ॥ ६३ ॥
ततः पाकविधानज्ञः पर्पटीं कारयेत् सुधीः ।
रक्तिकादिक्रमेणैव योजयेदनुपानतः ।
ग्रहणीं विविधां हन्ति वृष्या सर्वज्वरापहा ॥ ६४ ॥

अथ स्वर्णपर्पटिकानिर्माणमाह रसेत्यादि—शुद्धपारद पलमित, स्वर्णभस्म ( १ तो० ), उभयो खल्वे श्लक्ष्णचूर्णं । ( द्वयोरेकीभवनपर्यन्तमित्यर्थ ) कृत्वा पलमित शुद्धगन्धकञ्च दत्वा दृढे लोहपात्रे दृढ विमर्द्य कज्जलिका चरेत् । ततो यथाविधि प्रयत्नपूर्वक पर्पटीं कृत्वा काचपात्रे स्थापयेत् । इयं पर्पटी रक्तिकादि क्रमेण ( अर्थात् प्रथमदिने रक्तमिता, द्वितीयदिने द्विरक्तिमिता, इत्थं क्रमेण दशदिनपर्यन्तं दशरक्तिकापर्यन्त भक्षयेत् ) यथानुपान सेविता विवधा ग्रहणीं हन्ति, तथा सर्वज्वरापहा वृष्या च ज्ञेया ॥ ६२–६४ ॥

अथ पञ्चामृतपर्पटी—

अष्टौ गन्धकमाषका रसदलं लौह तदर्द्धं शुभम् ।
लौहार्द्धञ्च वराभ्रकं सुविमलं ताम्रं तथाऽभ्रार्द्धिकम् ।
पात्रे लौहमये च मर्दनविधौ चूर्णीकृतश्चैकतो
दर्व्यां बादरवह्निनाऽतिमृदुना पाकं विदित्वा दले ॥ ६५ ॥
रम्भाया लघु ढालयेत् पटुरियं पञ्चामृता पर्पटी
ख्याता क्षौद्रघृतान्विता प्रतिदिनं गुञ्जाढ्यं वृद्धितः ।
लौहे मर्दनयोगतः सुविमलं भव्यक्रिया लौहवत्
गुञ्जाऽष्टावथवा त्रिकं त्रिगुणितं सप्ताहमेवं भजेत् ॥ ६६ ॥
नानावर्णग्रहण्यामरुचिसमुदये दुष्टदुर्नामकादौ
छर्द्यां दीर्घातिसारे ज्वरभवकसिते रक्तपित्ते क्षयेऽपि
वृष्याणां वृष्यराज्ञी वलिपलितहरा नेत्ररोगैकहन्त्री
तत्स्थं दीप्तस्थिराग्नि पुनरपि नवकं रोगिदेहं करोति ॥६७॥
पाकोऽस्याः त्रिविधः प्रोक्तो मृदुर्मध्यः खरस्तथा ।
आद्ययोर्दृश्यते सूतः खरपाके न दृश्यते ॥ ६८ ॥

मृदौ न सम्यग्भङ्गः स्यात् मध्ये भङ्गश्च रौप्यवत् ।
खरे लघुर्भवेद्भङ्गो रूक्षः श्लक्ष्णोऽरुणच्छविः ।
मृदुमध्यौ तथा खाद्यौ खरस्त्याज्यो विषोपमः ॥ ६६ ॥

अथ पञ्चामृतपर्पटीनिर्माणमाह अष्टावित्यादि—शुद्धगन्धक ( ८ मा० ), शुद्धपारद ( ४मा० ), उभयो खल्वे कज्जलीं कृत्वा लौहभस्म ( २मा० ), अभ्रकभस्म ( १मा० ), ताम्रभस्म अर्द्धमाषकं, कज्जलिकायां निक्षिप्य लौहखल्वे दृढं विमर्द्य श्लक्ष्णीभूतां कज्जलीं लौहदर्व्यां संस्थाप्य मृदुबदराङ्गारवह्नौ प्रद्रावयेत् । लौहशलाकया च चालयन् सम्यक् द्रुतां कज्जलीं ज्ञात्वा गोमयोपरिस्थितरम्भादले ढालयित्वा कदलीदलवेष्टितेन गोमयपिण्डेन भारपूर्वकमाच्छाद्य स्वाङ्गशीतां पञ्चामृतपर्पटीं गृह्णीयात् ।

इमां पञ्चामृतपर्पटीं द्विगुञ्जादारभ्य प्रतिदिनं अस्या मात्रां वर्द्धयन् लौहखल्वे श्लक्ष्णं विचूर्ण्य क्षौद्रेण गोघृतेन च सह भक्षयेत् । सेवनसमये पथ्यादिकञ्च लौहसेवनवत्कार्यम् । अस्या यथारोगं यथाबलं यथावयश्च द्विगुञ्जादारभ्य अष्टगुञ्जापर्यन्तं त्रिगुञ्जापर्यन्तं, त्रिगुणितमिति नवरक्तिकापर्यन्तम्वा मात्रां वर्द्धयन्- सप्ताहपर्यन्तं सेवनं कुर्यात् । इत्थमियं पर्पटी सेविता नानाविधग्रहणीं, अरुचिं, दुष्टार्शोरोगं, वमनं, तीव्रातीसारं, ज्वरं, कासं, रक्तपित्तं, क्षयं च हन्ति । कल्पौषधेषु च श्रेष्ठा, अल्पावस्थायां केशश्वैत्यं केशपतनञ्च निवारयति । नेत्ररोगाणां नाशिका पाचकशक्तेर्वर्द्धिनी, रोगिदेहञ्च स्वास्थ्यादिकं दत्वा नवं करोति । अस्याः पाकस्त्रिविधः यथा मृदुर्मध्यः खरस्तथा, मृदुमध्यमपाकयोः पारदस्य चन्द्रिकारूपेण (चमकरूपेण) दर्शनं भवति खरपाके च चन्द्रिकानाशेन नैव दर्शनं, मृदुपाकसिद्धपर्पटिकायां भङ्गो नैव भवति । अपि तु पीडनेन चूर्णतामुपैति । मध्यपाकसिद्धपर्पटिकायां रौप्यभङ्गवद्रजतभङ्गवद्भङ्गो भवति, खरपाकसिद्धपर्पटिकायाञ्च स्वल्पपीडनेनैव शीघ्रं भङ्गो भवति । तथा रूक्षः श्लक्ष्णो रक्तवर्णश्च भङ्गप्रदेशः प्रतीयते । मृदुमध्यपाकसिद्धपर्पटी सेव्या, खरपाकसाधिता च विषवदनिष्टकरत्वात्त्याज्या । अत्र प्राचीनसंस्कृतटीकाकारमतं यथा—"अष्टौ गन्धकमाषका रसदलम्" इति भट्टादिसम्मतः पाठः, पाश्चात्यास्तु माषका इत्यत्र तोलका इति पठन्ति । अन्ये तु "रसदलम्" इत्यत्र "रसपलम्" इति पठन्ति । ये तु रसपलमिच्छन्तो गन्धकस्य अष्टमाषकत्वमाहु

स्तन्मते पारदबाहुल्यात् पर्पट्येव न स्यात्, तेन गन्धकस्य अष्टमाषका, रसस्य च दलमर्द्धभागत्वमित्यर्थः ॥ ६५-६९ ॥

अग्निकुमारो रसः —

शुद्धसूत समं गन्ध त्रिकटु पटुपञ्चकम् ।
दशक तुल्यतुल्यञ्च विजया सर्वसम्मिता ।
भावयेच्चित्रभृङ्गोत्थैस्त्रिधा च विजयाद्रवैः ॥ ७० ॥
दीप्ताग्निना तु यामैक वालुकायन्त्रके पचेत् ।
सञ्चूर्ण्य चार्द्रकद्रावैर्भावयित्वा च भक्षयेत् ॥ ७१ ॥
मधुना शाणमानन्तु रसो ह्यग्निकुमारकः ।
दीप्ताग्निकारकः साम-ग्रहणीदोषनाशनः ॥ ७२ ॥

अथ अग्निकुमाररसनिर्माणमाह शुद्धसूतेत्यादि—शुद्धपारद (१तो०), शुद्धगन्धक (१तो०), त्रिकटुचूर्ण प्रत्येक (१तो०), पटुपञ्चक पञ्चलवण प्रत्येक (१तो०), सर्वसम्मितेति सर्वेषा दशपदार्थाना तुल्या शुद्धविजया (१०तो०), पूर्वं रसगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य त्रिवार चित्रककाथेन भावयेत् । तथा त्रिवार भृङ्गराजस्वरसेन तथैव त्रिवार विजयास्वरसेन च भावयेत् । ततश्च गोलक कृत्वा मृण्मये भाण्डे निक्षिप्य तदुपरि शरावमाच्छाद्य सन्धि रुद्ध्वा भाण्डावकाश बालुकाभि प्रपूर्य यामैक दीप्ताग्निना पाक कुर्यात् । ततश्च स्वाङ्गशीतमौषध गृहीत्वा खल्वे निक्षिप्य आर्द्रकस्वरसेनाप्लाव्य विमर्द्य च काचपात्रे स्थापयेत् । अयमग्निकुमारो रस शाणमित (४मा०) प्रत्यह मधुना सह सेवित सामं ग्रहणीदोषं हन्ति, पाचकशक्तिञ्च वर्द्धयति ॥ ७०-७२ ॥

वडवामुखो रस —

शुद्धसूतं समं गन्धं मृततामाभ्रटङ्कणम् ।
सामुद्रञ्च यवक्षारं सर्जिसैन्धवनागरम् ॥ ७३ ॥
अपामार्गस्य च क्षारं पलाशवरुणस्य च ।
प्रत्येकं सूततुल्यं स्यादम्लयोगेन मर्द्दयेत् ॥ ७४ ॥
हस्तिशुण्डीद्रवैश्चाग्नौ मर्द्दयित्वा पुटेल्लघु ।
माषमात्रः प्रदातव्यो रसोऽयं वडवामुखः ।

**ग्रहणीं विविधां हन्ति संग्रहग्रहणीं ज्वरम् ॥ ७५ ॥**

अथ वड़वामुखरसनिर्माणमाह शुद्धेत्यादि—शुद्धपारद (१तो०), शुद्धगन्धक (१तो०), ताम्रभस्म (१तो०), अभ्रकभस्म (१तो०), शुद्धटङ्कण (१तो०), समुद्र लवण (१तो०) यवक्षार (१तो०), सर्जिक्षार (१तो०), सैन्धवलवणं ( तो०), शुण्ठीचूर्णं (१तो ), अपामार्गक्षार (१तो०), पलाशक्षार (१तो०), वरुणक्षार (१तो०), पूर्वं रसगन्धयोः कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य तेनचिदम्लेन (नम्बाररसेन काञ्जिकेन वा) सह विमर्दयेत् । ततश्च हस्तिशुण्डाक्काथेन सह भावयित्वा लघुपुटे पुटेत् । अथ वड़वामुखरसो यथारोग यथाबलञ्च वीक्ष्य रक्तिद्वयादारभ्य माषेकपर्यन्त सेवितो विविधां ग्रहणीं, संग्रहग्रहणीं ज्वरञ्च विनाशयति ॥ ७३–७५ ॥

ग्रहणीकपाटो रसः —

**रसगन्धकयोश्चापि जातीफललवङ्गयोः ।**
**प्रत्येकं शाणमानञ्च श्लक्ष्णचूर्णीकृतं शुभम् ॥ ७६ ॥**
**सूर्य्यावर्त्तरसेनैव विल्वपत्ररसेन च ।**
**शृङ्गाटकसमुद्भूत-स्वरसेन च मर्द्दयेत् ॥ ७७ ॥**
**चण्डातपेन संशोष्य वटिकां कारयेद्भिषक् ।**
**विल्वपत्ररसेनैव दापयेद्रक्तिकाद्वयम् ॥ ७८ ॥**
**दध्ना च भोजनीयोऽसौ ग्रहणीरोगनाशनः ।**
**पाण्डुरोगमतीसारं शोथं हन्ति तथा ज्वरम्**
**श्रयञ्च ग्रहणीरोगे कपाटो रस उत्तमः ॥ ७९ ॥**

अथ ग्रहणीकपाटरसनिर्माणमाह—रसेत्यादि—शुद्धपारद १ शाणमित ( ४ मा० माषैश्चतुर्भिः शाणः स्यादिति ) शुद्धगन्धक ( १ शा० ), जातीफलचूर्णं (१शा०) लवङ्गचूर्णं (१शा०), पूर्वं रसगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य श्लक्ष्णचूर्णञ्च विधाय सूर्यावर्तरसेन = सूर्यमुखीक्काथेन, विल्वपत्रस्वरसेन, शृङ्गाटकस्वरसेन च क्रमशो भावयित्वा निदाघे च संशोष्य द्विरक्तिपरिमितवटिकाः कृत्वा काचपात्रे स्थापयेत । अथ रसो द्विरक्तिकमितो विल्वपत्रस्वरसेन सह सेवितो ग्रहणीरोगं, पाण्डुरोगं, अतीसारं, शोथं, ज्वरञ्च हन्ति, भोजने दध्योदनं देयं, ग्रहणीरोगे ग्रहणीकपाटाख्योऽयं रसः श्रेष्ठः ॥ ७६–७९ ॥

सग्रहणीकपाटो रस —

**मुक्ता सुवर्णं रसगन्धटङ्कं घनः कपर्दोऽमृततुल्यभागः ।**
**सर्वैः समं शङ्खकचूर्णमत्र भाव्यश्च खल्लेऽतिविषाद्रवेण ॥ ८० ॥**
**गोलश्च कृत्वा मृदुकर्पटस्थं सम्पाच्य भाण्डे दिवसार्द्धकञ्च ।**
**सर्वाङ्गशीतो रस एष भाव्यो धूस्तूरवह्न्योर्मुषलीद्रवैश्च ॥ ८१ ॥**
**लौहस्य पात्रे परिभावितश्च सिद्धो भवेत् संग्रहणीकपाटः ।**
**संसाधितः सद्भिषजा प्रयत्नात् योगस्थितेनार्च्यसमर्चितेन ॥ ८२ ॥**
**वातोत्तरायां मरिचाज्ययुक्तैः पित्तोत्तरायां मधुपिप्पलीभिः ।**
**कफोत्तरायां विजयारसेन कटुत्रयेणाज्ययुतो ग्रहण्याम् ॥ ८३ ॥**
**क्षये ज्वरे चार्शसि षट्प्रकारे सामातिसारेऽरुचिपीनसे च ।**
**मेहे च कृच्छ्रे गतधातुवृद्धौ गुञ्जाद्वयश्चापि महामयघ्नः ॥ ८४ ॥**

अथ सग्रहणीकपाटरसनिर्माणमाह–मुक्तेत्यादि—मुक्ताभस्म (१तो०), सुवर्णभस्म (१तो०), शुद्धपारद (१तो०), शुद्धगन्धक (१तो०), शुद्धटङ्कणं (१तो०), अभ्रकभस्म (१तो०), कपर्दिकाभस्म (१तो०), शुद्धवत्सनाभचूर्णं (१तो०), सर्वसम शङ्खभस्म (८तो०) पूर्वं पारदगन्धकयो कज्जली कृत्वा शेषद्रव्याणि सम्मेल्य अतिविषाक्वाथेन सह विमर्द्य गोलकं कुर्यात् । तदनु गोलक वस्त्रेण सवेष्ट्य मृण्मये पात्रे सम्पुट कृत्वा दिनार्द्धं पचेत् । स्वाङ्गशीत लौहखल्वे विचूर्ण्य धुस्तूररसेन, चित्रकस्वरसेन, मुषलीक्वाथेन च क्रमश पृथक् २ भावयित्वा (अथवा लौहकटाहे वह्नौ त्रयाणामौषधीना स्वरस क्रमशो निक्षिप्य पचेदित्यपि विधि ) सशोष्य च काचपात्रे स्थापयेत । अस्य रसस्य निर्माणसमये निर्माणकर्त्रा वैद्येन देवद्विजादिपूजा चित्तैकाग्र्यञ्च कर्तव्यम् । अथ रसो द्विगुञ्जामितो मरिचचूर्णेन घृतेन च वातप्रधानग्रहण्या, मधुना पिप्पलीचूर्णेन च सह पित्तप्रधानग्रहण्या, विजयास्वरसेन त्रिकटुचूर्णेन घृतेन च सह सम्मेल्य कफप्रधानग्रहण्या सेवितो हित करोति । तथाय रस क्षये, ज्वरे, अर्शसि सामातिसारे, अरुचौ, पीनसरोगे, प्रमेहे, कृच्छ्र–मूत्रकृच्छ्रे, गतधातुवृद्धौ = नष्टधातुवृद्ध्यर्थञ्च यथानुपानैः प्रयोज्य ॥ ८०-८४ ॥

अन्यो ग्रहणीकपाटो रस —

**गिरिजाभवबीजकज्जलीं परिमृद्यार्द्ररसेन शोषिता ।**
**कुटजस्य तु भस्मना पुनर्द्विगुणेनाथ विमृद्य मिश्रिता ॥ ८५ ॥**

अथ ग्रहणीकपर्दपोट्टलीरसनिर्माणमाह—कपर्देत्यादि—कपर्दिकाभस्म, शुद्धपारद, शुद्धगन्धक, लौहभस्म, शुद्धटङ्कणम्। प्रत्येकं तोलकैकं (समभागेनेत्यर्थं) समादाय पारदगन्धकयोः कज्जलीं कृत्वा सर्वद्रव्याणि सम्मेल्य विजयास्वरसेन सम्यगाप्लाव्य विमर्द्य संशोष्य च सम्पुटस्थं कृत्वा भाण्डे पुटेत्। इयं ग्रहणीकपर्दपोट्टली वातप्रधानग्रहणीरोगे परमप्रशस्ता ॥ ९० ॥

हंसपोट्टली—

दग्धान् कपर्दकान् पिष्ट्वा त्र्यूषणं टङ्कणं विषम्।
गन्धकं शुद्धसूतञ्च तुल्यं जम्बीरजैर्द्रवैः ॥ ९१ ॥
मर्दयेत् भक्षयेन्माषं सलिह्यान्मरिचार्द्रकम्।
निहन्ति ग्रहणीरोगं पथ्यं तक्रौदनं हितम् ॥ ९२ ॥

अथ हंसपोट्टलीनिर्माणमाह—दग्धेत्यादि—कपर्दभस्म, शुण्ठीचूर्णं, मरिचचूर्णं, पिप्पलीचूर्णं, शुद्धटङ्कण, शुद्धवत्सनाभचूर्णं, शुद्धगन्धक, शुद्धपारदञ्च। प्रत्येकं समभागेनादाय पारदगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि निक्षिप्य जम्बीरनिम्बुरसेनाप्लाव्य दृढं विमर्द्य च माषकैकमिता वटिका कृत्वा काचपात्रे स्थापयेत्। अयं रसः प्रत्यहं मरिचचूर्णेन आर्द्रकस्वरसेन च सह सेवितो ग्रहणीं निहन्ति, पथ्ये च सतक्रमोदनं देयम् ॥ ९१-९२ ॥

अन्यग्रहणीकपाट —

तुल्यं कान्तं रसं तालं माक्षिकं टङ्कणं तथा।
सपादनिष्कं प्रत्येकं पञ्चनिष्कं वराटकम्।
द्विनिष्कं गन्धकं सर्वं पिष्ट्वा जम्बीरजैर्द्रवैः ॥ ९३ ॥
अर्द्धभागकरीषेण पुटितं भस्म शोभनम्।
प्रदद्यात् ग्रहणीगुल्म-क्षयकुष्ठप्रमेहके ॥ ९४ ॥

अथान्यग्रहणीकपाटरसनिर्माणमाह—तुल्यमिति—कान्तलौहभस्म, शुद्धपारद, शुद्धगन्धक, शुद्धहरितालचूर्णं, स्वर्णमाक्षिकभस्म, शुद्धटङ्कणम्। एतत्प्रत्येकं सपादनिष्कं (५मा०)।

(माषैश्चतुर्भिः शाणः स्यात् सन्निष्कष्टङ्क एव च।)

वराटभस्म ५ निष्कं (२०मा०), शुद्धगन्धकं द्विनिष्कं (८मा०), पूर्वं रसग-

न्धयको कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य जम्बीररसेनाप्लाव्य विमर्द्य च शरावसम्पुटं कृत्वा स्निग्धमृत्पङ्कलिप्तवस्त्रपट्टिकाभिः संलिप्य संशुष्कं कृत्वा वन्योपलैरर्द्धभागपूरिते भूगर्ते पुटं संस्थाप्य तदुपरि वन्योपलानि दत्वा पुटेत्। स्वाङ्गशीतं पुटं निष्काश्य यथारोगानुपानैस्सह ग्रहणीगुल्मक्षयकुष्ठप्रमेहेषु प्रयोजयेत् ॥ ९३–९४ ॥

महाग्रहणीकपाटो रसः—

रसाभ्रगन्धान् क्रमवृद्धियुक्तान् जह्वारसेन त्रिदिनं विमर्द्य ।
जयन्तिका-भृङ्गकलम्बिनीरैः दिनं यवक्षारसटङ्कणञ्च ॥ ९५ ॥
क्षिप्त्वा तु गन्धस्य च तुल्यभागं वातारितैलेन युतं पुटित्वा ।
गुडूचिका-शाल्मलिकारसेन जयारसेनापि विमर्द्य शाणम् ॥ ९६ ॥
मरीचसार्द्धं मधुना समेतं ददीत पथ्यं दधिभक्तकञ्च ।
शिवेन प्रोक्तो जगतां हिताय महारसोऽयं ग्रहणीकपाटः ॥ ९७ ॥

अथ प्रकारान्तरेण ग्रहणीकपाटरसमाह—रसेत्यादि—शुद्धपारद (१ तो०), अभ्रकभस्म (२तो०), शुद्धगन्धक (३तो०), पूर्वं पारदगन्धकयोः कज्जलीं कृत्वा अभ्रकभस्म दत्वा काकजङ्घाक्वाथेन त्रिदिनं सम्यगाप्लाव्य मर्दयेत्। ततो जयन्तीपत्रस्वरसेन, भृङ्गराजरसेन, कलिम्बिकाक्वाथेन च सह पृथक् २ दिनैकं क्रमशो भावयित्वा तत्र यवक्षार (३तो०), शुद्धटङ्कणम् त्रितोलकं दत्वा पेषयेत्। तदनु वातारितैलेन—एरण्डतैलेन सह पिष्ट्वा सम्पुटस्थं पुटेत्। ततश्चोद्धृत्य खल्वे सञ्चूर्ण्य गुडूचिकारसेन, शाल्मलिक्वाथेन, विजयाक्वाथेन च पृथक् २ भावयित्वा विमर्द्य च शाणमिता वटिकाः कृत्वा काचपात्रे स्थापयेत्। अयं रसः शाणमितो मरिचचूर्णेन मधुना च सह सेवितो ग्रहणीं हन्ति। पथ्ये दधियुक्तमोदनं देयम्। अयं ग्रहणीकपाटनामको महारसः शिवेन लोकानां हितार्थं प्रोक्तः ॥ ९५–९७ ॥

ग्रहणीवज्रकपाटो रसः—

सूतं गन्धं यवक्षारं जयन्त्युग्राऽभ्रटङ्कणम् ।
जयन्तीभृङ्गजम्बीर-द्रवैः पिष्ट्वा दिनत्रयम् ॥ ९८ ॥
यामार्द्धं गोलकं स्वेद्यं मन्देन पावकेन च ।
शीते जयारससमैः शाल्मलीविजयाद्रवैः ॥ ९९ ॥
भावयेत् सप्तधा वज्र-कपाटः स्याद् रसोत्तमः ।
माषद्वयं त्रयं वाऽस्य मधुना ग्रहणीं जयेत् ॥ १०० ॥

अथ ग्रहणीवज्रकपाटनिर्माणमाह मृतमित्यादि शुद्धपारद ( १ तो० ), शुद्धगन्धक ( १ तो० ), यवक्षार ( १ तो० ), जयन्तीचूर्ण ( ५ तो० ), उग्रा=वचाचूर्ण (१ तो०), अभ्रकभस्म (१तो०), शुद्धटङ्कण (१ तो०), पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य जयन्तीपत्रस्वरसेन भृङ्गराजस्वरसेन, जम्बीरनिम्बुरसेन च पृथक् २ क्रमशो भावयित्वा त्रिदिन प्रत्येकस्वरसेन सह विमर्द्य गोलकं कृत्वा मन्दाग्नौ प्रहरार्द्ध यावत् सम्वेद्य स्वाङ्गशीतस्य गोलक खल्वे विचूर्ण्य जयारसेनैव सप्तवार शाल्मलिक्वाथेनाप्लाव्य मर्दयेत् , तथैव सप्तधा विजयाक्वाथेनाप्लाव्य विमर्द्य सशोष्य च काचपात्रे स्थापयेत । अथ रसेषूत्तमो ग्रहणीकपाटसञ्ज्ञो रसो यथावल यथारोगञ्च द्विरक्तिकादारभ्य माषद्वय यावत् वा मधुना सह सेवितः विविधा ग्रहणी हन्ति ॥ ९८–१०० ॥

प्रकारान्तरो ग्रहणीवज्रकपाट —

तारमौक्तिकहेमानि सारश्चैकैकभागिकः ।
द्विभागो गन्धकः सूतस्त्रिभागो मर्दयेदिमान् ॥ १०१ ॥
कपित्थस्वरसैर्गाढं मृगशृङ्गे ततः क्षिपेत् ।
पुटेत् मध्यपुटेनैव तत उद्धृत्य मर्दयेत ॥ १०२ ॥
बलारसैः सप्तधैवमपामार्गरसैस्त्रिधा ।
लोध्रप्रतिविषामुस्ता-धातकीन्द्रयवामृता. ॥ १०३ ॥
प्रत्येकमेतत्स्वरसैर्भावना स्यात् त्रिधा त्रिधा ।
माषमात्रो रसो देयो मधुना मरिचैस्तथा ॥ १०४ ॥
हन्यात् सर्वानतीसारान् ग्रहणीं सर्वजामपि ।
कपाटो ग्रहणीरोगे रसोऽयं वह्निदीपनः ॥ १०५ ॥

अथ प्रकारान्तरेण ग्रहणीवज्रकपाटनिर्माणमाह तारेत्यादि—तार = रजतभस्म (१तो०), मुक्ताभस्म (१तो०), स्वर्णभस्म (१तो०), सार —लौहभस्म (१तो०), शुद्धगन्धक (२तो०), शुद्धपारद (३तो०), पूर्वं पारदगन्धकयो पाषाणखल्वे कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य विचूर्ण्य च कपित्थवृक्षत्वच क्वाथैराप्लाव्य दिनद्वय प्रगाढं मर्दन कृत्वा सशोष्य च मृगशृङ्गे चूर्णं पूरयित्वा तस्य मुखञ्च सन्धिरुध्य मध्यपुटे पचेत् । तत स्वाङ्गशीतमोषध खल्वे निक्षिप्य विमर्द्य च बलाक्वाथेन

सप्तवार भावयेत्। तथैव अपामार्गक्वाथेन सप्तवारं भावयेत्। ततश्च लोध्रक्वाथेन, अतिविषाक्वाथेन, मुस्तकक्वाथेन, धातकीपुष्पक्वाथेन, इन्द्रयवक्वाथेन अमृता-गुडूची तस्या स्वरसेन पृथक् २ त्रिवार भावयित्वा सशोष्य च काचपात्रे स्थापयेत्। अथ ग्रहणीवज्रकपाटरसो रक्तिद्वयादारभ्य यथारोगं यथावयश्च माषकैकमितो मधुना मरिचचूर्णेन च सह सेवित सर्वविधातीसारान्, विविधा ग्रहणीं च हन्ति, पाचकशक्तिं वर्द्धयति ॥ १०१-१०१ ॥

पानीयभक्तवटी—

कृष्णाभ्रलौहमलशुद्धविडङ्गचूर्णं
प्रत्येकमेव पलिकं विधिवद्विधाय ।
चव्यं कटुत्रयफलत्रयकेशराज-
दन्तीपयोदचपलानलखण्डकर्णाः ॥ १०६ ॥

माणौलकन्दवृहतीत्रिवृता ससूर्या-
वर्त्ताः पुनर्नविकया सहितास्त्वमीषाम् ।
मूलं प्रति प्रति विशोधितमक्षमेकं
चूर्णं तदर्द्धरसगन्धकमेकसंस्थम् ॥ १०७ ॥

कृत्वाऽऽर्द्रकीयरससंवलितञ्च भूयः
संपिष्य तस्य वटिका विधिवत् विधेया ।
हन्त्यम्लपित्तमरुचिं ग्रहणीमसाध्यां
दुर्नामकामलभगन्दरशोथगुल्मान् ॥ १०८ ॥

शूलञ्च पाकजनितं सतताग्निमान्द्यं
सद्यः करोत्युपचितं चिरनष्टवह्नेः ।
कुष्ठं निहन्ति पलितञ्च वलीं प्रवृद्धां
श्वासञ्च कासमपि पाण्डुगदं निहन्ति ॥ १०९ ॥

वार्यन्नमांस-दधिकाञ्जिकतक्रमत्स्य-
वृन्ताम्लतैलपरिपक्वभुजो यथेष्टम् ।
शृङ्गाटबिल्वगुडकञ्चटनारिकेल-
दुग्धानि सर्वविदलानि विवर्जयेत् तु ॥ ११० ॥

अथ पानीयभक्तवटीनिर्माणमाह कृष्णेत्यादि—कृष्णाभ्रकभस्म पलमितं, लौहमल=मण्डूरभस्म १ प०, शुद्धविडङ्गचूर्णं (१प०), चव्यचूर्णं अक्षमितं (१तो०), शुण्ठीचूर्णं (१तो०), मरिचचूर्णं (१तो०), पिप्पलीचूर्णं (१तो०), हरीतकीचूर्णं (१तो०), विभीतकचूर्णं (१तो०), आमलकीचूर्णं (१तो०), केशराजचूर्णं (१तो०), दन्तीमूलचूर्णं (१तो०), पयोद–शुद्धमुस्तकचूर्णं (१तो०), चपला–पिप्पलीचूर्णं (१तो०), अनल–चित्रकमूलचूर्णं (१तो०), तच्च शुद्धं ग्राह्यम्। खण्डकर्णा (खारखोन) तस्याः शुद्धमूलचूर्णं (१तो०), माणीलकन्द = मानकन्दस्तस्य शुद्धं चूर्णं (१तो०), बृहतीमूलचूर्णं शुद्धं (१तो०), शुद्धं त्रिवृन्मूलचूर्णं (१तो०), शुद्धं सूर्यावर्तमूलचूर्णं (१तो०), शुद्धं पुनर्नवामूलचूर्णं (१तो०), तदर्द्धरसगन्धक = मिलितरसगन्धकं कर्षार्द्धम्, (केषाञ्चिन्मते तु शुद्धपारदं अर्द्धकर्षमितं, शुद्धगन्धकश्च सार्द्धकर्षमितं) पूर्वं रसगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य सञ्चूर्ण्य च आर्द्रकस्वरसेन भावयित्वा द्विरक्तिमिता वटिकाः कृत्वा काचपात्रे स्थापयेत्। रसोऽयं यथाविधि सेवितः अम्लपित्तं, अरुचिं, असाध्यां ग्रहणीं, दुर्नामरोगमर्शः, कामलां, भगन्दरं, शोथं, गुल्मं, पाकजनितं शूलं = परिणामशूलं, सततमग्निमान्द्यं च विनिहन्ति। चिरकालेन नष्टपाचकशक्तेः शीघ्रं अपचितिं करोति तथा कुष्टं, पलितरोगं, प्रवृद्धां वलिं चर्मसंकोचं (अथवा वलिपलितरोगमिति अकाले केशश्वैत्यं केशपतनञ्च विनाशयति) श्वासं, कासं, पाण्डुरोगञ्च निहन्ति। पथ्यं स्वच्छं वारि = जलं, लघुभोजनं, मांसं, दधि, काञ्जिकं, तक्रं, मत्स्यं, वृक्षाम्लं = तिन्तिडीकं, तैलपरिपक्वपदार्थाश्च। तथा अपथ्यं शृङ्गाटकानि, बिल्वफलं, गुडं, कम्रट–तण्डुलीयशाकं, नारिकेलफलं, दुग्धं, सर्वविदलानि, विविधसूपञ्च विवर्जयेत् ॥ १०६–११० ॥

शम्बूकादिवटी—

**दग्धशम्बूकसिन्धूत्थं तुल्यं क्षौद्रेण मर्दयेत्।**
**निष्कैकेण निहन्त्याशु वातसंग्रहणीगदम् ॥ १११ ॥**

अथ शम्बूकादिवटीनिर्माणमाह दग्धेत्यादि—दग्धशम्बूकमिति शुद्धशङ्खभस्म, सिन्धूत्थ = सैन्धवलवणम्, प्रत्येकं समभागेन गृहीत्वा खल्वे सूक्ष्मं विचूर्ण्य जलेन सह पिष्ट्वा माषैकमिता वटिकाः कृत्वा काचपात्रे स्थापयेत्। इयं वटी यथारोगं यथावयश्च माषैकादारभ्य शाणपर्यन्तमिति चतुर्माषकपर्यन्तं सेविता वातिकसङ्ग्रहणीरोगं विनिहन्ति ॥ १११ ॥

हिरण्यगर्भपोटली रसः —

एकांशो रसराजस्य भागौ द्वौ हाटकस्य च ।
मुक्ताफलस्य चत्वारो भागाः षड् दीर्घनिस्वनात् ॥ १२३ ॥
त्र्यंशं बलेर्वराटयाश्च टङ्कणो रसपादिकः ।
पक्वनिम्बुकतोयेन सर्वमेकत्र मर्दयेत् ॥ १२४ ॥
मूषामध्ये न्यसेत् कल्कं तस्य वक्त्रं निरोधयेत् ।
गर्त्तेऽरत्निप्रमाणे तु पुटेत् त्रिंशद्वनोपलैः ॥ १२५ ॥
स्वाङ्गशीतलतां ज्ञात्वा रसं मूषोदरात् नयेत् ।
ततः खल्वोदरे मर्द्य सुधारूपं समुद्धरेत् ॥ १२६ ॥
एतस्यामृतरूपस्य दद्यात् गुञ्जाचतुष्टयम् ।
घृतमाक्षीकसंयुक्तमेकोनत्रिंशदूषणैः ॥ १२७ ॥
मन्दाग्नौ रोगसङ्घे च ग्रहण्यां विषमज्वरे ।
गुदांकुरे महाशूले पीनसे श्वासकासयोः ॥ १२८ ॥
अतीसारे ग्रहण्याञ्च श्वयथौ पाण्डुके गदे ।
सर्वेषु कुष्ठरोगेषु यकृत्प्लीहोदरेषु च ॥ १२९ ॥
वातपित्तकफोत्थेषु द्वन्द्वजेषु त्रिजेषु च ।
दद्यात् सर्वेषु रोगेषु श्रेष्ठमेतत् रसायनम् ॥ १३० ॥

अथ हिरण्यगर्भपोटलीरसनिर्माणमाह एकांश इत्यादि–शुद्धपारद (१तो०), शु-
द्धसुवर्ण (२तो०), मुक्ताभस्म (४तो०) दीर्घनिस्वन शङ्खभस्म (६तो०), शुद्धगन्ध-
क (३तो०) वराटिका=कपर्दिकाभस्म (३तो०) शुद्धटंकण रसपादिक पारदचतुर्थांश ।
सर्वं पारदगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि मेलयित्वा पक्वनिम्बुरसेन मर्दयित्वा
निर्मितं कल्कं मूषामध्ये संस्थाप्य मूषामुखं निरुद्ध्य अरत्निमात्रे गर्ते त्रिंशद्वनो-
पलैः पुटेत् । स्वाङ्गशीतलमूषोदरादेव गृहीत्वा खल्वे दृढं विमर्द्य काचपात्रे स्था-
पयेत् । अमृततुल्यस्यास्य रसस्य गुञ्जाचतुष्टयं प्रत्यहं गोघृतेन माक्षीकेन=
मधुना, एकोनत्रिंशन्मरिचचूर्णेन च सह ( घृतमधुनोर्मात्रा विषमा कर्तव्या ) सेवितं
मन्दाग्नौ, विविधरोगसङ्घे, ग्रहण्यां विषमज्वरे, गुदाङ्कुरे महाशूले, पीनसरोगे, श्वासे,
कासे अतीसारे श्वयथौ=शोथे पाण्डुरोगे, सर्वकुष्ठरोगेषु यकृद्वृद्धौ प्लीहवृद्धौ,

जलोदररोगे, वातिकेषु, पैत्तिकेषु, श्लैष्मिकेषु रोगेषु, द्वन्द्वजरोगेषु, सान्निपातिकरोगेषु, किम्बहु यथाव्याध्यनुपाने सर्वरोगेषु च हितकर ॥ ११२-११९ ॥

रसाभ्रवटी—

शुद्धसूतस्य कर्षक कर्षकं गन्धकस्य च ।
द्वयोः कज्जलिकातुल्यं व्योमचूर्णं प्रदापयेत् ॥ १२० ॥
केशराजस्य भृङ्गस्य निर्गुण्ड्याश्चित्रकस्य च ।
ग्रीष्मसुन्दरमण्डूकी-जयन्तीन्द्राशनस्य च ॥ १२१ ॥
श्वेतापराजितायाश्च स्वरसं पर्णसम्भवम् ।
रसतुल्यं प्रदातव्यं चूर्णञ्च मरिचोद्भवम् ॥ १२२ ॥
देय रसार्द्धभागेन चूर्णं टङ्कणसम्भवम् ।
संमर्द्य वटिकां कुर्यात् कलायसदृशीं बुधः ॥ १२३ ॥
हन्ति कासं क्षय श्वासं वातश्लेष्मभवां रुजम् ।
ज्वरे चैवातिसारे च सिद्ध एष प्रयोगराट् ॥ १२४ ॥
चातुर्थके ज्वरे श्रेष्ठो ग्रहण्यातङ्कनाशन. ।
दधि चावश्यकं देय प्राह नागार्जुनो मुनिः ॥ १२५ ॥

अथ रसाभ्रवटीनिर्माणमाह शुद्धसूतस्येत्यादि—शुद्धपारद (१क० १तो०), शुद्धगन्धक (१क०), व्योमचूर्ण = कृष्णाभ्रकभस्म (२क०), पूर्वं पारदगन्धकयो कज्जली कृत्वा अभ्रकभस्म निक्षिप्य केशराजस्य, भृङ्गराजस्य, निर्गुण्ड्या, चित्रकस्य, ग्रीष्मसुन्दरस्य, मण्डूकपर्ण्या, जयन्त्या, इन्द्राशनस्य—भङ्गाया, श्वेतापराजितायाश्च स्वरसेन क्वाथेन वा पृथक् २ क्रमशो भावयित्वा रसतुल्य मरिचचूर्ण (१क०), शुद्धटङ्कण रसार्द्धञ्च (६मा०) दत्वा सम्यक् दृढ विमर्द्य कलायसदृशी वटिका कृत्वा सशोष्य च काचपात्रे स्थापयेत् । अस्य रसस्यैकैका वटी प्रत्यहं सेविता कास, क्षय, श्वास, वातश्लेष्मभवा रुज, हन्ति । एष प्रयोगो ज्वरे, अतीसारे, चातुर्थिकज्वरे, ग्रहण्याम विशेषेण हितकर, अस्य सेवनसमये दधि, तक्रञ्च अवश्य देयमिति, इम प्रयोग नागार्जुनो मुनि प्राह ॥ १२०-१२५ ॥

अन्योऽग्निकुमार —

रसं गन्धं विषं व्योषं टङ्कण लौहभस्मकम् ।

अजमोदाऽहिफेनञ्च सर्वतुल्यं मृतं भ्रकम् ॥ १२६ ॥
चित्रकस्य कषायेण मर्दयेद् याममात्रकम् ।
मरिचाभां वटीं खादेदजीर्णं ग्रहणीं तथा ।
नाशयेन्नात्र सन्देहो गुह्यमेतच्चिकित्सितम् ॥ १२७ ॥

अथ प्रकारान्तरेण अग्निकुमाररसनिर्माणमाह रसमित्यादि—शुद्धपारद (१तो०), शुद्धगन्धक (१ तो०), शुद्धवत्सनाभचूर्ण (१ तो०), शुण्ठीचूर्ण (१ तो०), मरिच-चूर्ण (१ तो०), पिप्पलीचूर्ण (१ तो०), शुद्धटङ्कण (१ तो०), लौहभस्म (१ तो०), अजमोदाचूर्ण (१ तो०), शुद्धाहिफेन (१ तो०), सर्वतुल्य ताम्रभस्म (१० तो०), पूर्वं पारदगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य चित्रकक्वाथेन सम्यगा प्लाव्य यामैकं विमर्द्य मरिचप्रमाणा वटिका कृत्वा काचपात्रे स्थापयेत्। अस्य रसस्य प्रत्यहमेकैका वटी सेविता ग्रहणीं, अजीर्णञ्च विनिहन्ति ॥ १२६-१२७ ॥

नृपतिवल्लभो रसः—

जातीफललवङ्गाब्द-त्वगेलाटङ्करामठम् ।
जीरकं तेजपत्रञ्च यमानीविश्वसैन्धवाः ॥ १२८ ॥
लौहमभ्रं रसो गन्धस्ताम्रं प्रत्येकशः पलम् ।
मरिचं द्विपलं दत्त्वा छागीक्षीरेण पेषयेत् ॥ १२९ ॥
धात्रीरसेन वा पेष्य वटिकाः कुरु यत्नतः ।
श्रीमद्गहननाथेन विचिन्त्य परिनिर्मितः ॥ १३० ॥
सूर्यवत् तेजसा चायं रसो नृपतिवल्लभः ।
अष्टादशवटीं खादेत् पवित्रः सूर्यदर्शकः ॥ १३१ ॥
हन्ति मन्दानलं सर्वमामदोषं विसूचिकाम् ।
प्लीहगुल्मोदराष्ठीला-यकृत्पाण्डुत्वकामलाम् ॥ १३२ ॥
एवानेव गदान् हन्ति चण्डांशुरिव पापहा ।
बलवर्णकरो हृद्य आयुष्यो वीर्यवर्द्धनः ॥ १३३ ॥
परं वाजीकरः श्रेष्ठः पटुदो मन्त्रसिद्धिदः ।
अरोगी दीर्घजीवी स्याद्रोगी रोगाद्विमुच्यते ॥ १३४ ॥
रसस्यास्य प्रसादेन बुद्धिमान् जायते नरः ।
बदरास्थिप्रमाणेन वटिकां कारयेत् भिषक् ॥ १३५ ॥

अथ नृपतिवल्लभरसनिर्माणमाह जातीत्यादि—जातीफलचूर्ण (१प०), लवङ्ग-चूर्ण (१प०), अब्द = नागरमुस्तकचूर्ण (१प०), त्वक् = दारुसिताचूर्ण (१प०), बृहदेलाचूर्ण (१प०), शुद्धटङ्कणं (१प०), रामठ = शुद्धहिङ्गुचूर्ण (१प०), जीरक-चूर्ण (१प०), तेजपत्रचूर्ण (१प०), यमानीचूर्ण (१प०), शुण्ठीचूर्ण (१प०), सैन्धवलवण (१प०), लौहभस्म (१प०), अभ्रकभस्म (१प०), शुद्धपारद (१प०), शुद्धगन्धक (१प०), ताम्रभस्म (१प०), मरिचचूर्ण (२प०), अन्यत्र "मरिचं द्विपलम्" इत्यत्र "मरिच त्रिपलम्" इत्यपि पाठ । पूर्व रसगन्धकयो कज्जलीं कृत्वा सर्वद्रव्याणि सम्मेल्य सूक्ष्म पिष्ट्वा च अजाक्षीरेण धात्रीरसेन वा सम्यगाप्लाव्य दृढ विमर्द्य च बदरास्थिप्रमाणा वटिका कृत्वा सशोष्य च काचपात्रे स्थापयेत् । श्रीमद्ग्रहननाथेन लोकोपकार विचिन्त्य सूर्यसमानतेजसा युक्त (रोगनिवर्त्तकप्रभावसम्पन्न) अय नृपतिवल्लभो रसो निर्मित । अस्य रसस्य प्रत्यहमेकैका वटीं भक्षयन् अष्टादश वटीभक्षणेन भयङ्कररोगाक्रान्तो जनो रोगमुक्तो भूत्वा सानन्दं सूर्यदर्शन करोति । अय रसो मन्दानल, सर्वमामदोष, विसूचिका, प्लीहवृद्धिं, गुल्मं, उदर-रोग, अष्ठीला = अष्ठीलावृद्धि (इन्लार्जमेण्ट आफ दी प्रोस्टेट), यकृद्वृद्धि (इन्लार्जमेण्ट आफ दी लीवर) पाण्डु, कामला, सर्वानेव गदान् सूर्य इव हन्ति (यथा सूर्य पापहा तथैवायं रसो रोगहेत्यर्थ), तथाय बलवर्णकरो हृदयरोगहर्त्ता, आयुर्वर्द्धको वीर्य्यवर्द्धक, पर वाजीकर, षड्दश्चातुर्यप्रद, मन्त्रसिद्धिकरश्च वर्तते । अस्य रसस्य—सेवनप्रभावेण स्वस्थपुरुषो दीर्घजीवी स्याद्, रोगी च रोगाद्विमुच्यते, नरश्च बुद्धिमान भवति ॥ १२८–१३५ ॥

राजवल्लभो रस —

जातीफललवङ्गाब्द-त्वगेलाटङ्करामठम् ।
जीरकं तेजपत्रञ्च यमानी विश्वसैन्धवम् ॥ १३६ ॥
लौहमभ्रं सताम्रञ्च रसगन्धकमेव च ।
मरिच त्रिवृता रूप्यं प्रत्येकं द्विपलोन्मितम् ॥ १३७ ॥
धात्रीरसे वटीं कुर्यात् द्विगुञ्जाफलमानत ।
हन्ति शूलं तथा गुल्ममामवातं सुदारुणम् ॥ १३८ ॥
हृच्छूलं पार्श्वशूलञ्च चक्षुः शूलं हलीमकम् ।

शिरश्शूल कटीशूलमानाहञ्चाष्टशूलकम् ॥ १३९ ॥
क्रिमिकुष्ठानि दद्रूणि वातरक्त भगन्दरम् ।
उपदशमतीसार ग्रहण्यर्श.प्रवाहिकाम् ।
राजवल्लभनामाऽय महेशेन प्रकाशित ॥ १४० ॥

अथ राजवल्लभरसनिर्माणमाह जातीत्यादि—जातीफलचूर्णं (१प०), लवङ्गचूर्णं (१प०), अब्द —शुद्धमुस्तकचूर्णं (१प०), त्वक्=दारुसिताचूर्णं ( दालचीना-चूर्ण२प०) बृहदेलाचूर्णं (१प०), शुद्धटङ्कणचूर्णं (१प०), शुद्धहिङ्गुचूर्णं (१प०) जीरकचूर्णं (१प०), तेजपत्रचूर्णं (१प०), यमानीचूर्णं (१प०)शुण्ठीचूर्णं (१प०), सैन्धवलवण(१प०), लौहभस्म (१प०),अभ्रकभस्म (१प०), ताम्रभस्म (१प०), शुद्धपारद (१प०), शुद्धगन्धक (१प०) मरिचचूर्णं (१प०), त्रिवृता=श्वेत-त्रिवृच्चूर्णं (१प०), रजतभस्म (१प०) पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेष-द्रव्याणि सम्मेल्य वार्त्तारसेनाप्लाव्य विमर्द्य च द्विगुञ्जमिता वटिका कृत्वा गोप्य च काचपात्रे स्थापयेत् । श्रीमहादेवेन प्रकाशितोऽय राजवल्लभनामको रसो द्विगुञ्जा फलमित सेवित शूल, कटीशूल आनाह, अष्टविध शूल, क्रिमिरोगं, कुष्ठरोग, सर्वं दद्रूणि, वातरक्त, भगन्दर उपदश, अतीसार ग्रहणी अर्श , प्रवाहिकाम विनिहन्ति ॥ १३९-१४० ॥

बृहन्नृपवल्लभ —

रसगन्धकलोहाभ्र नाग चित्र त्रिवृत्समम् ।
टङ्क जातीफल हिंगु त्वगेलाब्दलवङ्गकम् ॥ १४१ ॥
तेजपत्रमजाजी च यमानी विश्वसैन्धवम् ।
प्रत्येक तोलक चूर्णं मरीचतारयोस्तथा ॥ १४२ ॥
निरुत्थक मृत हेम तथा द्वादशरक्तिकम् ।
आर्द्रकस्य रसेनैव धात्र्याश्च स्वरसेन च ॥ १४३ ॥
भावयित्वा प्रदातव्यो माषद्वयप्रमाणतः ।
भक्षयेत् प्रातरुत्थाय पथ्यं भक्षेत् यथेप्सितम् ॥ १४४ ॥
अग्निमान्द्यमजीर्णञ्च दुर्नामग्रहणीं जयेत् ।
आमाजीर्णप्रशमन सर्वरोगनिसूदन. ।
नाशयेदौदरान् रोगान् विष्णुचक्रमिवासुरान् ॥ १४५ ॥

अथ बृहन्नृपवल्लभरसनिर्माणमाह रमेत्यादि—शुद्धपारदं, शुद्धगन्धकं, लौहभस्म, अभ्रकभस्म, नागभस्म, चित्रकचूर्णं, श्वेतत्रिवृच्चूर्णं, शुद्धटङ्कणं, जातीफलचूर्णं, शुद्धहिङ्गुचूर्णं, त्वक् = दारुसिताचूर्णं, बृहदेलाचूर्णं, अब्द –शुद्धमुस्तकचूर्णं, लवङ्गचूर्णं, तेजपत्रचूर्णं, अजाजी = जीरकचूर्णं, यमानीचूर्णं, शुण्ठीचूर्णं, सैन्धवलवण, मरिचचूर्णं, रजतभस्म । एतत् प्रत्येक पृथक् १ तोलकैक समादाय पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेत्य निरूत्थ स्वर्णभस्म द्वादशरक्तिकं दत्वा खल्व कुर्यात् । ततश्च आर्द्रकस्वरसेन समाप्लाव्य मर्दयेत् । तथैव आमलकीस्वरसेन समाप्लाव्य मर्दयेत् । ततश्च सशोष्य काचपात्रे स्थापयेत् । अय रसो यथारोगं यथा वयश्च रक्तिद्वयादारभ्य माषद्वयपर्यन्त सेवितोऽग्निमान्द्य, अजीर्णं, दुर्नामरोगं अर्श , ग्रहणी, आमं, अजीर्णं, उदररोगान्, सर्वरोगाश्च विष्णुचक्र सुदर्शनमसुरानिव विनिहन्ति ॥ १४१–१४५ ॥

महाराजनृपतिवल्लभो रस —

कर्षत्रयं मृत कान्त मृताभ्रं मृतताम्रकम् ।
मृतं तारं माक्षिकञ्च कर्षं कर्ष प्रदापयेत् ॥ १४६ ॥
मृतं स्वर्णं मृतं तार टङ्कणं शृङ्गमेव च ।
वशिर दन्तिमूलञ्च मरिचं तेजपत्रकम् ॥ १४७ ॥
यमानीं बालकं मुस्तं शुण्ठकञ्च सधान्यकम् ।
सिन्धूद्भवं सकर्पूरं विडङ्गं चित्रकं विषम् ॥ १४८ ॥
पारदं गन्धकञ्चैव तोलमानं प्रदापयेत् ।
तोलद्वय त्रिवृच्चूर्णं लवङ्ग तच्चतुर्गुणम् ॥ १४९ ॥
जातीकोषफलञ्चैव तत्समं स्याद्वराङ्गकम् ।
सर्वेषामर्द्धभागन्तु विडक तत्र मिश्रयेत् ॥ १५० ॥
सर्वमेकीकृतं यद्यत् त्रुटिचूर्णञ्च तत्समम् ।
भावना च प्रदातव्या छागीदुग्धेन सप्तधा ॥ १५१ ॥
मातुलुङ्गरसैः पश्चात् भावयेत् सप्तवारकम् ।
छायाशुष्कां वटीं कृत्वा भक्षयेद्दशरक्तिकाम् ॥ १५२ ॥
मन्दानलं संग्रहणीं प्रवृद्धामामानुबन्धां क्रिमिपाण्डुरोगम् ।
छर्द्यम्लपित्तं हृदयामयञ्च गुल्मोदरानाहभगन्दरञ्च ॥ १५३ ॥

ग्रन्थिः यमानिका चोचं ताम्रं नागरटङ्कणम् ॥ १५६ ॥
सैन्धवं बालक मुस्तं धन्याक गन्धकं रसम् ।
शृङ्गी कर्पूरकश्चैव प्रत्येक माषकोन्मितम् ॥ १५७ ॥
माषद्वयं रामठं स्यात् मरिचानां चतुष्टयम् ।
जातीकोषं लवङ्गञ्च पत्रञ्च तोलकोन्मितम् ॥ १५८ ॥
नाभिशङ्खं विडङ्गञ्च शाण माषद्वयं विषम् ।
कर्षषट्कं सत्रिमाषं सूक्ष्मैलानां ततः क्षिपेत् ॥ १५९ ॥
विडं कर्षद्वयं सर्वं छागीक्षीरेण पेषयेत् ।
चतुर्गुञ्जमितं खादेत् सानाहग्रहणीं जयेत् ॥ १६० ॥
शम्भुना निर्मितो ह्येष पूर्ववत् गुणकारकः ।
नाम्ना महाराजपूर्वो नृपवल्लभ उच्यते ॥ १६१ ॥

( इति ग्रहणीरोग-चिकित्सा )

अथान्यमहाराजनृपतिवल्लभरसनिर्माणमाह माक्षिकमित्यादि—सुवर्णमाक्षिकभस्म (१मा०), लौहभस्म (१मा०), वङ्गभस्म (१मा०), रजतभस्म (१मा०), हाटकं=सुवर्णभस्म (१मा०), ग्रन्थि =पिप्पलीमूलचूर्ण (१मा०), यमानीचूर्ण (१मा०), चोच = वराङ्गचूर्ण ( तजचूर्ण १मा०), ताम्रभस्म (१मा०), नागर =शुण्ठीचूर्ण (१मा०), शुद्धटङ्कण (१मा०), सैन्धवलवणं (१मा०), बालकं=सुगन्धवालाचूर्ण (१मा०), शुद्धमुस्तकचूर्ण (१मा०), धान्यकचूर्ण (१मा०), शुद्धगन्धक (१मा०), शुद्धपारद (१मा०), शृङ्गी=कर्कटशृङ्गीचूर्णं (१मा०), कर्पूर (१मा०), शुद्धहिङ्गुकं (२मा०), मरिचचूर्णं (४मा-), जातीकोषचूर्ण ( जावित्रीचूर्ण १तो०), लवङ्गचूर्ण (१तो०) तेजपत्रचूर्णं (१तो०), नाभिशङ्ख=शङ्खनाभिभस्म शाणमित (४मा०), विडङ्गचूर्णं (१शा०), शुद्धवत्सनाभचूर्णं माषद्वय, सूक्ष्मैलाचूर्णं सत्रिमाष कर्षषट्क (६तो०३मा०) विडलवण द्विकर्ष (२तो०), पूर्वं रसगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य विमर्द्य च अजादुग्धेनाप्लाव्य दृढ मर्दयेत् । ततश्च चतुर्गुञ्जमित-वटिकां कृत्वा काचपात्रे स्थापयेत् । अयं रसो यथाविहितानुपानैस्सह चतुर्गुञ्जमित प्रत्यह सेवित सानाहग्रहणीविकार विनिहन्ति । श्रीशम्भुना निर्मितो ह्येषो रसो नाम्ना महाराजशब्द पूर्वो यस्य स एवम्भूतो नृपवल्लभ ( अर्थात् महाराजनृपवल्लभ ) वर्तते, तथा पूर्वोक्तमहाराजनृपतिवल्लभवद् गुणकारकश्च वर्तते ॥ १५६-१६१ ॥

**चूर्णितं सितया माषं खादेत् तच्चार्शसां हितम् ।**
**रसस्तीक्ष्णमुखो नाम चासाध्यमपि साधयेत् ॥ ४ ॥**

अथ तीक्ष्णमुखरसनिर्माणमाह मृतसूतेत्यादि—मृतसूतो रससिन्दूर (१तो०), अर्क =ताम्रभस्म (१तो०), सुवर्णभस्म (१तो०), अभ्रकभस्म (१तो०), तीक्ष्ण-लौहभस्म (१तो०), मुण्डलौहभस्म (१तो०), शुद्धगन्धक (१तो०), मण्डूरभस्म (१तो०), ताप्य स्वर्णमाक्षिकभस्म (१तो०) एतत् सर्वं द्रव्य खल्वे निक्षिप्य विचूर्ण्य च कन्याद्रवैः =घृतकुमारीस्वरसैरालोड्य दिनैकं विमर्द्य अन्धमूषायाञ्च रुद्ध्वा दृढाग्निना पुटे पचेत् । रसोऽयं रक्तिमितो मासपर्यन्तं सितया सह प्रत्यहं सेवितो ऽर्शसां हितकरः । अयं तीक्ष्णमुखो रसोऽसाध्यमप्यर्शो निहन्ति ॥ ३-४ ॥

अर्शः कुठारो रसः—

**शुद्धसूतं द्विधा गन्धं मृतलौहञ्च ताम्रकम् ।**
**प्रत्येकं द्विपलं दन्ती त्र्यूषणं शूरणं तथा ॥ ५ ॥**
**शुभाटङ्कयवक्षार-सैन्धवं पलपञ्चकम् ।**
**पलाष्टकं स्नुहीक्षीरं द्वात्रिंशच्च गवां जलैः ॥ ६ ॥**
**आपिण्डितं पचेदग्नौ खादेत् माषद्वयं ततः ।**
**रसश्चार्शः कुठारोऽयं सर्वरोगकुलान्तकः ॥ ७ ॥**

अथ अर्शः कुठाररसनिर्माणमाह शुद्धसूतेत्यादि—शुद्धपारद (१तो०), शुद्धग-न्धक (२तो०), लौहभस्म द्विपल, ताम्रक-ताम्रभस्म द्विपल, दन्तीमूलचूर्ण पञ्चपल, त्र्यूषण प्रत्येक पञ्चपल, शुद्धशूरणकन्दचूर्ण पञ्चपल शुभा =वंशलोचनचूर्ण वस्त्रपूत पञ्चपल शुद्धटङ्कण पञ्चपल, यवक्षार पञ्चपलमित, सैन्धवलवण पञ्चपलमित, शुद्ध स्नुहीक्षीरमष्टपलमित, गवां जल-गोमूत्र द्वात्रिंशत्पलमित, पूर्वं रसगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि कज्जलिसम्मिहितानि मृण्मये भाण्डे निक्षिप्य पिण्डीभवनपर्यन्त वह्नौ पचेत्, यावद्घन स्यात्तावदवतार्य माषद्वयमितवटिका कृत्वा काचपात्रे स्थाप-येत् । अयमर्शः कुठारो रसो माषैकादारभ्य यथारोगं यथावयश्च माषद्वयमितं सेवि-तोऽर्शसां हितकरस्तथा यथानुपानं सर्वरोगकुलान्तकश्च ॥ ५-७ ॥

चक्राख्यो रसः—

**मृतसूताभ्रवैक्रान्तं ताम्रं कांस्यं समं समम् ।**
**सर्वतुल्येन गन्धेन दिनं भल्लातकैर्द्रवैः ॥ ८ ॥**

मर्दयेत् यत्नतः पश्चात् वटीं कुर्य्यात् द्विगुञ्जिकाम् ।
भक्षणाद् गुदजान् हन्ति द्वन्द्वजान् सर्वजानपि ॥ ९ ॥

अथ चक्राख्यरसनिर्माणमाह मृतसूतेत्यादि—मृतसूतो रससिन्दूर (१तो०), अभ्रकभस्म (१तो०), वैक्रान्तभस्म (१तो०), ताम्रभस्म (१तो०), कांस्यभ (१तो०), सर्वतुल्यं गन्धकं (५तो०), सर्वं खल्वे निक्षिप्य मर्दनेन कज्जलीं कृ एकदिनं भल्लातद्रवेण सम्यगाप्लाव्य विमर्द्य च द्विरक्तिमिता वटीश्चरेत् । अ रसस्य प्रत्यहमेकैका वटी सेविता द्वन्द्वजान्, त्रिदोषजाश्च गुदाङ्कुरान्हन्ति ॥८—

नित्योदितो रसः—

मृतसूताभ्रलौहार्क-विषं गन्धं समं समम् ।
सर्वतुल्यन्तु भल्लात-फलमेकत्र चूर्णयेत् ॥ १० ॥
द्रवैः शूरणकन्दोत्थैः खल्ले मर्द्यं दिनत्रयम् ।
लिहेदाज्यैर्माषमात्रं रसश्चार्शांसि नाशयेत् ।
नित्योदितो रसो नाम गुदोद्भवकुलान्तकः ॥ ११ ॥

अथ नित्योदितरसनिर्माणमाह मृतसूतेत्यादि—मृतसूतो रससिन्दूर, अभ्र भ्रकभस्म, लौह-लौहभस्म, अर्कस्ताम्रभस्म, विषं-शुद्धवत्सनाभचूर्णं, गन्धं-शुद्ध न्धक, एतत्प्रत्येकं समं सममादाय सर्वतुल्यानि शुद्धभल्लातकफलान्यादाय तेषां चू त्र कृत्वा सर्वं सम्मेल्य सूक्ष्म कज्जलिकासम विमर्द्य शूरणकन्दस्वरसे सम्यगाप्ला दिनत्रयं सम्मर्दयेत् । ततश्च माषमात्रं ( उड़दसम रक्तिमितमित्यर्थः ) प्रत्यहं गो तेन सह सेवितोऽयं रसोऽर्शांसि नाशयेत् । अयं नित्योदितो रसोऽर्शसां कुल नाशकः ॥ १०-११ ॥

चन्द्रप्रभागुडिका—

क्रिमिरिपुदहनव्योष-त्रिफलासुरदारुचव्यभूनिम्बाः ।
मागधीमूलं मुस्तं सशटी वचा धातुमाक्षिकञ्चैव ।
लवणक्षारनिशायुग-कुस्तुम्बुरुगजकणाऽतिविषाः ॥ १२ ॥
कर्षांशकान्येव समानि कुर्य्यात् पलाष्टकं चाश्मजतोर्विदध्यात् ।
निष्पत्रशुद्धस्य पुरस्य धीमान् पलद्वयं लोहरजस्तथैव ॥ १३ ॥
सिताचतुष्कं पलमत्र वांश्या निकुम्भकुम्भीत्रिसुगन्धियुक्तम् ।
चन्द्रप्रभेयं गुडिका विधेया अर्शांसि निर्णाशयते पढेव ॥ १४ ॥

भगन्दरं कामलपाण्डुरोगं विनष्टवह्नेः कुरुते च दीप्तिम् ।
हन्त्यामयान् पित्तकफानिलोत्थान् नाडीगते मर्मगते व्रणे च ॥ १५ ॥
ग्रन्थ्यर्बुदे विद्रधिराजयक्ष्म-मेहे भगाख्ये प्रदरे च योज्या ।
शुक्रक्षये चाश्मरिमूत्रकृच्छ्रे मूत्रप्रवाहेऽप्युदरामये च ॥ १६ ॥
तक्रानुपानं त्वथ मस्तुपानमाजो रसो जाङ्गलजो रसो वा ।
पयोऽथवा शीतजलानुपानं वलेन नागस्तुरगो जवेन ॥ १७ ॥
दृष्ट्या सुपर्णः श्रवणे वराहः कान्त्या रतीशो धिषणश्च बुद्ध्या ।
न पानभोज्ये परिहार्य्यमस्ति न शीतवातातपमैथुनेषु ।
शम्भुं समभ्यर्च्य कृतप्रणामैः प्राप्ता गुडी चन्द्रमसः प्रसादात् ॥१८॥
शुक्रदोषान् निहन्त्याशु प्रमेहानपि दारुणान् ।
वलीपलितनिर्मुक्तो वृद्धोऽपि तरुणायते ॥ १९ ॥

अथ चन्द्रप्रभागुडिकानिर्माणमाह क्रिमीत्यादि—क्रिमिरिपुर्विडङ्गचूर्ण (१क०), दहनश्चित्रकचूर्ण (१क०), व्योष त्रिकटुचूर्ण प्रत्येकं कर्षमित, त्रिफलाचूर्ण प्रत्येकं कर्षमित, सुरदारु-देवदारूचूर्ण (१क०), चव्यचूर्ण (१क०), भूनिम्ब -किरातकचूर्ण (१क०), मागधीमूलं-पिप्पलीमूलचूर्ण (१क०), मुस्तकचूर्ण (१क०), शटीचूर्ण (१क०), वचाचूर्ण (१क०), धातुमाक्षिक-स्वर्णमाक्षिकभस्म (१क०), लवण सैन्धव (१कर्ष ), यवक्षार (१क०), निशायुग हरिद्राचूर्ण (१क०) दारुहरिद्राचूर्णञ्च (१क०), कुस्तुम्बुरुर्धान्याकचूर्ण (१क०), गजकणा-गजपिप्पलीचूर्ण (१क०), अतिविषाचूर्ण (१क०), अश्मजतो शिलाजतुन शुद्धस्याष्टपल, पत्रादिरहितस्य शुद्धस्य पुरस्य गुग्गुलो पलद्वय, लौहभस्मनश्च पलद्वय, सिता चतुष्पलमिता, वांश्या वशरोचना-या वस्त्रसारितमेकपल, निकुम्भ -दन्तीमूलचूर्ण (१प०), कुम्भी त्रिवृच्चूर्ण पल-मित, त्रिसुगन्धि = दारुसिताचूर्ण, सूक्ष्मैलाचूर्ण, तेजपत्रचूर्ण प्रत्येक पृथक २ पल-मितं, सर्वं खल्वे निक्षिप्य सञ्चूर्ण्य च द्विगुञ्जमिता वटीश्चरेत् सशोष्य च काचपात्रे स्थापयेत् । अत्र—

वृद्धवैद्योपदेशेन पलार्द्धं रसगन्धकम् । केवल मूर्च्छित वापि पल वा दापयेद्रसम् ॥
अत्रकञ्च क्षिपेत् किञ्चित् पलमान भिषग्वर । सम्मर्द्य मधुसर्पिभ्यामादौ रक्तिचतुष्टयम्॥
भक्ष्य वृद्ध्या यथायुक्ति यावन्माषचतुष्टयम् । त्रिवृद्दन्ती त्रिजातानां कर्षमान पृथक्२॥

अर्थादत्र चन्द्रप्रभायां पारदगन्धकयो समभागयो पलमिता कज्जलीमथवा के-

त्रिकटुदन्तिकुष्टैकं षड्भागं लाङ्गलस्य च ॥ २१ ॥
क्षारसैन्धवटङ्कणां प्रत्येकं भागपञ्चकम् ।
गोमूत्रस्य च द्वात्रिंशत् स्नुहीक्षीरं तथैव च ।
यावच्च पिण्डितं सर्वं तावन्मृद्वग्निना पचेत् ॥ २२ ॥
माषद्वयं ततः खादेत् दिवास्वप्नादि वर्जयेत् ।
रसश्चञ्चत्कुठारोऽयमर्शसां कुलनाशनः ॥ २३ ॥

अथ चञ्चत्कुठाररसनिर्माणमाह रसेत्यादि रस –शुद्धपारद (२तो०),शुद्धगन्धकः (२ तो० ) लौहभस्म ( २ तो० ), त्रिकटु =शुण्ठीचूर्ण ( १ तो० ), मरिचचूर्ण ( १ तो० ) पिप्पलीचूर्ण ( १ तो० ), दन्तीचूर्ण ( १ तो० ) मिष्टकुष्टचूर्ण ( १ तो० ) लाङ्गलस्य=लाङ्गलीचूर्णस्य ( ६ तो० ), यवक्षार ( ५ तो० ) सैन्धवलवण ( ५ तो० ), शुद्धटङ्कण ( ५ तो० ), गोमूत्र ( ३२ तो० ) स्नुही-क्षार शुद्ध ( ३२ तो० ), पूर्वं रसगन्धकयो कज्जलीं कृत्वा मृण्मयभाण्डे सर्व-द्रव्याणि निक्षिप्य पिण्डीभवनपर्यन्त मन्दाग्नौ पचेत् । लौहशलाकया च परिचालन कर्तव्यम् । यावद् घन स्यात्तावदवतार्य माषद्वयमिता वटीश्चरेत् । ( माषद्वयमिति माषशब्दस्य उडदद्वयमर्थाद्द्विरक्तिमिता वटी कुर्यात् । अन्यथा षोडशरक्तिमिता-धुनिकमाषद्वयमात्राया सर्वथाऽनुपयोगात् ) अयं रसो द्विरक्तिमित प्रत्यह सेवि-ताऽर्शसा कुलस्य नाशकस्तथा दिवास्वप्नादिकञ्च वर्जयेत् ॥ २१-२३ ॥

शिलागन्धकवटक —

शिलागन्धकयोश्चूर्णं पृथग्भृङ्गरसाप्लुतम् ।
सप्ताहं भावयेत् सर्पिर्मधुभ्याञ्च विमर्दयेत् ॥ २४ ॥
अर्शसश्चानुलोम्यार्थं हताग्निबलवर्द्धनम् ।
रक्तिकाद्वितयं खादेत् कुष्ठादिरहितो नरः ॥ २५ ॥

अथ शिलागन्धकवटकनिर्माणमाह शिलेत्यादि—शिला–शुद्धमन शिला शुद्ध-गन्धकं, द्वय सम सममादाय खल्वे सञ्चूर्ण्य भृङ्गराजस्वरसेन सम्यगाप्लाव्य सप्ताहपर्यन्त भावयित्वा सशोष्य च विषममात्राकल्पितघृतमधुभ्या सह दृढ विमर्द्य द्विगुञ्जमिता वटीश्चरेत् । अस्य रसस्य प्रत्यहमेकैका वटी कुष्ठादिरहितो जनोऽर्शसा नाशार्थं भक्षयेत् ॥ २४-२५ ॥

सौवर्चलकणाशुण्ठी-युतः शूलं विनाशयेत् ।
अर्शो हन्ति च तक्रेण पिप्पल्या राजयक्ष्मकम् ॥ ४१ ॥
वातरोग निहन्त्याशु शुण्ठीसौवर्चलान्वितः ।
शर्कराधान्ययोगेन पित्तरोगं निहन्त्ययम् ॥ ४२ ॥
पिप्पलीक्षौद्रयोगेन श्लेष्मरोगञ्च तत्क्षणात् ।
अस्मान् परतरो नास्ति धन्वन्तरिमतो रसः ॥ ४३ ॥

अथ पाशुपतरसनिर्माणमाह शुद्धसूतमित्यादि—शुद्धपारद (१तो०), शुद्धगन्ध (२तो०), तीक्ष्णलोहभस्म (३तो०), त्रिभिस्तुल्यं विषं शुद्धवत्सनाभचूर्णं (६तो०), पूर्वं पारदगन्धकयो कज्जलीं कृत्वा लोहभस्म विषञ्च सम्मेल्य चित्रकक्वाथेनाप्लाव्य विमर्दयेत् । तदनु शुद्धधुत्तूरबीजभस्म द्वात्रिंशद्भागमितं (३२तो०), कटुत्रयं = शुण्ठीचूर्ण (३तो०), मरिचचूर्ण (३तो० ।पिप्पलीचूर्ण (३तो०), लवङ्गचूर्ण (३तो०), एलाबीजचूर्ण (३तो०), जातीफलचूर्ण (६मा०), कोष=जातीफलत्वचश्चूर्ण (६मा०), पञ्चलवण प्रत्येकम् तोलक (८मा०), स्नुहीक्षार (स्नुहीभस्मेति केचित् ) ( ६मा० ), अर्कक्षार ( भस्मेति के० ) (८मा०), एरण्डभस्म क्षारो वा (८मा०), तिन्तिडीक्षार (८मा०), अपामार्गक्षार (६मा०), अश्वत्थक्षारो भस्म वा (६मा०), हरीतकीचूर्ण सूततुल्यं (१तो०), यवक्षार (१तो०), स्वर्जिक्षारः (१तो०), शुद्धहिङ्गुचूर्ण (१तो०), जीरकचूर्ण (१तो०) शुद्धटङ्कण (१तो०), (केचित्तु स्नुह्यर्काश्वत्थानां क्षार, पुन पञ्चलवणञ्च टङ्कणान्तञ्च प्रत्येकं सूततुल्यमिच्छन्ति तच्चिन्त्यम ) एतत्सर्वं विभावितसूतादिषु सम्मेल्य निम्बुरसेन केनचिदम्लेन वा सम्यगाप्लाव्य विमर्द्य गुञ्जासमानवटीः कृत्वा काचपात्रे स्थापयेत् । अयं पाशुपतनामको रस सर्व प्रत्ययकारकस्तथा भाजनान्ते प्रयोक्तव्य । अयं रसो दीपन ,पाचन , हृद्यश्च वर्तते, विसूचिकाञ्च हन्ति । अस्य रसस्य प्रत्यहं प्रभाते एकैका वटी तालमूलीस्वरसेन क्वाथेन वा मह उदरव्याधिनाशार्थ दद्यात् । तथायं मोचरसेनातिसारं, सैन्धवोपेततक्रानुपानेन ग्रहणीं, सौवर्चललवणपिप्पलीचूर्णाभ्यां सह विविध शूलं, तक्रानुपानेन सहार्शं , पिप्पलीचूर्णमधुभ्याञ्च सह राजयक्ष्माणं, शुण्ठीचूर्णसौवर्चललवणाभ्यां वातरोगं, धान्यचूर्णेन (धनियाचूर्ण) शर्करया च सह पित्तरोगं, मधुना पिप्पलीचूर्णेन च सह कफजरोगं निहन्ति ।किम्बहुना धन्यन्तर्यनुमोदितोऽस्मादन्यो नास्ति श्रेष्ठ कोऽपि रस ॥ ३४-४३ ॥

बृहच्छङ्खवटी—

दग्धशङ्खस्य चूर्णं स्यात् तथा लवणपञ्चकम् ।
तिन्तिडीक्षारकञ्चैव कटुकत्रयमेव च ॥ ४४ ॥
तथैव हिंगुकं ग्राह्यं विषं पारदगन्धकम् ।
अपामार्गस्य वह्नेश्च क्वाथैर्लिम्पाकजैर्द्रवैः ॥ ४५ ॥
भावयेत् सर्वचूर्णं तदम्लवर्गैर्विशेषतः ।
यावत् तदम्लतां याति गुडिकाऽमृतरूपिणी ॥ ४६ ॥
सद्यो वह्निकरी चैव भस्मकञ्च नियच्छति ।
भुक्त्वाऽऽकण्ठन्तु तस्यान्ते खादेच्च गुडिकामिमाम् ॥ ४७ ॥
तत्क्षणाज्जारयत्याशु पुनर्भोजनमिच्छति ।
हन्ति वातं तथा पित्त कुष्ठानि विषमज्वरम् ॥ ४८ ॥
गुल्माख्यं पाण्डुरोगञ्च निद्राऽऽलस्यमरोचकम् ।
शूलञ्च परिणामोत्थं प्रमेहञ्च प्रवाहिकाम् ।
रक्तस्रावञ्च शोथञ्च दुर्नामानि विशेषतः ॥ ४९ ॥

अथ बृहच्छङ्खवटीनिर्माणमाह दग्धेत्यादि—दग्धशङ्खस्य चूर्णं = शङ्खभस्म १ भागमितं, लवणपञ्चकं पृथगेकैकभागमितं, तिन्तिडीक्षारकमिति चिञ्चानिर्मितक्षारं (१भाग मितं), कटुकत्रयं पृथगेकैकभागमितं, शुद्धहिङ्गुकं (१भागमितं), शुद्धविषं (१भागमितं), शुद्धगन्धकं (१भाग०) शुद्धपारदं (१भाग०), पूर्वं पारदगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य, अपामार्गक्वाथेन, वन्हेश्चित्रकस्य क्वाथेन लिम्पाकजैरिति जम्बीरीनिम्बुस्वरसैः, क्रमशः पृथक् ७ भावयित्वा अम्लवर्गरसैस्तावद्वारं भावयेत्, यावच्चूर्णमम्लतां व्रजेत् । ततश्च रक्तिद्वयमितां वटीं कुर्यात् । अमृतरूपिणीयं वटी सद्यः पाचकाग्निं प्रदीपयति, भस्मकरोगं च हन्ति, नरं आकण्ठपर्यन्तं भोजनं कृत्वा तदुपरि वटीमिमां भुक्त्वा पूर्वान्नपाचनात् पुनर्भोजनं कर्तुमभिलषति । तथेयं वटी यथाव्याध्यनुपानैस्सह सेविता वातविकारं, पित्तविकारं, कुष्ठानि, विषमज्वरं, गुल्मं, पाण्डुं, अतिनिद्रां, आलस्यं, आलस्यलक्षणं यथा सुश्रुते—सुखस्पर्शप्रसङ्गित्वं दुःखद्वेषणलोलता। शक्तस्य चाप्यनुत्साहः कर्मस्वालस्यमुच्यते॥" इति

अरोचकं, परिणामोत्थं शूलं, प्रमेहं, प्रवाहिकां, रक्तस्रावं, शोथं दुर्नामानि, सर्वाण्यर्शांसि च विशेषेण निहन्ति । अम्लवर्गो यथा—

जम्बीरं निम्बुकश्चैव त्वम्लवेतसमम्लिका । नारङ्गं दाडिमश्चैव वृक्षाम्लं बीजपूरकम् ॥
चाङ्गेरी चणकाम्लश्च कर्कन्धु करमर्दकः । चुक्रिका चेति सामान्यादम्लवर्गः प्रकीर्तितः ॥
जम्बीरचणकाम्लश्च सर्वत्रैव प्रशस्यते ॥ ४८-४९ ॥

भक्तविपाकवटी—

माक्षिकं रसगन्धौ च हरितालं मनःशिला ।
त्रिवृद्दन्ती वारिवाहं चित्रकश्च महौषधम् ॥ ५० ॥
पिप्पली मरिचं पथ्या यमानी कृष्णजीरकम् ।
रामठं कटुका पाठा सैन्धवं साजमोदकम् ॥ ५१ ॥
जातीफलं यवक्षारं समभागं विचूर्णयेत् ।
आर्द्रकस्य रसेनैव निर्गुण्ड्याः स्वरसेन च ॥ ५२ ॥
सूर्य्यावर्त्तरसेनैव तुलस्याः स्वरसेन च ।
आतपे भावयेद्वैद्य खल्लपात्रे च निर्मले ।
पेषयित्वा वटीं खादेत् गुञ्जाफलसमप्रभाम् ॥ ५३ ॥

भुक्तोत्तरीये बहुभोजनान्ते मुहुर्मुहुर्वाञ्छति भोजनानि ।
आमानुबन्धे च चिराग्निमान्द्ये विड्विग्रहे पित्तकफानुबन्धे ॥५४॥
अर्शःसु शोथोदरकेऽप्यजीर्णे शूलप्रदोषप्रभवे ज्वरे च ।
शस्ता वटी भक्तविपाकसंज्ञा सुखं विपाच्याशु नरस्य कोष्ठम् ॥५५॥

अथ भक्तविपाकवटीनिर्माणमाह माक्षिकमित्यादि—माक्षिक = स्वर्णमाक्षिकभस्म, रस = शुद्धपारद, शुद्धगन्धक, हरितालं शुद्ध, शुद्धा मनःशिला, त्रिवृच्चूर्णं, दन्तीमूलचूर्णं, वारिवाह = शुद्धमुस्तकचूर्णं, चित्रकचूर्णं, महौषध = शुण्ठीचूर्णं, पिप्पलीचूर्णं, मरिचचूर्णं, पथ्या = हरीतकीचूर्णं, यमानीचूर्णं, कृष्णजीरकचूर्णं, रामठ = शुद्धहिङ्गुचूर्णं, कटुकाचूर्णं, पाठाचूर्णं, सैन्धवलवण, अजमोदाचूर्णं, जातीफलचूर्णं, यवक्षार। एतत् प्रत्येकं समभागेन समादाय पारदगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य पिष्ट्वा च आर्द्रकस्वरसेन, निर्गुण्डीपत्रस्वरसेन, सूर्य्यावर्त = सूर्य्यमुखी तस्याः स्वरसेन, तुलसीस्वरसेन च क्रमशः पृथक् ? निदाघे भावयित्वा दृढं विमर्द्य च गुञ्जाफलसमाना वटीश्चरेत्। इमा वटी भोजनोत्तरसमये, बहुभोजनान्ते च भुक्त्वा पुनर्भोजनं कर्तुं शक्नोति । तथैव भक्तविपाकवटी अमानुबन्धे, चिरकालोत्पन्नाग्निमान्द्ये, विड्विग्रहे मलावरोधे, पित्तकफानुबन्धविकारे, सर्वेष्वर्शःसु, शोथे, उदररोगेषु,

अजीर्णे, शूले, रात्रिसमयागतज्वरे च प्रशस्ता, तथा भोजनं सुख विपाच्य मलावरोधं विनैव मलोत्सर्गं प्रवर्तयति ॥ ५०–५५ ॥

पञ्चामृतवटी—

अभ्रकं पारदं ताम्रं गन्धकं मरिचानि च ।
समभागमिदं चूर्णं चाङ्गेरीरसमर्दितम् ॥ ५६ ॥
मर्दिते हि रसे भूयो जयन्तीसिन्धुवारयोः ।
भावनाऽपि च कर्त्तव्या गुञ्जापरिमिता वटी ॥ ५७ ॥
तप्तोदकानुपानेन चतस्रस्तिस्र एव वा ।
वह्निमान्द्ये प्रदातव्या वट्यः पञ्चामृता शुभाः ॥ ५८ ॥

अथ पञ्चामृतवटीनिर्माणमाह अभ्रकमित्यादि—अभ्रकभस्म, शुद्धपारदं, ताम्रभस्म, शुद्धगन्धक, मरिचचूर्णं, एतत्प्रत्येकं समभागेनादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मिश्रय्य चाङ्गेरीरसेन सम्यगाभाव्य विमर्द्य च जयन्तीरसेन, सिन्धुवार = निर्गुण्डीस्तस्या पत्रस्वरसेन च क्रमशो भावयित्वा दृढं विमर्द्य च गुञ्जापरिमिता वटी कृत्वा काचपात्रे स्थापयेत् । अस्य रसस्य यथावयस्तिस्रश्चतस्रो वा वटी तप्तोदकानुपानेन वन्हिमान्द्ये प्रदद्यात् ॥ ५६–५८ ॥

क्रव्यादो रस —

पलं रसस्य द्विपलं बलेः स्याच्छुल्वायसी चार्द्धपलप्रमाणे ।
सञ्चूर्ण्य सर्वं द्रुतमाश्रयोगादेरण्डपत्रेऽथ निवेशनीयम् ॥ ५९ ॥
कृत्वाऽथ तां पर्पटिकां विदध्याल्लोहस्य पात्रे त्ववपूतमस्मिन् ।
जम्बीरजं पक्करसं पलानां शतं नियोज्याग्निमथाल्पमल्पम् ॥ ६० ॥
जीर्णे रसे भावितमेतदेतैः सुपञ्चकोलोद्भववारिपूरैः ।
सवेतसाम्लैः शतमत्र योऽयं समं रजष्टङ्कणजं सुभृष्टम् ॥ ६१ ॥
विडं तदर्धं मरिचं समञ्च तत् सप्तवारं चणकाम्लकेन ।
क्रव्यादनामा भवति प्रसिद्धो रसस्तु मन्थानकभैरवोक्तः ॥ ६२ ॥
माषद्वयं सैन्धवतक्रपीतो ह्यसौ सुधन्यः खलु भोजनान्ते ।
गुरूणि मांसानि पयांसि पिष्टघृतानि सेव्यानि फलानि चापि॥६३॥
मात्रातिरिक्तान्यपि सेवितानि यामद्वयाज्जारयति प्रसिद्धः ।

**निहन्त्यजीर्णान्यपि षट् प्रवृद्धमग्निं करोति क्रमसेवनेन ॥ ९४ ॥**
**कार्श्यस्थौल्यनिबर्हणो गरहरः सामार्त्तिनिर्णाशनः**
**गुल्मप्लीहनिसूदनो ग्रहणिकाविध्वंसनः स्रसनः ।**
**वातश्लेष्मनिबर्हणः श्रमहरः शूलार्त्तिशैलापहः**
**वातग्रन्थिमहोदरापहरणः क्रव्यादनामा रसः ॥ ९५ ॥**

अथ क्रव्यादरसनिर्माणमाह पलमित्यादि—शुद्धपारदस्यैकं पलं बलेर्गन्धकस्य द्विपलं, उभयोः कज्जलीं कृत्वा शुल्व—ताम्रभस्म पलार्द्धं, अयो लोहभस्म च पलार्द्धं दत्त्वा तत्सर्वं लोहदर्विकायां निक्षिप्य वह्नौ प्रद्रुतं कृत्वा गोमयोपरिस्थितैरण्डपत्रे ढालयित्वा द्वितीयैरण्डपत्रेणाच्छाद्य पर्पटिकां कुर्यात् । तदनु पर्पटिकां सम्यग् विचूर्ण्य लोहस्य पात्रे ( कटाहे ) निक्षिप्य शतपलमितं पक्वजम्बीररसं वस्त्रपूतं दत्त्वा मन्दमन्दमग्निं प्रज्वाल्य पचेत् । अनेन योगेन निम्बुरसे सशोषिते स्वाङ्गशीतमौषधं कटाहाद् समादाय सम्यग् विचूर्ण्य च पञ्चकोल—

"पिप्पली पिप्पलीमूलं चव्यचित्रकनागरम् । पञ्चकोलमिदं प्राहुः पञ्चोषणमथापरे ।"

तस्य शतपलैर्मितेन क्वाथेन सह दृढं विमर्द्यन भावयेत् । भावनया सर्वस्मिन् पञ्चकोलक्वाथे सशुष्के सति तावद्भिरेवाम्लवेतसक्वाथैश्च भावयेत् । तदनन्तरं रसादीनां चतुर्णां समभागं (४प०) वह्निसम्भृष्टं टङ्कणजं रजश्चूर्णं तथा तदर्द्धं टङ्कणार्द्धं (द्विपलमित्यर्थः) विड—विडलवणं मरिचं समं तत् इति मरिचचूर्णं टङ्कणसममित्येके अन्ये तु सर्वचूर्णसममिति दशपलमितं दत्त्वा चणकाम्लेन सप्तवारं भावयेत् । रक्तिद्वयमितां वटीं कृत्वा काचपात्रे स्थापयेत् । अथ मन्थानभैरवेणोक्तः क्रव्यादनामको रसो माषद्वय (द्विरक्तिमितः) तक्रसैन्धवानुपानेन सह भोजनान्ते सेवितः भुक्तमन्नं शीघ्रं पाचयति । तथा गुरूणि मांसानि पयांसि च सेव्यानि । घृतसाधितपिष्टभोजनानि फलानि माषयाषिकान्यपि सेवितानि यामद्वयाभ्यन्तर एवायं प्रसिद्धो रसो जारयति, तथा षट्प्रकाराण्यजीर्णानि हन्ति पाचकशक्तिं प्रवर्द्धयति तथायं रसो यथाव्याध्यनुपानपूर्वकं प्रत्यहं सेवितः कार्श्यं स्थौल्यं, गरं = विषं, आमदोषं, गुल्मं प्लीहवृद्धिं ग्रहणीं, वातविकारं श्लेष्मविकारं श्रमं, शूलं, शैलाग्रन्थिरोगं, महोदररोगांश्च विनिहन्ति नाम्नायं क्रव्यादो रसः ॥ ९२–९५ ॥

ज्वालानलो रसः —

**ताम्रद्वयं सूतगन्धौ पञ्चकोलमिदं समम् ।**

सर्वतुल्या जया देया तदर्द्धं शिग्रुवल्कलम् ॥ ६६ ॥
एतत् सर्वं जयाशिग्रु-वह्निमार्कवजै रसैः ।
भावयेत् त्रिदिनं घर्मे ततो लघुपुटे पचेत् ॥ ६७ ॥
भावयेत् सप्तधा चार्द्र-द्रवैर्ज्वालानलो भवेत् ।
पाचनो दीपनो हृद्यश्चोदरामयनाशनः ॥ ६८ ॥
निष्कोऽस्य मधुना लीढोऽनुपानं गुडनागरैः ।
ज्वराजीर्णमतीसारं ग्रहणीं वह्निमार्दवम् ।
श्लेष्महृल्लासवमनमालस्यमरुचिं जयेत् ॥ ६९ ॥

अथ ज्वालानलरसनिर्माणमाह क्षारेत्यादि—क्षारद्वय = यवक्षार, स्वर्जिक्षारश्च, शुद्धसूत, शुद्धगन्धक, पञ्चकोलमिति—पिप्पलीचूर्णं, पिप्पलीमूलचूर्णं, चव्यचूर्णं, चित्रकचूर्णं, शुण्ठीचूर्णम्, एतत् प्रत्येक सम समर्थात्तोलकैकं, सर्वतुल्या च जया-भङ्गा ( ९ तो० ), तदर्धं जयार्द्ध शिग्रुत्वचश्चूर्णं ( ४ ½ तो० ), पूर्वं पारदगन्धकयो कज्जलं कृत्वा शेषद्रव्याणि सम्मेल्य सूक्ष्म विचूर्ण्य च जया भङ्गा तस्या क्वाथेन, शिग्रुक्वाथेन, वह्निश्चित्रकस्तस्य क्वाथेन, मार्कवो भृङ्गराजस्तस्य स्वरसेन च क्रमश पृथक् ? त्रिदिन घर्मे भावयित्वा सशोष्य च शरावसम्पुटस्थ कृत्वा लघुपुटे पचेत् । ततश्चार्द्रकस्वरसेन सप्तधा भावयित्वा सञ्चूर्ण्य सशोष्य च काचपात्रे स्थापयेत् । अय ज्वालानलो रसा दीपन पाचनो हृदयहितकर, उदररोगनाशकश्च वर्तते । अस्य रसस्य निष्कप्रमाणा मात्रा मधुना सह लीढा तदुपरि च गुडमिश्रितशुण्ठीक्वाथानुपानेन ज्वर, अजीर्णं, अतीसार, ग्रहणीं, वह्निमाद्य, श्लेष्मराग, हृल्लासं, वमन, आलस्य, अरुचिम विनिहन्ति ॥ ६६–६९ ॥

अमृतावटी—

अमृतवराटकमरिचैर्द्विपञ्चनवभागयोजितैः क्रमशः ।
वटिका मुद्गसमाना कफत्रिदोषानलमान्द्यहारिणी ॥ ७० ॥

अथामृतावटीनिर्माणमाह अमृतेत्यादि—अमृत—शुद्धवत्सनाभचूर्णं द्विपल, वराटभस्म पञ्चपल, मरिचचूर्णं नवपलम् । एतत् सर्वं खल्वे निक्षिप्य जलेन ( अम्लवर्गस्य कस्याप्येकस्य द्रव्यस्य स्वरसेन वर भवति) सह दृढ पिष्ट्वा मुद्गप्रमाणा वटीश्चरेत् । वटीय कफरोग, त्रिदोषप्रकोप, अनलमान्द्यं—पाचकरसक्षीणताञ्च हरति ॥ ७० ॥

भक्तपाकवटी—

अभ्रं पारदगन्धकौ सदरदौ ताम्रञ्च तालं शिला
वङ्गञ्च त्रिफला विषञ्च कुनटी भागास्त्रयो दन्तिनः ।
शृङ्गी व्योषयमानिचित्रजलदं द्वे जीरके टङ्कणं
पलापत्रलवङ्गहिंगुकटुकीजातीफलं सैन्धवम् ॥ ७१ ॥
एतान्यार्द्रक-चित्रदन्ति-सुरसा-वासारसै विल्वजैः
पत्रोत्थैरपि सप्तधा सुविमले खल्ले विभाव्यान्यत ।
खादेद्वल्लमितं तथा च सकलव्याधौ प्रयोज्या बुधैः
विड्बन्धे कफजे त्रिदोषजनिते ह्यामानुबन्धेऽपि च ॥७२॥
मन्देऽग्नौ विषमज्वरे च सकले शूले त्रिदोषोद्भवे
हन्यात् तानपि भक्तपाकवटिका भूयश्च साम जयेत् ॥७३॥

अथ वृहद्भक्तपाकवटीनिर्माणमाह, अभ्रमित्यादि—अभ्रमभ्रकभस्म (१तो०), शुद्धपारद (१ता०), शुद्धगन्धक (१तो०), शुद्धहिङ्गुल (१तो०), ताम्रभस्म (१तो०), शुद्धहरिताल (१तो०), शुद्धमन शिला (१तो०), वङ्गभस्म (१तो०), त्रिफला—हरीतकीचूर्णं (१तो०), विभीतकचूर्णं (१तो०), आमलकीचूर्णं (१तो०), विषं—शुद्धवत्सनाभचूर्णं (१तो०), कुनटी = नेपालीमन शिला (१तो०), दन्तिनश्चूर्णं शुद्धदन्ती मूलचूर्णं (३तो०), तथा शृङ्गी—कर्कटशृङ्गीचूर्णं (१तो०), व्योषस्त्रिकटुचूर्णं प्रत्येकस्य तोलकैकं ग्राह्यम्, यमानीचूर्णं (१तो०), चित्रकचूर्णं (१तो०), जलद—शुद्ध-मुस्तकचूर्णं (१तो०) 'द्वे जीरके" इति श्वेतजीरकचूर्णं (१तो०), कृष्णजीरकचूर्णं (१तो०), शुद्धटङ्कण (१तो०), एलाबीजचूर्णं ( तो०), तेजपत्रचूर्णं (१तो०), लवङ्गचूर्णं (१तो०), शुद्धहिङ्गुचूर्णं (१तो०), कटुकीचूर्णं (१तो०), जातीफलचूर्णं (१तो०), सैन्धवलवण (१तो०), पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि निक्षिप्य खल्वे पिष्ट्वा च आर्द्रकस्वरसेन, चित्रकस्वरसेन दन्तिन स्वरसेन, सुरसा—तुलसी तस्या स्वरसेन, वासकस्वरसेन, विल्वपत्रस्वरसेन च क्रमश पृथक् ७ सप्तवारं भावयित्वा वल्लमिता (वटी वस्तुतो द्विरक्तिमिता पर्याप्ता) कृत्वा काचपात्रे स्थापयेत् । इयं वृहद्भक्तपाकवटिका द्विरक्तिमिता प्रत्यहं यथाव्याध्यनुपानैस्सह सेविता विड्बन्धे, कफजे त्रिदोषजे च रोगे, आमानुबन्धे, मन्देऽग्नौ, विषमज्वरे, त्रिदोषजे सकले शूलरोगे च श्रेष्ठा तथा साम ग्रहणीं अतीसारञ्च निहन्ति ॥ ७१-७३ ॥

लवङ्गादिवटी—

लवङ्गशुण्ठीमरिचानि भृष्टसौभाग्यचूर्णानि समानि कृत्वा ।
भाव्यान्यपामार्गहुताशवारा प्रभूतमांसादिकजारणाय ॥ ७४ ॥

अथ लवङ्गादिवटीनिर्माणमाह लवङ्गेत्यादि—लवङ्गचूर्णं, शुण्ठीचूर्णं, मरिचचूर्णं वह्निभृष्टटङ्कणचूर्णम् । एतत्प्रत्येकं समभागेनादाय खल्वे विचूर्ण्य च अपामार्गस्वरसेन, हुताशश्चित्रकस्तस्य क्वाथेन च भावयित्वा वटीश्चरेत् । इयं वटी प्रत्यहं प्रभूतमांसजारणाय तथा गरिष्ठान्नपाकाय च सेव्या ॥ ७४ ॥

बृहल्लवङ्गादिवटी—

लवङ्गजातीफलधान्यकुष्ठं जीरद्वयं त्र्यूषणत्रैफलञ्च ।
एलात्वचं टङ्कवराटमुस्तं वचाऽजमोदाविडसैन्धवञ्च ॥ ७५ ॥
तदर्द्धकं पारदगन्धमभ्रं लौहञ्च तुल्यं सुविचूर्ण्य सर्वम् ।
तन्नागवल्लीदलतोयपिष्टं वल्लप्रमाणां वटिकाञ्च कृत्वा ॥ ७६ ॥
प्रातर्विदध्याद्पि चोष्णतोयैरियं निहन्याद् ग्रहणीविकारम् ।
आमानुबन्धं सरुजं प्रवाहं ज्वरं तथा श्लेष्मभवं सशूलम् ॥ ७७ ॥
कुष्ठाम्लपित्तं प्रबलं समीरं मन्दानलं कोष्ठगतञ्च वातम् ।
वटी लवङ्गादि वसुप्रणीता तथाऽऽमवातं विनिहन्ति शीघ्रम् ॥७८॥

अथ बृहल्लवङ्गादिवटीनिर्माणमाह लवङ्गेत्यादि—लवङ्गचूर्णं, जातीफलचूर्णं, धान्यकचूर्णं, कुष्ठचूर्णं, श्वेतजीरकचूर्णं, कृष्णजीरकचूर्णं, त्र्यूषण = शुण्ठीचूर्णं, मरिचचूर्णं, पिप्पलीचूर्णं, त्रिफला = हरीतकीचूर्णं, विभीतकचूर्णं, आमलकीचूर्णं, बृहदेलाचूर्णं, त्वचो दारुसितायाश्चूर्णं, शुद्धटङ्कण, वराटभस्म, शुद्धमुस्तकचूर्णं, वचाचूर्णं, अजमोदाचूर्णं, विड्लवण, सैन्धवलवण, प्रत्येकं तोलकैकं, तथा शुद्धपारद शुद्धगन्धक, अभ्रकभस्म लौहभस्म प्रत्येकमर्द्धतोलकमितं समादाय पारदगन्धकयो कज्जलं कृत्वा शेषद्रव्याणि सम्मेल्य सम्यक् सञ्चूर्ण्य नागवल्लीदलस्वरसेनाप्लाव्य दृढं विमर्द्य च वल्लप्रमाणा वटीश्चरेत् । एकैकेयं वटी प्रभाते कोष्णजलानुपानेन सह सेविता ग्रहणीं, सरुजां प्रवाहिकां, आमानुबन्धं, श्लेष्मभवं ज्वरं, कुष्ठं, अम्लपित्तं, प्रबलं समीरं, मदाग्निं, कोष्ठवातञ्च निहन्ति ॥ ७५–७८ ॥

जातीफलादिवटी—

जातीफलं लवङ्गञ्च पिप्पली सिन्धुकामृतम् ।

द्रोणपुष्पीरसैश्चापि भावयेच्च पुनः पुनः।
अस्य मात्रा प्रदातव्या गुञ्जैका वा द्विगुञ्जिका ॥ ८५ ॥
चिन्तामणिरसो ह्येष चाजीर्णे शस्यते सदा।
आमवातं ज्वरं हन्ति सर्वशूलनिसूदनः ॥ ८६ ॥

अथ चिन्तामणिरसनिर्माणमाह रसमित्यादि—रस, गन्ध, मृत ताम्र ताम्रभस्म, अभ्रकभस्म, फलत्रय—हरीतकीचूर्ण, विभीतकचूर्ण, आमलकीचूर्ण, त्र्यूषण-शुण्ठीचूर्ण, मरिचचूर्ण, पिप्पलीचूर्ण, शुद्धदन्तिबीजचूर्णम्। एतत् प्रत्येकं समभागेनादाय पारदगन्धकयो कज्जलीं कृत्वा शेपद्रव्याणि सम्मेल्य सञ्चूर्ण्य च द्रोणपुष्पीक्वाथेन सप्तवार भावयित्वा दृढं विमर्द्य संशोष्य च काचपात्रे स्थापयेत्। अयं चिन्तामणिरसो गुञ्जमितो द्विगुञ्जमितो वा ताम्बूलार्द्रकादिस्वरसैस्सह सेवि॰ अजीर्ण, आमवात ज्वर, सर्वशूलानि च विनिहन्ति ॥ ८४–८६ ॥

प्रदीपनो रस —

रसनिष्कं गन्धनिष्कं निष्कमात्रं प्रदीपनम्।
मानमर्द्धं प्रदातव्यं चुल्लिकालवणं भिषक् ॥ ८७ ॥
मर्दयित्वा प्रदातव्यमथास्य माषमात्रकम्।
अजीर्णे चाग्निमान्द्ये च दातव्यो रसवल्लभः ॥ ८८ ॥

अथ प्रदीपनरसनिर्माणमाह रसेत्यादि—शुद्धपारद निष्कमितम्। (माषैश्चतुर्भि शाण स्यात् स निष्कष्टङ्क एव च) शुद्धगन्धक निष्कमितं, प्रदीपन विषभेद। प्रदीपलोहितो य स्याद्दीप्तिमान् दहनप्रभ। महादाहकर पूर्वं कथित स प्रदीपन ॥

तच्च शुद्ध निष्कमित ग्राह्यम्। चुल्लिकालवण = नवसादर, मानमर्द्धमित्यर्द्ध-निष्कं "मानमर्द्धमित्यत्र पलमर्द्धमिति केचित्" पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेपद्रव्याणि सम्मेल्य सञ्चूर्ण्य च काचपात्रे स्थापयेत्। अस्य रसस्य माष-मात्रक (उड़दमितं) रक्तिमितमजीर्णेऽग्निमान्द्ये च प्रयोजनीय ॥ ८७–८८ ॥

विजयरस —

रसस्यैकं पलं दत्त्वा नागञ्च गन्धकं पलम्।
क्षारत्रयं पलं देयं लवङ्गं पलपञ्चकम् ॥ ८९ ॥
दशमूलीजयाचूर्णं तद्द्रवेण तु भावयेत्।

चित्रकस्य रसेनाथ भृङ्गराजरसेन तु ॥ ९० ॥
शिग्रुमूलद्रवैश्चापि ततो भाण्डे निरुध्य च ।
याममात्रं पचेदग्नौ मर्दयेदार्द्रकद्रवैः ।
ताम्बूलीपत्रसंयुक्तं खादेत् निष्कमितं सदा ॥ ९१ ॥

अथ विजयरसनिर्माणमाह रसस्येत्यादि--रसस्य--शुद्धपारदस्यैकं पलं, नाग भस्म (१प०), शुद्धगन्धक (१प०), क्षारत्रय--यवक्षार (१प०), स्वर्जिक्षार (१प०), वह्निमृष्टटङ्कण (१प०), लवङ्गचूर्ण (५पलमित), दशमूलद्रव्याणां प्रत्येकं पञ्चपलमितम् ।

शालपर्णी पृश्निपर्णी वार्ताकी कण्टकारिका । गोक्षुरः पञ्चभिश्चैतैः कनिष्ठं पञ्चमूलकम् ॥
श्रीफलः सर्वतोभद्रा पाटला गणिकारिका । स्योनाकः पञ्चभिश्चैतैः पञ्चमूलं महन्मतम् ॥
उभाभ्यां पञ्चमूलाभ्यां दशमूलमुदाहृतम् ॥ इति ।

चूर्णं ग्राह्यम्, जया--विजयाचूर्ण (५प०), पूर्वं पारदगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य सञ्चूर्ण्य च दशमूलद्रव्यक्वाथेन, विजयाक्वाथेन, चित्रकस्वरसेन, भृङ्गराजस्वरसेन, शिग्रुमूलत्वक्क्वाथेन च क्रमशः पृथक् ७ भावयित्वा भावितं चूर्णमेकस्मिन् भाण्डे निक्षिप्य भाण्डमुखं निरुध्य च यामैकं पचेत् । तदनु स्वाङ्गशीतं चूर्णं खल्वे निक्षिप्य सञ्चूर्ण्य च आर्द्रकस्वरसेनाप्लाव्य दृढं पिष्ट्वा च निष्कमिता वटीश्चरेत् । अस्य रसस्य प्रत्यहमेकैकां वटीं ताम्बूलीदले निक्षिप्याजीर्णादिषु भक्षयेत् ॥ ८९-९१ ॥

भक्ष्यविपाकवटी—

माक्षिकं रसगन्धौ च हरितालं मनःशिलाम् ।
गगनं कान्तलौहञ्च सर्वमेतच्च कार्षिकम् ॥ ९२ ॥
त्रिवृद्दन्तीवारिवाहं चित्रकञ्च महौषधम् ।
पिप्पली मरिचं पथ्यां यमानीं कृष्णजीरकम् ॥ ९३ ॥
रामठं कटुकां पाठां सैन्धवं साजमोदकम् ।
जातीफलं यवक्षारं समभागं विचूर्णयेत् ॥ ९४ ॥
आर्द्रकस्य रसेनैव निर्गुण्ड्याः स्वरसेन च ।
सूर्य्यावर्तरसेनैव ज्योतिष्मत्या रसेन च ॥ ९५ ॥

आतपे भावयेत् वैद्यः कृत्वा गुञ्जामितां वटीम् ।
भक्षयेत् तां वटीं प्राज्ञो लवङ्गेन नियोजिताम् ॥ ९६ ॥
भुक्तोत्तरीये वहुभोजनान्ते आमानुवन्धे चिरवह्निमान्द्ये ।
विड्विग्रहे वातकफानुवन्धे शोथोदरानाहगदेऽप्यजीर्णे ॥ ९७ ॥
शूले त्रिदोषप्रभवे ज्वरे च शस्ता वटी भक्तविपाकसंज्ञा ।
सुखं विरेच्याशु नरस्य कोष्ठं मुहुर्मुहुर्वाञ्छयतीप्सितान्नम् ॥ ९८ ॥

अथ महाभक्तपाकवटीनिर्माणमाह माक्षिकमित्यादि—सुवर्णमाक्षिकभस्म (शु० रस), शुद्धगन्धक, शुद्धहरिताल, शुद्धमनशिला, गगनमभ्रकभस्म, कान्तलोहभस्म, एतत् प्रत्येक कर्षमित तथा त्रिवृच्चूर्णं, दन्तीमूलचूर्णं, वारिवाहं=मुस्तकचूर्णं, चित्रकचूर्णं, महौषध=शुण्ठीचूर्णं, पिप्पलीचूर्णं, मरिचचूर्णं, पथ्या=हरीतकीचूर्णं, यमानीचूर्ण, कृष्णजीरकचूर्ण, रामठ–शुद्धहिङ्गुचूर्ण, कटुकीचूर्णं, पाठाचूर्णं, सैन्धवलवण, अजमोदाचूर्ण, जातीफलचूर्ण, यवक्षार, एष्वपि प्रत्येकं कर्षमित, समादाय पूर्वपारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य आर्द्रकस्वरसेन, निर्गुण्डीपत्रस्वरसेन, सूर्यमुखीस्वरसेन, ज्योतिष्मतीक्वाथेन, क्रमश पृथक् २ निदाघे भावयित्वा गुञ्जाप्रमाणा वटीश्चरेत् । वटीयं लवङ्गचूर्णेन सह अजीर्णादिनाशार्थं प्रत्यहं प्रभाते सेव्या । तथेयं भक्तविपाकनाम्नी वटी भुक्तोत्तरसमये, वहुभोजनान्ते, आमानुवन्धे, चिरवह्निमान्द्ये, मलावरोधे, वातकफानुवन्धे, शोथे, उदररोगे, आनाहे, अजीर्णे, शूले, त्रिदोषजे ज्वरे च प्रशस्ता । प्रत्यहं वटीयं सेविता शीघ्रं सुखं विरेच्य नरस्य कोष्ठं लघु करोति, मुहुर्मुहुश्च यथेष्टभोजनस्पृहां कारयति "ज्योतिष्मत्या रसेन च" इत्यत्र "तुलस्या स्वरसेन च" इति पाठान्तरम् ॥ ९२–९८ ॥

रसराक्षस —

ताम्रं पारदगन्धकं त्रिकटुकं तीक्ष्णं च सौवर्च्चलम्
खल्ले मर्द्य दिनं निधाय सिकताकुम्भेषु यामं ततः ।
स्विन्नं तेष्वपि रक्तशाकिनिभवं क्षारं समं भावयेत्
पक्वीकृत्य च मातुलुङ्गकजलैर्नाम्ना रसो राक्षसः ॥ ९९ ॥

अथ रसराक्षसनिर्माणमाह ताम्रमित्यादि—ताम्रभस्म, शुद्धपारद, शुद्धगन्धक, त्रिकटुक–शुण्ठीचूर्ण, मरिचचूर्ण, पिप्पलीचूर्णं, तीक्ष्णलौहभस्म, सौवर्च्चललव-

णमेषु प्रत्येकं पृथक् २ समभागेनादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य दिनैकं खल्वे विमर्द्य वालुकायन्त्रे यामैक पचेत्। स्वाङ्गशीतमौषधं यन्त्रान्निष्कास्य खल्वे निक्षिप्य तत्सम रक्तशाकिनिभवमिति रक्तपुनर्नवाक्षार सम्मेल्य, मातुलुङ्गस्वरसे सप्ताह भावयित्वा विमर्द्य च रक्तिमिता वटीश्चरेत। अय रसराक्षसो नागवल्लीस्वरसेन सहाजीर्णादिषु देय ॥ ९९ ॥

त्रिफलालौहम—

**त्रिफलामुस्तवेल्लैश्च सितया कणया समम्।**
**खरमञ्जरिबीजश्च लौहं भस्मकनाशनम ॥ १०० ॥**

अथ त्रिफलालौहनिर्माणमाह त्रिफलेत्यादि—त्रिफला—हरीतकीचूर्ण, विभीतकचूर्ण, आमलकीचूर्ण, मुस्तकचूर्णं, वेल्ल=विडङ्गचूर्ण, सिता (मिश्री), पिप्पलीचूर्ण, खरमञ्जरीबीजमिति शुद्धापामार्गबीजानि, एतत् सर्वं पृथक् २ तोलकैकं समादाय सर्वसम लोहभस्म दत्वा जलेन सह दृढ मर्दन कृत्वा त्रिगुञ्जमिता वट[illegible]रेत। इद त्रिफलालौह भस्मकरोगनाशकमस्ति ॥ १०० ॥

अपामार्गव्यञ्जनम्—

**अपामार्गस्य पत्रञ्च मरिचञ्च सम समम्।**
**अम्लरोलीयुत पिष्टमञ्जनात् सूचिकां जयेत् ॥ १०१ ॥**

अथापामार्गाद्यञ्जननिर्माणमाह अपेत्यादि—अपामार्गस्य पत्रचूर्ण, मरिचचूर्णञ्च सम सममादाय खल्वे सम्पेष्य अम्लरोलीयुतमिति चाङ्गेरीरसेनाप्लुत दृढ पिष्ट्वा संशोष्य च काचपात्रे स्थापयेत्। अस्य प्रत्यहमक्ष्णोरञ्जनाद्विसूचिका नश्यति ॥ १०१ ॥

अग्निकुमार —

**टङ्कण रसगन्धौ च समं भागत्रय विषात्।**
**कपर्दशङ्खयोरष्टश वसुभागं मरीचकम् ॥ १०२ ॥**
**दिन जम्भाम्भसा पिष्ट वल्लमात्रं प्रदापयेत्।**
**विसूचीशूलविष्टम्भ-वह्निमान्द्ये ज्वरे तथा।**
**अजीर्णे संग्रहण्याञ्च सिद्धश्चाग्निकुमारकः ॥ १०३ ॥**

[illegible]ग्निकुमाररस[illegible]णमा० टङ्कणमित्यादि—शुद्धटङ्कणं (१तो०), शुद्धपारद

(१तो०), शुद्धगन्धक (१तो०), शुद्धवत्सनाभचूर्ण (३तो०), कपर्दभस्म (३तो०) शङ्खभस्म (२तो०), मरिचचूर्ण वसुभागमष्टतोलक, पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य सञ्चूर्ण्य च जम्भाम्भसा जम्बीरनिम्बुकस्वरसेनाप्लाव्य दृढ विमर्द्य च वल्लमात्रा ( रक्तिद्वयमिता ) वटीश्चरेत् । अयमग्निकुमाररसो विसूच्या, शूले विष्टम्भे, वन्हिमान्द्ये, ज्वरे अजीर्णे, सग्रहण्याञ्च, यथानुपाने त्यक्षफलद ॥ १०२–१०३ ॥

अपरा शङ्खवटी—

**द्वौ क्षारौ रसगन्धकौ सलवणौ तारेण तुल्यं विषं**
**चिञ्चाशङ्खचतुर्गुणं रसवरैर्लिम्पाकजातैः कृतम् ।**
**वार वारमिदं सुपाकरचितं लौहं क्षिपेत् हिङ्गुकं ।**
**भूयष्टङ्कसम सुमर्दितमिदं गुञ्जाप्रमाण भजेत् ॥ १०४ ॥**
**ख्याता शङ्खवटी महाग्निजननी शूलान्तकृत् पाचनी**
**कासश्वासविनाशिनी क्षयहरी मन्दाग्निसन्दीपनी ।**
**वातव्याधिमहोदरादशमनी तृष्णामयोच्छेदिनी**
**सर्वव्याधिनिसूदनी क्रिमिहरी दुष्टामयध्वंसिनी ॥ १०५ ॥**

इति अजीर्णचिकित्सा ।

अथ प्रकारान्तरेण शङ्खवटीनिर्माणमाह द्वाविति—स्वर्जिक्षार (१तो०), यवक्षार (१तो०), शुद्धपारद (१तो०), शुद्धगन्धक (१तो०), सैन्धव लवण (१तो०) विष–शुद्धवत्सनाभचूर्ण (१तो०), चिञ्चाफलत्वचो भस्म (४तो०), शङ्खभस्म (४तो०) पूर्व पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मिश्रय सञ्चूर्ण्य च लिम्पाकजातैस्वरसैरिति निम्बुकस्वरसै सप्तवार भावयित्वा लौहभस्म (१तो०), शुद्धहिङ्गुचूर्ण (१तो०), शुद्धटङ्कण (१तो०), दत्वा सर्व सम्यग् सम्मेल्य गुञ्जाप्रमाणा वटीश्चरेत् । इय शङ्खवटी यथाव्याध्यनुपानैस्सह सेविता पाचकशक्तिमुद्दीपयति, शूलहन्ति, दुर्जरमपि कृत भोजन पाचयति, कास, श्वास, क्षय च नाशयति, मन्दाग्नि सन्दीपयति, वातव्याधिं, महोदररोगमिति जलोदरादिक शमयति, तृष्णामय—मुहुर्मुहुर्जलेच्छा निवारयति, क्रिमिजन्यरोगाणा नाशिनी, दुष्टामयमर्शोभगन्दरादिकं विनिहन्ति, किम्बहुना विविधानुपानैस्सह विविधव्याधिसमूहं विनिहन्ति ॥१०४–१०५॥

अथाग्निमान्द्यादपु पथ्यापथ्यव्यवस्था—

श्लेष्मिके वमन पूर्व पैत्तिके मृदुरेचनम् । वातिके स्वेदनञ्चाथ यथावस्थं हितञ्च यत्॥ १ ॥
नानाप्रकारो व्यायामो दीपनानि लघूनि च । बहुकालसमुत्पन्ना सूक्ष्मा लोहितशालय ॥ २ ॥
विलेपी लाजमण्डश्च मण्डो मुद्गरस सुरा । एणा वर्हा शशा लाव क्षुद्रमत्स्याश्च सर्वश ॥ ३ ॥
शालिञ्च शाकं चेत्राग्र वास्तूकं वालमूलकम् । लशुनं वृद्धकूष्माण्ड नवीनकदलीफलम् ॥ ४ ॥
शोभाञ्जन पटोलञ्च वार्ताकु नलदम्बु च । कर्कोटककारवेल्ल बाहतञ्च महार्द्रकम् ॥ ५ ॥
प्रसारिणी मेषशृङ्ग चाङ्गेरा मुनिपर्णकम । धात्रीफल नागरङ्ग दाडिम यावपर्पटा ॥ ६ ॥
अम्लवेतसजम्बीरमातुलुङ्गानि माक्षिकम् । नवनीत घृतं तक्र सौवीरकतुषोदके ॥ ७ ॥
धान्याम्लं कटुतैलञ्च रामठ लवणार्द्रकम् । यमानी मरिच मेथी धान्यकं जीरकं दधि ॥ ८ ॥
ताम्बूलं तप्तसलिल कटुतिक्तौ रसावपि । मन्दानलेऽप्यजीर्णेऽपि पथ्यमेतन्नृणा भवेत् ॥ ९ ॥
इति पथ्यानि ।

अथापथ्यानि—

विरेचनानि विण्मूत्रवायुवेगविधारणम् । अध्यशन समशन जागरं विषमाशनम् ॥ १० ॥
रक्तस्रुतिं शमीधान्य मत्स्यं मासमुपोदिकाम् । जलपान पिष्टकञ्च जाम्बवं सर्वमालुकम्॥ २ ॥
कूर्च्चिका मोरट क्षारं किलाटञ्च प्रपानकम् । तालास्थिमस्य तद्वाल स्नेहन दुष्टवारि च ॥ ३ ॥
विरुद्धासात्म्यपानान्नं विष्टम्भानि गुरूणि च । अग्निमान्द्येऽप्यजीर्णे च सर्वाणि परिवर्जयेत् ॥ ४ ॥
भुक्त पूर्वान्नशेषे तु पुनरध्यशन मतम् । बहुस्तोकमकाले च तज्ज्ञेयं विषमाशनम ॥ १ ॥

इत्यग्निमान्द्ये पथ्यापथ्यविधि ।

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृतायां
गूढार्थसन्दीपिकाव्याख्यायामजीर्णाधिकार ॥

# अथ क्रिमि-चिकित्सा।

क्रिमिकालानलो रस —

विडङ्ग द्विपलञ्चैव विषचूर्णं तदर्द्धकम्।
लौहचूर्णं तदर्द्धञ्च तदर्द्धं शुद्धपारदम्॥ १॥
रसतुल्यं शुद्धगन्धं छागीदुग्धेन पेषयेत्।
छायाशुष्कां वटीं कृत्वा खादेत् षोडशरक्तिकाम्॥ २॥
धान्यजीरानुपानेन क्रिमिकालानलो रसः।
उदरस्थं क्रिमिं हन्याद् ग्रहण्यर्शः-समन्वितम्॥ ३॥
अग्निदः शोथशमनो गुल्मप्लीहोदरान् जयेत्।
गहनानन्दनाथेन भाषितो विश्वसम्पदे॥ ४॥

"अजीर्णात् क्रिमिसम्भव" "अजीर्णभोजी मधुराम्लनित्य" इत्यादिक्रिमिनिदानोक्तप्रमाणवाक्यैरजीर्णस्य क्रिमिरोगोत्पत्तौ हेतुत्वादजीर्णचिकित्सानन्तरं क्रिमिजन्यरोगाचिकित्सा लिख्यते। तत्र प्रथमं क्रिमिकालानलरसनिर्माणमाह विडङ्गमित्यादि—विडङ्गं–वायविडङ्गचूर्णं द्विपलं, विषचूर्णं–शुद्धवत्सनाभचूर्णं तदर्द्धमेकपलं, लौहभस्म विषार्द्धमर्धपलमित्यर्थः। शुद्धपारदं पलपादमितं (एकतोलकं), शुद्धगन्धकं पलपादमितं, पूर्वं पारदगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य छागीदुग्धेन सम्यगालोड्य दृढं मर्दनं कृत्वा रक्तिमिता वटीः कृत्वा छायायां संशोष्य काचपात्रे स्थापयेत्। अथ क्रिमिकालानलो रसो यथारोगं यथावयश्च धान्यजीरकक्वाथानुपानपूर्वकं सेवितः उदरस्थक्रिमिन्, तथा ग्रहणीं, अर्शोरोगञ्च हन्ति। तथा अयमग्नि–पाचकशक्तिं वर्द्धयति, शोथं शमयति, गुल्मवृद्धिं, प्लीहवृद्धिं, उदरवृद्धिं (जलोदरादिकरोगान्) च निवारयति, ॥ १–४॥

क्रिमिविनाशो रस —

शुद्धसूतं समं गन्धमभ्रं लौहं मनःशिला।
धातकी त्रिफला लोध्रो विडङ्गं रजनीद्वयम्॥ ५॥
भावयेत् सप्तधा सर्वं शृङ्गवेरभवैः रसैः।
चणमात्रां वटीं कृत्वा त्रिफलारससंयुताम्॥ ६॥

भक्षयेत् प्रातरुत्थाय क्रिमिरोगोपशान्तये ।
वातिक पैत्तिक हन्ति श्लैष्मिकञ्च त्रिदोषजम् ।
नाम्ना क्रिमिविनाशोऽय क्रिमिरोगकुलान्तक ॥ ७ ॥

अथ क्रिमिविनाशरसनिर्माणमाह   शुद्धमूतमित्यादि—शुद्धमूत—शुद्धपारद-शुद्धगन्धक, अभ्रमभ्रकभस्म, लौहभस्म, शुद्धमन शिला, धातकीपुष्पचूर्ण, त्रिफला-हरीतकीचूर्ण, विभीतकचूर्ण आमलकीचूर्ण लोध्र ( पठानीलोध ), विडङ्गचूर्ण, रजनिद्वय-हरिद्राचूर्ण, दारुहरिद्राचूर्णञ्च, एतत्प्रत्येक समभागेनादाय पूर्व पारदगन्धयो कज्जली कृत्वा शेषद्रव्याणि सम्मेल्य शृङ्गवेररसै -आर्द्रकस्वरसै ( आर्द्रकस्वरसाभावे शुण्ठीक्वाथ गृह्णीयात् ) सप्तवार सम्यक भावयित्वा दृढ विमर्द्य च चणमात्रा ( द्विरक्तिमिता ) वटी कृत्वा सशोष्य च काचपात्रे स्थापयेत् । अस्य रसस्य प्रत्यहमेकैका वटी त्रिफलारसेन ( रात्रौ त्रिफला मृण्मयपात्रे स्वल्पजले निक्षिपेत्, प्रभाते च त्रिफला हस्तेन विमर्द्य तज्जल स्वौषधानुपानार्थं पिबेत् । त्रिफलाञ्च बहि प्रक्षिपेत् ) सेविता वातिक पैत्तिक, श्लैष्मिक, त्रिदोषजञ्च क्रिमिरोग हन्ति । अथ नाम्ना क्रिमिविनाशो रस क्रिमिरोगनाशने श्रेष्ठ ॥ ५–७ ॥

क्रिमिनाशनो रस —

सूत गन्ध मृत लौह मरिच विषमेव च ।
धातकी त्रिफला शुण्ठी मुस्तक सरसाञ्जनम् ॥ ८ ॥
पाठा त्रिकटु मुस्ता च वालक विल्वमेव च ।
भावयेत् सर्वमेकत्र स्वरसैर्भृङ्गजैस्तत ॥ ९ ॥
वराटिकाप्रमाणेन भक्षणीयो विशेषतः ।
क्रिमिरोगविनाशाय रसोऽय क्रिमिनाशनः ॥ १० ॥

अथ क्रिमिरोगविनाशनरसनिर्माणमाह   मूतमित्यादि—शुद्धपारद, शुद्धगन्धक-लौहभस्म, मरिचचूर्ण, शुद्धवत्सनाभचूर्ण, धातकीपुष्पचूर्ण, त्रिफला = हरीतकीचूर्ण विभीतकचूर्ण, आमलकीचूर्ण, शुण्ठीचूर्ण, शुद्धमुस्तकचूर्ण रसाञ्जन, पाठाचूर्ण, त्रिकटु=शुण्ठीचूर्ण, मरिचचूर्ण, पिप्पलीचूर्ण, शुद्धमुस्तकचूर्ण, वालक= सुगन्धवालाचूर्ण, विल्व-विल्वत्वक्चूर्ण ( शुष्कविल्वफलमज्जाचूर्णमित्यपि केचित् ) एतत् प्रत्येक समभागेनादाय पूर्व पारदगन्धयो कज्जली कृत्वा शेषद्रव्याणि स-

सम्मेल्य भृङ्गराजस्वरसेन भावयित्वा रक्तिमिता वटी श्वरेत् । वराटिकाप्रमाणेन भक्षयेदिति मूलपाठोक्ता मात्रा प्रत्यहं सेवनार्थं नोपदिष्टा, अपि तु वराटिकापर्यन्त स्वल्पमात्रया सेवनेन पुरुष क्रिमिरोगाद्विमुच्यते इति तात्पर्यम् ॥ ८–१० ॥

कीटमर्दो रस —

**शुद्धसूतं शुद्धगन्धो ह्यजमोदा विडङ्गकम् ।**
**विषमुष्टिः ब्रह्मबीजं क्रमात् द्विगुणित भवेत् ॥ ११ ॥**
**चूर्णयेन्मधुना मिश्रं निष्कैकं क्रिमिजिद्भवेत् ।**
**कीटमर्दो रसो नाम मुस्ताक्वाथं पिवेदनु ॥ १२ ॥**

अथ कीटमर्दरसनिर्माणविधिमाह शुद्धेत्यादि—शुद्धपारद (१तो०), शुद्धगन्धक (२तो०), अजमोदा = यमानीचूर्ण (३तो०), विडङ्गचूर्ण (४तो०), विषमुष्टि = शुद्धकुचेलकचूर्ण (५तो०), ब्रह्मवीज = पलाशबीजचूर्ण (६तो०), [ब्रह्मवीजमिति—भार्गीबीजमिति केचित ], पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य सञ्चूर्ण्य च काचपात्रे स्थापयेत् । अस्य रसस्य निष्कमित [ प्रायो द्विरक्तिमित प्रयोजयेत् ] मधुना वि ोड्य लिहेत् तदुपरि च मुस्ताक्वाथ पिवेत् । अयं कीटमर्दरस क्रिमीन्हन्ति ॥ ११–१२ ॥

क्रिमिघ्नो रस —

**क्रिमिघ्नकिंशुकारिष्ट-बीज सुरसभस्मकम् ।**
**वल्लद्वय चाखुपर्णी-रसैः क्रिमिविनाशनम् ॥ १३ ॥**

अथ क्रिमिघ्नरसनिर्माणमाह क्रिमीत्यादि—क्रिमिघ्न = विडगचूर्ण, किंशुकबीज= पलाशबीजचूर्ण, अरिष्टबीज = निम्बबीजचूर्ण, सुरसभस्मकं = रससिन्दूर, प्रत्येकं समभागेनादाय खल्वे विचूर्ण्य च काचपात्रे स्थापयेत् । अय रस प्रत्यहमाखुपर्णारसानुपानेन सह वल्लद्वय (द्विरक्तिकादारभ्य तुर्यरक्तिपर्यन्त) सेवित क्रिमीन्हन्ति ॥१३॥

क्रिमिमुद्गरो रस —

**क्रमेण वृद्ध रसगन्धकाजमोदा विडङ्गं विषमुष्टिका च ।**
**पलाशबीजञ्च विचूर्ण्यमस्य निष्कप्रमाण मधुनाऽवलीढम् ॥ १४ ॥**
**पिवेत् कषाय घनज तदूर्ध्व रसोऽयमुक्तः क्रिमिमुद्गराख्यः ।**
**क्रिमि जिहन्यात्क्रिमिजांश्च रोगान् सन्दीपयत्यग्निमयं त्रिरात्रात् ॥१५॥**

अथ क्रिमिमुद्गररसनिर्माणमाह क्रमेणेत्यादि—क्रमेण वृद्ध यथा—शुद्धरस-

(१तो०),शुद्धगन्धक (२तो०),अजमोदा–यमानीचूर्ण (३तो०), विडङ्गचूर्ण (४तो०), विषमुष्टिका–शुद्धकुचेलकचूर्ण (५तो०), पलाशबीजचूर्ण (६तो०) रसादिपलाशबीजपर्यन्त द्रव्यजातमुक्तमात्रानुरूपं समादाय पूर्वं पारदगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य सम्यग्विचूर्ण्य च काचपात्रे स्थापयेत्। अस्य रसस्य प्रत्यहं निष्कप्रमाणं—तूर्यमाषकमितं—

चतुर्भिर्माषकैः शाणः स निष्कष्टङ्क एव च।

(प्रायो रक्तिद्वयात्तूर्य्यरक्तिमितं प्रयोजयेत्) चूर्णं मधुना सह संसेव्य तदुपरि घनजं कषायं—मुस्तकक्वाथं क्रिमिरोगशान्तये पिबेत्। इत्थमयं क्रिमिमुद्गराख्यो रसस्त्रिरात्रं सेवितः क्रिमिं, क्रिमिजांश्च रोगांश्निहन्यात्, पाचकाग्निञ्च सन्दीपयति॥ १४–१५॥

क्रिमिधूलिजलप्लवो रसः—

**पारदं गन्धकं शुद्धं वङ्गं शङ्खं समं समम्।**
**चतुर्णां योजयेत् तुल्यं पथ्याचूर्णं भिषग्वरः॥ १६॥**
**दण्डयन्त्रेण निर्मथ्य पटोलस्वरसं क्षिपेत्।**
**कार्पासबीजसदृशीं कुर्याद्वै यत्नतो वटीम्।**
**त्रिवटीं भक्षयेत् प्रातः शीततोयं पिबेदनु॥ १७॥**
**केवलं पैत्तिके योज्यः कदाचित् वातपैत्तिके।**
**श्रीमद्गहननाथोक्तः क्रिमिधूलिजलप्लवः॥ १८॥**

अथ क्रिमिधूलिजलप्लवरसनिर्माणमाह पारदमित्यादि—शुद्धपारद (१तो०), शुद्धगन्धक (१तो०), वङ्गभस्म (१तो०), शङ्खभस्म (१तो०), चतुर्णां तुल्यञ्च पथ्याचूर्णं=हरीतकीचूर्णं (४तो०) समादाय पूर्वं पारदगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य दण्डयन्त्रेण निर्मथितपटोलपत्रस्वरसं क्षिप्त्वा दृढं विमर्द्य च कार्पासबीजसदृशवटीः (द्विरक्तिमिताः) कृत्वा काचपात्रे स्थापयेत्। अस्य रसस्य प्रत्यहमेकैका द्वे तिस्रो वा वटीः शीततोयानुपानेन सह पैत्तिके क्रिमिरोगे, कदाचिद्वातपैत्तिके वा क्रिमिरोगे भक्षयेत्। अथ क्रिमिधूलिजलप्लवो रसः श्रीमद्गहननाथेन प्रोक्तः॥ १६–१८॥

क्रिमिकाष्ठानलो रसः—

**विशुद्धं पारदं गन्धं वङ्गं तालं वराटकम्।**

**मनःशिला कृष्णकाच सोमराजीविडङ्गकम् ॥ १६ ॥**
**दन्तीबीजञ्च जैपालं शिला टङ्कणचित्रकम् ।**
**कर्षमात्रन्तु प्रत्येकं वज्रीक्षीरेण मर्दयेत् ॥ २० ॥**
**कलायसदृशीं कृत्वा वटिकां भक्षयेत् ततः ।**
**क्रिमिकाष्ठानलो नाम रसोऽयं परिनिर्मितः ।**
**श्लैष्मिके श्लेष्मपित्ते च श्लेष्मवाते च शस्यते ॥ २१ ॥**

अथ क्रिमिकाष्ठानलरसनिर्माणमाह विशुद्धमित्यादि—विशुद्धपारद १ क० (१तो०) शुद्धगन्धक (१क०), वङ्गभस्म (१क०), शुद्धहरतालचूर्णं भस्म वा (१क०), वराटभस्म (१क०), शुद्धमन शिला (१क०), कृष्णकाच = कृष्णलवणं (१क०), सोमराजीबीजचूर्णं (पलाशबीजचूर्णमिति वा) (१क०), विडङ्गचूर्ण (१क०), शुद्धदन्तीबीजचूर्णं (१क०), शुद्धजयपालचूर्ण, (१क०) अत्र दन्तीबीज जयपालबीजञ्च भिन्नमिति ज्ञेयम् यच्च भावप्रकाशनिघण्टौ जयपालो दन्तबीज विख्यातमिति प्रतिपादित तत् स्थूलदृष्ट्यैव यतो हि जयपालबीजवृक्षो दन्तीजातीयकस्तरु, तथा च रसतरङ्गिण्या जयपालस्य परिचय ।

नात्युच्छ्रितो नातिह्रस्वो दन्तीजातीयकस्तरु । अधुना तु विशेषेण देशे पञ्चनदाह्वये । तथैव सिंहलद्वीपे द्वीपेष्वन्येषु जायते । बीज तस्य भिषग्वर्यैर्जयपाल इति स्मृतम् ॥ दन्तीबीजात् क्षुद्रतर बीजमस्य तु यद्यपि । पर तीव्रतरा शक्तिर्दृश्यते मलभेदने॥इति॥

शिला = शुद्धशिलाजतु ( १ क० ), शुद्धटङ्कण ( १ क० ), चित्रकमूलचूर्ण- (१क०), पूर्वं रसगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य सञ्चूर्ण्य च वज्रीक्षीरेण = शुद्धस्नुहीदुग्धेन सम्यगाप्लाव्य दृढ पिष्ट्वा च कलायसदृशी (द्विरक्तिमिता ) वटीश्चरेत् । अयं क्रिमिकाष्ठानलो रस श्लैष्मिके, श्लेष्मपित्तजन्ये, श्लेष्मवातजन्ये च क्रिमिरोगे विशेषेण हितकर ॥ १९—२१ ॥

लाक्षादिवटी—

**लाक्षाभल्लातश्रीवास-श्वेतापराजिताशिफाः ।**
**अर्जुनस्य फल पुष्प विडङ्ग सर्जगुग्गुलु ॥ २२ ॥**
**एभिः कीटाश्च शाम्यन्ते धूपितैश्च गृहे सदा ।**

**भुजङ्गा मूषिका दंशा घुणा लूताश्च मत्कुणाः ।**
**दूरादेव पलायन्ते क्लिन्नकीटाश्च ये स्मृताः ॥ २३ ॥**

अथ लाक्षादिवटीनिर्माणमाह लाक्षेत्यादि—लाक्षा-शुद्धजतु, शुद्धभल्लातकफल-चूर्ण, श्रीवासो यक्षधूपक (गन्धविरौजा), श्वेतापराजिताशिफा =श्वेतविष्णुक्रान्तामूलचूर्ण अर्जुनस्य—अर्जुनवृक्षस्य फलचूर्ण पुष्पचूर्णञ्च विडङ्गचूर्ण, सर्ज = रालचूर्ण, गुग्गुलु-शुद्धगुग्गुलु, अस्योत्पत्ति यथा—

जायन्ते पुरपादपा मरुभुवि ग्रीष्मेऽर्कसंन्तापिता ।
शीततो शिशिरेऽपि गुग्गुलुरस मुञ्चन्ति ते पञ्चधा ॥
हेमाभ महिषाक्षितुल्यमपर नत्पद्मरागोपम ।
भृङ्गाभ कुमुदद्युतिश्च विधिना ग्राह्या परीक्षा तत ॥ परीक्षा ।
वन्हौ ज्वलन्ति तपने विलय प्रयान्ति क्लिद्यन्ति कोष्णसलिले पयस समाना ।
ग्राह्या शुभा परिहरेच्चिरकालजातान् साक्षारवर्णसनपूयविगन्धवर्णान् ॥

अथास्य शोधनम्-चतुर्गुणे वस्त्रे गुग्गुलु बद्ध्वा दोलायन्त्रविधिना त्रिफलाक्वाथे गोदुग्धे वा यामैक सस्वेद्य वस्त्रपूत क्वाथमिश्र दुग्धमिश्र वा पिण्डीभूत गृह्णीयात् वस्त्रस्थञ्च मलमुत्सृजेत् । इति । एतत् प्रत्येक समभागेनादाय खल्वे पिष्ट्वा च माषकमिता वटी कृत्वा काचपात्रे स्थापयेत् । अस्या वटिकाया प्रत्यह गृहेषु धूपनेन कीटा, भुजङ्गा, मूषका, दंशा "दंशस्तु वनमक्षिका" इत्यमर, घूणा, लूता, मत्कुणा, क्लिन्नकीटा क्लिन्नस्थोत्पन्ना शीघ्र पलायन्ते । इय लाक्षादिवटी सक्रामकजीवाणुनाशने परमप्रशस्ता ॥ २२-२३ ॥

क्रिमिहरो रस —

**शुद्धसूतमिन्द्रयवमजमोदां मन शिलाम् ।**
**पलाशबीज गन्धञ्च देवदाल्या द्रवैर्दिनम् ॥ २४ ॥**
**सम्मर्द्य भक्षयेन्नित्य शालपर्णीरसै. सह ।**
**सितायुक्तं पिबेच्चानु क्रिमिपातो भवत्यलम् ॥ २५ ॥**

अथ क्रिमिहररसनिर्माणमाह शुद्धेत्यादि—शुद्धसूत, इन्द्रयवचूर्ण, अजमोदाचूर्ण, शुद्धमन शिलाचूर्ण, पलाशबीजचूर्ण, शुद्धगन्धकम् एतत् प्रत्येक समभागोदाय पारदगन्धकयो कज्जली कृत्वा शेषद्रव्याणि सम्मेल्य देवदालीद्रवैर्दिनमेकं

विमर्द्य द्विरक्तिमिता वटीश्चरेत् । अस्य रसस्य प्रत्यहमेकैका वटी सितायुक्तशालपर्णी-स्वरसेन सह सेविता क्रिमीन् पातयति । आमाशयक्षुद्रान्त्रबृहदन्त्रस्थकीटाना पातने रसोऽयमद्भुतगुणकर ॥ २४–२५ ॥

विडङ्गलौहम्—

**रस गन्धञ्च मरिच जातीफललवङ्गकम् ।**
**शुण्ठी टङ्क कणा तालं प्रत्येक भागसम्मितम् ॥ २६ ॥**
**सर्वचूर्णसमं लौहं विडङ्ग सर्वतुल्यकम् ।**
**लौहं विडङ्गकं नाम कोष्टस्थक्रिमिनाशनम् ॥ २७ ॥**
**दुर्नाम ह्यरुचिश्चैव मन्दाग्निश्च विसूचिकाम् ।**
**शोथं शूलं ज्वरं हिक्कां श्वासं कास विनाशयेत् ॥ २८ ॥**

( इति क्रिमि चिकित्सा )

अथ विडङ्गलौहनिर्माणमाह रसमित्यादि—शुद्धपारद (१तो०), शुद्धगन्धक (१तो०), मरिचचूर्ण (१तो०), जातीफलचूर्ण (१तो०), लवङ्गचूर्ण (१तो०), शुण्ठीचूर्ण (१तो०), शुद्धटङ्कण (१तो०), कणा–पिप्पलीचूर्ण (१तो०), शुद्धहरिताल-चूर्ण (१तो०), सर्वसमञ्च लौहभस्म (९तो०), तत सर्वसमञ्च विडङ्गचूर्ण (१८तो०) पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य दृढ सञ्चूर्ण्य च काच-पात्रे स्थापयेत् । एतद्विडङ्गसञ्ज्ञक लौह कोष्टस्थक्रिमीन् , दुर्नामरोगमर्श , अरुचि, मन्दाग्नि, विसूचिका, शोथ, शूल, ज्वर, हिक्का, श्वास, कासञ्च स्वस्वानुपानपूर्वक सेवितं विनिहन्ति ।। २६–२८ ॥

कोष्ठलक्षण यथा सुश्रुते "स्थानान्यामाग्निपक्वाना मूत्रस्य रुधिरस्य च । हृदुण्डुक फुप्फुसौ च कोष्ट इत्यभिधीयते ॥ इति ।

अथ क्रिमिरोगे पथ्यापथ्यविवेक —

पथ्यानि—आस्थापनं कायशिरोविरेचन धूम कफघ्नानि शरीरमार्जना ।
चिरन्तना वेणवरक्तशालय पटोलवेत्राग्ररसोनवास्तुकम् ॥ १ ॥
हुताशमन्दारदलानि सर्षपा नवीनमोच बृहतीफलानि ।
तिक्तानि नालितदलानि मौषिक मास विडङ्ग पिचुमर्दपल्लवम् ॥ २ ॥
पथ्या च तैलं तिलसर्षपोद्भव सौवीरशुक्तञ्च तुषोदकं मधु ।

पचेलिम तालमरुष्कर गवा मूत्रञ्च ताम्बूलसुरा मृगाण्डजम् ॥ ३ ॥
औष्ट्राणि मूलाज्यपयासि रामठ क्षाराजमोदा खदिरञ्च वत्सकम् ।
जम्बीरनीर सुषवी यवानिका सारा सुराह्वा गुरुशिशपोद्भवा ॥ ४ ॥
तिक्त कषाय कटुको रसोऽप्ययं वर्गो नराणा क्रिमिरोगिणा शुभ ॥५॥

अपथ्यानि—छर्दिञ्च तद्वेगविधारणञ्च विरुद्धपानाशनमह्नि निद्राम् ।
द्रवञ्च पिष्टान्नमजीर्णताञ्च घृतानि माषान् दधि पत्रशाकम्
मास पयोऽम्ल मधुर रसञ्च क्रिमीन् जिघासु परिवर्जयेच्च ॥ ६ ॥

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृताया गूढार्थ-सन्दोपिकाव्याख्याया क्रिमिचिकित्सा ॥

## अथ पाण्डु-कामला-चिकित्सा ।

निशालौहम्—

**लौहचूर्णं निशायुग्मं त्रिफला रोहिणीयुतम् ।**
**प्रलिह्यात् मधुसर्पिर्भ्यां कामलापाण्डुशान्तये ॥ १ ॥**

पुरीषजा क्रिमय पाण्डुता जनयन्ति, अत क्रिमिचिकित्सानन्तर पाण्डुरोग-चिकित्सा प्रारभ्यते तत्र प्रथम निशालौहनिर्माणमाह लौहचूर्णमित्यादि—लौहचूर्ण-लौहभस्म, एतच्च वक्ष्यमाणमिलितद्रव्याणा सम ग्राह्य (६तो०) (यद्यप्यस्य मूले सर्व-मिलितचूर्णसम प्रमाण नाक्त तथापि लौहप्राधान्यात्, पाण्डुरोगहरत्वाच्च तादृशो वृद्धोपदेश परिपालनीय )। निशायुग्म = हरिद्राचूर्ण (१तो०), दारुहरिद्राचूर्णञ्च (१तो०), त्रिफला—हरीतकीचूर्ण (१तो०) विभीतकचूर्ण (१तो०) आमलकीचूर्ण (१तो०) रोहिणी कटुकीचूर्ण (१तो०), सर्व खल्वे निक्षिप्य सञ्चूर्ण्य च काचपात्रे स्थापयेत् । इदं निशालौहचूर्ण प्रत्यह रक्तिमित विषममात्रासम्मेलितमधुसर्पिर्भ्या सह कामलारोगस्य पाण्डुरोगस्य च निवारणार्थ प्रलिह्यात् ॥ १ ॥

धात्रीलौहम्—

**धात्रीलौहरजोव्योषनिशाक्षौद्राज्यशर्कराः ।**
**भक्षणाद्य विनिघ्नन्ति कामलाञ्च हलीमकम् ॥ २ ॥**

अथ धात्रीलौहनिर्माणमाह धात्रीत्यादि—धात्री = आमलकीचूर्णं, लौहरज = लौहभस्म, व्योषं = शुण्ठीचूर्णं, मरिचचूर्णं, पिप्पलीचूर्णं, निशा = हरिद्राचूर्णं, क्षौद्रं = मधु, आज्य = गोघृतं, शर्करा = सिता प्रत्येकं सम सममादाय खल्वे दृढं पिष्ट्वा काचपात्रे स्थापयेत् । इद धात्रीलौह द्विरक्तिमित प्रत्यह मधुसर्पिर्भ्यां सह सेवितं कामला, पाण्डुरोगञ्च हन्ति ॥ २ ॥

पञ्चाननवटी—

शुद्धसूतं तथा गन्धं मृतताम्राभ्रगुग्गुलुः ।
जैपालबीजं तुल्यांशं घृतेन वटकीकृतम् ॥ ३ ॥
भक्षयेद्बदरास्थ्याभं शोथपाण्डुप्रशान्तये ।
पञ्चाननवटी ख्याता पाण्डुरोगकुलान्तिका ॥ ४ ॥

अथ पञ्चाननवटीनिर्माणमाह शुद्धसूतमित्यादि—शुद्धपारद (१तो०), शुद्धगन्धक (१तो०), मृतताम्र = ताम्रभस्म (१तो०), अभ्रकभस्म (१तो०), शुद्धगुग्गुलु (१तो०), शुद्धजयपालबीजचूर्णं (१तो०), पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य गोघृतेन सह पेषणात् पिष्टिं कृत्वा बदरास्थिप्रमाणा (द्विरक्तिमिता) वटी कृत्वा काचपात्रे स्थापयेत् । इय पञ्चाननवटी प्रत्यह मधुसर्पिर्भ्यां सह शोथस्य पाण्डुरोगस्य च प्रशान्तये सेवनेन श्रेष्ठा ॥ ३-४ ॥

प्राणवल्लभो रस —

हिङ्गुलसम्भवं सूत गन्धकं काश्मीरोद्भवम् ।
लौहं ताम्रं वराटञ्च तुत्थं हिङ्गु फलत्रिकम् ॥ ५ ॥
स्नुहीक्षीरं यवक्षारो जैपाल· दन्तिकं त्रिवृत् ।
प्रत्येकं शाणभागन्तु छागीक्षीरेण पेषयेत् ॥ ६ ॥
चतुर्गुञ्जां वटीं खादेत् वारिणा मधुना सह ।
प्राणवल्लभनामायं गहनानन्दभाषितः ॥ ७ ॥
श्लेष्मदोषं समालोक्य युक्त्या च त्रुटिवर्द्धनम् ।
निहन्ति कामलां पाण्डुमानाहं श्लीपदं तथा ॥ ८ ॥
गलगण्डं गण्डमालां व्रणानि च हलीमकम् ।
शोथं शूलमुरुस्तम्भं सङ्ग्रहग्रहणीं जयेत् ॥ ९ ॥

मर्दयेत् कनकद्रावैर्भावयेच्च घृतान्विताम् ॥ १४ ॥
वटिकां बदरास्थ्याभां कारयेत् भक्षयेत् निशि।
पाण्डुरोगहरः सोऽयं रसः कामेश्वरः स्वयम् ॥ १५ ॥

अथ कामेश्वररसनिर्माणमाह पलमित्यादि—शुद्धपारद पलमित, शुद्धगन्धक पलमित, पथ्याचूर्ण (१प०), चित्रकचूर्ण (११०), शुद्धमुस्तकचूर्ण सार्द्धैकपल, एलाबीजचूर्ण सार्द्धैकपलमित, तेजपत्रचूर्ण सार्द्धैकपलमितं, त्र्यूषण–त्रिकटुचूर्ण पृथक् २ पलमित, पिप्पलीमूलचूर्ण पलमित, शुद्धवत्सनाभचूर्ण पलमित, नागकेशरचूर्ण कर्षमितं, एरण्डचूर्ण पलमितम्। पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य मिलितद्रव्यसमम् पुरातनगुड निक्षिप्य कनकद्रावैर्धुस्तूरस्वरसैः सप्तवार भावयित्वा दृढ विमर्द्य च स्वल्प गोघृत दत्वा बदरास्थिप्रमाणा वटी ( तूर्यरक्तिमिता ) कृत्वा काचपात्रे स्थापयेत्। अथ कामेश्वरो रस पाण्डुरोग निहन्ति ॥ १२–१५ ॥

त्रिकत्रयाद्यलौहम्—

पलं लौहस्य किट्टस्य पलं गव्यस्य सर्पिषः।
सितायाश्च पलञ्चैकं क्षौद्रस्यापि पलं तथा ॥ १६ ॥
तोलकं कान्तलौहस्य त्रिकत्रयसुभावितम्।
ततः पात्रे विधातव्यं लौहे च मृण्मये तथा ॥ १७ ॥
हविषा भावितश्चापि रौद्रे च शिशिरे तथा।
भोजनादौ तथा मध्ये चान्ते चापि प्रदापयेत् ॥ १८ ॥
अनुपानं प्रदातव्यं बुद्ध्वा दोषबलाबलम्।
कामलां पाण्डुरोगञ्च सुदारुणहलीमकम्।
निहन्ति नात्र सन्देहो भास्करस्तिमिरं यथा ॥ १९ ॥

अथ त्रिकत्रयाद्यलौहनिर्माणमाह पलमित्यादि—लौहकिट्टस्य मण्डूरभस्मन (१पल), गोघृतस्य (१पल), सितायाश्चैकं पल, क्षौद्रस्य मधुन पलमेक, त्रिकत्रय–त्रिफला, त्रिमद त्रिकटु एतेषा क्वाथेन पृथक् २ बहुवार भावित तदनु हविषा—घृतेन सह भावयित्वा निदाघे छायायाञ्च पेषणयोगेन सशुष्क कृत्वा कान्तलौहभस्मनश्चैकं तोलक समादाय सर्वं सम्मेल्य काचपात्रे स्थापयेत्। लौहमिद रक्तिमितं यथादोषानुपानपूर्वकानुपानेन सह भोजनादौ भोजनमध्ये भोजनान्ते च (अर्थात् एकस्मिन्दिने

त्रिवार रक्तिकैकमात्रया लोहमिदं देयम् ) प्रत्यह सेवित कामला, पाण्डुरोग, दारुण हलीमक, नि सन्देह यथा भास्करस्तिमिर हन्ति तथैव निहन्ति ॥ १८–१९ ॥

विडङ्गादिलोहम्—

विडङ्गमुस्तत्रिफला देवदारुपट्पणैः ।
तुल्यमात्रमयश्चूर्णं गोमूत्रेऽष्टगुणे पचेत् ॥ २० ॥
तैरक्षमात्रां गुडिकां कृत्वा खादेत् दिने दिने ।
कामलापाण्डुरोगार्त्त सुखमाप्नुतेऽचिरात् ॥ २१ ॥

अथ विडङ्गादिलोहनिर्माणमाह विडङ्गमित्यादि—विडङ्गचूर्णं (१तो०), मुस्तकचूर्ण (१तो०), त्रिफलाचूर्ण पृथक् २ (१तो०), देवदारुचूर्ण (१तो०), पट्पणचूर्णं पृथक् २ तोलकैक

पिप्पली पिप्पलीमूल चव्यचित्रकनागरम् । पञ्चकोलमिदं प्राहु पञ्चोषणमथापरे ॥
पञ्चकोल समरिच पट्पणमुदाहृतम ॥

तुल्यमात्र सर्वमिलितचूर्णसममयश्चूर्णं लोहभस्म द्वादशतोलकम् । एतत् सर्वं कटाहे निक्षिप्य सर्वचूर्णतोऽष्टगुण (१९२तो०) गोमूत्र दत्वा यावद्घनता याति तावत् पचेत् । ततश्च अक्षप्रमाणा ( तोलकैकमिता ) वटी कृत्वा प्रत्यहमेकैका वटी खादेत् । अक्षप्रमाणमात्राया अधिक ततो विचार्य व्यवहरेत् । लोहमिद कामला, पाण्डुरोगञ्च हन्ति । अत्र केवल लोहचूर्णतोऽष्टगुण गोमूत्र समादाय तस्मिन् तल्लोहभस्मन पाक कृत्वा तदनु तमवतार्य विडङ्गादिचूर्णं देयमिति केचित् ॥ २०–२१ ॥

अन्यविडङ्गादिलोहम्—

विडङ्गत्रिफलाव्योषं शुद्धलोहन्तु तत्समम् ।
पुरातनगुडेनाथ लेहयेत् दिनसप्तकम् ।
श्वयथुं नाशयेत् शीघ्रं पाण्डुरोगं हलीमकम् ॥ २२ ॥

अथान्यविडङ्गादिलोहनिर्माणमाह विडङ्गमित्यादि—विडङ्गचूर्णं (१तो०), त्रिफलाचूर्णं पृथक् ३ (१तो०), व्योष–त्रिकटुचूर्णं पृथक् ३ (१तो०), सर्वचूर्णसमं शुद्धलोहं—लोहभस्म (७तो०), एतत् सर्वं खल्वे निक्षिप्य समेन गुडेन सह पिष्ट्वा तृयरक्तिमिता वटीश्चरेत् । लोहमिद सप्तदिनपर्यन्तं सेवित श्वयथु = शोथं, पाण्डुरोग, कामलाञ्च हन्ति ॥ २२ ॥

त्रैलोक्यसुन्दरो रस —

**मानञ्चकं ततः सूतं षडभ्रं वसुलौहकम् ।**
**गन्धकं त्रिफाव्योष-चूर्णं मोचरसस्य च ॥ २३ ॥**
**मुषली चामृतासत्त्वं प्रत्येकं पञ्चभागिकम् ।**
**भावयेत् सर्वमेकत्र त्रिफलानां कषायके ॥ २४ ॥**
**भावना विंशतिर्देया दशरात्रं सुभावना ।**
**शिग्रुचित्रकमूलाभ्यामष्टधा च पृथक् पृथक् ॥ २५ ॥**
**त्रैलोक्यसुन्दरो नाम रसो निष्कमितो हितः ।**
**सितया च समं क्षौद्रै. शोथपाण्डुक्षयापहः ।**
**ज्वरातिसारसंयुक्तं सर्वोपद्रवनाशनः ॥ २६ ॥**

अथ त्रैलोक्यसुन्दररसनिर्माणमाह मानमित्यादि—शुद्धपारद (१तो०) ततोऽभ्रकभस्म षड्गुण, लौहभस्म वसुमितमष्टतोलकमित्यर्थ । शुद्धगन्धक (५तो०), त्रिफलाचूर्ण पृथक् २ पञ्चतोलक, व्योषचूर्ण पृथक् २ पञ्चतोलक, मोचरसस्य (५तोलक), मुषलीचूर्ण (५तोलक), अमृतासत्व–गुडूचीसत्वं (५तोलक), पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य त्रिफलाकषायेण विंशतिवारं भावयित्वा–( एकस्मिन्दिने एका एव भावना देया ) शिग्रुमूलक्वाथेन, चित्रकमूलक्वाथेन च पृथक् २ अष्टवार भावयेत् । अथ त्रैलोक्यसुन्दररसो सितया मधुना च सह प्रत्यह निष्कमित ।

चतुर्भिर्माषकै शाण स निष्कष्टङ्क एव च ।

खल्वे सम्यगालोड्य सेवित शोथ, पाण्डु, क्षय, ज्वरम, अतीसारं सर्वोपद्रवाश्च निवारयति । अस्य रक्तिद्वयमिता मात्रा देया ॥ २३–२६ ॥

दार्व्यादिलोहम्—

**दार्वी सत्रिफलाव्योष-विडङ्गान्ययसो रजः ।**
**मधुसर्पिर्युतं लिह्यात् कामलापाण्डुरोगवान् ॥ २७ ॥**

अथ दार्व्यादिलौहनिर्माणमाह दार्वीत्यादि—दार्वी = दारुहरिद्राचूर्ण, (१तो०). त्रिफलाचूर्ण पृथक् २ (१तोलक), व्योषचूर्ण पृथक् २ (१तोलक), विडङ्गचूर्ण (१तो०) अयसो रज = लौहभस्म मिलितचूर्णसम समादाय खल्वे मर्दनयोगेन सर्वं

मितम्। पूर्वं रसगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य वाष्पयन्त्रे = तप्तखल्वयन्त्रे सर्वं निक्षिप्य अर्धपलमितेन पटोलक्काथेन भावयेत्, ततश्च क्रमश पृथक् २ अर्धपलमिते पर्पटीक्काथे, भार्गीस्वरसे, विदारीक्काथे, शतपुष्पिकाक्काथे दन्तामूलक्काथे, वासास्वरसे, कुण्डलीक्काथे = गुडूचीस्वरसे, काकमाचीस्वरसे, इन्द्रवारुणीस्वरसे, वर्षाभू-पुनर्नवा तस्या स्वरसे, केशराजस्वरसे, शालिञ्चीशाकस्वरसे, द्रोणपुष्पिकारसैश्च भावयित्वा दृढ विमर्द्य च रक्तिकैकमिता वटीश्चरेत्। अथ चन्द्रसूर्यात्मको रसो गहनानन्दनाथेन प्रोक्त। अस्य रसस्य प्रत्यहमेकैका वटी छागीक्षीरानुपानेन सह, स्विन्नतण्डुलमण्डेन, मद्येन, मुद्गयूषेण, केवल वारिणा, गुडूचीस्वरसेन, त्रिफलाक्काथेन, वासकक्काथेन वा यथादोषबल चतुर्दशदिनपर्यन्त सेविता हलीमक, सकामल पाण्डुरोग, जीर्णज्वर, विषमज्वर, अम्लपित्त, अरोचक, शूल, प्लीहवृद्धि, उदररोग, आनाह, अष्ठीलावृद्धि, गुल्म, विद्रधि, शोथ, मन्दाग्नि, हिक्का, कास, श्वास, वमि, भ्रम, भगन्दर, उपदंश, दद्रूणि, कण्डू, व्रणान्, अपची, ऊरुस्तम्भ, आमवात, दाह, तृष्णा, कटीग्रहञ्च विनिहन्ति (प्रत्यह चतुर्दशवटीसेवनमयुक्त मात्राविक्यात्) ॥ २९-३७ ॥

पाण्डुसूदनरस —

**रस गन्धं मृतं ताम्रं जयपालञ्च गुग्गुलुम्।**
**समांशमाज्यसंयुक्तां गुडिकां कारयेद्भिषक् ॥ ३८ ॥**
**एकैकां भक्षयेन्नित्यं पाण्डुशोथप्रशान्तये।**
**शीतलञ्च जलं चाम्लं वर्जयेत् पाण्डुसूदने ॥ ३९ ॥**

अथ पाण्डुसूदनरसनिर्माणमाह रसमित्यादि—शुद्धपारद (१तो०), शुद्धगन्धक (१तो०), ताम्रभस्म (१तो०), शुद्धजयपालबीजचूर्ण (१तो०), शुद्धगुग्गुलु (१तो०), पूर्वं पारदगन्धकयो कज्जली कृत्वा शेषद्रव्याणि सम्मेल्य मिलितसर्वचूर्णसमेन गोघृतेन सह विमर्द्य रक्तिपरिमिता वटीश्चरेत् अस्य रसस्य प्रत्यहमेकैका वटी पाण्डुशोथप्रशान्तये भक्षयेत्। वटीसेवनसमये शीतल जल, अम्लञ्च वर्जयेत् ॥ ३८-३९ ॥

मण्डूरवज्रवटक —

**पञ्चकोलं समरिचं देवदारु फलत्रिकम्।**

विडङ्गमुस्तयुक्ताश्च भागास्त्रिपलसम्मिताः ॥ ४० ॥
यावन्त्येतानि चूर्णानि मण्डूरं द्विगुणं ततः ।
पक्त्वा चाष्टगुणे मूत्रे घनीभूते तदुद्धरेत् ॥ ४१ ॥
ततोऽक्षमात्रान् वटकान् पिबेत् तक्रेण तक्रभुक् ।
पाण्डुरोगं जयत्याशु मन्दाग्नित्वमरोचकम् ॥ ४२ ॥
अर्शांसि ग्रहणीदोषमूरुस्तम्भमथापि वा ।
क्रिमिं प्लीहानमानाहं गलरोगञ्च नाशयेत् ।
मण्डूरवज्रनामाऽयं रोगानीकप्रणाशनः ॥ ४३ ॥

अथ मण्डूरवज्रवटकनिर्माणमाह पञ्चत्यादि—पञ्चकोल = पिप्पलीचूर्ण, पिप्पलीमूलचूर्ण, चव्यचूर्ण, चित्रकचूर्ण, शुण्ठीचूर्ण, मरिचचूर्ण, देवदारुचूर्ण, फलत्रिक = हरीतकीचूर्ण, विभीतकचूर्ण, आमलकीचूर्ण, विडङ्गचूर्ण, मुस्तकचूर्णम्, एतत् सर्व पृथक् त्रिपलमित तथा सर्वचूर्णद्विगुण मण्डूरभस्म, मण्डूरभस्मनोऽष्टगुण गोमूत्रं ग्राह्यम्, पूर्वं कटाहस्थगोमूत्रे मण्डूर पचेत् । आसन्नपाके पञ्चकोलादिकाना चूर्णं निक्षिप्य सम्यक् सम्मेल्य च अक्षमिता (१तोलकामिता) वटी कृत्वा यथारोग यथावयश्च तूर्यरत्तिकादारभ्य माषकैकमितमात्रापर्यन्त प्रत्यह तक्रानुपानेन सह पिबेत् । अय मण्डूरवज्रनामको रस पाण्डुरोग, मन्दाग्निं, अरुचि, विविधार्शांस, ग्रहणीदोष, ऊरुस्तम्भ, क्रिमिरोग, प्लीहवृद्धि, आनाह, गलरोगञ्च नाशयति ॥ ४०–४३ ॥

सम्मोहलौह —

पारदं गन्धकं लौहं विषमभ्रकमेव च ।
समांशं मरिचञ्चाष्टौ टङ्कणञ्च चतुर्गुणम् ॥ ४४ ॥
भृङ्गराजरसैश्चाम्लवेतसैः सप्त भावनाः ।
गुञ्जाद्वयं पर्णखण्डे खादेत् सायं निहन्ति च ॥ ४५ ॥
पाण्डुतामरुचिञ्चैव मन्दाग्निं ग्रहणीं ज्वरम् ।
वातश्लेष्मभवान् रोगान् जयेदचिरसेवनात् ॥ ४६ ॥

अथ सम्मोहलौहनिर्माणमाह पारदमित्यादि—शुद्धपारद १ तो०, शुद्धगन्ध-(१तो०), लौहभस्म (१तो०), शुद्धवत्सनाभचूर्ण (१ तो०) अभ्रकभस्म, मरिचचूर्ण (८ तो०), शुद्धटङ्कण (४ तो०), पूर्वं पारदगन्धकयो

कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य भृङ्गराजरसे सप्तवार भावयित्वा ततश्चाम्ल-वेतसक्वाथेन सप्तधा भावयेत्, ततश्च सम्यक् विमर्द्य च गुञ्जाद्वयमिता (द्विरक्ति-मिता) वटीं कृत्वा काचपात्रे स्थापयेत्। अथ रास पर्णखण्डेन—ताम्बूलस्वरसेन ताम्बूलवीटिकाया वा गुञ्जाद्वयमित सेवित पाण्डुता, मन्दाग्नि, अरुचि, ग्रहणी, ज्वर, वातश्लेष्मजन्यरोगाश्च नाशयति ॥ ४४–४६ ॥

सम्मोहलौह —

त्रिकटु त्रिफला वह्नि-विडङ्गे लौहमभ्रकम्।
एतानि समभागानि घृतेन वटिकां कुरु ॥ ४७ ॥
कामलां पाण्डुरोगञ्च हृद्रोगं शोथमेव च।
भगन्दरं कोष्ठक्रिमिं मन्दानलमरोचकम् ॥ ४८ ॥
तान् सर्वान् नाशयेदाशु बलवर्णाग्निवर्द्धनः।
सम्मोहलौहनामाय पाण्डुरोगे च पूजित ॥ ४६ ॥

अथ सम्मोहलौहनिर्माणमाह त्रिकेत्यादि—त्रिकटु—शुण्ठीचूर्णं, मरिचचूर्णं, पिप्पलीचूर्णं, त्रिफला = हरीतकीचूर्णं, विभीतकचूर्णं, आमलकीचूर्णं, वह्निश्चित्रक-चूर्णं, विडङ्गचूर्णं, लोहभस्म, अभ्रकभस्म एतत् सर्वं पृथक २ समभागेन समादाय खल्वे सञ्चूर्ण्य घृतेन सह पिष्ट्वा द्विरक्तिमिता वटीश्चरेत्। अथ रस प्रत्यह सेवित कामला, पाण्डुरोगं, हृदयरोग, शोथ, भगन्दर, कोष्ठक्रिमीन्, कोष्ठलक्षण यथा—
स्थानान्यामाग्निपक्वाना मूत्रस्य रुधिरस्य च। हृदुण्डुक फुप्फुसौ च कोष्ठ इत्यभिधीयते ॥
मन्दाग्नि, अरुचिं, सर्वान् रोगान यथाव्याध्यनुपानेन निहन्ति, तथा पाण्डुरोगे विशेषेण श्रेष्ठ ॥ ४७–४९ ॥

त्र्यूषणादिमण्डूरम्—

स्विन्नमष्टगुणे मूत्रे लौहकिट्टं सुशोधितम्।
पाकान्ते त्र्यूषणं वह्नि-वरादार्वीसुरद्रुमान् ॥ ५० ॥
विडङ्गबीजचूर्णञ्च मुस्तं किट्टसमं क्षिपेत्।
प्रातः कर्षं भजेदस्य जीर्णे तक्रौदकं भजेत् ॥ ५१ ॥
हलीमकं पाण्डुरोगमर्शांसि श्वयथु तथा।
ऊरुस्तम्भं जयेदेतत् कामलां कुम्भकामलाम् ॥ ५२ ॥

अथ त्र्यूषणादिमण्डूरनिर्माणमाह स्विन्नमित्यादि—सुशोधित लौहकिट्ट—मण्डूरभस्म (१पल), अष्टगुणे गामूत्रे = मण्डूरभस्मनोऽपेक्षयाऽष्टगुणे मूत्रे पचेत्, ग्व पाकेन यावद्घनता याति तदा तत्र त्र्यूषण = शुण्ठीचूर्ण (१पल), मरिचचूर्ण (१पल), पिप्पलीचूर्ण (१पल), वह्निश्चित्रकचूर्ण (१पल), वरा–हरीतकीचूर्ण (१पल), विभीतकचूर्ण (१पल), आमलकीचूर्ण (१पल), दार्वी = दारुहरिद्राचूर्ण (१पल), सुरद्रुम = देवदारुचूर्ण (१पल), विडङ्गबीजचूर्ण (१पल), इद्रमुस्तरचूर्ण (१पलञ्च) आसन्नपाके दत्वा शीघ्र लौहदर्विकया समालोड्य अवतारयेत् (यत्र पाके बहुमात्रया चूर्णाना प्रक्षेपस्तत्र आसन्नपाके एव प्रक्षेपस्तेषा प्रोक्त स्वल्पचूर्णस्य प्रक्षेपस्तु सम्यक् पाके सत्येव कार्य । तथा चोक्त--

प्रायो न पाकश्चूर्णाना भूरिचूर्णस्य तेन हि। आसन्नपाके प्रक्षेप स्वल्पस्य पाकमागते ॥ इति ।
पाकलक्षणन्तु—रमो गन्ध शुभ पाके वर्ति स्याद् गाढमर्द्दनात् ॥ इति ।

इद त्र्यूषणादिमण्डूर प्रत्यह द्विरक्तिकादारभ्य माषकमित प्रत्यह यथारोग यथावयश्च विविच्य सेवित हलीमक पाण्डुरोग, श्वयथु = शोथ, अर्शासि, ऊरुस्तम्भ, कामला, कुम्भकामलाञ्च जयेत्। पथ्यञ्च प्रहरानन्तर तक्रौदन भजेत्। अत्र त्र्यूषणादिलौहनिर्माणे सर्वचूर्णद्विगुण मण्डूरभस्म समादाय सर्वमिलितद्रव्यापेक्षया चाष्टगुणे (न केवल मण्डूरभस्मापेक्षया) गोमूत्रे मण्डूर पक्त्वा द्रवांशशोषेण घनीभूत विज्ञाय ( आसन्नपाक इत्यर्थ ) सर्वचूर्ण दत्वा किञ्चित्काल दर्व्या सर्व सम्मेल्य शीघ्र पाकमवतारयेत्, इति बहुमतम् । तथा च वाग्भट —

ताप्य दार्व्यास्त्वचश्चव्य ग्रन्थिक देवदारु च । व्योषादिनवकञ्चैव चूर्णयेद द्विगुणं तत ॥
मण्डूरञ्चाञ्जननिभ सर्वतोऽष्टगुणे पचेत् । पृथग् विपक्वे गोमूत्रे वटकीकरणक्षमे ॥
प्रक्षिप्य वटकान् कुर्यात्तान् खादेत्तक्रभोजनम् ॥ इति ।

वाग्भटटीकायाञ्च सर्वत इति मण्डूरसहितचूर्णादष्टगुण गोमूत्रमिति व्याख्यातम् । वृद्धवाग्भटेऽपि मूत्र सर्वतोऽष्टगुणमित्युक्त तस्मात् सर्वचूर्णतो द्विगुण मण्डूरभस्म–मण्डूरसहितचूर्णादष्टगुणञ्च गोमूत्रं माह्यमिति साधु पन्था ॥ ५०–५२ ॥

कामला चिकित्सा—

**पाण्डुरोगोदिता योगा घ्नन्ति ते कामलामपि ॥ ५३ ॥**

त्रिफलाया गुडूच्या वा दार्व्या निम्बस्य वा रसः ।
प्रातर्माक्षिकसंयुक्तः शीलितः कामलापहः ॥ ५४ ॥

( इति पाण्डुकामलाचिकित्सा )

पाण्डुरोगचिकित्सां कामलायामपि अतिदिशति पाण्डुरोगेत्यादि—पाण्डुरोगोदिता योगा कामलामपि निवारयन्ति तस्मात्तानत्रापि प्रयोजयेत्, विशेषेण त्रिफलास्वरसः क्वाथो वा प्रभाते माक्षिकेण=मधुना सह पीतः कामलां हन्ति, इत्येको योगः । दारुहरिद्राया स्वरसः क्वाथो वा प्रातर्मधुयुतः पीतः कामलां हन्तीति द्वितीयो योगः । गुडूच्याःस्वरसोऽपि तद्वत्सेवितः कामलां हन्तीति तृतीयो योगः । निम्बपत्रस्वरसोऽपि तद्वत्या कामलां हन्तीति चतुर्थो योगः । विशेषेण पाण्डुरोगोदितरमान् चतुर्णामुपर्युक्तयोगानामन्यतरेण सह यथादोष विविच्य सेवनेन विशेषलाभ इति दृष्टप्रत्यय ॥ ५३-५४ ॥

अथ पाण्डुरोगे पथ्यापथ्यनिर्देशः । पथ्यानि—

छर्दिर्विरेचनं जीर्णयवगोधूमशालयः । मुद्गाढकीमसूराणां यूषा जाङ्गलजा रसाः ॥
पटोलं वृद्धकुष्माण्डं तरुणं कदलीफलम् । जीवन्ती क्षुद्रमत्स्याक्षी गुडूची तण्डुलीयकम् ॥
पुनर्नवा द्रोणपुष्पी वार्ताकं लशुनद्वयम् । पक्वाम्रमभया बिम्बी शृङ्गी मत्स्या गवां जलम् ॥
धात्री तक्रं घृतं तैलं सौवीरकतुषोदके । नवनीतं गन्धसारो हरिद्रा नागकेशरम् ॥
यवक्षारो लोहभस्म कषायाणि च कुङ्कुमम् । दाहश्चरणयोः सन्धौ नाभेश्च द्व्यङ्गुलादधः ॥
मस्तके हस्तयोर्मूले मध्ये च स्तनकक्षयोः । यथादोषमिदं पथ्यं पाण्डुरोगवतां भवेत् ॥

अथापथ्यानि—

रक्तस्रुतिं धूम्रपानं वमिवेगविधारणम् । स्वेदनं मैथुनं शिम्बी पत्रशाकानि रामठम् ॥
माषोऽम्बुपानं पिण्याकस्ताम्बूलं सर्षपा सुरा । मृद्भक्षणं दिवास्वप्नं तीक्ष्णानि लवणानि च ॥
सह्यविन्ध्याद्रिजातानां नदीनां सलिलानि च । सर्वाण्यम्लानि दुष्टाम्बु विरुद्धान्यशनानि च ॥
गुर्वन्नञ्च विदाहीनि पाण्डुरोगवतां विषम् । वह्निमातपमायासमन्नपानञ्च पित्तलम् ॥
मैथुनं क्रोधमध्वानं पाण्डुरोगी सदा त्यजेत् ॥

इति पथ्यापथ्यविवेकः

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृतायां गूढार्थसन्दीपिका-व्याख्यायां पाण्डुकामलाचिकित्सा ॥

# अथ रक्तपित्त-चिकित्सा

अर्केश्वरो रसः—

मृतार्कं मृतवङ्गञ्च मृताभ्रञ्च समाक्षिकम् ।
अमृतास्वरसैर्भाव्यं पुटे त्रि सप्तक पचेत् ॥ १ ॥
वासाक्षीरविदारीभ्यां चतुर्गुञ्जाप्रमाणतः ।
भक्षणाद्धि निहन्त्याशु रक्तपित्तं सुदारुणम् ॥ २ ॥

पाण्डुरोगवद्रक्तपित्तस्यापि पित्तजन्यत्वात् पित्तरक्तकारणत्वाव्यभिचाराद्वा पाण्डुरोगचिकित्सानन्तरं रक्तपित्तचिकित्सा लिख्यते रक्तपित्तनिरुक्तिर्यथा—पित्तेन दुष्टं रक्तं रक्तपित्तम् । रक्तञ्च पित्तञ्च दुष्टं रक्तपित्तं 'रागपरिग्राम' पित्तं रक्तपित्तम् । रक्तं च तत्पित्तमिति रक्तपित्तं निरुच्यते ।

उक्तञ्च—

संयोगाद् दूषणात्तत्तु सामान्याद्गन्धवर्णयोः । रक्तस्य पित्तमाख्यातं रक्तपित्तं मनीषिभिः ॥

अथ रक्तपित्तचिकित्सायां पूर्वमूर्ध्वगे तर्पणं कृत्वा विरेचनं देयम् । अधोगे च शालपर्ण्यादिसिद्धं पेयादिकं दत्त्वा वमनार्थमौषधं देयम् । उक्तं हि—

शालपर्ण्यादिना सिद्धा पेया पूर्वमधोगते । वमनं मदनोन्मिश्रं मन्थं सक्षौद्रशर्करम् ॥

ऊर्ध्वगे तर्पणार्थञ्च यथा—

जलं खर्जूरमृद्वीकामधूकैः सपरूषकैः । शृतशीतं प्रयोक्तव्यं तर्पणार्थं सशर्करम् ॥

अथ रक्तपित्ते रसचिकित्सार्थं प्रथममर्केश्वररसनिर्माणमाह मृतेत्यादि—मृतार्क = ताम्रभस्म (१तो०), मृतवङ्ग = वङ्गभस्म (१तो०), मृताभ्रम् = अभ्रकभस्म (१तो ), सुवर्णमाक्षिकभस्म (१तो०), एतत् सर्वं समभागेनादाय खल्वे निक्षिप्य गुडूचीस्वरसैस्त्रिसप्तकमेकविंशतिवारं सम्भावयित्वा गजपुटे पचेत् । अयमर्केश्वरो रसो गुञ्जैकादारभ्य चतुर्गुञ्जमितो यथादोषं यथावयश्च वासास्वरसेन क्षीरविदारीकन्दस्वरसेन वा सह प्रत्यहं सेवितं सुदारुणं रक्तपित्तं विनिहन्ति ॥ १—२ ॥

सुधानिधि रसः—

सूतं गन्धं माक्षिकञ्चैव लौहं सर्वं घृष्ट्वा त्रैफलेनोदकेन ।
लौहे पात्रे गोमयैः पाचयित्वा रात्रौ दद्याद्रक्तपित्तप्रशान्त्यै ॥ ३ ॥

अथ सुधानिधिरसनिर्माणमाह सूतमित्यादि—शुद्धसूत, शुद्धगन्धक, स्वर्णमा-

क्षिकभस्म, लौहभस्म एतत् सर्वं पृथक् २ समभागेनादाय रसगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य त्रिफलाक्वाथेन सम्यग् भावयित्वा पुटेत् । अस्य रसस्य रक्तिमिता मात्रा त्रिफलाक्वाथानुपानेन सह सेविता रक्तपित्तं प्रशमयति । रात्रावप्येकवार रक्तिमितो रसो गोदुग्धानुपानेन सह प्रदेय । लौहे पात्रे गोमयाग्निनेति तप्तखल्वे भावना प्रदेयेति वा मूलार्थसङ्गतिः, लौहे पात्रे गोपय पाचयित्वा रात्रौ तद्दुग्धेन सह पुटपक्व सुधानिधिरस प्रयोजयेदिति वा पाठान्तरस्याशय ॥ ३ ॥

आमलाद्य लौहम्—

**आमलापिप्पलीचूर्णं तुल्यया सितया सह ।**
**रक्तपित्तहरं लौहं योगराजमिदं स्मृतम् ॥ ४ ॥**
**वृष्याग्निदीपनं बल्यमम्लपित्तविनाशनम् ।**
**पित्तोत्थानपि वातोत्थान् निहन्ति विविधान् गदान् ॥ ५ ॥**

अथ आमलाद्यलौहनिर्माणमाह आमेत्यादि—आमलकचूर्ण (१तो०), पिप्पलीचूर्णं (१तो०), उभयतुल्या च सिता ( मिश्री ) (२तो०), सर्वसमञ्च लौहभस्म (४तो०), सर्वं खल्वे सम्मेल्य काचपात्रे स्थापयेत् । पञ्चरक्तिमात्रया इदमामलाद्य लौह रक्तपित्तशान्तये प्रयोक्तव्य, तथेद लौह सर्वयोगश्रेष्ठ तथा वृष्य ( यज्जरान्या विविध्वंसि-तद्वृष्यम् ) वन्हिदीपन, बलकर, अम्लपित्तविनाशक तथा पैत्तिकान्, वातिकाश्च विविधान् रोगान् यथाव्याध्यनुपानैं निहन्ति ॥ ४–५ ॥

शतमूल्याद्य लौहम्—

**शतमूलीसिताधान्य-नागकेशरचन्दनैः ।**
**त्रिकत्रयतिलैर्युक्तं लौहं सर्वगदापहम् ।**
**तृष्णादाहज्वरच्छर्दि-रक्तपित्तविनाशनम् ॥ ६ ॥**

अथ शतमूल्याद्यलौहनिर्माणमाह शतेत्यादि—शतमूलाचूर्ण (१तो०), सिता ( मिश्री ) (१तो०), धान्यकचूर्ण (१तो०), नागकेशरचूर्ण (१तो०), रक्तचन्दनचूर्ण (१तो०), त्रिकत्रय = त्रिफलाचूर्ण प्रत्येक (१तो०), त्रिकटुचूर्णं प्रत्येकं (१तो०) त्रिमदचूर्णं प्रत्येकं तौलकैक [ विडङ्गमुस्तचित्रैश्च त्रिमद समुदाहृत ] कृष्णतिलचूर्ण (१तो०), लौहभस्म सर्वचूर्णसमं ( पञ्चदशतोलकमित्यर्थ ) सर्वं खल्वे सञ्चूर्ण्य

( चन्दनादिक्काथेन सह भावयित्वा द्विरक्तिमिता वटीश्च कृत्वा वा ) काचपात्रे स्थापयेत्। इद लौह द्विरक्तिमित प्रत्यह सेवित सर्वगदान्निहन्ति । तथा तृष्णा, दाहं, ज्वर, वमन, रक्तपित्तञ्च विनाशयति ॥ ६ ॥

अभ्रप्रयोग —

**रक्तपित्ते पिबेत् व्योम-सहित पर्पटीरसम् ॥ ७ ॥**

अथ अभ्रकप्रयोगमाह रक्तपित्त इत्यादि—रक्तिमितमभ्रकभस्म पर्पटरसेन सह विलोड्य रक्तिपित्ते प्रत्यह दद्यात् ॥ ७ ॥

वासादि —

**वासाद्राक्षाऽभयानाञ्च क्काथं वा शर्कराऽन्वितम् ।**
**योगवाहिरसान् सर्वान् रक्तपित्ते प्रयोजयेत् ॥ ८ ॥**

अथ वासादियोगमाह वासेत्यादि—आहोस्वित् शर्करान्वितवासास्वरसेन, द्राक्षाक्काथेन, अभयाक्काथेन वा सह अभ्रकभस्म दद्यात् । तथा रक्तपित्ते योगवाहिरसान पृथक् २ शतमूल्यादिलौहेन वा सह प्रयोजयेत् ॥ ८ ॥

रक्तपित्तान्तको रस —

**मृताभ्रं मुण्डतीक्ष्णञ्च माक्षिक रसतालकम् ।**
**गन्धकञ्च भवेत् तुल्य यष्टिद्राक्षाऽमृताद्रवै. ॥ ६ ॥**
**दिनैक मर्दयेत् खल्ले सिताक्षौद्रसमन्वितम् ।**
**माषमात्र निहन्त्याशु रक्तपित्त सुदारुणम् ।**
**ज्वर दाह क्षतक्षीण तृष्णाशोषमरोचकम् ॥ १० ॥**

अथ रक्तपित्तान्तकरसनिर्माणमाह मृताभ्रमित्यादि—मृताभ्रमभ्रकभस्म, मुण्डतीक्ष्णञ्च = मुण्डलौहभस्म, तीक्ष्णलौहभस्म, माक्षिक = स्वर्णमाक्षिकभस्म, रसतालक = शुद्धरस , शुद्धतालकञ्च, शुद्धगन्धकम् । प्रत्येक समभागेनादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य यष्टिक्काथेन मधुयष्टिक्काथेन, द्राक्षाक्काथेन, अमृता = गुडूची तस्या स्वरसेन पृथक् २ सम्यगाप्लाव्य दिनैक मर्दयित्वा रक्तिमिता वटीश्चरेत् । अथ रसो माषमात्र प्रायो रक्तिमित ( माष—उड़द ) प्रत्यह सिताक्षौद्रसमन्वित सेवितो दारुण रक्तपित्त, ज्वर, दाह, क्षतक्षीण, ( क्षतमुर क्षतं, क्षीण—

शोषरोग वा ) तृष्णा, शोष, अरोचकञ्च निहन्ति। ( रसतालकमिति केवलं हरितालमेवेति केचित् ) ॥ ९-१० ॥

रसामृतरस —

रसस्य द्विगुणं गन्धं माक्षिकञ्च शिलाजतु।
गुडूचीं चन्दनं द्राक्षां मधुपुष्पञ्च धान्यकम् ॥ ११ ॥
कुटजस्य त्वचं वीजं धातकी निम्बपत्रकम्।
यष्टीमधुसमायुक्तं मधुशर्करयाऽन्वितम् ॥ १२ ॥
विधिना मर्दयित्वा तु कर्षमात्रन्तु भक्षयेत्।
धारोष्णपयसा युक्तं प्रातरेव समुत्थितः ॥ १३ ॥
पित्तं तथाऽम्लपित्तञ्च रक्तपित्तं विशेषत।
निहन्ति सर्वदोषञ्च ज्वर सर्वं न संशय.।
रसामृतरसो नाम गहनानन्दभाषितः ॥ १४ ॥

अथ रसामृतरसनिर्माणमाह रसस्येत्यादि—शुद्धपारद (१तो०), शुद्धगन्धक (२तो०), स्वर्णमाक्षिकभस्म (१तो०), शुद्धशिलाजतु (१तो०), गुडूचीचूर्ण (१तो०), रक्तचन्दनचूर्ण (१तो०), द्राक्षा (१तो०), मधुपुष्प-मधूकपुष्पचूर्ण (१तो०), धान्यकचूर्ण (१तो०), कुटजत्वक्चूर्ण (१तोला), कुटजबीज-इन्द्रयव-चूर्ण (१तोला) धातकीपुष्पचूर्ण (१तो०), निम्बपत्रचूर्ण (१तो०), यष्टिमधुचूर्ण (१तो०), पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य सम्यक् पिष्ट्वा च काचपात्रे स्थापयेत्। अथ रस प्रत्यह चतुर्गुञ्जादारभ्य यथावयश्च माषैकमित प्रत्यह मधुशर्कराभ्या सह प्रातर्धारोष्णदुग्धानुपानपूर्वकं सेवित पित्तविकार, अम्लपित्त, विशेषतश्च रक्तपित्ता तथा सर्वदोषज ज्वरञ्च निहन्ति। अय रसामृतरसो गहनानन्देन प्रोक्त ॥ ११-१४ ॥

खण्डकूष्माण्डक —

कूष्माण्डकात् पलशतं सुस्विन्नं निष्कुलीकृतम्।
पचेत् तप्ते घृतप्रस्थे शनैस्ताम्रमये दृढे ॥ १५ ॥
यदा मधुनिभः पाकः न्यस्येत् खण्डशतं तदा-
पिप्पली-शृङ्गवेराभ्यां द्वे पले जीरकस्य च ॥ १६ ॥

त्वगेलापत्रमरिच-धान्यकानां पलार्द्धकम् ।
न्यस्येत् चूर्णीकृत तत्र दर्व्या सङ्घट्टयेत् मुहुः ॥ १७ ॥
तत् पक्व स्थापयेत् भाण्डे दत्त्वा क्षौद्र घृतार्द्धकम् ।
तद् यथाऽग्निबल खादेद् रक्तपित्ती क्षतक्षयी ॥ १८ ॥

अथ खण्डकुष्माण्डकनिर्माणमाह कुष्माण्डेत्यादि—निष्कुलीकृतमिति श्वेतकुष्माण्ड सुपक्व त्वगस्थिवीजरहित कृत्वा भाण्डे निक्षिप्य किञ्चिज्जलञ्च दत्वा मृद्वीभवनपर्यन्त किञ्चित्कालं वन्हौ पचेत्, तदनु तमवतार्य शुद्धे क्षौमे वस्त्रे (शुद्धश्वेतवस्त्रे वा) संस्थाप्य निष्पीड्य च निदाघे मनाक् मशोष्य पिष्ट्वा च पलशत (एवविध कुष्माण्डकात् पलशत ग्राह्यम् ) गृहीत्वा ताम्रकटाहे प्रस्थमितं घृत निक्षिप्य मन्दाग्निना कुष्माण्ड पचेत्, यदा च पाकयोगेन कुष्माण्डचूर्णं मधुसम रक्तवर्णमाप्नुयात्तदा तस्मिन शतपलमिता शर्करा दत्वा पाकविधिना पाक कुर्यात् । आसन्नपाके च पिप्पलीचूर्णं(२पल),शृङ्गवेरचूर्णं=शुण्ठीचूर्णं(२पल),श्वेतजीरकस्य पलद्वयं, तथा त्वक्-दारुसिताचूर्णं, एलाबीजचूर्णं, तेजपत्रचूर्णं, मरिचचूर्णं, धान्यकचूर्णञ्च प्रत्येकमर्द्धपलं दत्वा दर्विक्या सम्यगालोड्य शीघ्रमवतारयेत् । ततश्च मृण्मये भाण्डे पाक निधाय स्वाङ्गशीते घृतार्द्धमर्द्धप्रस्थमित क्षौद्र = मधु दत्वा स्थापयेत् । इद खण्डकुष्माण्डक प्रत्यह यथाग्निबल मात्रा प्रकल्प्य प्रभाते रक्तपित्ती, क्षतक्षयी च भक्षयेत् ॥१५-१८॥

शर्कराद्य लौहम्—

शर्करातिलसयुक्तं त्रिकत्रययुतन्त्वयः ।
रक्तपित्त निहन्त्याशु चाम्लपित्तहर परम् ॥ १९ ॥

अथ शर्कराद्यलौहनिर्माणमाह शर्करेत्यादि—शर्करा (१तो०), तिलचूर्णं (१तो०) त्रिकत्रय-त्रिफलाचूर्णं पृथक्२ (१तो०), त्रिकटुचूर्णं पृथक्२ (१तो०), त्रिमदचूर्णं पृथक्२ (१तो०), अयः लौहभस्म च सर्वचूर्णसम (एकादशतोलकमित्यर्थ )समादाय सर्वं खल्वे मर्दनयोगेन सम्मर्द्य काचपात्रे स्थापयेत् । लौहमिद प्रत्यह यथाग्निबलं द्विरक्तिमित वा सेवित रक्तपित्तमम्लपित्तञ्च निहन्ति ॥ १९ ॥

समशर्करलौहम्—

लौहाच्चतुर्गुण क्षीरमाज्य द्विगुणमुत्तमम् ।
चूर्ण पादन्तु वैडङ्ग दद्यात् मधुसिते समे ॥ २० ॥

ताम्रपात्रे दृढे पक्त्वा स्थापयेत् घृतभाजने ।
माषकादिक्रमेणैव भक्षयेत् विधिपूर्वकम् ॥ २१ ॥
अनुपानं प्रयुञ्जीत नारिकेलोदकादिकम् ।
रक्तपित्तं जयेत् तीव्रमम्लपित्तं क्षतक्षयम् ।
प्रहृष्टकान्तिजननमायुष्यमुत्तमोत्तमम् ॥ २२ ॥

अथ समशर्करलौहनिर्माणमाह लौहादित्यादि—लौहभस्म (४तो०), क्षीरं गोदुग्ध (१६तो०) उत्तममाज्य-गोघृत द्विगुण (८तो०), विडङ्गचूर्ण पादं (१तो०) ( लौहापेक्षया पादमिति ) मधुसिते समे—लौहसम मधु (४तो०), लौहसमञ्च सिता ( ४तो० ), पूर्वं ताम्रपात्रे ( ताम्रकटाहे ) दुग्धं घृत लौहभस्म च निक्षिप्य पचेत् । आसन्नपाके च विडङ्गचूर्णं दत्वा सम्यक् सम्मेल्य अवतारयेत् । स्वाङ्गशीते मधु शर्कराञ्च दत्वा घृतस्निग्धे मृण्मये भाण्डे स्थापयेत् । इदं समशर्करलौह प्रत्यह विधिपूर्वक माषकादिक्रमेण ( गुञ्जैकादारभ्य चतुर्गुञ्जमिता मात्रा समुचिता नाधिका । माषशब्दोऽत्र उड़दवाचको ज्ञेय इति केचित् । तथापि काष्ठचूर्णस्याधिक्यात् यथाग्निबलञ्च माषैकादारभ्य शाणमित सेवितु शक्यते) नारिकेलाम्बुनोऽनुपानपूर्वक सेवित रक्तपित्त, दारुणमम्लपित्त, क्षतक्षय च हन्ति, देहकान्ति जनयति, वयश्च वर्द्धयति । ताम्रपात्रे दुग्धादिकस्य पाक प्राचीनपरम्परया विरूद्ध्यते चेल्लौहपात्रे एव पाक कर्तव्य ॥ २०-२२ ॥

कपर्दको रस —

मृतं वा मूर्च्छितं सूतं कार्पासकुसुमद्रवैः ।
मर्दयेत् दिनमेकन्तु तेन पूर्या वराटिका ॥ २३ ॥
निरुध्य चान्ध्रमूषायां भाण्डे रुद्ध्वा पुटे पचेत् ।
उद्धृत्य चूर्णयेत् श्लक्ष्णं मरिचैर्द्विगुणैः सह ॥ २४ ॥
गुञ्जामात्र घृतेनैव भक्षयेत् प्रातरुत्थित ।
उडुम्बरं घृतञ्चैव ह्यनुपानं प्रयोजयेत् ।
कपर्दकरसो नाम्ना रक्तपित्तविनाशनः ॥ २५ ॥

अथ कपर्दकरसनिर्माणमाह मृतमित्यादि—मृत सूत = रससिन्दूरं, मूर्छितम्वा सूतमिति समभागपारदगन्धकनिर्मितकज्जलीं कार्पासपुष्पस्वरसैराप्लाव्य दिनमेकं वि-

मर्थं संशुष्कञ्च कृत्वा तेन वराटिका पूरणीया, ततश्च वराटिकानां मुखं अजादुग्धपिष्टटङ्कणपङ्केन निरुध्य, ताश्चान्धमूषायां निक्षिप्य ताञ्च मृण्मये भाण्डे संस्थाप्य भाण्डमुखमपि रुद्ध्वा गजपुटे पचेत् (स्वल्पं भाण्डं ग्राह्यं यस्मिन्कपर्दयुक्तमूषासमावेशः स्यात्) स्वाङ्गशीतं भेषजं भाण्डान्निष्कास्य तेन द्विगुणितं मरिचचूर्णं समादाय खल्वे सूक्ष्मं चूर्णयित्वा काचपात्रे स्थापयेत्। अयं कपर्दको रसः प्रत्यहं गुञ्जामितो घृतेन सह सेवितस्तदुपरि च सघृतोडुम्बरकाथानुपानेन रक्तपित्तं विनाशयति, ॥ २३–२५ ॥

नीलोत्पलादि चूर्णम्—

**नीलोत्पलसिताक्षौद्र-संयुक्तं पद्मकेशरम्।**
**तण्डुलोदकपानेन रक्तपित्तं नियच्छति॥ २६ ॥**

( इति रक्तपित्त-चिकित्सा )

अथ नीलोत्पलादिचूर्णमाह नीलोत्पलेत्यादि—नीलोत्पलसिताक्षौद्रसंयुक्तं पद्मकेशरचूर्णं तण्डुलोदकपानेन सह सेवितं रक्तपित्तं विनिहन्ति ॥ २६ ॥

अथ रक्तपित्ते साधारणपथ्यं —

शालिषष्टिकनीवारकोरदूष-प्रसातिकाः। श्यामाकश्च प्रियङ्गुश्च भोजनं रक्तपित्तिनाम्॥१॥
मसूरमुद्गचणकाः समुकुष्टाटकीफलाः। प्रशस्ताः सूपयूषार्थं कल्पिता रक्तपित्तिनाम्॥२॥

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृतायां गूढार्थसन्दीपिकाव्याख्यायां रक्तपित्तचिकित्सा।

## अथ यक्ष्म-चिकित्सा।

रास्नादिलौहम्—

**रास्नाऽश्वगन्धाकर्पूर-भेकपर्णीशिलाह्वयैः।**
**त्रिकत्रयसमायुक्तैः लौहं यक्ष्मान्तकृन्मतम्॥ १ ॥**
**सर्वोपद्रवसंयुक्तमपि वैद्यविवर्जितम्।**
**हन्ति कासं स्वराघातं राजयक्ष्मक्षतक्षयम्।**
**बलवर्णाग्निपुष्टीनां वर्द्धनं दोषनाशनम्॥ २ ॥**

राजयक्ष्मरुपेषु पित्ताद्रक्तस्य चागम इति रक्तपित्तानन्तरं यक्ष्मचिकित्सा प्रारभ्यते। तत्र पूर्वं रास्नादिलोहनिर्माणमाह रास्नेत्यादि—रास्नाचूर्णं, अश्वगन्धाचूर्णं, कर्पूर, भेकपर्णाचूर्णं, शिलाजतु, त्रिकत्रय त्रिफलाचूर्णं, त्रिकटुचूर्णं, त्रिमदचूर्णम्, एषु प्रत्येकं तोलकैकमितं, लौहभस्म च सर्वतुल्यं समादाय खल्वे सम्यक् चूर्णयित्वा काचपात्रे स्थापयेत्। इदं रास्नादिलौह यक्ष्मरोग निहन्ति, तथा सर्वोपद्रवसंयुक्तं वैद्यविवर्जितञ्च कास, स्वराघात, राजयक्ष्माण, क्षतक्षयञ्च विनिहन्ति तथेद बलवर्णाग्निपुष्टीना वर्द्धक, तथा प्रत्यह द्विरक्तिमितो घृतेन मधुना च सह सेवित सर्वदोषनाशक ॥ १-२ ॥

राजमृगाङ्को रस —

रसभस्म त्रयो भागा भागैकं हेमभस्मकम् ।
मृततारस्य भागैकं शिलागन्धकतालकम् ॥ ३ ॥
प्रतिभागद्वयं शुद्धमेकीकृत्य विचूर्णयेत् ।
वराटिका तेन पूर्य्या चाजाक्षीरेण टङ्कणम् ॥ ४ ॥
पिष्ट्वा तेन मुखं रुद्ध्वा मृद्भाण्डे तां निरोधयेत् ।
शुष्कं गजपुटे पाच्यं चूर्णयेत् स्वाङ्गशीतलम् ॥ ५ ॥
दशपिप्पलिकैः क्षौद्रैर्मरिचैर्वा घृतान्वितैः ।
गुञ्जाचतुष्टयञ्चास्य क्षयरोगप्रशान्तये ॥ ६ ॥
सघृतैर्दापयेद्वाऽथ वातश्लेष्मभवे क्षये ।
रसो राजमृगाङ्कोऽयं नानारोगनिसूदन ॥ ७ ॥

अथ राजमृगाङ्करसनिर्माणमाह रसेत्यादि—रसभस्म-रससिन्दूर (३तो०), हेमभस्म=सुवर्णभस्म (१तो०), मृततारस्य रजतभस्मन (१तोलक), तथा शुद्धमन शिला (२तो०), शुद्धगन्धक (२तो०), शुद्धतालक (२तो०), पूर्वं रससिन्दूरगन्धकयो कज्जलीमिव मर्दनं कृत्वा शेषद्रव्याणि सम्मेल्य सम्यक् सूक्ष्म चूर्णयित्वा तेन शुद्धवराटिका प्रपूर्य तासा मुखञ्च छागीक्षीरपिष्टटङ्कणपङ्केन सन्निरुध्य लघुहण्डिकायां ते, पाया वा कपर्दिका संस्थाप्य हण्डिकामुखसन्धिबन्धन च कृत्वा गजपुटे पचेत्। ततश्च स्वाङ्गशीतल भेपज कपर्दसमेत खल्वे विचूर्ण्य काचपात्रे स्थापयेत्। अस्य रसस्य रक्तिकैकादारभ्य यथाग्निबल तूर्यरक्तिमितं भाग पिप्पलीचूर्णमधुभ्यां, मरिचचूर्णघृताभ्यां वा क्षयरोगप्रशान्तये दद्यात्। वातश्लेष्मजे क्षये सघृतोऽयं रसो देय ।

यथाव्याध्यनुपानैरय रसो नानारोगनाशक । मूले दशपिप्पलिकैस्सह रसमेनं दद्यादिति यत्प्रोक्त तत्साम्प्रतमयोग्यम्, क्षारपिप्पलीत्यादिकद्रव्याणामधिकसेवनस्य वर्ज्यत्वात् । तस्मात् मरिचपिप्पलीचूर्णं द्विरक्तिमित ग्राह्यम् । गुञ्जाचतुष्टयञ्च सर्वत्र नैव प्रयोज्यम् । यथाग्निवलानुसारेणैव विविच्य मात्रा कल्पयेत् (कपर्दिकाथ शुद्धा ग्राह्या )॥ ३–७॥

मृगाङ्को रस —

स्याद्रसेन सम हेम मौक्तिक द्विगुणं भवेत् ।
गन्धकञ्च सम तेन रसतुल्यन्तु टङ्कणम् ॥ ८ ॥
तत्सर्वं गोलक कृत्वा काञ्जिकेन च पेषयेत् ।
भाण्डे लवणपूर्णेऽथ पचेद् यामचतुष्टयम् ॥ ९ ॥
मृगाङ्कसंज्ञको ज्ञेयो राजयक्ष्मनिकृन्तन ।
गुञ्जाचतुष्टयञ्चास्य मरिचै· सह भक्षयेत् ॥ १० ॥
पिप्पलीदशकैर्वाऽपि मधुना सह लेहयेत् ।
पथ्यन्तु लघुभिर्मांसै· प्रयोगेऽस्मिन् प्रयोजयेत् ॥ ११ ॥
व्यञ्जनैर्घृतपक्वैश्च नातिक्षारैरहिङ्गुभिः ।
एलाऽजाजीमरीचैस्तु संस्कृतैरविदाहिभि ॥ १२ ॥
वृन्ताकविल्वतैलानि कारवेल्लञ्च वर्जयेत् ।
स्त्रिय परिहरेद् दूर कोपञ्चापि विवर्जयेत् ॥ १३ ॥

अथ मृगाङ्करसनिर्माणमाह स्यादित्यादि—शुद्धपारद (१तो०), रसेन समञ्च हेम = स्वर्णभस्म (१तो०), मौक्तिकभस्म (२तो०), शुद्धगन्धकं तेन मुक्ताभस्मना सम (२तो०), शुद्धटङ्कण रसतुल्यं (१तो०), समादाय पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य काञ्जिकेन सह पिष्ट्वा गोलकं कुर्य्यात् । ततश्च मूषाया गोलक निधाय दृढ सन्धिवन्धनञ्च कृत्वा लवणपूरितार्द्धभागभाण्डमध्ये मूषा संस्थाप्य भाण्डावकाश लवणेन प्रपूर्य भाण्डमुखमवरूध्य यामचतुष्टय चुल्या पचेत् । स्वाङ्गशीत खल्वे विचूर्ण्य काचपात्रे स्थापयेत् । अय राजमृगाङ्कसंज्ञको रस प्रत्यहं गुञ्जैकादारभ्य गुञ्जाचतुष्टयमितो मरिचचूर्णेन मधुना, द्विरक्तिमितपिप्पलीचूर्णेन मधुना वा सह सेवितो यक्ष्माण निहन्ति, मृगाङ्कसेवी जनो लघुभि सुपाच्यैर्मांसैस्सह भोजनं कुर्यात् । हिङ्गुरहितै स्वल्पक्षारयुक्तैर्घृतपक्वै रविदाहकरै र्हृदेलाऽजाजीमरिचसंस्कृतै-

र्व्यञ्जनैर्वा सह लघु भोजन कुर्यात् । तथा वृन्ताकशाक, विल्व, तैलं, कारवेल्लशाक, शोप, स्त्रियश्च वर्जयेत् ॥ ८–१३ ॥

रत्नगर्भपोट्टलीरस —

रसं वज्रं हेम तारं नाग लौहञ्च ताम्रकम् ।
तुल्यांश मरिचं देयं मुक्ताविद्रुममाक्षिकम् ॥ १४ ॥
शङ्खं तुत्थञ्च तुल्यांशं सप्ताह चित्रकद्रवैः ।
मर्दयित्वा विचूर्ण्याथ तेन पूर्य्या वराटिका ॥ १५ ॥
टङ्कण रविदुग्धेन मुखं लिप्त्वा निरोधयेत् ।
मृद्भाण्डे तां निरुध्याथ सम्यग्गजपुटे पचेत् ॥ १६ ॥
आदाय चूर्णयेत् सर्वं निर्गुण्ड्या सप्त भावयेत् ।
आर्द्रकस्य रसैः सप्त चित्रकस्यैकविंशतिः ॥ १७ ॥
द्रवैर्भाव्यं ततः शोष्य देय गुञ्जाचतुष्टयम् ।
क्षयरोग निहन्त्याशु साध्यासाध्यं न संशयः ॥ १८ ॥
योजयेत् पिप्पलीक्षौद्रैः सघृतैर्मरिचैस्तथा ।
महारोगाष्टके कासे श्वासे चैवातिसारके ।
पोट्टली रत्नगर्भेय सर्वरोगहरा मता ॥ १९ ॥

अथ रत्नगर्भपोट्टलीरसनिर्माणमाह रसमित्यादि--रस = रससिन्दूर, वज्र = हीरक भस्म, हेम = स्वर्णभस्म, तारं = रजतभस्म, नागभस्म, लौहभस्म, ताम्रभस्म, मरिच चूर्ण, मुक्ताभस्म, विद्रुम = प्रवालभस्म, माक्षिकं = स्वर्णमाक्षिकभस्म, शङ्खभस्म, शुद्धतुत्थकचूर्णञ्च, एषा प्रत्येक समभागेनादाय पूर्वं रससिन्दूरस्य मर्दन कृत्वा शेषद्रव्याणि सम्मेल्य सप्तदिन चित्रकक्वाथेनाप्लाव्य दृढ विमर्द्य संशोष्य च परिशुद्धकपर्दिकाया प्रपूर्य मदारदुग्धपिष्टटङ्कणपङ्केन कपर्दिकामुखबन्धन कृत्वा मृण्मयलघुभाण्डे मूषाया वा कपर्दिका संस्थाप्य सन्धिबन्धन कृत्वा गजपुटे पचेत् । स्वाङ्गशीत स कपर्द्द चूर्ण समादाय खल्वे विमर्द्य सप्तवारं निर्गुण्डीपत्रस्वरसेन भावयित्वा आर्द्रकस्वरसेन सप्तवारं भावयेत् । ततश्चैकविंशतिवार चित्रकक्वाथेन भावयित्वा दृढ विमर्द्य संशोष्य च काचपात्रे स्थापयेत् । अथ रसो गुञ्जैकादारभ्य गुञ्जाचतुष्टयमित प्रत्यह द्विगुञ्जपिप्पलीचूर्णेन मधुना च द्विगुञ्जमरिचचूर्णेन तथा घृतेन वा सह सेवित साध्यम

साध्य वा क्षयरोग हन्ति, तथाऽयं रत्नगर्भपोट्टलीरसो महारोगाष्टके, कासे, श्वासे, अतीसारे च यथादोषानुपाने सह प्रयोज्य । सर्वचूर्णपूरणं भवेत्तावन्त्य कपर्दिका ग्राह्या ।

अष्टौ महारोगा यथा सुश्रुते—

वातव्याधि प्रमेहश्च कुष्ठमर्शो भगन्दरम् । अश्मरीमूढगर्भश्च तथैवोदरमष्टमम ॥
अष्टावेते प्रकृत्यैव दुश्चिकित्स्या महागदा ॥ इति ॥ १८- १ ॥

लोकेश्वरपोट्टलीरस —

रसस्य भस्मना हेम पादांशेन प्रकल्पयेत् ।
द्विगुण गन्धक दत्त्वा मर्दयेत् चित्रकाम्बुना ॥ २० ॥
पूर्य्या वराटिका तेन टङ्कणेन निरुध्य च ।
भाण्डे चूर्णप्रलिप्तेऽथ क्षिप्त्वा रुद्ध्वा च मृण्मये ॥ २१ ॥
शोषयित्वा पुटेद् गर्त्तेऽरत्निमात्रेऽपराह्णके ।
स्वाङ्गशीत समुद्धृत्य चूर्णयित्वा तु विन्यसेत् ॥ २२ ॥
एष लोकेश्वरो नाम्ना वीर्य्यपुष्टिविवर्द्धन ।
गुञ्जाचतुष्टयञ्चास्य पिप्पलीमधुसयुतम् ॥ २३ ॥
मरिचैर्घृतयुक्तैश्च भक्षयेद्दिवसत्रयम् ।
अङ्गकार्श्येऽग्निमान्द्ये च कासे पित्ते क्षयेऽपि च ॥ २४ ॥
लवण वर्जयेत् तत्र साज्य दधि च योजयेत् ।
एकविंशद्दिन यावत् सघृत मरिच पिबेत् ।
पथ्य मृगाङ्कवद्देय शयीतोत्तानपादत. ॥ २५ ॥
ये शुष्का विषमाशनै क्षयरुजा व्याप्ताश्च येऽप्सुलीलया
पाण्डुत्वेन हता कुवैद्यविधिना ये चाग्निना दुर्भगाः ।
ये तप्ता विविधज्वरै. श्रममदोन्मादै प्रमाद गताः ।
ते सर्वे विगतामया हतरुज स्युः पोट्टलीसेवनात् ॥ २६ ॥

अथ लोकेश्वरपोट्टलीरसनिर्माणमाह रसस्येत्यादि—रसस्य भस्मना = तोलकप्रमितरससिन्दूरेण हेम = स्वर्णभस्म पादांशेन (मापकत्रयेणेत्यर्थ ) प्रकल्प्य रसापेक्षया द्विगुण शुद्धगन्धकं समादाय पूर्वं रससिन्दूरगन्धकयो कज्जलीं कृत्वा हेमभस्म सम्मेल्य चित्रकक्वाथेन सम्यगाप्लाव्य दृढं विमर्द्य सशोष्य च तेन शुद्धवराटिका प्रपूर्य शु

द्रवविदुग्धपिष्टटङ्कणपङ्केन तासां मुखञ्च निरुध्य चूर्णोदकलिप्ताभ्यन्तरप्रदेशे लघुमृण्मयभाण्डे ता क्षिप्त्वा तन्मुखञ्च शरावेण सन्धिवन्धनपूर्वकं रुद्ध्वा सशोष्य च अन्होऽपरकाले गजपुटे पचेत् । स्वाङ्गशीतं तमौषधं खल्वे सञ्चूर्ण्य काचपात्रे स्थापयेत् । एष लोकेश्वरो रसो वीर्य्यं, पुष्टिञ्च वर्द्धयति । अयं रसो गुञ्जैकादारभ्य चतुर्गुञ्जमितं पिप्पलीचूर्णेन मधुना च सह, मरिचचूर्णेन घृतेन वा सह दिवसत्रयं सेवितः शरीरकार्श्यं, वन्हिमान्द्यं, कासं, पित्तविकारं, क्षयञ्च विनिहन्ति । लवणं वर्जयेत् । तथा सघृतं दधियुक्तञ्च लघुभोजनं देयम् । अयं रस एकविंशतिदिनपर्यन्तं घृतेन मरिचचूर्णेन च सह सेवनेन विषमाशनशुष्का, क्षयरोगेण ग्रस्ता, अष्ठीलाग्रन्थिवृद्ध्या पाण्डुरोगेण च पीड़िता, आधिना मानसिकरोगैश्च पीडितास्तथा दुर्भगा सौन्दर्यादिरहिता, विविधैर्ज्वरैश्च प्रतप्ता, तथा मानसिकश्रमेण मदोन्मादाभ्याञ्च उन्मादरोगमुपगतास्ते सर्वे विगतामया हतरुजश्च भवन्ति । एषु रोगेषु पथ्यं मृगाङ्कवर्द्देय शयनञ्चोत्तानं प्रशस्तम् ॥ २०–२६ ॥

कनकसुन्दरो रस —

रसस्य तुर्य्यभागेण हेमभस्म प्रयोजयेत् ।
मनःशिला गन्धकश्च तुत्थं माक्षिकतालकम् ॥ २७ ॥
विषं टङ्कणकं सर्वं रसतुल्यं प्रदापयेत् ।
मर्द्दयेत् सर्वमेकत्र खल्लपात्रे च निर्मले ॥ २८ ॥
जयन्तीभृङ्गराजोत्थैः पाठाया वासकस्य च ।
अगस्तिलाङ्गलाग्नीनां स्वरसैश्च पृथक् पृथक् ॥ २९ ॥
भावयित्वा विशोष्याथ पुनश्चार्द्रकवारिणा ।
सप्तधा भावयित्वा च रसः कनकसुन्दरः ॥ ३० ॥
गुञ्जाद्वयं त्रयं वाऽस्य राजयक्ष्मप्रशान्तये ।
मधुना पिप्पलीभिर्वा मरिचैर्वा घृतान्वितम् ॥ ३१ ॥
सन्निपाते प्रदातव्यमार्द्रकस्य रसेन वै ।
जयपालरजोभिर्वा गुल्मिने शूलरोगिणे ॥ ३२ ॥
अम्लवर्ज्जं चरेत् पथ्यं बल्यं हृद्यं रसायनम् ।
वर्जयेल्लवणं हिङ्गु तक्रं दधि विदाहि यत् ॥ ३३ ॥

अथ कनकसुन्दररसनिर्माणमाह रसस्येत्यादि—रसस्य शुद्धपारदस्य (१तोलक),

मौक्तिकं विद्रुमं शङ्ख भस्म देयं समांशिकम् ॥ ३७ ॥
हेमभस्मार्द्धभागञ्च सर्वं खल्ले विमर्द्दयेत् ।
निम्बुद्रवेण संपिष्य पिण्डिकां कारयेत् ततः ॥३८॥
पश्चात् गजपुटं दत्त्वा सुशीतञ्च समुद्धरेत् ।
हेमभस्मसमं तीक्ष्णं तीक्ष्णार्द्धं दरदं मतम् ।३९॥
एकीकृत्य समस्तानि सूक्ष्मचूर्णानि कारयेत् ।
ततः पूजां प्रकुर्वीत रसस्य दिवसे शुभे ॥ ४० ॥
सर्वाङ्गसुन्दरो ह्येष राजयक्ष्मनिकृन्तनः ।
वातपित्तज्वरे घोरे सन्निपाते सुदारुणे ॥ ४१ ॥
अर्शःसु ग्रहणीदोषे मेहे गुल्मे भगन्दरे ।
निहन्ति वातजान् रोगान् श्लैष्मिकांश्च विशेषतः ॥ ४२ ॥
पिप्पलीमधुसंयुक्तं घृतयुक्तमथापि वा ।
भक्षयेत् पर्णखण्डेन सितया चार्द्रकेण वा ॥ ४३ ॥

अथ सर्वाङ्गसुन्दररसनिर्माणमाह गन्ध इत्यादि—शुद्धगन्धकं (१तो०), शुद्ध-पारद (१तो०), शुद्धटङ्कणस्य द्वितोलकं, मौक्तिकभस्म (१तो०), विद्रुम = प्रवाल-भस्म (१तो०), शङ्खभस्म (१तो०), स्वर्णभस्म अर्द्धतोलकम् । पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य सञ्चूर्ण्य निम्बूरसेन सम्मर्द्य पिण्डिका कृत्वा संशोष्य मूषाया रुद्ध्वा च गजपुटे पचेत् । स्वाङ्गशीतमुद्धृत्य तत्र हेमभस्मसमं तीक्ष्णलौहभस्म, लोहभस्मार्द्धञ्च शुद्ध दरद-हिङ्गुल दत्वा पुन सर्वं सञ्चूर्ण्य काचपात्रे स्थापयेत् तत शुभे दिवसे रसस्यास्य स्वेष्टदेवस्य वा पूजन कृत्वा रसमेनं भक्षयेत् । अय सर्वाङ्गसुन्दररसो गुञ्जैकादारभ्य द्विगुञ्जमित प्रत्यह पिप्पलीचूर्णमधुभ्या, सघृतार्द्रकस्वरसेन सितया च, पर्णखण्डेन् = ताम्बूलवीटिकया वा सह यथादोषप्रकोप सेवित श्लैष्मिकान्, वातिकान् रोगान्निहन्ति, राजयक्ष्माणं च हन्ति । अयं रसो वात-पित्तज्वरे, दारुणे सन्निपाते, अर्शःसु, ग्रहणीदोषे, प्रमेहे, गुल्मे, भगन्दरे च यथानुपा प्रयोगेण हितकर ॥३७-४३॥

लोकेश्वरो रस —

पलं कपर्दचूर्णस्य पलं पारदगन्धयोः ।

माषञ्च टङ्कणस्यैव जम्बीराद्भिर्विमर्दयेत् ।
पुटेत् लोकेश्वरो नाम्ना लोकनाथरसोत्तमः ॥४४॥
अते कुष्ठ रक्तपित्तमन्यान् रोगान् बलाज्जयेत् ।
पुष्टिवीर्य्यप्रसादौजः-कान्तिलावण्यदः परः ॥ ४५ ॥
कोऽस्ति लोकेश्वरादन्यो नृणा शम्भुमुखोद्गतात् ।
पथ्य शाल्योदन सर्पिर्दधि शाक सहिङ्गुकम् ॥ ४६ ॥
नित्यं यामद्वयादूर्ध्वं कार्य्यं वारत्रय दिवा ।
त्र्यहाद्वान्तेऽरुचौ वाऽपि लग्न सूतो न चेत् पुनः ॥ ४७ ॥
अष्टमेऽह्नि प्रदातव्यः पूर्ववत् कार्य्यसिद्धये ।
प्रथमे सप्तमे देया लावशूरणमुद्गकाः ॥ ४८ ॥
द्वितीये माषगोधूमा भक्ष्याः पूर्वोदितश्च यत् ।
देयानि मत्स्यमांसानि तृतीये मर्दनादिकम् ॥ ४९ ॥
तैलविल्वारनालानि कोपस्त्रीस्वप्नजागरान् ।
त्यजेत् कादीनि द्रव्याणि हृद्य स्वादु च शीलयेत् ॥ ५० ॥
वायौ सेव्य पयः कोष्ण पित्ते तु ससित हिमम् ।
अत्यग्नौ चोरवीजानि तिलेक्षुकदलीफलम् ॥ ५१ ॥
खर्जूरमांसमृद्वीका-सितादि सकल भजेत् ।
वीर्य्यच्युतौ नारिकेल-जलं तालफलानि च ॥ ५२ ॥
आनाहारुचिमूर्च्छार्त्ति-धूमोद्गारविसूचिकाः ।
एतेषु लघु शाल्यन्नं केवल सघृतं हितम् ॥ ५३ ॥
अतिवान्तौ पिवेच्छिन्ना-रस क्षौद्रेण सयुतम् ।
सक्षौद्र वासकं रक्तपित्ते रुचिविपर्य्यये ॥ ५४ ॥
भृष्टधान्य सितायुक्तमथवा क्षौद्रसयुतम् ।
यवान्न मधुसंयुक्त पिवेद्वा माहिष दधि ॥ ५५ ॥
घृतान्न भक्षयेन्नित्य सुखोष्णेन च वारिणा ।
छिन्नाम्बुसहित देय दाहेऽजीर्णे सुधाजलम् ॥ ५६ ॥
आर्द्रक सर्षप रम्भा-फलं भृङ्ग कफोल्वणे ।
अन्येऽप्युपद्रवा ये स्युस्तच्छान्त्यै यथौषधम् ॥ ५७ ॥

**द्वात्रिंशद्दिवसे कार्य्यं स्नानमामलकैस्तिलैः ।**
**युक्तं सेव्यं बले जाते शनैरग्निबलादनु ॥ ५८ ॥**

अथ लोकेश्वररसनिर्माणमाह पलमित्यादि—कपर्दचूर्णस्य—कपर्दभस्मन एक पल, शुद्धपारदगन्धकयोर्मिलतयोश्चैकं पल, शुद्धटङ्गणस्यैकं माषक समादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य जम्बीराद्भि —जम्वीरनिम्बुरसेनाप्लाव्य दृढ विमर्द्य च सम्पुटस्थ कृत्वा पुटेत् । अथ सर्वेषु रसेपूत्तमो नाम्ना च लोकेश्वररसो लोकनथरसो वा कुष्ठ रक्तपित्तञ्च ऋते यथानुपानै सर्वान् रोगान्निहन्ति, देहस्य पुष्टिं, वीर्य्यं, प्रसादं = देहधातुनैर्मल्य, ओज , कान्ति, लावण्यं च ददाति । श्रीशङ्करमुखप्रोक्तलोकेश्वररसादन्य कोऽस्ति श्रेष्ठो नृणा, नकोपीत्यर्थ । लोकेश्वररससेविने पथ्ये दधियुक्त शाल्योदन, सघृतमौदनं, घृतेन हिङ्गुना च संस्कृत शाक नित्यं देय, प्रथमपथ्याद् यामद्वयानन्तर द्वितीयवारं पथ्य, द्वितीयपथ्याच्च यामद्वयानन्तर तृतीयपथ्य देयम् । इत्थ त्रिदिवसानन्तर वमनेऽरुचौ वा जाते सति पारदमिश्रितस्यास्य रसस्य देहे सस्थित्यभावात् पुनरष्टमेऽह्नि पूर्ववदस्य रसस्योपयोग स्वरोगनाशाय कर्तव्य । प्रथमसप्ताहे लावमासरसं, शूरणशाक, मुद्गयूषं पथ्ये दद्यात् । द्वितीयसप्ताहे माषसूप माषकयूषं वा, गोधूमकर्पटिका ( रोटिकां ) गोधूमयवागू पूर्वोदितञ्च यथारुचि दद्यात् । तृतीयसप्ताहे सस्कृतानि मत्स्यमासानि, मर्दनार्थं दोषहरतैलादिकानाञ्चोपयोग विदध्यात् । तथा तैलमस्कृतपदार्थसेवन, बिल्वारनालौ, कोपं, स्त्रीससर्गं, दिवास्वप्नं, रात्रिजागरण कादीनि द्रव्याणि च—

कलिङ्ग (इन्द्रयव) कारवेल्लञ्च कदली काकमाचिका ।
कुसुम्भिका च कर्कोटी कूष्माण्डं कर्कटी तथा ॥
ककाराष्टकमेतद्धि वर्जयेद्रसभक्षक ॥ इति ।

वर्जयेत् । हृद्यं, स्वादु तृप्तिकरञ्चान्नमन्यद्वा फलादिक शीलयेत् । वायुदोषाधिक्ये कोष्ण दुग्धं, पित्तदोषाधिक्ये शृतशीत सशर्करञ्च पय पिवेत् । अत्यग्नौ—भस्मकरोगे ( पाचकाग्निवृद्धौ ) चोरवीजानि = अपामार्गवीजानि ( एषा दुग्धे पायसमिव पाकं कृत्वा प्रयोग कुर्यात् ), तिलानि, इक्षुरसं, पक्वकदलीफलं, अपक्वकदलीफलशाकम्वा, खर्जूरं, मासरसं, मृद्वीका = द्राक्षा, सितादिकञ्च यथादोषप्रत्यनीकं सकल शीलयेत् । वीर्य्यच्युतौ = रससेवनोत्तेजनया स्वप्ने प्रत्यक्षे वा वीर्य्यस्रावे प्रवृत्ते नारिकेलनीरं, तालफलानि च शीलयेत् । तथा रस आनाहे, अरुचौ, मूर्च्छायां,

मुखाद्धूमपूर्वकमिवोद्गारवेगे, विसूचिकायाञ्च हितकर । एषु रोगेषु पथ्ये केवल सघृत लघुशाल्यौदन दद्यात् । वमनाधिक्ये रसेन सह क्षौद्रेण सयुत छिन्नारसं-गुडूचीस्वरस पाययेत्, रक्तपित्ते सक्षौद्र मधुयुत वासकस्वरसानुपान पिबेत् । रुचिविपर्यये—अरुचौ शर्करायुत मधुयुतम्वा मृष्टधान्य, मधुसयुक्त यवान्न-यवसक्तुञ्च, माहिषं दधि, घृतान्न-घृतसस्कृतमन्न, तृष्णायाञ्च मुखपेयमुष्ण वारि शीलयेत् । दाहशान्त्यर्थमयं रस प्रत्यह छिन्नाम्बुसहित-गुडूचीस्वरसानुपानपूर्वकं तथा अजीर्णे च सुधाजलेन सह प्रयोक्तव्य, कफोल्वणरोगेषु रसोऽयमार्द्रकस्वरसेन सह देय, पथ्ये च मार्षप शाक पक्वरम्भाफलं, मृङ्ग, दारुसिताचूर्णञ्च प्रयोजयेत् । येऽप्यन्ये प्रधानरुजा सह उपद्रवा स्युस्तेषा शान्त्यै यथादोषप्रशामकचूर्णादिकैरनुपानैश्च सह अय रस प्रयोज्य । इत्थमेकविंशतिदिनपर्यन्तमेन रस ससेव्य द्वात्रिंशद्दिवसे जलघृष्टामलकै शरीर विमर्द्य तैलाभ्यङ्ग कृत्वा स्नान कुर्यात् । क्रमश प्रवृद्धेऽग्निबले यथाशक्ति पथ्य हृद्य स्वादु सात्विकभोजनमाचरेत् ।

अथ सुधोदकनिर्माणप्रकारमाह—

रक्तिद्वयोन्मित चूर्णं पञ्चतोलकसम्मिते । जले विनिक्षिपेत् प्राज्ञस्त्रियामं स्थापयेच्च तम् ॥
तत सारकपत्रेण सारयेत्काचपात्रके । चूर्णोदकमिति ख्यात तथैव च सुधोदकम् ॥
चूर्णोदक दृढहरित्काचकूप्या निधापयेत् । तयातिसयतेनेह पिधानेन पिधापयेत् ॥
अस्य वार्षिकैकस्तनन्वये त्रिंशद्बिन्दुभ्य प्रारभ्य षष्टिबिन्दुमिता मात्रा प्रकल्पयेत्, तथास्य तोलकद्वयमिता पूर्णमात्रा ज्ञेया । "माषञ्च टङ्कणस्य" इत्यत्र "कर्षञ्च टङ्कणस्यैव, इति पाठान्तरम् ॥ ४४-५८ ॥

स्वल्पमृगाङ्क —

**रसभस्म हेमभस्म तुल्यं गुञ्जाद्वयं भजेत् ।**
**दोष बुद्ध्वाऽनुपानेन मृगाङ्कोऽयं क्षयापहः ॥ ५६ ॥**

अथ स्वल्पमृगाङ्करसनिर्माणमाह रसभस्मेत्यादि-रसभस्म-रससिन्दूर (१तो०), हेमभस्म-स्वर्णभस्म (१तो०), द्वयं खल्वे सूक्ष्मं विचूर्ण्य काचपात्रे स्थापयेत् । अय स्वल्पमृगाङ्करसो गुञ्जैकादारभ्य द्विगुञ्जमित प्रत्यहं यथादोषानुपानपूर्वक सेवितो यक्ष्माण निहन्ति ॥ ५९ ॥

काञ्चनाभ्ररस —

**काञ्चनं रससिन्दूरं मौक्तिकं लौहमभ्रकम् ।**

विद्रुमञ्चाभया तारं कस्तूरी च मनःशिला ॥ ६० ॥
प्रत्येक विन्दुमात्रन्तु सर्वं संमर्द्य यत्नतः।
वारिणा वटिका कार्य्या द्विगुञ्जाफलमानतः ॥ ६१ ॥
अनुपानं प्रयोक्तव्यं यथादोषानुसारतः।
क्षयं हन्ति तथा कासं श्लेष्मपित्तसमुद्भवम् ॥ ६२ ॥
प्रमेहं विविधञ्चैव दोषत्रयसमुत्थितम्।
कफजान् वातजान् रोगान् नाशयेत् सद्य एव हि ॥ ६३ ॥
वलवृद्धिं वीर्य्यवृद्धिं लिङ्गदार्ढ्यं करोति च।
श्रीकरः पुष्टिजननः नानारोगनिसूदनः।
गहनानन्दनाथोक्तो रसोऽयं काञ्चनाभ्रकः ॥ ६४ ॥

अथ काञ्चनाभ्ररसनिर्माणमाह काञ्चनमित्यादि—काञ्चन–स्वर्णभस्म, रससिन्दूर, मौक्तिक–मुक्ताभस्म, लौहं–लौहभस्म, अभ्रकमभ्रकभस्म, विद्रुमं–प्रवालभस्म, अभया = हरीतकीचूर्णं, तार–रजतभस्म, कस्तूरी, मन शिला = शुद्धमन शिलाचूर्णं, प्रत्येकं विन्दुमात्रं कर्षपरिमित ( सम समित्यर्थ ) समादाय शुभे खल्वे श्लक्ष्ण विमर्द्य जलेन सह द्विगुञ्जप्रमाणा वटिका कृत्वा सशाष्य च काचपात्रे स्थापयेत्। अयं काञ्चनाभ्रो रसो यथादोषानुसारकल्पितानुपानैस्सह सेवित क्षय, कासं, श्लेष्म पित्तसमुत्पन्न कासम्वा, दोषत्रयोत्पन्न विविध वा प्रमेह, कफजरोगान्, वातिकरोगान्, निखिलरोगाश्च नाशयति। अय गहनानन्दप्रोक्त काञ्चनाभ्रकरसो देहस्य बलं, वीर्य्यं, श्रिय=शोभा, पुष्टिञ्च वर्द्धयति, लिङ्गदार्ढ्यं–जननेद्रियशैथिल्य निवारयति ॥ ६०–६४ ॥

बृहत्काञ्चनाभ्ररस —

काञ्चनं रससिन्दूरं मौक्तिकं लौहमभ्रकम्।
विद्रुमं मृतवैक्रान्तं तारं ताम्रञ्च वङ्गकम् ॥ ६५ ॥
कस्तूरिका लवङ्गञ्च जातीकोषैलवालुकम्।
प्रत्येकं विन्दुमात्रञ्च सर्वं मर्द्य प्रयत्नतः ॥ ६६ ॥
कन्यानीरेण संमर्द्य केशराजरसेन च।
अजाक्षीरेण सम्भाव्यं प्रत्येकं दिवसत्रयम् ॥ ६७ ॥

चतुर्गुञ्जाप्रमाणेन वटिका कारयेद्भिषक् ।
अनुपानं प्रयोक्तव्यं यथादोषानुसारतः ॥ ६८ ॥
क्षयं हन्ति तथा कासं यक्ष्माणं श्वासमेव च ।
प्रमेहान् विंशतिश्चैव दोषत्रयसमुद्भवान् ।
सर्वरोगं निहन्त्याशु भास्करस्तिमिरं यथा ॥ ६९ ॥

अथ बृहत्काञ्चनाभ्ररसनिर्माणमाह काञ्चनमित्यादि—काञ्चन = स्वर्णभस्म, रससिन्दूरं, मौक्तिकं—मुक्ताभस्म, लौहं—लौहभस्म, अभ्रकमभ्रकभस्म, विद्रुम—प्रवालभस्म, मृतवैक्रान्त—वैक्रान्तभस्म, तार-रजतभस्म, ताम्रभस्म, वङ्गक वङ्गभस्म, कस्तूरिकाचूर्णं, लवङ्गचूर्णं, जातीकोष—जातीफलत्वचश्चूर्णं (जावित्रीचूर्णं), एलवालुक—हरिवालुकम् । एतत् प्रत्येकं बिन्दुमात्र कर्षमितं (तुल्यं तुल्यमित्यर्थ) समादाय शुभे खल्वे सञ्चूर्ण्य कन्यानीरेण—घृतकुमारीस्वरसेन दिवसत्रयं भावयित्वा दृढं विमर्द्य केशराजरसेन, अजाक्षीरेण च दिनत्रयं सम्यग् भावयेत् । तद चतुर्गुञ्जमिता (गुञ्जैकमिता पर्याप्ता )वटीं कृत्वा सशोष्य च काचपात्रे स्थापयेत् । अथ रसो यथादोषानुपानपूर्वकं सेवितः क्षयं, कासं श्वासं, यक्ष्माणं, दोषत्रयोत्पन्नान् विंशतिप्रमेहान् , सर्वरोगांश्च निहन्ति यथा सूर्यस्तिमिरं हन्ति ॥ ६५-६९ ॥

शिलाजत्वादिर्लौहम्—

शिलाजतु मधु व्योषं ताप्यं लौहरजस्तथा ।
क्षीरेण लेहितस्याशु क्षयः क्षयमवाप्नुयात् ॥ ७० ॥

अथ शिलाजत्वादिलौहनिर्माणमाह शिलेत्यादि—शुद्धशिलाजतु, मधु—क्षौद्र, व्योष = शुण्ठीचूर्णं, मरिचचूर्णं, पिप्पलीचूर्णं, ताप्य—स्वर्णमाक्षिकभस्म, एतत् प्रत्येकं तोलकैकमितं, तथा लौहभस्म सर्वसमं (६तो०), एतत् सर्वं खल्वे पिष्ट्वा द्विरक्तिमिता वटीश्च कृत्वा प्रत्यहमेकैका वटीं क्षीरेण सह क्षयनाशार्थं प्रयोजयेत् ॥ ७० ॥

कुमुदेश्वरो रसः—

हेमभस्म रसभस्म गन्धकं मौक्तिकन्तु रसटङ्कणं तथा ।
तारकं गरुडसर्वतुल्यकं काञ्जिकेन परिमर्द्य गोलकम् ॥ ७१ ॥
मृत्स्नया च परिवेष्ट्य शोषितं भाण्डके लवणगेऽथ पाचयेत् ।

**एकरात्रमृदुसम्पुटेन वा सिद्धिमेति कुमुदेश्वरो रसः ।**
**वल्लमस्य मरिचैः घृताप्लुतै राजयक्ष्मपरिशान्तये पिबेत् ॥ ७२ ॥**

अथ कुमुदेश्वररसनिर्माणमाह हेमभस्मेत्यादि—हेमभस्म (१तो०), रसभस्म रससिन्दूर (१तो०), शुद्धगन्धकं (१तो०), मौक्तिकं–मुक्ताभस्म (१तो०), रसटङ्कणं–एकभागापेक्षया रसमितं–षड्भागाशमित सार्द्धैकमाषकं, अथवा रसेन रससिन्दूरेण समानमेव टङ्कण एकतोलकमिति, तारकं–रजतभस्म (१तो०), गरुडं–स्वर्णमाक्षिक-भस्म (१तो०), समादाय पूर्वं रससिन्दूरगन्धकयो श्लक्ष्ण पेषणं कृत्वा शेषद्रव्याणि सम्मेल्य काञ्जिकेन निम्बुरसेन वा सम्मर्द्य गोलकं कृत्वा मूषायामवरुध्य ता मृत्स्नया सम्यक् लिप्त्वा सशोष्य च लवणयन्त्रे रात्रिपर्यन्त पचेत् । अथवा शराव-सम्पुटं कृत्वा मृत्स्नया च शरावसन्धिबन्धन कृत्वा एकरात्र लघुपुटे पचेत् । इत्थ कुमुदेश्वररस सिद्धतामाप्नोति । अयं रसो वल्लमित (१ रक्तिमिता मात्रा पर्याप्ता) मरिचचूर्णेन घृतेन च सह राजयक्ष्मनाशाय सेवितव्य ॥ ७१–७२ ॥

क्षयकेशरीरस —

**त्रिकटुत्रिफलैलाभिर्जातीफललवङ्गकैः ।**
**नवभागोन्मितैस्तुल्यं लौह-पारदसिन्दुरम् ।**
**मधुना क्षयरोगांश्च हन्त्यय क्षयकेशरी ॥ ७३ ॥**

अथ क्षयकेशरीरसनिर्माणमाह त्रिकेत्यादि—त्रिकटु = शुण्ठीचूर्णं, मरिचचूर्णं, पिप्पलीचूर्णं, त्रिफला = हरीतकीचूर्णं, विभीतकचूर्णं, आमलकीचूर्णं, एला–वृद्धैला-चूर्णं, जातीफलचूर्णं, लवङ्गचूर्णं, प्रत्येकं तोलकमितं, तथा सर्वतुल्य लौहभस्म, पारद-सिन्दूर–रससिन्दूरञ्च ( सार्द्धचतुस्तोलकं लौहभस्म, सार्द्धचतुस्तोलकञ्च रससिन्दूरम्) सर्वं खल्वे निक्षिप्य श्लक्ष्ण पिष्ट्वा च काचपात्रे स्थापयेत् । अय क्षयकेशरीरसो मधुना सह प्रत्यहं रक्तिमितो यथादोषानुपानपूर्वकं सेवित क्षय सकलरोगाश्च निहन्ति ॥ ७३ ॥

बृहच्चन्द्रामृतो रस —

**रसगन्धकयोर्ग्राह्यं कर्षमेकं सुशोधितम् ।**
**अभ्रं निश्चन्द्रकं दद्यात् पलार्द्धञ्च विचक्षणः ॥ ७४ ॥**
**कर्पूरं शाणकं दद्यात् स्वर्णं तोलकसम्मितम् ।**

मारितं भिषक् ॥ ७५ ॥

ताम्रञ्च तोलकं दद्यात् विशुद्धं

लौहं कर्षं क्षिपेत् तत्र वृद्धदारकजीरकम् ।

विदारी शतमूली च क्षुरकञ्च बला तथा ॥ ७६ ॥

मर्कट्यतिबला चैव जातीकोषफले तथा ।

लवङ्गं विजयाबीजं श्वेतसर्जरसं तथा ॥ ७७ ॥

शाणभागं समादाय चैकीकृत्य प्रयत्नतः ।

मधुना मर्दयेत् तावद् यावदेकत्वमागतम् ॥ ७८ ॥

चतुर्गुञ्जाप्रमाणेन वटीं कुर्य्यात् प्रयत्नतः ।

भक्षयेद्वटिकामेकां पिप्पलीमधुना सह ॥ ७९ ॥

अथ वृहच्चन्द्रामृतरसनिर्माणमाह रसेत्यादि—शुद्धपारद (१क०), शुद्धगन्धक-(१क०), निश्चन्द्रीकृतमभ्रकभस्म अर्द्धपल, शाणमितं कर्पूर (४मा०), स्वर्णं = स्वर्ण-भस्म (१तो०), ताम्रभस्म (१तो०), लौहभस्म (१क०), शुद्धवृद्धदारकबीजचूर्णं, जीरकचूर्णं, विदारीकन्दचूर्णं, शतमूली = शतावरचूर्णं, क्षुरक—कोकिलाक्षकचूर्णं (तालमखानाचूर्णं), बलाचूर्णं, मर्कटी—शुद्धकौञ्चबीजचूर्णं, अतिबलाचूर्णं (कङ्गीचूर्णं), जातीकोष—जातीफलत्वचचूर्णं ( जावित्रीचूर्णं ), जातीफलचूर्णं, लवङ्गचूर्णं, शुद्ध-विजयाबीजचूर्णं, श्वेतसर्जरस (श्वेतराल ), प्रत्येकमेतत् शाणमित (४ मा०) समादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य मधुना सम्यगाप्लाव्य दृढं विमर्द्य एकाकारं कृत्वा चतुर्गुञ्जप्रमाणा वटीं कृत्वा संशोष्य च काचपात्रे स्थापयेत् । अस्य रसस्य प्रत्यहमेकैकां वटीं पिप्पलीचूर्णमधुभ्यां सह सेविता क्षयं, कासं च विनाशयति ॥ ७४-७९ ॥

महामृगाङ्को रसः—

निरुत्थभस्म सौवर्णं द्विगुणं भस्मसूतकम् ।

त्रिगुणं भस्म मुक्तोत्थं शुकपुच्छं चतुर्गुणम् ॥ ८० ॥

मृततारप्यञ्च पञ्चांशं तारभस्म चतुर्गुणम् ।

सप्तभागं प्रवालञ्च रसतुल्यञ्च टङ्कणम् ॥ ८१ ॥

सर्व्वमेकत्र संमर्द्य त्रिदिनं लुङ्गवारिणा ।

ततश्च गोलकं कृत्वा शोषयित्वा खरातपे ॥ ८२ ॥

लवणैः पात्रमापूर्य्य तन्मध्ये गोलकं क्षिपेत् ।
तन्मुखन्तु मृदा रुद्ध्वा पचेत यामचतुष्टयम् ॥ ८३ ॥
आकृष्य चूर्णयेत् शुद्धं चतुःषष्टिविभागतः ।
वज्रं वा तदभावे तु वैक्रान्तं षोडशांशिकम् ॥ ८४ ॥
महामृगाङ्कः खलु एष सिद्धः श्रीनन्दिनाथप्रकटीकृतोऽयम् ।
वल्लोऽस्य सेव्यो मरिचाज्ययुक्तः सेव्योऽथवा पिप्पलिकासमेतः॥८५॥
तत्रोपचाराः कर्त्तव्याः सर्वे क्षयगदोदिताः ।
बल्यं वृष्यञ्च भोक्तव्यं त्यजेत् सूतविरोधि यत् ॥ ८६ ॥
यक्ष्माणं बहुरूपिणं ज्वरगद गुल्म तथा विद्रधिम्
मन्दाग्निं स्वरभेदकासमरुचिं वान्तिञ्च मूर्च्छां भ्रमिम् ।
अष्टावेव महागदान् गरगदान् पाण्डूवामयान् कामलान्
पित्तोत्थांश्च समग्रकान् बहुविधानन्यांस्तथा नाशयेत् ॥ ८७ ॥

अथ महामृगाङ्करसनिर्माणमाह निरुत्थेत्यादि—निरुत्थं स्वर्णभस्म (१तो०), भस्मसूतकं–रससिन्दूरं (२तो०), मुक्ताभस्म (३तो०), शुकपुच्छं–शुद्धगन्धकं (४तो०), मृततार्प्य–स्वर्णमाक्षिकभस्म (५तो०), तारभस्म–रजतभस्म (४तो०), प्रवालभस्म (७तो०), शुद्धटङ्गण रसतुल्यं (१तो०), पूर्वं गन्धकरससिन्दूरयो पेषणं कृत्वा शेषद्रव्याणि सम्मेल्य सम्मर्द्य च लुङ्गवारिणा=मातुलुङ्गनिम्बुरसेन सम्यगाप्लाव्य त्रिदिन मर्दयेत् । ततश्च गोलक कृत्वा संशोष्य च मूषाया सस्थाप्य मुखमवरुध्य लवणैर्मृण्मयभाण्डमापूर्य तन्मध्ये मूषा निधाय शरावेण भाण्डमुखमाच्छाद्य तस्य च सन्धिमालिप्य यामचतुष्टय पचेत् । अथवा मृण्मयभाण्डस्याभ्यन्तरिकतलभागे गोलकं सस्थाप्य तदुपरि शराव निधाय शरावभाण्डप्रदेशयोर्भागं स्निग्धमृदा दृढ विलिप्य संशोष्य च भाण्डावकाश लवणै प्रपूर्य मुखबन्धनञ्च कृत्वा यामचतुष्टय पचेत् । स्वाङ्गशीतमौषध समादाय खल्वे विचूर्ण्य तदपेक्षया चतु षष्टिविभागत (६४ वा भाग) वज्र–हीरकभस्म निक्षिप्य तदभावे पक्वौषधापेक्षया षोडशाशिक वैक्रान्तभस्म वा निक्षिप्य सम्यक् पिष्ट्वा च काचपात्रे स्थापयेत् । एषो महामृगाङ्करस श्रीनन्दिनाथेन प्रकटीकृत । अय रसो मरिचचूर्णेन घृतेन च सह, मधुपिप्पलीचूर्णाभ्या वा सह यथादोष वल्लमित ( प्रायेण यथारोगं यथावयश्च रक्ति-

मात्रारम्भे त्रिरत्तिमिता मात्रा प्रकल्पयेत्) प्रत्यहं सेवितः अयं, आमातिसारं हन्ति। अस्य सेवनसमये ज्वररोगोपयुक्ता आहारविहारानुपानादयः सेव्याः, विशेषेण बल-करं वृष्यञ्च भोजनं कुर्यात्। सूतविरोधि-पारदसेवने यत् ककाराष्टकादिकं वर्ज्यं प्रोक्तं तद्वर्जयेत्। अयं रसो यथायोग्यानुपानैः प्रत्यहं सेवितो विविध यक्ष्माणं, ज्वरगर्भ, गुल्म, विद्रधि, मन्दाग्नि, स्वरभेद, कास, अरुचि, भ्रान्ति वमन, मूर्च्छा, श्रम, अर्शो महारोगान्, गरगदान् = विषविकारान, पाण्डुरोगं, कामला, पित्तोत्थान् तथान्या-नपि सकलान् रोगाञ्जयति ॥ ८०–८७ ॥

व्याधिकेशरी—

मृतमभ्रं मृतं सूतं मृतं लौहं तथा रविं ।
मृतं नागञ्च कांस्यञ्च मण्डूरं विमलं शिला ॥ ८८ ॥
वङ्गं खर्परकं तालं शङ्खटङ्कणमाक्षिकम् ।
वैक्रान्तं कान्तलौहञ्च स्वर्णं विद्रुममौक्तिकम् ॥ ८९ ॥
वराटं मणिरागञ्च राजपट्टञ्च गन्धकः ।
सर्वमेकत्र सञ्चूर्ण्य खल्लमध्ये विनिक्षिपेत् ॥ ९० ॥
मर्दयेत् त्वग्निमाल्लभ्यां प्रपुटेत् त्रिदिनं लघु ।
भावयेत् पुटयेदेभिर्वारांस्त्रींश्च पृथक् पृथक् ॥ ९१ ॥
मातुलुङ्गवराबह्नि–स्वम्लवेतसमार्कव–
हयमारार्ककरसैः पाचितो लघुवह्निना ॥ ९२ ॥
वातपित्तकफोत्क्लेशान् ज्वरान् संमर्दितानपि ।
सन्निपातं निहन्त्याशु सर्वाङ्गैकाङ्गमारुतान् ॥ ९३ ॥
सेवितश्च सितायुक्तो मागधीरजसा युतः ।
मधुकार्द्रकसंयुक्तस्तद्व्याधिहरणौषधैः ॥ ९४ ॥
रोगिणां सेवितो हन्ति व्याधिवारणकेशरी ।
क्षयमेकादशविधं शोषं पाण्डुं क्रिमिं जयेत् ॥ ९५ ॥
कासं पञ्चविधं श्वासं मेहमेदो महोदरम् ।
अश्मरीं शर्करां शूलं प्लीहगुल्मं हलीमकम् ।
सर्वव्याधिहरो बल्यो वृष्यो मेध्यो रसायनः ॥ ९६ ॥

अथ क्षयकेशरीरसनिर्माणमाह मृतमित्यादि—मृतमभ्रमभ्रकभस्म (१तो०), मृतं सूत-रससिन्दूर (१तो०), मृत लौह-लौहभस्म(१तो०), रविस्ताम्रभस्म (१तो०), मृत नाग-नागभस्म (१तो०) कास्यभस्म (१तो०), मण्डूरभस्म (१तो०), विमल-रौप्यमाक्षिकभस्म (१तो०), शिला = शुद्धमनःशिला (१तो०), वङ्गभस्म (१तो०), खर्परभस्म (१तो०), शुद्धहरिताल (१तो०), शङ्खभस्म (१तो०), शुद्धटङ्कणं (१तो०), स्वर्णमाक्षिकभस्म (१तो०), वैक्रान्तभस्म (१तो०), कान्तलौहभस्म (१तो०), स्वर्णभस्म (१तो०), विद्रुम-प्रवालभस्म (१तो०), मौक्तिक-मुक्ताभस्म (१तो०), वराटभस्म (१तो०), मणिराग-शुद्धहिङ्गुल (१तो०), राजपट्ट-कान्तपाषाणभस्म (१तो०), शुद्धगन्धक (१तो०), पूर्वं गन्धकरससिन्दूरयो पेषण कृत्वा शेषद्रव्याणि सम्मेल्य अग्निश्चित्रकस्तस्य रसेन पिष्ट्वा लघुपुटे पुटेत् । एव त्रिवार भावयित्वा त्रिवार पुटेत् । भानुरर्कस्तस्य शुद्धदुग्धेन त्रिवार भावयित्वा त्रिवा पुटेत्, ( प्रतिभावनाया पुट देय, एकस्मिन्दिने पुटमेकमेव दद्यात् ) एवमेव मातुलुङ्गरसेन, वरा = त्रिफला तस्या क्वाथेन, वह्निश्चित्रक , ( वह्नि =निम्बुक , नतु चित्रक प्रागुक्तत्वादिति केचित् ) तस्य स्वरसेन, अम्लवेतसक्वाथेन, मार्कव -भृङ्गराजस्तस्य स्वरसेन, हयमार -करवीर तस्य क्वाथेन, आर्द्रकस्वरसेन च क्रमश पृथक् २ भावयित्वा त्रिवारं पुटेत् । ( एकैकस्य रसेन वारत्रयं भावयित्वा त्रिवार लघुपुटं दद्यात् ) अय रस प्रत्यह रक्तिमितो द्विरक्तिमितो वा सितया, मागधीरजसा-पिप्पलीचूर्णेन मधुना, तथा आर्द्रकस्वरसेन, तत्तद्व्याधिहरणौषधचूर्णरसानुपानैर्वा सह सेवितो वातिकान्, पैत्तिकान्, श्लैष्मिकान, त्रिदोषोत्पन्नान्वा वर्द्धितान् ज्वरान्, सर्वाङ्गवातविकारं, एकाङ्गवातविकार, सन्निपातं, एकादशविध क्षय, शोष, पाण्डु, क्रिमिरोग, पञ्चविध कासं, श्वास, प्रमेह, मेदोवृद्धि, महोदरमुदरवृद्धि, अश्मरीं, मूत्रनिसरणशीलशर्करा, शूलं, प्लीहवृद्धि, गुल्म, हलीमक, सर्वरोगाश्च हन्ति, तथाऽय रसो देहे बलकर , वृष्य , मेधाहितकर , रसायनश्च वर्तते ॥ ८८-९६ ॥

क्षयारि —

**भस्मत्वं समुपागतं विधिकृतं हेमामृतेनान्वितं**
**पादांशेन कणाऽऽज्यवल्लसहितं गुञ्जोन्मितं सेवितम् ।**
**यक्ष्माणं ज्वररोगपाण्डुगुदजान् श्वासञ्च कासामयं**

दुष्टाञ्च ग्रहणीं क्षतक्षयमुखान् रोगान् जयेत् देहभृत् ॥९७॥

अथ क्षयारिरसनिर्माणमाह भस्मत्वमित्यादि—विधिपूर्वकं भस्मतां गतं स्वर्णं (१तो०), पादांशेन—माषकत्रयमितेन अमृतेन—शुद्धवत्सनाभचूर्णेन सह खल्वे पिष्ट्वा, काचपात्रे स्थापयेत्। अयं रसः प्रत्यहं गुञ्जमितो वल्लमितेन—त्रिरक्तिमितेन कणाचूर्णेन घृतेन च सह सेवितो यक्ष्माणं, ज्वरं, पाण्डुं, गुदजमर्शोरोगं, श्वासं कासामयं—कासरोगं, दुष्टां—दुःसाध्यां ग्रहणीं, क्षतक्षयोन्मुखान् रोगांश्च निहन्ति ॥ ९७ ॥

क्षयसंहारः—

लीढो व्योषवरान्वितो विमलको युक्तो घृतैः सेवितो
हन्यात् हृद्गदुर्जयं श्वयथुकं पाण्डुप्रमेहारुचिम्।
शूलार्तिं ग्रहणीञ्च गुल्ममतुलं यक्ष्मामयं कामलां
सर्वान् पित्तमरुद्गदान् किमपरैर्योगैरशेषामयान् ॥ ९८ ॥

अथ क्षयसंहाररसनिर्माणमाह लीढ इत्यादि—विमलकं =रजतभस्म रौप्यमाक्षिकभस्म वा (१तो०), व्योषं—त्रिकटु प्रत्येकं तोलकं, वरा—त्रिफलाचूर्णं प्रत्येकं तोलकमितं समादाय खल्वे घृतेन सह पिष्ट्वा द्विरक्तिमिता वटीश्चरेत्। अयं रसः प्रत्यहं घृतेन (नवनीतेन त्रिकटुचूर्णेन च सह वरं भवति) सह सेवितो दुर्जयं हृदयविकारं, श्वयथुकं—शोथं, पाण्डुरोगं, प्रमेहं, अरुचिं, शूलार्तिं—शूलपीडां, ग्रहणीं, गुल्मं, यक्ष्मरोगं, कामलां, सर्वान् पित्तोत्पन्नान् वातोत्पन्नांश्च रोगान्, किमधिकं यथाव्याद्यनुपानैरशेषांश्चामयान्निहन्ति ॥ ९८ ॥

रजतादिलौहम्—

भस्मीभूतं रजतममलं तत्समं व्योमचूर्णं
सर्वस्तुल्यं त्रिकटु सवरं सायः आज्येन युक्तम्।
लीढं प्रातः क्षपयतितरां यक्ष्मपाण्डूदरार्शः
श्वासं कासं नयनजरुजः पित्तरोगानशेषान् ॥ ९९ ॥

अथ रजतादिलौहनिर्माणमाह भस्मीभूतमित्यादि—भस्मीभूतं रजतं (१तो०), व्योमचूर्णमभ्रकभस्म (१तो०), सर्वैस्तुल्यं त्रिकटुचूर्णं (२तो०), तथैव सवरं—त्रिफलाचूर्णं (२तो०), अयो—लौहभस्म सर्वद्रव्यसमं (षट्तोलकमित्यर्थः) एतत् सर्वं खल्वे निक्षिप्य सम्मेल्य च काचपात्रे स्थापयेत्। इदं रजतादिलौहं रक्तिमितं प्रत्यहं

गोघृतेन सह प्रभाते सेवित यक्ष्माण, पाण्डुरोग, उदररोगं, अर्शोरोगं, श्वासं, कासं, नयनजरुजो–नेत्रोत्पन्नरोगान्, सकलान् पित्तरोगाश्च विनिहन्ति ॥ ९९ ॥

नित्योदयो रस —

सुशुद्धं पारदं गन्धं प्रत्येकं शुक्तिसम्मितम् ।
ततः कज्जलिकां कृत्वा मर्दयेच्च पृथक् पृथक् ॥ १०० ॥
बिल्वाग्निमन्थश्योणाकः काश्मरी पाटला बला ।
मुस्तं पुनर्नवा धात्री बृहती वृषपत्रकम् ॥ १०१ ॥
विदारी बहुपुत्री च एषां कर्षरसैर्भिषक् ।
सुवर्णं रजतं तार्प्यं प्रत्येकं शाणमानकम् ॥ १०२ ॥
पलमात्रन्तु कृष्णाभ्रं तदर्द्धञ्च शिलाह्वयम् ।
जातीकोषफले मांसी तालीशैला लवङ्गकम् ॥ १०३ ॥
प्रत्येकं कोलमानन्तु वासानीरैर्विमर्दयेत् ।
शोषयित्वाऽऽतपे पश्चाद्विदारीरसमर्दितम् ॥ १०४ ॥
द्विगुञ्जाभां वटीं खादेत् पिप्पलीमधुसंयुताम् ।
नाम्ना नित्योदयश्चायं रसो विष्णुविनिर्मितः ॥ १०५ ॥
पञ्च कासान् निहन्त्याशु चिरकालोद्भवानपि ।
राजयक्ष्माणमत्युग्रं जीर्णज्वरमरोचकम् ॥ १०६ ॥
धातुस्थं विषमाख्यञ्च तृतीयकचतुर्थकम् ।
अर्शांसि कामलां पाण्डुमग्निमान्द्यं प्रमेहकम् ।
सेवनादस्य कन्दर्प-रूपो भवति मानवः ॥ १०७ ॥

( इति यक्ष्म चिकित्सा ) ।

अथ नित्योदयरसनिर्माणमाह सुशुद्धमित्यादि—शुक्तिसम्मितं ( तोलकद्वयमितं ) शुद्धपारदं, शुक्तिसम्मितश्च शुद्धगन्धकं, उभयो खल्वे कज्जली कृत्वा तां बिल्व, अग्निमन्थ –गणिकारिका ( अरणी ), श्योनाक –प्रसिद्ध, काश्मरी गम्भारी, पाटला ( पाटल ), बला, मुस्तं, पुनर्नवा, धात्री, बृहती ( व्याघ्रि वडी कटेरी ), वृषपत्रकं वासकपत्रं, विदारीक द, बहुपुत्री शतावरी एतेषा प्रत्येकस्य कर्षमितेन स्वरसेन क्वाथेन वा पृथक् २ विमर्द्य तदनु सुवर्णं–स्वर्णभस्म, रजतं–रजतभस्म, तार्प्यं–स्वर्ण-

माक्षिकभस्म, प्रत्येकं शाणमितं (चतुर्माषकमित "चतुर्भिर्माषकैः शाण ") कृष्णाभ्रक भस्म पलमितं, तदर्द्धञ्च—अर्द्धपलमित शिलाह्वय-शुद्धमन शिला, जातीफलचूर्ण, जातीकोषचूर्णं (जावित्रीचूर्ण), मासीचूर्ण, तालीशचूर्ण, बृहदेलाचूर्णं, लवङ्गचूर्णम् । प्रत्येक कोलमितमर्द्धतोलकमित ( कोलमानं तोलकमात्रमिति केचित् ), स्वर्णादिलवङ्गान्तमेतत् सर्वं पूर्वद्रव्यभावितकज्जलिकाया निक्षिप्य वासानीरे—वासकस्वरसे सम्यगाप्लाव्य विमर्द्य निदाघे च शोषयित्वा विदारीकन्दरसेन क्वाथेन वा सम्यगाप्लाव्य दृढ विमर्द्य च द्विगुञ्जमिता वटीश्चरेत् । श्रीविष्णुना विनिर्मितो नाम्ना च नित्योदयोऽय रस प्रत्यह द्विरक्तिमित पिप्पलीचूर्णमधुभ्या सह,सेवितश्चिरकालोद्भवान् पञ्च वधकासान, अत्युग्र राजयक्ष्माण, जीर्णज्वर, अरुचिं, धातुगतज्वर, विषमज्वर, तृतीयकज्वरं, चतुर्थकज्वरं, विविधार्शांसि, कामला, पाण्डु, वन्हिमान्द्य, प्रमेहञ्च विनिहन्ति । अस्य रसस्य सेवनात् स्वस्थपुरुष कन्दर्पसम —कामदेवसम सुन्दरो भवति ॥ १००–१०७ ॥

अथ राजयक्ष्मणि साधारणपथ्यम् ।

शालिषष्टिकगोधूमयवमुद्गादय शुभा । मद्यानि जाङ्गला पक्षिमृगा शस्ता विशुष्यताम्॥ १॥
शुष्यता क्षीणमासाना कल्पितानि विधानवित् । दद्यात् क्रव्यादमासानि बृहणानि विशेषत २॥
दोषाधिकाना वमन शस्यते सविरेचनम् । स्नेहस्वेदोपपन्नाना सस्नेह यन्न कर्षणम् ॥ ३॥

दोषाधिकाना प्रवृद्धदोषाणा राजयक्ष्मिणा स्निग्धस्वेदकर्मपूर्वक वमन विरेचनञ्च दद्यात्, कीदृगित्याह सस्नेहं यच्च कर्षण न स्यात्, मृदुद्रव्यैर्विरेचनं वमनञ्च शस्त यथोक्त वाग्भटे—

वलिनो बहुदोषस्य स्निग्धस्विन्नस्य शोधनम् ।
उर्ध्वाधो यक्ष्मिण कुर्यात् सस्नेहं यन्न कर्षणम् ॥ इति ।

अत्र वमनविधिमाह—

पयसा फलयुक्तेन मधुरेण रसेन वा । सर्पिष्मत्या यवाग्वा वा वमनद्रव्यसिद्धया ॥

वामयेदित्यर्थ ।

विरेचनमाह—

"विरेचन दद्यात्त्रिवृच्छ्यामानृपद्रुमान्" इति ।

अथ पञ्चकर्मविधान निषेधश्चाह—

बलिनो बहुदोषस्य पञ्चकर्माणि कारयेत् । यक्ष्मिण क्षीणदेहस्य तत्कृत स्याद्विषोपमम् ॥

बलयुक्तयक्ष्मिण कृते पूर्वं पञ्चकर्म यथासाध्यं कृत्वा पश्चात्काष्ठरसौषधानामुपयोगः श्रेयस्करो भवति ॥

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृतायां गूढार्थसन्दीपिका-व्याख्यायां यक्ष्मचिकित्सा ॥

---

## अथ कास-चिकित्सा ।

बृहद्रसेन्द्रगुडिका—

कर्षं शुद्धरसेन्द्रस्य गन्धकस्याभ्रकस्य च ।
ताम्रस्य हरितालस्य लौहस्य च विषस्य च ॥ १ ॥
मन.शिलायाः क्षाराणां वीजस्य कनकस्य च ।
मरिचस्य च सर्वेषां समं चूर्णं प्रकल्पयेत् ॥ २ ॥
जयन्ती चित्रकं माण खण्डकर्णोऽथ मण्डूकी ।
शक्राशनं भृङ्गराजं केशराजं तथाऽऽर्द्रकम् ॥ ३ ॥
निर्गुण्डीस्वरसेनापि कर्षमात्रेण मर्दयेत् ।
कलायपरिमाणान्तु वटिका कारयेद्भिषक् ।
आर्द्रकस्वरसेनैव पञ्च कास व्यपोहति ॥ ४ ॥
हन्ति कास तथा श्वासं यक्ष्माणं सभगन्दरम् ।
अग्निमान्द्यारुचि शोथमुदरं पाण्डुकामलम् ।
रसायनी च वृष्या च बलवर्णप्रसादनी ॥ ५ ॥
बृंहणं मधुरं स्निग्धं मत्स्यं मांसञ्च जाङ्गलम् ।
घृतपक्वं सदा भक्ष्यं रूक्षं तीक्ष्णं विवर्जयेत् ॥ ६ ॥

यक्ष्मोपद्रवेषु कासस्य प्राधान्यात यक्ष्मचिकित्सानन्तर कासचिकित्सा प्रारभ्यते तत्र प्रथम बृहद्रसेन्द्रगुडिकानिर्माणमाह कर्षमित्यादि—शुद्धपारदस्यैकं कर्षं, शुद्धगन्धस्यैकं कर्षं, अभ्रकभस्मनश्चैक कर्षं, ताम्रभस्मनश्चैक कर्षं, शुद्धहरितालस्यैकं

कर्षं लौहभस्मनश्चैकं कर्षं, विषस्य=शुद्धवत्सनामचूर्णस्यैकं कर्षं, शुद्धमनःशिलाया एकं कर्षं, क्षाराणामिति टङ्कणस्वर्जिकयवक्षाराणां प्रत्येकैकस्यैकं कर्षं, शुद्धधुस्तूरबीजचूर्णस्यैकं कर्षं, मरिचचूर्णस्यैकं कर्षं समादाय पूर्वं पारदगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य कर्षमितेन जयन्तीपत्रस्वरसेन, चित्रकरसेन, माणकन्दस्वरसेन, खण्डकर्णस्वरसेन=शर्कराकन्दरसेन, मण्डूकपर्णीस्वरसेन, शक्राशनं-भङ्गा तस्याः क्वाथेन, भृङ्गराजरसेन, केशराजरसेन, तथाऽऽर्द्रकस्वरसेन, तथा कर्षमितेन निर्गुण्डीपत्रस्वरसेन च पृथक् २ भावयित्वा विमर्द्य च कलायपरिमाणा-(द्विरक्तिमिता) वटीः कृत्वा काचपात्रे स्थापयेत्। इयं गुटिका प्रत्यहमार्द्रकस्वरसेन सह सेविता पञ्चविधं कासं निहन्ति। तथेयं गुटिका यथाव्याध्यनुपानैस्सेविता कास, श्वास, यक्ष्माणं, भगन्दर, अग्निमान्द्य, अरुचि, शोथं, उदररोगं, पाण्डुरोगं, कामलारोगञ्च निवारयति। तथेयं रसायनी, वृष्या, देहस्य बलवर्णकरी च वर्तते। अस्याः सेवनसमये घृतसंस्कृतं बृंहणं मधुरं स्निग्धञ्चान्नं सदा भक्ष्यं, मत्स्यं जाङ्गलमांसरसञ्च शीलयेत्। रूक्षं तीक्ष्णं विदाहि ह्यम्लं तैलञ्च विवर्जयेत्॥ १-६॥

अमृतार्णवो रसः—

**पारदं गन्धकं शुद्धं मृतलौहञ्च टङ्कणम्।**
**रास्ना विडङ्गं त्रिफला देवदारु च चित्रकम्॥ ७॥**
**अमृता पद्मकं क्षौद्रं विषञ्चैव विमर्दयेत्।**
**द्विगुञ्जं वातकासार्त्तः सेवयेदमृतार्णवम्॥ ८॥**

अथामृतार्णवरसनिर्माणमाह पारदमित्यादि—शुद्धपारदं, शुद्धगन्धकं, मृतलौहं-लौहभस्म, शुद्धटङ्कणं, रास्नाचूर्णं, विडङ्गचूर्णं, त्रिफला=हरीतकीचूर्णं, बिभीतकचूर्णं, आमलकीचूर्णं, देवदारुचूर्णं, चित्रकचूर्णं, अमृता-गुडूचीचूर्णं (सत्वमिति वा), पद्मकं-पद्मकाष्ठचूर्णं, क्षौद्र-मधु, विषं-शुद्धवत्सनाभचूर्णम्, प्रत्येकं समं सममादाय पूर्वं पारदगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य श्लक्ष्णं विचूर्ण्य च काचपात्रे स्थापयेत्। अयममृतार्णवरसो द्विगुञ्जमात्रया प्रत्यहं शुण्ठीचूर्णेन ताम्बूलस्वरसेन च सह सेवितो वातकासं निहन्ति॥ ७-८॥

पित्तकासान्तको रसः—

**भस्म ताम्राभ्रकान्तानां कासमर्दत्वचो रसैः**

मुनिजैर्वेतसाम्लैश्च दिन मर्द्यं सुपिण्डितम् ॥ ९ ॥
निष्कार्द्धं पित्तकासार्त्तो भक्षयेच्च दिनत्रयम् ।
कासश्वासाग्निमान्द्यञ्च क्षयञ्चापि निहन्त्यलम् ॥ १० ॥

अथ पित्तकासान्तकरसनिर्माणमाह भस्मेत्यादि—ताम्राभ्रकान्तलौहाना समं सम भस्म समादाय खल्वे निक्षिप्य कासमर्दत्वच क्वाथै, मणिजै —वकपुष्पस्वरसै· (अगस्त्यपुष्परसै ) वेतसाम्लरसैश्च पृथक् २ दिनैकं भावयित्वा निष्कार्द्धमिता–द्विमाषकमिता (द्विरक्तिमिता पर्याप्ता ) वटी कृत्वा काचपात्रे स्थापयेत् । अय रसो द्वि गुञ्जमित पित्तकासनाशाय प्रयोक्तव्य, तथानुपानभेदेन कास, श्वास, अग्निमाद्य क्षयञ्च निहन्ति ॥ ९–१० ॥

काससहारभैरवो रस —

रसगन्धकताम्राभ्र-शङ्खटङ्कणलौहकम्
मरिचं कुष्ठतालीशं जातीफललवङ्गकम् ॥ ११ ॥
कार्षिकं चूर्णमादाय दण्डेनामर्द्य भावयेत् ।
भेकपर्णीकेशराज-निर्गुण्डी काकमाचिकाः ॥ १२ ॥
द्रोणपुष्पी शालपर्णी ग्रीष्मसुन्दरकस्तथा ।
भार्गी हरीतकी वासा कार्षिकैः पत्रजै रसै· ॥ १३ ॥
वटिकां कारयेद्वैद्यः पञ्चगुञ्जाप्रमाणत· ।
श्रीमद्गहननाथेन कासंसहारभैरवः ।
रसोऽयं निर्मितो यत्नात् लोकरक्षणहेतवे ॥ १४ ॥
वासाशुण्ठीकण्टकारी-क्वाथेन पाययेद् बुधः ।
वातजं पैत्तिकं कासं श्लैष्मिकं चिरजं तथा ॥ १५ ॥
कासं नानाविध हन्ति श्वासमुग्रमरोचकम् ।
बलवर्णकरः श्रीदः पुष्टिदः कान्तिवर्द्धनः ॥ १६ ॥

अथ काससहारभैरवरसनिर्माणमाह रसेत्यादि–शुद्धपारद, शुद्धगन्धक, ताम्रभस्म, अभ्रकभस्म, शङ्खभस्म, शुद्धटङ्कण, लौहभस्म, मरिचचूर्ण, कुष्ठचूर्ण, तालीशपत्रचूर्ण, जातिफलचूर्ण, लवङ्गचूर्णम् । एतेषा प्रत्येक कर्षमित समादाय पूर्व पारदगन्धकयो· कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य तदनु भेकपर्णी, केशराज, निर्गुण्डी, काकमा-

चिका, द्रोणपुष्पी, शालपर्णी, ग्रीष्मसुन्दरक , भार्गी, हरीतकी, वासा, एतेषा पृथक् ७ कर्षमिते पत्रस्वरसैः क्वाथैर्वा भावयित्वा दृढ विमर्द्य च पञ्चगुञ्जाप्रमाणा ( द्विगुञ्जमिता योग्या )वटी कृत्वा काचपात्रे स्थापयेत् । अथ काससंहारभैरवरसो लोकाना रक्षणार्थं श्रीमद्गहननाथेन यत्नान्निर्मित । अयं रसो वासाशुण्ठीकण्टकारीक्वाथानुपानेन सह सेवितो वातिक,पैत्तिक, चिरज श्लैष्मिकश्च कास निहन्ति । तथा यथादोषानुपानपूर्वकं सेवितो नानाविध कास, उग्र श्वास, अरुचिञ्च विनिहन्ति । अयं रसो बल वर्णं पुष्टिञ्च करोति, देहकान्ति–देहशोभाञ्च वर्द्धयति ॥ ११–१६ ॥

लक्ष्मीविलासो रस —

शुद्धसूतं सतालञ्च तालार्द्धं रसखर्परम् ।
वङ्ग ताम्र घन कान्तं कांस्य गन्धं पलं पलम् ॥ १७ ॥
केशराजरसेनैव भावयेद्दिवसत्रयम् ।
कुलत्थस्य रसेनैव भावयेच्च पुन पुनः ॥ १८ ॥
एला जातीफलाख्यञ्च तेजपत्र लवङ्गकम् ।
यमानी जीरकञ्चैव त्रिकटु त्रिफला समम ॥ १९ ॥
नतं भृङ्ग वशगर्भं कर्षमात्रञ्च कारयेत् ।
भावयेच्च रसेनैव गोलयेत् सर्वमौषधम् ।
छायाशुष्का वटी कार्य्या चणकप्रतिमा शुभा ॥ २० ॥
शीताम्बुना पिबेद्धीमान् सर्वकासनिवृत्तये ।
मत्स्य मांस तथा क्षीर पथ्य स्यात्स्निग्धभोजनम् ॥ २१ ॥
क्षयं कास तथा श्वास सज्वरं वाऽथ विज्वरम् ।
हलीमक पाण्डुरोग शोथ शूलं प्रमेहकम ॥ २२ ॥
अर्शोनाश करोत्येव बलवृद्धिञ्च कारयेत् ।
वर्जयेच्छाकमम्लञ्च भृष्टद्रव्य हुताशनम् ॥ २३ ॥

अथ लक्ष्मीविलासरसनिर्माणमाह शुद्धेत्यादि–शुद्धसूतं–शुद्धपारद(१पल),शुद्धहरिताल(भस्म वा)(१पल),तालार्द्धरसखर्परं–खर्परभस्म(अर्द्धपल), वङ्गभस्म(१पल) ताम्रभस्म(१पल), घनम्–अभ्रकभस्म(१पलं), कान्तलौहभस्म(१पल), कांस्यभस्म (१पलं), शुद्धगन्धकं(१पल) समादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेष-

द्रव्याणि सम्मेल्य केशराजरसेन दिवसत्रय भावयेत् , तत कुलत्थक्वाथेन दिनत्रयं मप्तधा भावयेत् । ततस्तस्मिन् बृहदेलाचूर्ण(१क ),जातीफलचूर्ण(१क०),तेजपत्रचूर्ण (१क०),लवङ्गचूर्ण(१क०),यमानीचूर्ण(१क०),जीरकचूर्ण(१क०),त्रिकटुचूर्ण पृथक्२ (१क०),त्रिफलाचूर्ण पृथक्२(१क०),नत नहुषचूर्ण(तगरचूर्ण)(१क०),भृङ्ग-वराङ्गचूर्ण (तजचूर्ण)(१क०)(दारुसिताचूर्णमिति केचित्), वगगर्भ –सूक्ष्मवस्त्रसारित,वंशलोचन (१क०)दत्वा केशराजरसेन कुलत्थक्वाथेन च क्रमश पृथक् २ दिनत्रय विमर्द्य चणकप्रमाणा (प्राय. गुञ्जामिता वटा पर्याप्ता )वटी कृत्वा छायायाञ्च संशोष्य काच पात्रे स्थापयेत । इमा वटी प्रत्यह शीतलजलेन सह सर्वकासशान्त्यर्थं प्रयोजयेत् । तथा अनुपानभेदेन वटीय क्षय, कास, श्वास, ज्वर,विषमज्वर, हलीमक, पाण्डुरोग, शोथं, शूलं, प्रमेह अर्शोरोगञ्च निहन्ति । अस्या सेवने पथ्ये मत्स्या , मास, क्षीर, स्निग्धमन्नादिक देयम् । अपथ्य–शाक, अम्लपदार्थसेवन, वह्निमृष्ट चणकादिकं,वह्नि-सेवनमातपञ्च वर्जयेत् ॥१७–२३॥

सर्वेश्वरो रस —

**रसगन्धकयोश्चूर्णमेकीकृत्याभ्रकं तथा ।**
**हेमभिश्च समं कृत्वा मर्दयेत् यामकद्वयम् ॥ २४ ॥**
**त्र्यूषणानि लवङ्गैला-टङ्कणं हेमतुल्यकम् ।**
**कण्टकार्य्या रसैर्भाव्यमेकविंशतिवारकम् ॥ २५ ॥**
**शिग्रुवीजार्द्रकरसैः सप्तधा भावयेत् पृथक् ।**
**रसः सर्वेश्वरो नाम कासश्वासक्षयापहः ।**
**अनुपान प्रयोक्तव्यं विभीतकफलत्वचम् ॥ २६ ॥**

अथ सर्वेश्वररसनिर्माणमाह रसेत्यादि–शुद्धरसगन्धकयो पृथक्२ तोलकैक समादाय कज्जली कृत्वा अभ्रकभस्म(१तो०), हेमभस्म(१तो०)निक्षिप्य यामद्वय विमर्द्य पुनस्तत्र त्र्यूषण =शुण्ठीचूर्ण, मरिचचूर्ण पिप्पलीचूर्ण, लवङ्गचूर्ण, बृहदेलाचूर्ण, शुद्धटङ्कणम् ,एतत् प्रत्येक हेमतुल्यं(एकैकतोलकमित्यर्थ )दत्वा सम्मर्द्य च कण्टकारीक्वाथेन सम्यगाप्लाव्य विमर्दयेत्। मर्दनयोगेन सशुष्के द्रव्ये पुनस्तेन क्वाथेन तमाप्लाव्य मर्दनयोगेन शोषयेत, इत्थमेकविंशतिवार भावयित्वा शिग्रुवीजक्वाथेन, आर्द्रकस्वरसेन च क्रमश पृथक् २ सप्तवारं भावयित्वा द्विरक्तिमिता वटी कृत्वा छायाया सशोष्य काचपात्रे स्थापयेत्। अयं सर्वेश्वररसो विभीतकफलत्वच क्वा-

-वानुपानेन सह सेवितं श्वासं श्वासं क्षयं नाशयति ॥ २४-२६ ॥

शृङ्गाराभ्रम्—

शुद्धं कृष्णाभ्रचूर्णं द्विपलपरिमितं शाणमानं यदन्यत्
कर्पूरं जातिकोषं सजलमिभकणा तेजपत्रं लवङ्गम् ।
मांसी तालीशचोचे गजकुसुमगदं धातकी चेति तुल्यम्
पथ्या धात्री विभीतं त्रिकटुरथ पृथक् त्वर्द्धशाणं द्विशाणम् ॥२७॥
एला जातीफलाख्यं क्षितितलविधिना शुद्धगन्धाश्मकोलं
कोलार्द्धं पारदस्य प्रतिपटविहितं पिण्डमेकत्र मिश्रम् ।
पानीयेनैव कार्य्या परिणतचणकस्विन्नतुल्याश्च वटाः
प्रातः खाद्याश्चनस्त्वस्तदनु च हि कियत् शृङ्गवेरं सपर्णम् ॥ २८ ॥
पानीयं पीतमन्ते ध्रुवमपहरति क्षिप्रमेतान् विकारान्
कोष्ठे दुष्टाग्निजातान् ज्वरमुदररुजो राजयक्ष्मक्षयश्च ।
कासं श्वासं सशोथं नयनपरिभवं मेहमेदोविकारान्
छर्दिं शूलाम्लपित्तं तृषमपि महतीं गुल्मजालं विशालम् ॥ २९ ॥
पाण्डुत्वं रक्तपित्तं गरलभवगदान् पीनसं प्लीहरोगम्
हन्यादामानिलोत्थान् कफपवनकृतान् पित्तरोगानशेषान् ।
बल्यो वृष्यश्च योगस्तरुणतरकरः सर्वरोगे प्रशस्तः
पथ्यं मांसैश्च यूषैः घृतपरिलुलितैः गव्यदुग्धैश्च भूयः ॥ ३० ॥
भोज्यं योज्यं यथेष्टं ललितललनया दीयमानं मुदा यत्
शृङ्गाराभ्रेण कामी युवतिजनशताभोगयोगादतुष्टः ।
वर्ज्यं शाकाम्लमादौ दिनकतिपयचित् स्वेच्छया भोज्यमन्यत्
दीर्घायुः काममूर्त्तिर्गतवलिपलितो मानवोऽस्य प्रसादात् ॥ ३१ ॥

अथ शृङ्गाराभ्रनिर्माणमाह शुद्धमित्यादि—शुद्धं कृष्णाभ्रचूर्णं=कृष्णाभ्रकभस्म द्विपलपरिमितं,कर्पूर,जातीकोषचूर्णं(जावित्रीचूर्ण)'जलं=बालकचूर्णं, इभकणा—गजपिप्पलीचूर्णं, तेजपत्रचूर्णं,लवङ्ग—लवङ्गचूर्णं,मांसी—जटामांसीचूर्णं,तालीशपत्रचूर्णं, चोच—दराङ्गचूर्णं(तजचूर्णं), गजकुसुमगद—नागकेशरचूर्णं, धातकीपुष्पचूर्णम् । एतत् कर्पूरादि-धातकीपर्यन्तं प्रत्येकद्रव्यं शाणमितं(चतुर्माषकमितमित्यर्थः)तथा पथ्या—हरीतकीचूर्णं, धात्री=आमलकचूर्णं, विभीतकचूर्णं, त्रिकटु =शुण्ठीचूर्णं, मरिचचूर्णं, पिप्पलीचूर्णं

प्रत्येकमर्धशाणमित(२मा०),बृहदेलाचूर्णं, जातीफलचूर्णं प्रत्येक,द्विशाणमित (८मा०), क्षिततलविधिना-पातालयन्त्रेण शोधित गन्धादम-गन्धक कोलमितं द्विशाणमित्यर्थ ,
"माशैश्चतुर्भि शाण स्याद्धरण तन्निगद्यते । टङ्क स एव कथितस्तद्द्वय कोल उच्यते" ॥
पातालयन्त्रशोधितमिति निम्नविधिशुद्ध गन्धकं ग्राह्यम् यथा—
स्थाल्या दुग्धं विनिक्षिप्य घृतञ्चापि विनिक्षिपेत् । तन्मुख तनुवस्त्रेण त्वहतेनाथ रोधयेत् ॥
चूर्णीकृत गन्धकञ्च वसनोपरि विन्यसेत् । छादयेत् पृथुदीर्घेण खर्परेणैव गन्धकम् ॥
सवस्त्रकुट्टितमृदा तयो सन्धि निरोधयेत् । आकण्ठ भाजन गर्ते निधाय भिषजाग्रणी ॥
ज्वालयेत् खर्परस्योर्द्ध्वं वनच्छाणैस्तथोपलैः । दुग्धे निपतितो गन्धो गलित परिशुध्यति॥
गन्ध शीत सुविज्ञाय वारिणोष्णेन क्षालयेत् । एवमेकेन वारेण गन्धको निर्मलो भवेत् ॥
रसायनार्थञ्च—शतवार कृतश्चैव निर्गन्धो जायते ध्रुवम् ॥ इति ।

(कोल तोलकमिति केचित् ), तथा पारदस्य शुद्धपारदस्य कोलार्द्ध-समादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य ( प्रतिपदविहित पिष्टमिति सर्वद्रव्याणि पृथक् २ पिष्ट्वा ततस्त्वेकत्र मिश्रयेत् ) । जलेन सह दृढ विमर्द्य परिणतचणकस्विन्नतुल्या पाकेन जले स्वेदनेन बृहदाकारलब्धचणकैस्तुल्या ( गुञ्जमिता प्राय कार्या ) वटी कृत्वा काचपात्रे स्थापयेत् । अस्य रसस्य प्रत्यह चतस्रो वटय प्रभाते सपर्ण शृङ्गवेरमिति आर्द्रकताम्बूलयो स्वरसेन सह शीतजलानुपानपूर्वक सेविता पाचकाग्निदोषजनितकोष्ठविकारान , ज्वर, उदररुज , राजयक्ष्माण, क्षय कास, श्वास, शोथ, नेत्रविकार, प्रमेह, मेदोविकार, वमन, शूल, अम्लपित्त, तृषाधिक्यं, गुल्मप्रकारान्, दारुण पाण्डुरोग, रक्तपित्त, गरलभवगदानिति विषोत्पन्नरोगान्, पीनस, प्लीहरोग, आमानिलोत्थान् = आमवातविकारोत्पन्नान्, कफवातजन्यान्, सकलान् पित्तरोगांश्च नाशयन्ति । तथाय रसः देहबलकर , वृष्यगुणकर , ( यज्जराव्याधिविध्वंसि तद्रसायनमिति ) तथा देहे च तारुण्यमुत्पादयति, अय रसो यथाव्याध्यनुपानैश्च सर्वरोगेषु प्रशस्त । पथ्य मासरस, सघृत मुद्गादियूष, घृतसंस्कृतभोजन, गोदुग्ध, सौम्यस्वभावपरिचारिकया दीयमान यथेष्ट स्निग्धभोजनम् । अपथ्यञ्च कतिपयदिनपर्यन्त शाकसेवनम् , अम्लपदार्थसेवनञ्च ज्ञेयम् । इत्थ विधिपूर्वक प्रत्यहमस्य सेवनेन पुरुषो दीर्घायु , कन्दर्पसमसौन्दर्ययुक्तो वलिपलितरोगमुक्तस्तथा युवतिजनशताभोगयोगादप्यतुष्टो भवति । अय रसः सर्वरोगनाशने श्रेष्ठ इति ॥ २७-३१ ॥

सार्वभौमरस —

जीर्णं सुवर्णं लौहं वा यद्यत्रैव प्रदीयते ।
तदाऽय सर्वरोगाणां सार्वभौमो न संशय ॥ ३२ ॥

अथ सार्वभौमरसनिर्माणमाह जीर्णमित्यादि—अस्मिन् ग्रहणाश्चरसे पुराण स्वर्णभस्म, लौहभस्म च प्रत्येक कर्षमित प्रक्षिप्यते तदाय रस सार्वभौमनाम्ना प्रसिद्धो भवति, अर्थात् सर्वरोगाणा नाशने श्रेष्ठ ॥ ३२ ॥

तरुणानन्दरस —

कर्षद्वयं रसेन्द्रस्य शुद्धस्य गन्धकस्य च ।
कज्जलीकृत्य यत्नेन शुभे दृढशिलातले ॥ ३३ ॥
विल्वाग्निमन्थः श्योणाक' काश्मरी पाटला वला ।
मुस्तं पुनर्नवा धात्री वृहती वृषपत्रकम् ॥ ३४ ॥
विदारी शतमूली च कर्षैरेषां पृथक् रसै. ।
मर्दयित्वा पुनर्वासा-स्वरसैर्दशतालकै ॥ ३५ ॥
मर्दयेत्तत्र शुद्धाभ्र रसस्य द्विगुण क्षिपेत् ।
रसस्यार्द्धञ्च कर्पूर तत्रैव दापयेद्भिषक् ॥ ३६ ॥
जातीकोषफले मांसी-तालीशैला-लवङ्गकम् ।
चूर्णं कृत्वा प्रयत्नेन माषमात्र क्षिपेत् पृथक् ॥ ३७ ॥
विदारीस्वरसेनैव वटिकां कारयेद्भिषक् ।
राजयक्ष्माणमत्युग्रं क्षयञ्चोग्रमुरः क्षतम् ॥ ३८ ॥
कासं पञ्चविधं श्वासं स्वराघातमरोचकम् ।
कामलां पाण्डुरोगञ्च प्लीहानं सहलीमकम् ॥ ३९ ॥
जीर्णज्वरं तृषां गुल्मं ग्रहणीमामसम्भवाम् ।
अतीसारञ्च शोथञ्च कुष्ठानि च भगन्दरम् ॥ ४० ॥
नाशयेदेष विख्यातस्तरुणानन्दसंज्ञितः ।
रसायनवरो वृष्यश्चक्षुष्यः पुष्टिवर्द्धनः ॥ ४१ ॥
सहस्र याति नारीणां भक्षणादस्य मानव. ।
क्षीणता न च शुक्रस्य न च वुद्धिवलक्षयः ॥ ४२ ॥

**द्विमासमुपयोगेन निहन्ति सकलान् गदान् ।**
**शुक्रसन्दीपनं कृत्वा ज्वरं हन्ति न संशयः ॥ ४३ ॥**
**नारिकेलजलेनैव भक्षयोऽयञ्च रसायनः ।**
**क्षीरानुपानात् वृष्योऽय न क्वचित प्रतिहन्यते ॥ ४४ ॥**

अथ तरुणानन्दरसनिर्माणमाह कर्षेत्यादि—रसेन्द्रस्य-शुद्धपारदस्य द्विकर्ष, शुद्धगन्धकस्य च द्विकर्ष समादाय शुभे पाषाणखल्वे द्वयो कज्जलीं कृत्वा विल्व, अग्निमन्थ = गणिकारिका ( अरणी ), श्योणाक, काश्मरी = गभारी, पाटला,वला, मुस्तकं, पुनर्नवा, धात्री, वृहती कण्टकारिका, वृषपत्रक—वासक, विदारीकन्द, शतमूली = शतावरी, एषा प्रत्येकस्य कर्षमितै स्वरसै क्वाथैर्वा पृथक् २ भावयेत् ( तश्च दशतोलकपरिमितवासास्वरसेन सम्यगाप्लाव्य मर्दयेत् । ततस्तत्रभावितकज्जलिकाया रसस्य द्विगुण ( ४ क० ) शुद्धाभ्रमभ्रकभस्म, रसस्यार्द्धञ्च कर्पूर ( २ क० ), जातीफलचूर्ण (१मा०), जातीकोषचूर्ण ( जावित्रीचूर्ण ) (१मा०), मासी—जटामासीचूर्ण (१मा०), तालीशपत्रचूर्ण (१मा०), बृहदेलाचूर्ण (१मा०), लवङ्गचूर्ण (१मा०) दत्वा विदारीकन्दस्वरसेन क्वाथेन वा सम्यगाप्लाव्य विमर्द्य च रक्तिमिता वटी कृत्वा काचपात्रे स्थापयेत् । अय तरुणानन्दरसो यथाव्याध्यनुपाने प्रत्यह सेवित पञ्चविध कास, श्वास, स्वराघात, अरुचिं, कामला, पाण्डु राग, प्लीहवृद्धिं, हलीमकरोग,जोर्णज्वर, तृषाधिक्य, गुल्मम्, आमसम्भवा ग्रहणीं, अतीसारं, शोथ, सर्वाणि कुष्ठानि, भगन्दरञ्च नाशयति । अय रस सर्वरसायने( श्रेष्ठो वृष्यगुणकर, नेत्रामयहर, देहपुष्टिवर्द्धकश्च वर्तते, अस्य सेवनात् पुरुषो नारीणा सहस्रमपि गन्तु शक्नोति नच शुक्रवलबुद्धिक्षयो भवति, ( स्तम्भनगुणकरोऽयमिति भाव ) । द्विमासपर्यन्तमय रसो यथाविधि सेवित कामला, पाण्डुरोगं, ज्वरञ्च नाशयति, शुक्रसन्दीपन करोति । अय रसो नारिकेलजलेन दुग्धानुपानेन च वृष्यार्थं सेव्य, अन्यरोगेषु तत्तद्रोगघ्नभेषजचूर्णस्वरसानुपाने सेव्य । अस्य मात्रा गुञ्जैकादारभ्य द्विगुञ्जमिता यथारोग यथावयश्च विविच्य वा कल्पनीया ॥ ३२—४४ ।

महोदधिरस —

**सूतकं गन्धकं लौहं विषञ्चैव वराङ्गकम् ।**
**ताम्रकं वङ्गभस्मापि व्योमकञ्च समांशकम् ॥ ४५ ॥**

त्रिकटु भद्रमुस्तञ्च विडङ्ग नागकेशरम् ।
रेणुकामलकञ्चैव पिप्पलीमूलमेव च ॥ ४६ ॥
एषाञ्च द्विगुणं भाग मर्दयित्वा प्रयत्नत· ।
भावना तत्र दातव्या गजपिप्पलिकाऽम्बुभिः ॥ ४७ ॥
मात्रा चणकतुल्या तु वटिकेय प्रकीर्त्तिता ।
कास हन्ति तथा श्वासमर्शांसि च भगन्दरम् ॥ ४८ ॥
हृच्छूल पार्श्वशूलञ्च कर्णरोग कपालिकाम् ।
हरेत् सग्रहणीरोगानष्टौ च जाठराणि च ।
प्रमेहान् विंशतिञ्चैव चतुर्विधमजीर्णकम् ॥ ४९ ॥
न चान्नपाने परिहार्य्यमस्ति न शीतवातातपमैथुनेषु ।
यथेष्टचेष्टाभिरत प्रयोगे नरो भवेत् काञ्चनराशिगौर· ॥५०॥

अथ महोदधिरसनिर्माणमाह सूतकमित्यादि—शुद्धपारद, शुद्धगन्धकं, लौह-भस्म, शुद्धवत्सनाभचूर्णं, त्राङ्गक–चोचचूर्णं ( तजचूर्ण ), ताम्रभस्म, वङ्गभस्म, व्योमकमभ्रकभस्म, एतेषा प्रत्येक तोलकैक, तथा त्रिकटु =शुण्ठीचूर्णं, मरिचचूर्णं, पिप्पलाचूर्णं, तथा भद्रमुस्तकचूर्णं, विडङ्गचूर्णं नागकेशरचूर्णं, रेणुका =हरेणुकाचूर्णं, ( अभावे निर्गुण्डीपत्रचूर्णम् ),आमलकचूर्णं, पिप्पलीमूलचूर्णम् । एतेषा प्रत्येक द्वि-तोलक समादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य गजपि-प्पलिकाम्बुभि =गजपिप्पलीक्वाथैर्भावयित्वा चणकतुल्या ( द्विरक्तिमिता ) वटी कृत्वा काचपात्रे स्थापयेत् । अय रस प्रत्यह यथाव्याध्यनुपानैस्सह सेवित कास, श्वासं, सर्वार्शांसि, भगन्दर, हृच्छूल, पार्श्वशूल, कर्णरोग, कपालिकारोग ( कपा-लास्थिसन्निकटधातुशूलादिक ) सग्रहणी, अष्टावुदराणि, विंशतिविधप्रमेहान्, चतु-र्विधमजीर्णञ्च नाशयति । अस्य सेवनविधौ न किमपि वर्जनीय तथापि प्रायेण वि-दाहिभोजन, अम्लादिकञ्च विवर्जयेत् ॥ ४५–५० ॥

जयागुडिका—

सूतकं गन्धको लौह विष वत्सकमेव च ।
विडङ्गं केशरं मुस्तमेलाग्रन्थिकरेणुकम् ॥ ५१ ॥
त्रिकटु त्रिफला चित्र शुद्धं जपालबीजकम् ।

एतानि समभागानि द्विगुणो गुड उच्यते ॥ ५२ ॥
तिन्तिडीबीजमानेन प्रातः काले च भक्षयेत् ।
कासं श्वासं क्षयं गुल्मं प्रमेहं विषमज्वरम् ॥ ५३ ॥
अजीर्णं ग्रहणीरोगं शूलं पाण्ड्वामयं जयेत् ।
अपाने हृदये शूले वातरोगे गलग्रहे ॥ ५४ ॥
अरुचावतिसारे च सूतिकाऽऽतङ्कपीडिते ।
जयाऽऽख्या निर्मिता ह्येषा भक्षणीया सुरैरपि ॥ ५५ ॥

अथ जयागुटिकानिर्माणमाह सूतकमित्यादि—सूतक = शुद्धपारद, शुद्धगन्धकः लौहभस्म, विष = शुद्धवत्सनाभचूर्ण, वत्सक–कुटजत्वचश्चूर्ण, विडङ्गचूर्ण, केशर–नागकेशरचूर्ण, मुस्तकचूर्ण, बृहदेलाचूर्ण, ग्रन्थिकं–पिप्पलीमूलचूर्ण, रेणुक–हरेणुकाचूर्ण, त्रिकटु=शुण्ठीचूर्ण, मरिचचूर्ण, पिप्पलीचूर्ण, त्रिफला = हरीतकीचूर्ण, विभीतकचूर्ण, आमलकीचूर्ण, चित्रकचूर्ण, शुद्धजयपालबीजचूर्णम् । एतेषां प्रत्येकं समभागेनादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य सर्वद्रव्यसमपुराणगुड निक्षिप्य सम्यक् विमर्द्य च तिन्तडीबीजप्रमाणा गुडिका कृत्वा काचपात्रे स्थापयेत् । इय गुडिका प्रत्यह यथादोषानुपानपूर्वक सेविता कास, श्वास, क्षय गुल्म, प्रमेह, विषमज्वरं, अजीर्णं, ग्रहणारोग, शूल, पाण्डुरोगञ्च नाशयति । एना गुडिकामपाने, हृदयशूले, वातिकरोगे, गलग्रहे, अरुचौ, अतीसारे, सूतिकारोगपीडिते च स्वस्वानुपानैस्सह प्रयोजयेत् ॥ ५१–५५ ॥

विजयागुडिका—

सूतका गन्धको लोहं विषं चित्रकपत्रकम् ।
विडङ्गरेणुकामुस्तमेलाकेशरग्रन्थिकम् ॥ ५६ ॥
फलत्रिकं त्रिकटुकं शुल्वभस्म तथैव च ।
एतानि समभागानि द्विगुणो दीयते गुडः ॥ ५७ ॥
कासे श्वासे क्षये गुल्मे प्रमेहे विषमज्वरे ।
सूतायां ग्रहणीरोगे शूले पाण्ड्वामये तथा ।
हस्तपादादिदाहे च गुडिकेयं प्रशस्यते ॥ ५८ ॥

अथ विजयागुडिकानिर्माणमाह सूतकमित्यादि—सूतकं–शुद्धपारदं, शुद्धगन्ध-

क, लौहभस्म, विष-शुद्धवत्सनाभचूर्ण, चित्रकचूर्ण, पत्रक-तेजपत्रचूर्ण, विडङ्गचूर्ण, रेणुका-हरेणुकाचूर्ण, मुस्तकचूर्ण, एलाबीजचूर्ण, केशर-नागकेशरचूर्ण, ग्रन्थिक-पिप्पलीमूलचूर्ण, फलत्रिक=हरीतकीचूर्ण, विभीतकचूर्ण, आमलकीचूर्ण, त्रिकटुक-शुण्ठीचूर्ण, मरिचचूर्ण पिप्पलीचूर्ण, शुल्वभस्म, ताम्रभस्म। एतानि समभागानि समादाय पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य सर्वमिलितद्रव्यद्विगुणञ्च पुराण गुड दत्वा दृढ विमर्द्य च तिन्तीडीफलप्रमाणा गुडिका कृत्वा काचपात्रे स्थापयेत्। इमा गुडिका यथाव्याध्यनुपानपूर्वक प्रत्यह कासे श्वासे, क्षये गुल्मे, प्रमेहे, विषमज्वरे, सूतिकाया, ग्रहणीरोगे, शूले, पाण्डुरोगे, हस्तपादादिदाहे च प्रयोजयेत् ॥ ५६-५८ ॥

स्वच्छन्दभैरवो रस —

**रसमेक द्विधा गन्ध गन्धतुल्यञ्च सैन्धवम्।**
**ज्वालामुखीरसै पञ्च दिनानि परिमर्दयेत् ॥ ५९ ॥**
**मूषकाया निरुध्याथ पुटेद्रात्रौ च मध्यमम्।**
**सर्वे भस्म यदा याति वल्लमेन प्रयच्छति ॥ ६० ॥**
**ग्रहण्यां सग्रहण्याञ्च कासे श्वासे विशेषतः।**
**उग्रासु ज्वरतन्द्रासु निद्रास्वल्पासु योजयेत् ॥ ६१ ॥**
**अन्यरोगेषु त दद्याद्रस स्वच्छन्दभैरवम्।**
**तुष्टिं पुष्टिमसौ कुर्य्यात् सौकुमार्य्यञ्च कारयेत् ॥ ६२॥**

अथ स्वच्छन्दभैरवरसनिर्माणमाह रसेत्यादि—रस शुद्धपारदमेकतोलकं, गन्ध-शुद्धगन्धक द्वितोलक, सैन्धवलवण गन्धकतुल्य (२तो०), पूर्वं पारदगन्धकयो कज्जलीं कृत्वा लवण सम्मेल्य ज्वालामुखीरसै -शुद्धभल्लातकफलाना स्वरसै क्वाथैर्वा सम्यगाप्लाव्य पञ्चदिनपर्यन्त मर्दयेत्। पुनश्च शुष्क चूर्ण मूषाया प्रपूर्य तस्या मुखञ्च निरुध्य रात्रौ मध्यमपुटे पुटेत्। यदि च पुटेनैकेन भस्म न स्यात्तदा पुनर्द्वितीयवार पुटेत्। अय रसो वल्लमित प्रत्यहं यथाव्याध्यनुपानपूर्वक ग्रहण्या, कासे, श्वासे, तथा तीव्रज्वरजन्यतन्द्राया, स्वल्पनिद्राया, तथान्येष्वपि रोगेषु प्रयोक्तव्य। असौ रसस्तुष्टिं-चित्तप्रसाद, देहपुष्टिं, सौकुमार्यञ्च करोति ॥ ५९-६२ ॥

रसगुडिका—

**रसभागो भवेदेको गन्धको द्विगुणो मत ।**

त्रिभागा पिप्पली, पथ्या चतुर्भागा, विभीतकः ॥ ६३ ॥
पञ्चभागः, त्वामला च षड्गुणा, सप्तभागिका।
भार्गी, सर्वमिदं चूर्णं भाव्यं बब्बोलजैर्द्रवैः ॥ ६४ ॥
एकविंशतिवारञ्च मधुना गुडिका कृता।
विभीतकप्रमाणेन प्रातरेकान्तु भक्षयेत्।
कासं श्वासं हरेत् क्षुद्रा-काथं तदनु कृष्णया ॥ ६५ ॥

अथ रसगुडिकानिर्माणमाह रसेत्यादि—शुद्धरस (१तो०), शुद्धगन्धक (२ तो०), पिप्पलीचर्ण (३तो०), पथ्या-हरीतकीचूर्ण (४तो०), विभीतकचूर्णं (५ तो०), आमलकचूर्णं (६तो०), भार्गीचूर्णं (७तो०), पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य बब्बोलजैर्द्रवैरिति बब्बूलत्वच क्वाथैरेकविंशतिवारं भावयित्वा (प्रत्यहं क्वाथेनाप्लाव्य विमर्दयेत्, इत्यसेकविंशतिवार कर्त्तव्यम्) किञ्चिन्मधु च सम्मेल्य विभीतकफलप्रमाणा (तोलकमिता) वटी कृत्वा काचपात्रे स्थापयेत्। इय गुडिका यथारोग, यथावयश्च मात्रा प्रकल्प्य बलिने तीव्ररोगे च तोलकप्रमाणेन कृष्णा-पिप्पली तस्याश्चूर्णमिश्रितलघुकण्टकारिकाक्वाथानुपानपूर्वक सेविता कासं श्वासञ्च विनिहन्ति ॥ ६३-६५ ॥

रसेन्द्रगुडिका—

माक्षिकञ्च शिखिग्रीवमभ्रकं तालक तथा।
एतांस्तु मिलितान् सर्वान् भावयेदार्द्रकद्रवैः ॥ ६६ ॥
रक्तिद्वयप्रमाणान्तु कल्पयेत् गुडिकां भिषक्।
जीर्णान्ने भक्षयेदेकां क्षीरमांसरसाशन· ॥ ६७ ॥
पञ्च कासं क्षय श्वासं रक्तपित्तं विनाशयेत्।
पाण्डुक्रिमिज्वरहरी कृशानां पुष्टिवर्द्धनी ॥ ६८ ॥
शुक्रवृद्धिकरी चैषा अम्लपित्तविनाशिनी।
वह्निसन्दीपनी श्रेष्ठा त्वरोचकविनाशिनी ॥ ६९ ॥

अथ रसेन्द्रगुडिकानिर्माणमाह माक्षिकमित्यादि—माक्षिकं—स्वर्णमाक्षिकभस्म (१तो०), शिखिग्रीवं-शुद्धतुत्थकचूर्णम्(१तो०),अभ्रकभस्म(१तो०), शुद्धतालक तस्य भस्म वा (१तो०),एतान् खल्वे निक्षिप्य सञ्चूर्ण्य च आर्द्रकस्वरसेन भावयित्वा रक्तिद्वयप्रमाण।

गुडिका कृत्वा काचपात्रे स्थापयेत्। इयं गुडिका भाजनपरिपाकावसाने(प्रातरेव सेवनं वरं)यथाव्याध्यनुपानपूर्वकं सेविता पञ्चविध कास, क्षय, श्वास, रक्तपित्त,पाण्डुरोग, ज्वर, क्रिमि, अम्लपित्त, अरोचकञ्च नाशयति, तथा पाचकशक्तिं वर्द्धयति शुक्रस्य च वृद्धिं करोति। पथ्यञ्च दुग्ध, मांसरस, अविदाहिलघुपदार्थभोजनम् ॥ ६६-६९ ॥

पुरन्दरवटी—

सूतकात् द्विगुणं गन्धमेकधा कज्जलीकृतम्।
त्रिकटुत्रिफलाचूर्णं प्रत्येकं सूतसम्मितम् ॥ ७० ॥
अजाक्षीरेण सम्भाव्य वटिका कारयेत् ततः।
आर्द्रकस्य रसैः सेव्या शीततोयं पिबेदनु ॥ ७१ ॥
कासश्वासप्रशमनी विशेषादग्निवर्द्धनी।
इयं यदि सदा सेव्या तदा स्याद् योगवाहिका।
वृद्धोऽपि तरुणः शक्तः स्त्रीशतेषु वृषायते ॥ ७२ ॥

अथ पुरन्दरवटीनिर्माणमाह सूतकादित्यादि—तोलकमितं पारदं, तस्माच्च द्विगुणं शुद्धगन्धकं (२तो०),त्रिकटुचूर्णं प्रत्येकं तोलकैकम्, तथा त्रिफलाचूर्णं प्रत्येकं तोलकैकं समादाय पूर्वं पारदगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य अजादुग्धेन सम्यगाप्लाव्य दृढं विमर्द्य च द्विरक्तिमिता वटीं कृत्वा काचपात्रे स्थापयेत्। इयं गुडिका प्रत्यहं मधुना आर्द्रकस्वरसानुपानेन च सेविता कासं,श्वासं, हन्ति,पाचकाग्निं प्रदीपयति। इयं योगवाहिका वर्तते। तथा सदा स्वास्थ्यसंप्राप्त्यर्थं सेव्या, अस्याः सेवनेन कामशक्तिर्वर्द्धते ॥ ७०-७२ ॥

कासान्तको रसः—

सूतं गन्धो विषञ्चैव शालपर्णी च धान्यकम्।
यावन्त्येतानि चूर्णानि तावन्मात्रं मरीचकम्।
गुञ्जाचतुष्टयं खादेन्मधुना कासशान्तये ॥ ७३ ॥

अथ कासान्तकरसनिर्माणमाह सूतमित्यादि—शुद्धपारदं (१तो०),शुद्धगन्धकं (१तो०), विषं शुद्धवत्सनाभचूर्णं (१तो०), शालपर्णीचूर्णं (१तो०), धान्यकचूर्णं (१तो०), सर्वसमं च मरिचचूर्णं(५तो०), समादाय पूर्वं रसगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य सञ्चूर्ण्य च काचपात्रे स्थापयेत्। अयं रसो यथाबलं गुञ्जैकादारभ्य गुञ्जाचतुष्टयमितो मधुना सेवितः कासं निहन्ति ॥ ७३ ॥

कासकुठार —

हिङ्गुलं मरिचं गन्धः सव्योषं टङ्कणं तथा ।
द्विगुञ्जश्चार्द्रकद्रावैः सन्निपातं सुदारुणम् ।
कासं नानाविधं हन्ति शिरोरोगं विनाशयेत् ॥ ७४ ॥

अथ कासकुठाररसनिर्माणमाह हिङ्गुलमित्यादि—शुद्धहिङ्गुल, मरिचचूर्णं, शुद्ध-गन्धक, व्योषचूर्णं, शुद्धटङ्कणम् । एतत् प्रत्येकं समं सममादाय पूर्वं हिङ्गुलगन्धकयो पेषणं कृत्वा शेषद्रव्याणि सम्मेल्य आर्द्रकस्वरसेन भावयित्वा विमर्द्य च द्विगुञ्जमिता वटी कृत्वा शोष्य च काचपात्रे स्थापयेत् । अथ रस प्रत्यह द्विगुञ्जमित आर्द्रकस्वरसमधुभ्या सेवित सुदारुणं सन्निपात, नानाविध कास, शिरोरोगञ्च विनाशयति ॥ ७४ ॥

चन्द्रामृतलौहम्—

त्रिकटु त्रिफला धान्यं चव्यं जीरकसैन्धवम् ।
दिव्यौषधिहतस्यापि तत्तुल्यमयसो रजः ॥ ७५ ॥
नवगुञ्जाप्रमाणेन वटिकां कारयेद्भिषक् ।
प्रातःकाले शुचिर्भूत्वा चिन्तयित्वाऽमृतेश्वरीम् ॥ ७६ ॥
एकैकां वटिकां खादेत् रक्तोत्पलरसाप्लुताम् ।
नीलोत्पलरसेनैव कुलत्थस्वरसेन च ॥ ७७ ॥
निहन्ति विविधं कासं दोषत्रयसमुद्भवम् ।
वातिकं पैत्तिकञ्चैव गरदोषसमुद्भवम् ॥ ७८ ॥
सरक्तमथ नीरक्तं ज्वरं श्वाससमन्वितम् ।
भ्रमतृड्दाहशूलघ्नं रुच्यं वह्निप्रदीपनम् ॥ ७९ ॥
बलवर्णकरं वृष्यं जीर्णज्वरविनाशनम् ।
इदं चन्द्रामृतं लौहं चन्द्रनाथेन निर्मितम् ॥ ८० ॥

अथ चन्द्रामृतलौहनिर्माणमाह त्रिकट्वित्यादि—त्रिकटु = शुण्ठीचूर्णं, मरिचचूर्णं, पिप्पलीचूर्णं, त्रिफला = हरीतकीचूर्णं, विभीतकचूर्णं, आमलकीचूर्णं, तथा धान्यकचूर्णं, चव्यचूर्णं, जीरकचूर्णं, सैन्धवलवणम् । प्रत्येक तोलकैकमितं, तथा दिव्यौषधिहतस्य—शुद्धमन शिलाचूर्णयोगेन मारितस्य अयसो लौहभस्मन सर्वचूर्णसम भाग

(१०तो०) समादाय खल्वे सम्यक् पिष्ट्वा (वासकस्वरसेन जलेन वा सह विमर्द्य) नवगुञ्जाप्रमाणा वटी कृत्वा सशोष्य च काचपात्रे स्थापयेत्। अथ रस प्रत्यह शुचिर्भूत्वा देवीञ्च ध्यात्वा यथारोग यथावलञ्च रक्तकमलपत्रस्वरसमधुभ्या, नीलोत्पलस्वरसमधुभ्या, कुलत्थस्वरसानुपानेन च सह सेवितो दोषत्रयोत्पन्न विविधम्वा कास, वातिकज्वर, पैत्तिकज्वर, विषदोषोद्भव ज्वर, रक्तष्ठीवनपूर्वक कासं नीरक्तष्ठीवनपूर्वकम्वा कास (अथवा सरक्त-रक्तदोषोत्थ रक्तधातुगतम्वा ज्वर) श्वासयुक्त च ज्वर निहन्ति। तथाय रसो भ्रम, दाह, तृषा, शूल, जीर्णज्वरञ्च निहन्ति, तथा बलं, वर्ण, वह्निदीप्तिञ्च करोति। इद चन्द्रामृतलौहं चन्द्रनाथेन निर्मितं वर्तते, तथेद रुच्यं वृष्यञ्चास्ति ॥ ७५-८० ॥

चन्द्रामृतो रस —

रसगन्धकलौहानां प्रत्येकं कार्षिक क्षिपेत्।
टङ्कणस्य पल दत्त्वा मरिचस्य पलार्द्धकम् ॥ ८१ ॥
त्रिकटु त्रिफला चव्य धान्यजीरकसैन्धवम्।
प्रत्येक तोलक ग्राह्य छागीदुग्धेन पेषयेत् ॥ ८२ ॥
नवगुञ्जाप्रमाणेन वटिका कारयेद्भिषक्।
प्रात क.ले शुचिर्भूत्वा चिन्तयित्वाऽमृतेश्वरीम् ॥ ८३ ॥
एकैका वटिका खादेत् रक्तोत्पलरसेन च।
नीलोत्पलरसेनापि कुलत्थस्वरसेन च ॥ ८४ ॥
छागीक्षीरेण मण्डेन केशराजरसेन च।
निहन्ति विविध कास वातरक्तसमुद्भवम् ॥ ८५ ॥
वातश्लेष्मज्वर कास पित्तश्लेष्मज्वर तथा।
वातिक पैत्तिक वाऽपि गरदोषसमन्वितम् ॥ ८६ ॥
वासा गुडूचिका भार्गी मुस्तक कण्टकारिका।
समभागकृत क्वाथ प्रत्यह भक्षयेदनु ॥ ८७ ॥

चन्द्रामृतरसनिर्माणमाह रसेत्यादि—शुद्धपारद (१क०), शुद्धगन्धक-, लौहभस्म (१क०), शुद्धटङ्कणं (१पलम्), मरिचचूर्णं पलार्द्धं, त्रिकटु-र्णं (१तो०), मरिचचूर्णं (१तो०), पिप्पलीचूर्णं (१तो०), त्रिफला = हरीत

कीचूर्ण ( १तो०), विभीतकचूर्ण (१तो०), आमलकीचूर्ण (१तो०), चव्यचूर्ण (१तो०), धान्यकचूर्ण (१तो०), जीरकचूर्ण (१तो०), सैन्धवलवण (१तो०) समादाय पूर्वं पारदगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य सञ्चूर्ण्य च छागीदुग्धेनाप्लाव्य दृढं विमर्द्य नवगुञ्जाप्रमाणा वटीः कृत्वा काचपात्रे स्थापयेत् । अस्य रसस्य प्रत्यहमेकैका वटी स्नानादिना शुचिर्भूत्वा भगवतीं च सञ्चिन्त्य रक्तकमलरसेन मधुना सह, नीलोत्पलस्वरसमधुभ्यां, कुलत्थक्वाथानुपानेन, छागीदुग्धानुपानेन, मण्डेन = स्विन्नतण्डुलमण्डेन, केशराजरसेन वा सह यथादोषं विविच्य सेविता विविधं कासं, वातरक्तसमुत्पन्नं कासं, वातश्लेष्मज्वरं, पित्तश्लेष्मज्वरं, वातिकज्वरं, पैत्तिकज्वरं, विषदोषोत्पन्नं च ज्वरं हन्ति । अस्य रसस्य सेवनं कृत्वा तदुपरि समभागपरिकल्पितैर्वासकभार्गीमुस्तकगुडूचीकण्टकारिकाद्रव्यैः कृतं क्वाथं पिबेत् ॥ ८१-८७ ॥

अमृतमञ्जरी—

**हिङ्गुलञ्च विषञ्चैव कणा मरिचटङ्कणम् ।**
**जातीकोषं समं सर्वं जम्बीररसमर्दितम् ॥ ८८ ॥**
**रक्तिमानां वटीं कुर्य्यादार्द्रकद्रवसंयुताम् ।**
**वटीद्वयं त्रयं खादेत् सन्निपातं सुदारुणम् ॥ ८९ ॥**
**अग्निमान्द्यमजीर्णञ्च सामवातं सुदारुणम् ।**
**उष्णतोयानुपानेन सर्वं व्याधिं नियच्छति ॥ ९० ॥**
**कासं पञ्चविधं श्वासं सर्वाङ्गग्रहमेव च ।**
**जीर्णज्वरं क्षयं कासं हन्यादमृतमञ्जरी ॥ ९१ ॥**

अथामृतमञ्जरीरसनिर्माणमाह हिङ्गुलमित्यादि—शुद्धं हिङ्गुलं, विषं = शुद्धवत्सनाभचूर्णं, कणा = पिप्पलीचूर्णं, मरिचचूर्णं, शुद्धटङ्कणं, जातीकोषचूर्णं (जावित्रीचूर्णं), एतेषां प्रत्येकं समं सममादाय पूर्वं हिङ्गुलं सम्पेष्य शेषद्रव्याणि सम्मेल्य जम्बीरनिम्बुकरसेन सम्यगाप्लाव्य दृढं विमर्द्य च रक्तिप्रमाणा वटीः कृत्वा काचपात्रे स्थापयेत् । अस्य रसस्य प्रत्यहं यथारोगं यथावयश्च एकां वटीं वटीद्वयं वटीत्रयम्वा आर्द्रकस्वरसमधुभ्यां सह संसेव्य तदूर्ध्वमुष्णजलानुपानकरणेन सुदारुणं सन्निपातं, अग्निमान्द्यं, अजीर्णं, आमवातं, पञ्चविधं कासं, श्वासं, सर्वाङ्गग्रहं, जीर्णज्वरं, क्षयं, तथा यथाव्याध्यनुपानैश्च सर्वे रोगा नश्यन्ति ॥ ८८-९१ ॥

कासान्तक —

त्रिफला व्योषचूर्णञ्च समभाग प्रकल्पयेत् ।
मधुना सह पानात्तु दुष्टकास नियच्छति ॥ ९२ ॥

अथ कासान्तकयोगनिर्माणमाह त्रिफलेत्यादि—त्रिफलाचूर्णं व्योपचूर्णञ्च समं भागेनादाय विमर्द्य च काचपात्रे स्थापयेत् । इद चूर्णं मापैकमित प्रत्यहं मधुना सेवित तथा दुष्टकास, प्रवृद्धं वातिकं कास च हन्ति ॥ ९२ ॥

बृहच्छृङ्गाराभ्रम्—

पारद गन्धकञ्चात्र टङ्कण नागकेशरम् ।
जातीकोषञ्च कर्पूर लवङ्ग तेजपत्रकम् ॥ ९३ ॥
सुवर्णञ्चापि प्रत्येक कर्षमात्र प्रकल्पयेत् ।
शुद्धकृष्णाभ्रचूर्णन्तु चतुष्कर्ष प्रयोजयेत् ॥ ९४ ॥
तालीशं घनकुष्ठञ्च मासी त्वक् धातकी तथा ।
एलाबीज त्रिकटुक त्रिफला करिपिप्पली ॥ ९५ ॥
कर्षद्वयन्तु चैतेषां पिप्पलीक्वाथमर्दितम् ।
अनुपान प्रयोक्तव्य चोच क्षौद्रसमायुतम् ॥ ९६ ॥
अग्निमान्द्यादिकान् रोगानरुचिं पाण्डुकामलाम् ।
उदराणि तथा शोथमानाहं ज्वरमेव च ॥ ९७ ॥
ग्रहणीं श्वासकासञ्च हन्याद् यक्ष्माणमेव च
नानारोगप्रशमन बलवर्णाग्निकारकम् ॥ ९८ ॥
बृहच्छृङ्गाराभ्रनाम विष्णुना परिकीर्त्तितम् ।
एतस्याभ्यासमात्रेण निर्व्याधिर्जायते नरः ॥ ९९ ॥

अथ बृहच्छृङ्गाराभ्रनिर्माणमाह पारदमित्यादि—शुद्धपारद, शुद्धगन्धकं, शुद्ध टङ्कण; नागकेशरचूर्ण, जातिकोषचूर्ण, कर्पूर, लवङ्गचूर्ण, तेजपत्रकचूर्ण, सुवर्णभस्म । एतेषा प्रत्येकं कर्षप्रमाण (१तो०), तथा शुद्धकृष्णाभ्रचूर्णमभ्रकभस्म चतुष्कर्षमित (४तो०), तालीशपत्रचूर्ण (२क०), घन—मुस्तकचूर्णं (२क०), कुष्टचूर्णं (२क०), मासी—जटामासीचूर्णं (२क०), त्वक्—दारुसिताचूर्णं (२क०), धातकीपुष्पचूर्णं (२क ), एलाबीजचूर्ण (२क०), त्रिकटुचूर्ण पृथक् २ द्विकर्ष, त्रिफलाचूर्ण

पृथक् २ द्विकर्ष, करिपिप्पली-गजपिप्पलीचूर्णं (२क०) समादाय पूर्वं पारदगन्धकया कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य पिप्पलीक्वाथेन सम्यगाप्लाव्य विमर्द्य च पञ्चरक्तिपरिमिता वटीश्चरेत्। अथ रस प्रत्यहं यथारोग यथावयश्च क्षौद्रयुक्तचोचक्वाथानुपानपूर्वक यथान्यान्यनुपानपूर्वक वा सेवित अग्निमान्द्यम्, अरुचिं, पाण्डु, कामलाम्, उदररोगाणि, शोथम्, आनाहं, ज्वर, ग्रहणीं, श्वास, कास, यक्ष्माणं, विविध रोगाश्च निहन्ति । श्रीविष्णुना पुरा निर्मितो बृहच्छृङ्गाराभ्रनामकोऽयं रसो वल पाचकशक्तिञ्च वर्द्धयति । अस्य प्रत्यह सेवनेन पुरुषा विविधव्याधिनिर्मुक्तो भवति ॥ ९३-९९ ॥

भृङ्गराजगुडिका—

**भृङ्गराजस्य पत्रन्तु चूर्णितं मधुना सह ।**
**गोलकं धारयेदास्ये कासारिष्टप्रशान्तये ॥ १०० ॥**

( इति कास-चिकित्सा )

अथ भृङ्गराजगुडिकानिर्माणमाह भृङ्गराजस्येत्यादि—भृङ्गराजस्य पत्राणि खल्वे सञ्चूर्ण्य मधु च दत्वा गोलक कुर्यात् । अस्य गोलकस्य कासारि निवृत्त्यर्थं मुखे धारण कुर्यात् । शनै शनैश्चूषयेदित्यर्थ । इत्थ प्रत्यहं भृङ्गराजपत्रचूर्णस्य मधुना सह गोलक (माषकमितम्) कृत्वा तस्य कासनिवृत्तिपर्यन्त मुखे धारण कुर्यात् ॥१००॥

अथ वातकासे पथ्यानि—

वास्तुको वायसीशाकं मूलक सुनिषण्णकम् । स्नेहास्तैलादयो भक्ष्या क्षीरेक्षुरसगौडिका ॥
दध्यारनालाम्लफलं प्रसन्नापानमेव च । शस्यते वातकासे तु स्वाद्वम्ललवणानि च ॥
ग्राम्यानूपोदकै शालीयवगोधूमषष्टिकान् । रसैर्माषात्मगुप्ताना यूषै र्वा भोजयेद्धितान्॥

इति वातकासपथ्यविवेक ।

अथ कासे साधारणपथ्यनिर्देश —

शालिषष्टिकगोधूममाषमुद्गकुलत्थका । छाग्या पयो घृत विम्वी वार्ताक बालमूलकम्॥
कासमर्दकजीवन्तीवास्तुक बीजपूरकम् । गोस्तनी लशुनं लाजा व्योषमुष्णोदक मधु ॥
पथ्यमेतद्यथादोषमुक्तं कासगदातुरे । मैथुन स्निग्धमधुर दिवास्वप्न पयो दधि ॥
पिष्टान्न पायसादीनि कासी धूमञ्च वर्जयेत् ॥ इति कासरोगे पथ्यापथ्यम् ॥

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृताया
गूढार्थसन्दीपिकाव्याख्याया कासचिकित्सा ॥

## अथ हिक्का-श्वास-चिकित्सा ।

सूर्य्यावर्त्तो रसः—

गन्धकं सूतकं मर्द्य यामैकं कन्यकाद्रवैः ।
द्वयोस्तुल्यं ताम्रपत्रं पूर्वकल्केन लेपयेत् ॥ १ ॥
दिनैकं हण्डिकायन्त्रे पचेच्छीतं समुद्धरेत् ।
सूर्य्यावर्त्तरसो नाम द्विगुञ्जः श्वासकासनुत् ॥ २ ॥

हिक्काश्वासामययोस्तुल्याश्रयत्वात्तुल्यनिदानचिकित्सितत्वाच्च कासानन्तरं हिक्काश्वासचिकित्सा प्रारभ्यते । तत्र पूर्वं करणाय यथा—

"हिक्काश्वासातुरे पूर्वं तैलाक्ते स्वेद इष्यते । स्निग्धैर्लवणयोगैश्च मृदुवातानुलोमनम् ॥
ऊर्ध्वाधः शोधनं शक्ते दुर्बले शमनं मतम् ।
हिक्काश्वासातुरं पूर्वं लवणयुक्ततैलेनाभ्यज्य स्वेदयेत् ॥

यथोक्तं वाग्भटेऽपि—

हिक्काश्वासातुरं पूर्वं स्वेदैः सम्यगुपाचरेत् । स्निग्धैर्लवणतैलाक्तं तैः खेषु ग्रथितः कफः ॥
सुलीनोऽपि विलीनोऽथ कोष्ठं प्राप्तः सुनिर्हरः ।
स्रोतसां स्यान्मृदुत्वञ्च मारुतस्यानुलोमता ॥ इति ।

स्वेदैरुपचरणानन्तरं शक्ते पुरुषे, ऊर्ध्वाधो मृदुसंशोधनं कुर्यात् । यच्चाह वाग्भटः—"ततोऽस्मै वमनं मृदु"
पिप्पलीसैन्धवक्षौद्रयुक्तं वाताविरोधि यत्,

वमनानन्तरं—

हिङ्गुपीलुविडङ्गैर्युक्तमन्नं स्यादनुलोमनम् । ससैन्धवं फलाम्लं वा कोष्णं दद्याद्विरेचनम् ॥ इति ॥
शक्तातुराणां वमनविरेचनक्रमः, दुर्बलानान्तु शमनमेवोचितम् तथा च वाग्भटः—

"अनुत्क्लिष्टकफस्विन्नदुर्बलानां हि शोधनात् । वायुर्लब्धास्पदो मर्म संशोष्याशु हरेदसून् ॥
कषायलेहस्नेहाद्यैस्तेषां संशमयेदतः ॥

तथा च—

अतियोगोद्धतं वातं दृष्ट्वा पवननाशनैः । स्निग्धैः रसाद्यैर्नात्युष्णैरभ्यङ्गैश्च शमं नयेत् ॥ इ
इत्थं साधारणसंशोधनादिकरणानन्तरं रसादिचिकित्सा करणीया तत्र प्रथमं सूर्य्या

रसनिर्माणमाह गन्धकमित्यादि—शुद्धगन्धकं(१तो०),शुद्धसूतकं(१तो०),च समादाय तयोः खल्वे कज्जलीं कृत्वा घृतकुमारीस्वरसेन सम्यगाप्लाव्य यामेकं दृढं विमर्द्य कज्जलीतुल्यशुद्धताम्रपत्रोपरि तं कज्जलीकल्कं संलिप्य कच्चीयन्त्रं कृत्वा दिनैकं वालुकापूरितहण्डिकाया(वालुकायन्त्रे) संस्थाप्य पचेत्। अथवा कज्जलिकालिप्तताम्रपत्राणि शरावे निक्षिप्य शरावान्तरेण सम्पुटं कृत्वा वालुकायन्त्रमध्ये संस्थाप्य दिनैकं पचेत्। स्वाङ्गशीतं रसं यत्नतः समादाय काचपात्रे स्थापयेत्। अयं सूर्य्यावर्त्तरसः प्रत्यहं द्विगुञ्जमितो यथाव्याध्यनुपानपूर्वकं सेवितः श्वासं कासञ्च निहन्ति॥ १-२॥

इन्द्रवारुणिकादिचूर्णम्—

इन्द्रवारुणिकामूलं देवदारु कटुत्रयम्।
शर्करासहितं खादेदूर्द्ध्वश्वासनिवृत्तये॥ ३॥

अथ इन्द्रवारुणिकादिचूर्णमाह इन्द्रेत्यादि—इन्द्रवारुणिकामूलचूर्णं (४ रक्तिमितं), देवदारुचूर्णं (४रक्तिमितं)कटुत्रयचूर्णं (४रक्तिमितं) शर्करा च तोलकमिता समादाय सर्वं सम्मेल्य प्रत्यहं भक्षयेत्। इत्थमयं योग उद्र्ध्वश्वासं निहन्ति॥ ३॥

विजयवटी—

गन्धकं सूतकं लौहं विषमभ्रकमेव च।
विडङ्गं रेणुकं मुस्तमेला ग्रन्थिककेशरम्॥ ४॥
त्रिकटु त्रिफला ताम्रं शुद्धं जैपालचित्रकम्।
एतानि समभागानि द्विगुणो दीयते गुडः॥ ५॥
कासे श्वासे क्षये गुल्मे प्रमेहे विषमज्वरे।
सूतायां ग्रहणीदोषे शूले पाण्ड्वामये तथा।
हस्तपादादिदाहेषु वटिकेयं प्रशस्यते॥ ६॥

अथ विजयवटीनिर्माणमाह गन्धकमित्यादि—शुद्धगन्धकं, शुद्धसूतकं, लौहभस्म, विषं=शुद्धवत्सनाभचूर्णं, अभ्रकभस्म, विडङ्गचूर्णं, रेणुकं=हरेणुकाचूर्णं, मुस्तकचूर्णं, एलाबीजचूर्णं, ग्रन्थिक-पिप्पलीमूलचूर्णं, केशरं=नागकेशरचूर्णं, त्रिकटु=शुण्ठीचूर्णं, मरिचचूर्णं, पिप्पलीचूर्णं, त्रिफला=हरीतकीचूर्णं, विभीतकचूर्णं, आमलकीचूर्णं, ताम्रभस्म, शुद्धजयपालवीजचूर्णं, चित्रकचूर्णम्। एतेषां प्रत्येकं तोलकैकमितं समादाय पूर्वं पारदगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य सर्वमिलि-

तद्द्रव्यतुल्यञ्च पुराणं गुडं दत्वा माषकमिता वटीश्चरेत्। इयं वटी कासे, श्वासे, क्षये, गुल्मे, प्रमेहे, विषमज्वरे, सूतिकारोगे, ग्रहणीदापे, शूले, पाण्डुरोगे, हस्तपादादिदाहेषु च प्रशस्यते ॥ ४-६ ॥

वासकप्रयोग —

घृतेन पाचयेत् मूलं पत्रञ्च वासकस्य च ।
भक्षयेत् प्रातरुत्थाय कासे श्वासे क्षये तथा ॥ ७ ॥

अथ वासकप्रयोगमाह घृतेनेत्यादि--वासकस्य पत्राणां मूलस्य च चूर्णं पिठरे किञ्चिदाज्येन भृष्ट्वा भर्जितञ्च तोलकमितं समादाय मधुना सह प्रत्यहं सेवनेन कासं श्वासञ्च नश्यति ॥ ७ ॥

देवदार्वादिचूर्णम्—

देवदारु पिप्पली च शुण्ठीचूर्णं समं तथा ।
ऊर्द्ध्वश्वासं सदा हन्ति पिबेदुष्णजलेन च ॥ ८ ॥

अथ देवदार्वादिचूर्णयोगमाह देवदार्वित्यादि—देवदारुचूर्णं (१मा०), पिप्पलीचूर्णं (१मा०), शुण्ठीचूर्णं (१मा०), समादाय कोष्णोदकेन सह भक्षयेत्। इत्थं प्रत्यहं सेवितमिदं चूर्णं कतिपयैरहोभिरुद्र्ध्वश्वासं निहन्ति ॥ ८ ॥

लोहपर्पटी रस —

भागौ रसस्य गन्धस्य द्वावेको लौहभस्मनः ।
एतद् घृष्टं द्रवीभूतं मृद्वग्नौ कदलीदले ॥ ९ ॥
पातयेद् गोमयगते तथैवोपरि योजयेत् ।
ततः पिष्ट्वा द्रवैरेभिः सप्तधा भावयेत् पृथक् ॥ १० ॥
भार्गी-मुण्डी-मुनि-वरा जया-निर्गुण्डिका तथा ।
व्योषवासककन्याऽऽर्द्र-द्रवैस्तस्मात् पुटे पचेत् ॥ ११ ॥
आगन्धं खर्परे ताम्रे पर्पट्याख्यो रसो भवेत् ।
सर्वरोगहरस्तैस्तैरनुपानैर्हि माषकैः ॥ १२ ॥
ताम्बूलीपत्रसहितः श्वासकासहरः परः ।
सकणः सुरसाक्वाथोऽनुपानं वासकाज्जलम् ॥ १३ ॥
अम्लिकातैलवार्त्ताकु-कुष्माण्डं कदलीफलम् ।

**वर्ज्यं मांसरसं सर्वं पथ्यं दद्यात् विचक्षणः ।**
**वर्जयेच्च विशेषेण कफकृत् स्त्रीसुखादिकम् ॥ १४ ॥**

अथ लौहपर्पटीरसनिर्माणमाह भागावित्यादि—शुद्धपारदस्य द्वौ भागौ, शुद्धगन्धकस्य द्वौ भागौ, लौहभस्मनश्चैको भाग । पूर्वं पारदगन्धकयो कज्जली कृत्वा लौहभस्म सम्मेल्य दृढं सम्पेष्य च लौहदर्विकाया निक्षिप्य वह्नौ च प्रदाव्य गोमयोपर्यास्तृतकदलीदले द्रुतिं ढालयित्वा (प्रपात्येत्यर्थ )दृढं च अन्त क्षिप्तगोमयेन कदलीपत्रेण समाच्छाद्य स्वाङ्गशीता पर्पटी समादाय खल्वे सञ्चूर्ण्य च भार्गी, मुण्डी, मुनि = अगस्त्य , वरा = त्रिफला, जया=भङ्गा (जयन्तीति वा), निर्गुण्डिका, व्योष=त्रिकटु, वासक , कन्या = घृतकुमारिका, आर्द्रकञ्च एषा पत्रमूलपुष्पान्यतमस्वरसेन क्वाथेन वा पृथक् २ क्रमश सप्तवार भावयित्वा कवचीयन्त्रं विधाय बालुकापूरितताम्रपात्रे आगन्धंगन्धकजारणपर्यन्त पचेत् । स्वाङ्गशीतमौषध सञ्चूर्ण्य काचपात्रे स्थापयेत् । अय लौहपर्पटीरसो माषकप्रमितो यथाव्याधिनाशकचूर्णानुपानैस्सह सर्वरोगेषु प्रयोक्तव्य । अय रसस्ताम्बूलपत्रस्वरमधुभ्या सह कास श्वासञ्च निहन्ति। अनुपाने पिप्पलीचूर्णयुतं तुलसीक्वाथ, वासकस्वरस वा दद्यात् । अम्लिका चिञ्चा, तैल, वार्ताकशाक, कुष्माण्डशाकं, कदलीफलशाक, पक्वकदलीफलञ्च वर्जयेत् । मासरस कफकारकपदार्थभिन्नञ्च सर्वं पथ्य, स्त्रीसयोगञ्च त्यजेत् ॥ ९–१४ ॥

ताम्रपर्पटी—

**लौहस्थाने ताम्रयोगात् ताम्रपर्पटिका भवेत् ॥ १५ ॥**

अथ ताम्रपर्पटीनिर्माणमाह लौहेत्यादि—उपर्युक्तप्रमाणग्रहीतरसगन्धककज्जलिकाया लौहभस्मस्थाने तोलकमित ताम्रभस्म दत्वा पूर्ववत् शेषकर्म कुर्यात् । इत्य जाता ताम्रपर्पटी हिक्काया श्वासे कासे च प्रयोज्या ॥ १५ ॥

पिप्पल्याद्य लौहम्—

**पिप्पल्यामलकी द्राक्षा कोलास्थि मधु शर्करा ।**
**विडङ्गपुष्करैर्युक्तं लौहं हन्ति सुदारुणाम् ।**
**छर्दिं हिक्कां तथा तृष्णां त्रिरात्रेण न सशयः ॥ १६ ॥**

अथ पिप्पल्याद्यलौहनिर्माणमाह पिप्पलीत्यादि—पिप्पलीचूर्णं, आमलकचूर्णं, द्राक्षा, कोलास्थि—बदरास्थिमज्जा, मधु, शर्करा, विडङ्गचूर्णं, पुष्करं—पुष्करमूलचूर्णम् ।

एतेषां प्रत्येकं सम समभागमादाय सर्वतुल्यञ्च लौहभस्म सम्मेल्य दृढं पिष्ट्वा द्विगुञ्जाप्रमाणा वटीश्चरेत् । इदं लौहं यथोचितमात्रया त्रिरात्रं सेवितं दारुणां छर्दिं, हिक्कां तृष्णाञ्च निवारयति ॥ १६ ॥

श्वासकुठार —

टङ्कणं पारदं गन्धं शिलां विषं कटुत्रिकम् ।
निष्पिष्य वटिका कार्य्या बाणगुञ्जाप्रमाणतः ॥ १७ ॥
उष्णोदकं पिबेच्चानु क्षुद्राक्वाथमथापि वा ।
कासं पञ्चविधं हन्ति श्वासं श्लेष्मसमुद्भवम् ।
शिरोरोगं निहन्त्याशु वृक्षमिन्द्राशनिर्यथा ॥ १८ ॥

अथ श्वासकुठाररसनिर्माणमाह टङ्कणमित्यादि—शुद्धटङ्कणं शुद्धपारदं, शुद्धगन्धकं शिला = मनःशिला विषं = शुद्धवत्सनाभचूर्णं कटुत्रिकं = शुण्ठीचूर्णं, मरिचचूर्णं, पिप्पलीचूर्णम् । एषां प्रत्येकं सम समभागमादाय पूर्वं पारदगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य सम्यक् पिष्ट्वा च बाणगुञ्जाप्रमाणतः—पञ्चरक्तिमितां वटीं कृत्वा काचपात्रे स्थापयेत् । अयं श्वासकुठारो रसः प्रत्यहं गुञ्जैकामारभ्य पञ्चगुञ्जामितः क्षुद्राक्वाथानुपानपूर्वकं, कोष्णजलानुपानपूर्वकं वा सेवितः पञ्चविधं कासं, श्लेष्मसमुत्थं श्वासं शिरोरोगञ्च निहन्ति ॥ १७–१८ ॥

श्वासकासचिन्तामणि —

पारदं माक्षिकं स्वर्णं समांशं परिकल्पयेत् ।
पारदार्द्धं मौक्तिकञ्च सूताद् द्विगुणगन्धकम् ॥ १९ ॥
अभ्रञ्चैव तथा योज्यं व्योम्नो द्विगुणलौहकम् ।
कण्टकारीरसेनैव छागीदुग्धेन च पृथक् ॥ २० ॥
यष्टीमधुरसेनैव पर्णपत्ररसेन च ।
भावयेत् सप्तवारञ्च द्विगुञ्जां वटिकां भजेत् ।
पिप्पलीमधुसंयुक्तां श्वासकासविमर्दिनीम् ॥ २१ ॥

अथ श्वासकासचिन्तामणिरसनिर्माणमाह पारदमित्यादि—शुद्धपारदं (१तो०), माक्षिकं = स्वर्णमाक्षिकभस्म (१तो०), स्वर्णभस्म (१तो०), मौक्तिकभस्म पारदार्द्धम्—(अर्द्धतोलक) पारदाच्च द्विगुणं शुद्धगन्धकं, अभ्रकभस्म (२तो०), व्योम्नोऽभ्रक-

भस्मनश्चापेक्षया द्विगुण लौहभस्म(४तो०),पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेष-द्रव्याणि सम्मेल्य कण्टकारीस्वरसेन सप्तवार भावयेत् । ततश्च छागीदुग्धेन, मधु-यष्टिकाथेन, पर्णपत्र–ताम्बूलदलं तस्य स्वरसेन च क्रमश पृथक् २ सप्तवार भाव-यित्वा द्विगुञ्जप्रमाणा वटीश्चरेत् । इयं वटी पिप्पलीचूर्णमधुभ्या सह सेविता श्वासं कासञ्च विनिहन्ति ॥ १९–२१ ॥

श्वासकुठारो रस —

**रसं गन्धो विषं टङ्क शिलोषणकटुत्रयम् ।**
**सर्वं संमर्द्य दातव्यो रसः श्वासकुठारकः ।**
**वातश्लेष्मसमुद्भूतं श्वास कासं क्षयं जयेत् ॥ २२ ॥**

अथ प्रकारान्तरेण श्वासकुठाररसनिर्माणमाह रसमित्यादि—शुद्धरस , शुद्धग-न्धक , विष = शुद्धवत्सनाभचूर्ण,टङ्क शुद्धसौभाग्य, शिला = शुद्धमन शिला, ऊषण-मरिचचूर्ण, कटुत्रय = शुण्ठीचूर्णं, मरिचचूर्णं, पिप्पलीचूर्णञ्च एतेषा प्रत्येकं समं सममादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य श्लक्ष्णं पिष्ट्वा च काचपात्रे स्थापयेत् । अथ श्वासकुठारो रस प्रत्यहं गुञ्जैकादारभ्य पञ्चगुञ्जा-मितो मधुना आर्द्रकस्वरसेन च सह सेवितो वातश्लेष्मजन्यं श्वास कास क्षयञ्च नाशयति ॥ २२ ॥

अन्य श्वासकुठारो रस —

**रसं गन्धो विषञ्चैव टङ्कणं समनःशिलम् ।**
**एतानि समभागानि मरिचं तच्चतुर्गुणम् ॥ २३ ॥**
**त्रिभाग त्र्यूषणं ज्ञेयं खल्ले सर्वं विचूर्णयेत ।**
**रसः श्वासकुठारोऽयं द्विगुञ्जः श्वासकासजित् ॥ २४ ॥**
**गता संज्ञा यदा पुसां तदा नस्यं प्रदापयेत् ।**
**घ्रापयेन्नासिकारन्ध्रे संज्ञाजननमुत्तमम् ॥ २५ ॥**
**प्रतिश्यायं क्षतक्षीणमेकादशविधं क्षयम् ।**
**हृद्रोगं श्वासशूलञ्च स्वरभेदं सुदारुणम् ।**
**सन्निपातं तथा घोरं तन्द्रामोहान्वितं जयेत् ॥ २६ ॥**

( इति हिक्का-श्वास-चिकित्सा )

अथेतत्श्वासकुठाररसनिर्माणमाह रसमित्यादि—शुद्धपारद (१तो०), शुद्धगन्धक (१तो०), विष = शुद्धवत्सनाभचूर्णं (१तो०), शुद्धटङ्कण (१तो०), शुद्धमनःशिलाचूर्णं (१तो०) मरिचचूर्णं तच्चतुर्गुणमित्येकभागापेक्षया चतुर्गुण (४तो०) त्र्यूषण-त्रिकटुचूर्णं पृथक् २ त्रिभाग (३तो०) पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य श्लक्ष्ण सञ्चूर्ण्य च काचपात्रे स्थापयेत्। अथ श्वासकुठाररस प्रत्यह द्विगुञ्जमितो मधुना सह सेवित श्वास कासञ्च निहन्ति। अस्य रसस्य नासिकारन्ध्रे नस्यदानेन अपस्मारादिजन्यमूर्च्छा नश्यति जनश्च पुनश्चेतना प्राप्नोति। अय रसः यथारोगानुपानैस्सह सेवित प्रतिश्याय, क्षतक्षीण, एकादशविध अय हृद्रोग श्वास शूल दारुण स्वरभेद तन्द्रामोहान्वित घोर सन्निपातञ्च नाशयति॥ २२—२६॥

अथ हिक्कायां पथ्यापथ्यम्—

स्वेदन वमन नस्य धूम्रपान विरेचनम्। निद्रा स्निग्धानि चान्नानि मृदूनि लवणानि च १
जीर्णा कुलत्था गोधूमाः शाल्य षष्टिका यवा। एणतित्तिरलावाद्या जाङ्गला मृगपक्षिण २
उष्णोदक मातुलुङ्ग पटोल बालमूलकम्। पक्व कपित्थ लशुन क्षौद्र चेष्टानि हिक्किनाम् ३
निष्पावमाषपिण्याकवारिजानूपमामिषम्। अविगुप्त दन्तकाष्ठ बस्ति मत्स्यांश्चसर्षपान् ४
अम्ल तुम्बीफल कन्द तैलभृष्टमुपोदिकाम्। गुरु शीत चान्नपान हिक्कारोगी विवर्जयेत् ५

इति हिक्कापथ्यापथ्यम्।

अथ श्वासे पथ्यापथ्यम्।

विरेचनस्वेदनधूमपानप्रच्छर्दनानि स्वपन दिवा च।
पुरातना षष्टिकरक्तशालिकुलत्थगोधूमयवा प्रशस्ता॥ १॥
शशाहिभुक्तित्तिरलावदक्षशुकादयो धन्वमृगा द्विजाश्च।
पुरातन सर्पिरजाप्रभूत पयो घृतञ्चापि सुरा मधूनि॥ २॥
पटोलवार्ताकरसोनबिम्बीजम्बीरतण्डुलीयवास्तुकञ्च।
द्राक्षा त्रुटि पौष्करमुष्णवारि निदिग्धिका श्वासिनि पथ्यवर्ग॥ ३॥
रक्तस्राव पूर्ववातान्नपान मेषीसर्पिर्दुग्धमम्भोऽपि दुष्टम्।
कन्दा सर्षपाश्चान्नपान रूक्ष शीत गुर्वपि श्वासवर्ज्यम्॥४॥इति श्वासे पथ्यापथ्यम्

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृताया गूढार्थसन्दीपिकाव्याख्याया हिक्काश्वासचिकित्सा।

# अथ स्वरभेद-चिकित्सा ।

भैरवो रस —

**रसं गन्धं विषं टङ्कं मरिचं चव्यचित्रकम् ।**
**आर्द्रकस्य रसेनैव संमर्द्य वटिकां ततः ॥ १ ॥**
**गुञ्जात्रयप्रमाणेन खादेत् तोयानुपानतः ।**
**स्वरभेदं निहन्त्याशु श्वासं कासं सुदुस्तरम् ॥ २ ॥**

प्राणोदानदुष्टिसाधर्म्यात् तथा श्वासेऽपि स्वरभेदो भवतीति हिक्काश्वासचिकित्सानन्तरं स्वरभेदचिकित्सा प्रारभ्यते, तत्र पूर्वं भैरवरसनिर्माणमाह रसमित्यादि रस = शुद्धपारद, शुद्धगन्ध, विषं = शुद्धवत्सनाभचूर्ण, शुद्धटङ्कण, मरिचचूर्ण, चव्यचूर्णञ्च, चित्रकचूर्णञ्च, एतेषां प्रत्येकं समं सममादाय पूर्वं पारदगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य सञ्चूर्ण्य च आर्द्रकस्वरसेन सम्यगाप्लाव्य दृढं विमर्द्य गुञ्जात्रयप्रमाणां वटीं कृत्वा संशोष्य च काचपात्रे स्थापयेत् ।अस्य रसस्य प्रत्यहमेकैका वटी मन्दोष्णजलानुपानेन सह सेविता स्वरभेद, श्वास, सुदुस्तर कासञ्च निहन्ति॥ १-२॥

चव्यादिचूर्णम्—

**चव्याम्लवेतसकटुत्रयतिन्तिडीक-**
**तालीशजीरकतुगादहनैः समांशैः ।**
**चूर्णं गुडप्रमृदितं त्रिसुगन्धियुक्तं**
**वैस्वर्य्यपीनस-कफारुचिषु प्रशस्तम् ॥ ३ ॥**
**अनेनैवानुपानेन भस्मसूतं प्रयोजयेत् ।**
**योगवाहिरसञ्चापि योजयन्ति भिषग्वराः ॥ ४ ॥**

अथ चव्यादिचूर्णनिर्माणमाह चव्येत्यादि—चव्यचूर्ण, अम्लवेतसचूर्ण, कटुत्रय-शुण्ठीचूर्ण, मरिचचूर्ण, पिप्पलीचूर्ण, तिन्तडीक चिञ्चाचूर्ण, तालीशपत्रचूर्ण, जीरकचूर्ण तुगा—वंशलोचनाचूर्ण, दहन-चित्रकचूर्ण, त्रिसुगन्धि = दारुसिताचूर्णम्, एलावीजचूर्ण, तेजपत्रचूर्णञ्च ।

त्वगेलापत्रकैस्तुल्यैस्त्रिसुगन्धि त्रिजातकम् । एतेषां प्रत्येकं समं सममादाय खल्वे पिष्ट्वा सर्वचूर्णसमञ्च पुराणगुडं सम्मेल्य सम्मर्द्य च चतुर्माषकमिता वटीं कुर्यात् ।

इदं चव्यादिचूर्णं वैस्वर्ये=स्वरविकारे, पीनसरोगे, कफजन्यरोगेषु, अरुचौ च तोयानुपानेन सह प्रशस्तम् । भस्मसूत-रससिन्दूरं रक्तिमित चव्यादिचूर्णेन सह सेवित स्वरभेदादिरोगेषु प्रशस्त तथा अन्ययोगवाहिरसानामनेन चूर्णेन सह प्रयोग कार्यं ॥ ३-४ ॥

शुण्ठीशर्करा —

**सशर्करं शुण्ठीचूर्णं क्षौद्रेण सह योजितम् ।**
**कोकिलस्वर एव स्याद् गुडिकाभुक्तमात्रत· ॥ ५ ॥**

( इति स्वरभेद—चिकित्सा । )

अथ शुण्ठीशर्करायोगमाह सशर्करमित्यादि—शर्करायुत शुण्ठीचूर्णं मधुना सह सेवितं स्वरभङ्ग विनाशयति कण्ठञ्च कोकिलस्वरसमानं करोति ॥ ५ ॥

अथ स्वरभेदे पथ्यापथ्य-व्यवस्था—

स्वेदो वस्ति धूमपान विरेक कवलग्रह । नस्य भाले शिरावेधो यवा लोहितशालय ॥
हंसाटवीताम्रचूडकेकिमासरसा सुरा । गोकण्टक काकमाची जीवन्ती वाल्यमूलकम् ॥
द्राक्षापथ्यामातुलुङ्ग लशुन लवणार्द्रकम् । ताम्बूलं मरिचं सर्पि पथ्यानि स्वरभेदिनाम् ॥

इति पथ्यम् ।

अथापथ्यम्—

आम कपित्थ वकुलं शालूक जाम्बवानि च । तिन्दुकानि कषायाणि वमि स्वप्न प्रजल्पनम् ॥
अन्नपान च यत्नेन स्वरभेदी विवर्जयेत् ॥ इति पथ्यापथ्यानि ।

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृताया गूढार्थसन्दीपिका व्याख्याया स्वरभेदचिकित्सा ।

## अथ अरोचक-चिकित्सा ।

सुधानिधिरस —

रसगन्धौ समौ शुद्धौ दन्तीक्वाथेन भावयेत् ।
जम्बीरस्य रसेनैव आर्द्रकस्य रसेन च ॥ १ ॥
मातुलुङ्गस्य तोयेन तथा मज्जरसेन च ।
पश्चाद्विशोष्य सर्वांशं टङ्कणञ्चावचारयेत् ॥ २ ॥
देवपुष्पं वाणमितं रसपादं मृतामृतम् ।
माषमात्रञ्च तत्सर्वं नागरेण गुडेन वा ॥ ३ ॥
सर्वारोचकशूलार्त्तिं सामवातं सुदारुणम् ।
विसूचीञ्चाग्निमान्द्यञ्च भक्तद्वेषञ्च दारुणम् ।
रसोऽयं वारयत्याशु केशरी करिणं यथा ॥ ४ ॥

अरोचकस्यापि ऊर्ध्वगविकारसाधर्म्यात् स्वरभेदचिकित्सानन्तरमरोचकचिकित्सा प्रारभ्यते, तत्र किं पूर्वं कार्यमित्युच्यते "वस्ति समीरणे (वायुजन्यारुचौ पूर्वं वस्तिकर्म कृत्वा ततोऽन्यचिकित्सा कुर्यादित्यर्थ एवमग्रेऽपि ) पित्ते विरेकं वमनं कफे कुर्यात् हृद्यानुकूलानि हर्षणञ्च मनोघ्नजे ॥ इति ।

अथ सुधानिधिरसनिर्माणमाह रसेत्यादि—शुद्धरस (१तो०), शुद्धगन्धक (१तो०), उभयो कज्जलीं कृत्वा दन्तीक्वाथेन, जम्बीररसेन, आर्द्रकस्वरसेन, मातुलुङ्गरसेन, तथा मज्जरसेन—घृतकुमारीमज्जारसेन ( शुद्धस्नुहीदुग्धेनेति केचित् ) क्रमश पृथक् २ वारमेकैकं भावयित्वा दृढं विमर्द्य सशोष्य च शुद्धटङ्कण पारदगन्धकसम (२तो०), देवपुष्प—लवङ्गचूर्णं वाणमित (५तोलक), रसपादं मृतामृत—शुद्धवत्सनाभचूर्णं रसस्यापेक्षया चतुर्थांश (३मा०) समादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य सञ्चूर्ण्य च काचपात्रे स्थापयेत् । अय सुधानिधिरसो द्विरक्तिकं प्रारभ्य माषकैकमितं प्रत्यहं शुण्ठीचूर्णमधुभ्यां गुडेन वा सह प्रभाते सेवितं सर्वविधारुचिं, शूलपीडा, सामवात रोग, विसूचिकाम्, अग्निमान्द्य, दारुण भक्तद्वेष—भोजनारुचिञ्च केशरी करिणामिव निवारयति ॥ "नागरेण" इत्यत्र "नागवल्या" इति पाठान्तरं ज्ञेयम् ॥ १—४ ॥

सुलोचनाभ्रम्—

पलं सुजीर्णं गगनन्तु वज्रकं तेजोवतीकोलमुशीरदाडिमम् ।
धात्र्यम्लरोलीरचकं पृथग्दश-पलोन्मितं मर्दितमेव सेवितम् ॥ ५॥
अरोचकं वातकफत्रिदोषजं पित्तोद्भवं गन्धसमुद्भवं नृणाम् ।
कासं स्वराघातमुरोग्रहं रुजं श्वासं बलासञ्च यकृत् भगन्दरम् ॥ ६॥
प्लीहाग्निमान्द्यं श्वयथुं समीरणं मेहं भृशं कुष्ठमसृग्दरं कृमिम् ।
शूलाम्लपित्तक्षयरोगमुद्धतं सरक्तपित्तं वमिदाहमश्मरीम् ।
निहन्ति चार्शांसि सुलोचनाभ्रकं बलप्रदं वृष्यतमं रसायनम् ॥ ७॥

अथ सुलोचनाभ्रस्य निर्माणमाह पलमित्यादि—सुजीर्णं-पुराणं गगनमभ्रकभस्म पलमितं, वज्रकं-हीरकभस्म तोलकमितं, तेजोवती-चव्यचूर्णं (१५०), कोलं बदर-फलास्थिगतबीजचूर्णं (१५०), उशीरं वीरणमूलचूर्णं (१५०), दाडिमबीजचूर्णं (१५०), धात्री=आमलकचूर्णं (१५०), अम्लरोली चाङ्गेरीस्वरसम् दशपलमितम्, रुचकं-बीजपूरस्वरसं दशपलमितं समादाय सर्वं खल्वे निक्षिप्य दृढं विमर्द्य च द्विगुञ्जिमिता वटीश्चरेत् । अयं रसः प्रत्यहं सेवितो वातजं, पित्तजं, कफजं, त्रिदोषजं, पित्तजं, दुर्गन्धोद्भवमरोचकं, कासं, स्वरविकृतिं, स्वरभङ्गं वा, उरोग्रहं, श्वासं, बलास-कफरोगं, यकृद्वृद्धिं भगन्दरं, प्लीहवृद्धिं वह्निमान्द्यं श्वयथुं-शोथं, समीरणं, वातप्रकोपं, प्रमेहं, कुष्ठम्, असृग्दरं=रक्तप्रदरं, यथारोगानुपानैः सर्वरोगान्निहन्ति, तथा बलं ददाति वृष्यं, रसायनञ्च वर्तते ॥ ५-७ ॥

शुद्धसूतयोगः —

ससूतमरिचघ्नं स्यात् तिन्तिडीकगुडोषणम् ।
मृद्वीका जीरकं कृष्णा मातुलुङ्गाम्लवेतसम् ॥ ८ ॥

( स्वरभेदारोचक चिकित्सा )

अथ शुद्धसूतयोगमाह ससूतमित्यादि—ससूतं-रसासिन्दूरसहितं, तिन्तिडीकं पक्वतिन्तिडीफलं, पुराणगुडं, ऊषणं-शुण्ठीचूर्णं मरिचचूर्णं वा, मृद्वीका=द्राक्षा, जीरकचूर्णं, कृष्णा-पिप्पलीचूर्णं, मातुलुङ्गरसं, अम्लवेतसचूर्णं, प्रत्येकं सम समभागं खल्वे दृढं पिष्ट्वा च चतुर्गुञ्जप्रमाणा वटीश्चरेत् । अयं योगः स्वरभङ्गमरोचकादिकरोगाश्च निहन्ति ॥ ८ ॥

अथारोचके पथ्यापथ्यव्यवस्था—

गोधूममुद्गारुणशालिषष्टिका मांसं वराहाजशशैणसम्भवम् ।
वेद्गा झषाण्ड मधुरालिकेल्लिश प्रोष्ठी खलीशः कवयी च रोहितः ॥
कर्कारुवेत्राग्रनवीनमूलकं वार्ताकुशोभाञ्जनमोचदाडिमम् ।
भव्यं पटोलं रुचकं घृतं पयो वालानि तालानि रसोन शूरणम् ॥
द्राक्षा रसालं नलदम्बुकाञ्जिकं मद्यं रशाला दधि तक्रमार्द्रकम् ।
कङ्कोलखर्जूरप्रियालतिन्दुकं पक्वं कपित्थं वदरं विकंकतम् ॥
तालास्थिमज्जाहिमवालुकासिता पथ्या यवानी मरिचानि रामठम् ।
स्वाद्वम्लतिक्तानि च देहमार्जना वर्गोऽयमुक्तोऽरुचिरोगिणे हितः ॥

इति पथ्यम् ।

अथापथ्यानि—

कासोद्गारक्षुधानेत्रवारिवेगविधारणम् । अहृद्यान्नमसृङ्मोक्ष क्रोधं लोभं भयं शुचम् ॥
दुर्गन्धारूपमेवाश्च न कुर्यादरुचौ नरः । इत्यपथ्यम् ॥

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृताया -
गूढार्थसन्दीपिकाव्याख्यायामरुचि-चिकित्सा ॥

## अथ छर्दिरोग-चिकित्सा ।

छर्दिसंहारो रसः—

**अजाजीधान्यपथ्याभिः सक्षुद्राभिः कटुत्रिकैः ।**
**एभिः सार्द्धं भस्मसूतः सेव्यो वान्तिप्रशान्तये ॥ १ ॥**

छर्द्यामप्यरुचेर्भावात्तथारोचकवत्पञ्चविधत्वादरोचकचिकित्सानन्तरं छर्दिरोगचिकित्सा प्रारभ्यते तत्र पूर्वं मारुतप्रकोपछर्दिं विना कफपित्तहारि शोधनं कार्यं तत्रापि विशेषेण विरेचनमेव नतु वमनं, तदूर्ध्वमन्या चिकित्सा करणीया ।

अथ छर्दिसंहाररसनिर्माणमाह अजाजीत्यादि—अजाजी—कृष्णजीरकचूर्णं (१तो०), धान्यकचूर्णं (१तो०), पथ्या—हरीतकीचूर्णं (१तो०), क्षुद्रा=लघुकण्टकारिकाचूर्णं (१तो०), कटुत्रिकं=शुण्ठीचूर्णं (१तो०), मरिचचूर्णं (१तो०), पिप्पलीचूर्णं

(१तो०), भस्मसूत —रससिन्दूरम, एतेषा प्रत्येक सम सममादाय खल्वे श्लक्ष्णं पिष्ट्वा काचपात्रे स्थापयेत्। अथ रसश्चतुर्गुञ्जमितो मधुना बृहदेलाचूर्णेन च सह सेवितश्छर्दिं विनाशयति ॥ १ ॥

चन्दनादिचूर्णं गुडूचीप्रयोगश्च—

**चन्दनं मधुकं क्षीरं पीतं रुधिरवान्तिजित्।**
**पिबेद्वान्तिप्रशान्त्यर्थं क्षौद्रैश्छिन्नरुहारसम् ॥ २ ॥**

( इति छर्दि चिकित्सा )

अथ चन्दनादिचूर्णं गुडूचीप्रयोगञ्चाह चन्दनमित्यादि—रक्तचन्दन, मधुकञ्च पाषाणे पिष्ट्वा अष्टगुणदुग्धे तथा दुग्धापेक्षया तूर्यगुणे जले च क्षीरावशेष पाक कृत्वा तद्दुग्ध पिबेत्तेन रुधिरवान्तिर्नश्यति। अथवा गुडूचीस्वरस मधुना सह वान्तिशान्त्यर्थं पिबेत् ॥ २ ॥

अथाऽन्येऽपि छर्दिनिवारणाय दृष्टफल्ययोगा लिख्यन्ते यथा—

चन्दनेनाक्षमात्रेण संयोज्यामलकीरसम्। पिबेन्माक्षिकसयुक्त छर्दिस्तेन विनश्यति ॥१॥
क्काथ पर्पटज पीत सक्षौद्रश्छर्दिनाशन। हरीतकीना चूर्णन्तु लिह्यान्माक्षिकसयुतम् ॥
अधोभागे कृते दोषे (विरेचनेनेत्यर्थ ) क्षिप्र वान्तिर्निवर्तते ॥ २ ॥
कषायो भृष्टमुद्गस्य सलाजमधुशर्कर। छर्द्यतीसारतृड्दाहज्वरघ्न सम्प्रकाशित ॥३॥
अश्वत्थवल्कल शुष्क दग्ध्वा निर्वापित जले। तज्जल पानमात्रेण छर्दिमाशु नियच्छति॥४॥

अथ छर्द्यां पथ्यानि—

विरेचनश्छर्दनलङ्घनानि स्नान मृजा लाजकृतश्च मण्ड।
पुरातना षष्टिकशालिमुद्गकलायगोधूमयवा मधूनि ॥ ५ ॥
शशाहिभुक्तित्तिरिलावकाद्या मृगद्विजा जाङ्गलसज्ञिताश्च।
मनोज्ञनानारसगन्धरूपा रसाश्च यूपा अपि षाडवाश्च ॥ ६ ॥
हरीतकीदाडिमबीजपूर जातीफल बालकनिम्बवास।
सिता शताह्वा करिकेशराणि भक्ष्या मन प्रीतिकरा हिताश्च ॥ ७ ॥
रागा खडा काम्बलिका सुरा च वेत्राग्रकुस्तुम्बुरुनारिकेलम्।
जम्बीरधात्रीसहकारकोलद्राक्षाकपित्थानि पचेलिमानि ॥ ८ ॥
भुक्तस्य वक्त्रे शिशिराम्बुसेक कस्तूरिकाचन्दनमिन्दुपाद।
मनोज्ञगन्धान्यनुलेपनानि पुष्पाणि पत्राणि फलानि चापि ॥ ९ ॥

रूपाणि शब्दाश्च रसाश्च गन्धा स्पर्शाश्च ये यस्य मनोऽनुकूला ।
दाहश्च नाभेस्त्रियवोपरिष्टादिदं हि पथ्य वमनातुरेषु ॥ १० ॥
कलाययवगोधूममुद्गषष्टिकशालय ।
शशतित्तिरलावाद्या मृगजाङ्गलसंज्ञिता ॥ ११ ॥
रागखाण्डववेत्राग्रकोलद्राक्षाफलानि च ।
वमिरोगेषु पथ्यानि मुनिभि कथितानि तु ॥ १२ ॥

इति पथ्यम् ॥

अथ अपथ्यानि—

नस्य वस्ति स्वेदन स्नेहपान रक्तस्राव दन्तकाष्ठ द्रवान्नम् ।
वीभत्सेक्षा भीतिमुद्वेगमुष्ण स्निग्धासात्म्यं हृद्यवैरोधिकान्नम् ॥ १ ॥
शिम्बी विम्बी कोषवत्यो मधूक चित्रामेला सर्षपान देवदालीम् ।
व्यायामञ्च छत्रिकामञ्जनञ्च छर्द्या सत्या वर्जयेदप्रमत्त ॥ २ ॥

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृताया गूढार्थसन्दीपिकाव्याख्याया छर्दिचिकित्सा ॥



## अथ तृष्णारोग-चिकित्सा ।

महोदधिरस —

**ताम्रचक्रिकया वङ्ग सूतं तालं सतुत्थकम् ।**
**वटाङ्कुररसैर्भाव्यं तृष्णाहृत् वल्लमात्रतः ॥ १ ॥**

छर्द्यास्तृष्णोपद्रवत्वाच्छर्द्यनन्तर तृष्णाचिकित्सा प्रारभ्यते तत्र पूर्वं महोदधिरसनिर्माणमाह ताम्रेत्यादि—ताम्रभस्म, वङ्गभस्म, सूत–रससिन्दूर, तालभस्म, शुद्धतुत्थकचूर्णम् । एतेषा प्रत्येक सम सममादाय खल्वे सञ्चूर्ण्य वटाङ्कुरक्काथैर्भावयित्वा दृढं विमृद्य च काचपात्रे स्थापयेत् । अय रसो वल्लमितो मधुना सेवित स्तृष्णा निवारयति ॥ १ ॥

आम्रादिक्काथ —

**सक्षौद्रमाम्रजम्बूत्थं पिबेत् क्वाथं पलोन्मितम् ।**
**सकृष्णमधुना कुर्यात् गण्डूषं शीतले स्थितः ॥ २ ॥**

अथाम्रादिक्वाथमाह मर्थाम्रमित्यादि—आम्रजम्बुवृक्षयो स्त्वच पञ्चाङ्गस्य वा कृत पलोन्मित क्वाथ मधुयुत पिवेन, तेन तृषा नश्यति। अथवा शीतले जले स्थित्वा पिप्पलीचूर्णमनुम्या गण्डूषं कुर्यात् ॥ २ ॥

कुमुदेश्वरो रस —

मृतताम्रस्य भागौ द्वौ भागैकं वङ्गभस्मकम् ।
यष्टीमधुरसैर्भाव्य शुष्कं माषार्द्धक शुभम् ।
सेवयेच्चानुपानेन वक्ष्यमाणेन बुद्धिमान् ॥ ३ ॥
चन्दनं शारिवां मुस्त क्षुद्रैलां नागकेशरम् ।
सर्वतुल्यां तथा लाजां पचेत् षोडशिकैर्जलैः ॥ ४ ॥
अर्द्धशेष हरेत् क्वाथं सिताक्षौद्रयुतन्तु तत् ।
छर्दिं तृष्णां निहन्त्याशु रसोऽय कुमुदेश्वरः ॥ ५ ॥

( इति तृष्णा–चिकित्सा )

अथ कुमुदेश्वररसनिर्माणमाह मृतेत्यादि—मृतताम्रस्य–ताम्रभस्मनो द्वितोलक, तोलकमित च वङ्गभस्म समादाय खल्वे निक्षिप्य सम्पेष्य च यष्टीमधुरसै–र्यष्टीक्वाथै भावयित्वा दृढ विमर्द्य शुष्कञ्च कृत्वा काचपात्रे स्थापयेत्। अथ रसो वक्ष्यमाणानुपानपूर्वकमर्द्धमाषकमित प्रत्यहं सेवितस्तृणा छर्दिञ्च निवारयति। अनुपान रक्तचन्दनं, शारिवा, शुद्धमुस्तञ्च, क्षुद्रैला, नागकेशर, मिलितमेततोलकमित तथा लाजा तोलकमिता (सर्व द्रव्यतुल्याम्वा) समादाय हण्डिकाया निक्षिप्य षोडशगुणे (३२तो०)जले क्वाथयित्वा अर्द्धशेषञ्च (१६तो०)ज्ञात्वा वस्त्रेण समार्य सितां क्षौद्रञ्च सम्मेल्य पिवेत् ॥ ३–५ ॥

अथ तृष्णायां पथ्यापथ्यव्यवस्था—

शोधन शमन निद्रा स्नान कवलधारणम्। जिह्वाध सिरयो र्दाहो दापदग्धहरिद्रया॥१॥
कोद्रवा शालय पेया विलेपी लाजसक्तव। अन्नमण्डो धान्यरमा शर्करारागषाडवौ॥२॥
एला जातीफल पथ्या कुस्तुम्बुरुच दक्षणम्। घनसारो गन्धसार कौमुदी शिशिरानिल ॥३॥
वालतालाम्वुशीताम्वु पय पेटी प्रपानकम्। माक्षिक सरस तोय शताह्वा नागकेशरम् ॥४॥
चन्दनार्द्र प्रियादलेपो रत्नाभरणधारणम्। हिमानुलेपनञ्च स्यात् पथ्यमेतत्तृषातुरे॥५॥
मृष्टैर्मुद्गैर्मसूरैर्वा चणकैर्वा कृतो रस। रम्भापुष्प तक्रकूर्चा कूष्माण्डञ्च मुपोदिकाम् ॥६॥
खर्जूरं दाडिम धात्री वीजपूर गवा पय। जम्वीर करमर्दञ्च पथ्यमेतत्तृषातुरे ॥७॥

॥ इति पथ्यम् ॥

**हितं लवणमष्टाङ्गमग्निसन्दीपनं परम् ।**

अथापथ्यम्—

स्नेहाञ्जनस्वेदनधूमपानव्यायामनस्यातपदत्तकोष्टम् ।
गुर्वन्नमम्ल लवण कषाय कटु स्त्रियं दुष्टजलानि तीक्ष्णम् ॥
एतानि सर्वाणि हिताभिलाषी तृषातुरो नैव भजेत्कदाचित् ॥ १ ॥

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृताया गूढार्थसन्दीपिकाव्याख्याया तृष्णाचिकित्सा ॥

---

# अथ मूर्च्छारोग-चिकित्सा

सूतभस्मप्रयोग —

**कणामधुयुतं सूतं मूर्च्छायामनुशीलयेत् ।**
**शीतसेकावगाहादि सर्वं वा शीतलं भजेत् ॥ १ ॥**

तृष्णाया मूर्छा भवत्यतस्तृष्णाचिकित्सानन्तरं मूर्छाचिकित्सा प्रारभ्यते तत्र पूर्वं सूतभस्मप्रयोगमाह कणेत्यादि-मूर्छाया कणामधुयुत—पिप्पलीचूर्णमधुभ्या युतं द्विरक्तिमित सूत-रससिन्दूर प्रत्यह सेवयेत् । तथा शीतलजलसेक शीतलजल-प्रवेशमन्यद्वा शीतलोपचार कुर्यात् ॥ १ ॥

सुधानिधिरसस्य प्रयोगातिदेश —

**सुधानिधिरसो नाम मदमूर्च्छाविनाशनः ॥ २ ॥**

( इति मूर्च्छा-चिकित्सा— )

अथ सुधानिधिरसस्य प्रयोगतानिर्देशमाह सुधानिधिरस त्यादि-सुधानिधिरसो मद मूर्च्छाञ्च विनाशयति ॥ २ ॥

अथान्योपचारा यथा—

रक्तज्ञायान्तु मूर्च्छाया हित शीतक्रियाविधि । मद्यजाया पिवेन्मद्य निद्रा सेवेद्यथासुखम् ॥ दिषजाय। विषघ्नानि भेषजानि प्रयोजयेत्।गुडं पिप्पलीमूलस्य चूर्णेनातिचित लिहन्
चिरादपि च सनष्टा निद्रामाप्नोत्यसशयम ॥ २ ॥
इक्षव पोतकी माषा सुरा मास घृत पय । गोधूमगुडमत्स्याश्च निद्रा कुर्वन्ति देहिनाम्॥३॥

अथ मूर्च्छाया पथ्यापथ्यव्यवस्था—

छाया नभोऽम्भ शतधौतसर्पिर्मधूनि तिक्तानि च लाजमण्ड. ।
जीर्णा यवा लोहितशालयश्च क्षौम्भ हवि र्मुद्गनर्तनयूषा ॥ १ ॥
वन्वोद्भवा मासरसाश्च रागा सषाडवा नव्यपय सिता च ।
पुराणकुष्माण्डपटोलमोचहरीतकीदाडिमनारिकेलम् ॥ २ ॥
अत्युच्चशब्दोऽद्भूतदर्शनञ्च गीतानि वाद्यानि च चोत्कटानि ।
श्रम स्मृतिश्चिन्तनमात्मबोधो धैर्यञ्च मूर्च्छावति पथ्यवर्ग ॥ ३ ॥

इति पथ्यानि

अथ अपथ्यानि—

ताम्बूल पत्रशाकानि दन्तघर्षणमातपम्।विरुद्धान्यन्नपानानि व्यवायं स्वेदन कटु ॥
विण्मूत्रवेगरोधञ्च तक्रं मूर्च्छामयी त्यजेत् ॥ ४ ॥ इत्यपथ्यानि

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृताया
गूढार्थसन्दीपिकाव्याख्याया मूर्च्छाचिकित्सा ॥

---

## अथ मदात्यय-चिकित्सा

मदात्ययभञ्जनो रस —

**सचव्यहिङ्गुरुचकं धन्याकं विश्वदीप्यकम् ।**
**चूर्णं ससूतं मद्येन पीतं पानात्ययं जयेत् ॥ १ ॥**

मूर्च्छावत् मदात्ययस्यापि मद्यजन्यत्वात्तदनन्तरं मदात्ययचिकित्सा प्रारभ्यते तत्र पूर्वं मदात्ययभञ्जनरसनिर्माणमाह सचव्येत्यादि—चव्यचूर्ण (१तो०), शुद्ध-हिङ्गुचूर्ण (१तो०) रूचकलवण (१तो०) धान्यकचूर्ण (१तो०), विश्व-शुण्ठीचूर्ण (१तो०) दीप्यक-यवानिकाचूर्ण (१तो०), सूत-रससिन्दूर (१तो०), एतत् सर्वं खल्वे श्लक्ष्ण चूर्णयित्वा काचपात्रे स्थापयेत् । अथ मदात्ययभञ्जनरस-प्रत्यहं मापकमितो मद्यानुपानपूर्वकं सेवित पानात्ययं-मदात्ययं दूरीकरोति ॥१॥

अष्टाङ्गलवणम्—

**सौवर्चलमजाम्यञ्च वृक्षाम्लं साम्लवेतसम् ।**
**त्वगेला मरिचार्द्धांशं शर्करामधुयोजितम् ॥ २ ॥**

**मदात्यये कफप्राये दद्यात् स्रोतोविशोधनम् ॥ ३ ॥**

( इति मदात्यय-चिकित्सा ) ।

अथ अष्टाङ्गलवणयोगमाह सौवर्चलमित्यादि-सौवर्चललवणम् , अजाज्य-कृष्ण-जीरकचूर्णं, वृक्षाम्ल ( महार्द्रकचूर्णमिति केचित् ) अम्लवृक्षचूर्णम् , अम्लवेतसचूर्णं, त्वग्-दारुसिताचूर्णम् , एलावीजचूर्णं, मरिचचूर्णम् । एतेषा प्रत्येकं तोलकमितं समादाय खल्वे सञ्चूर्ण्य काचपात्रे स्थापयेत् । योगोऽयं तोलकमितं प्रत्यहं मधु-शर्कराभ्यां सेवितं कफजन्ये मदात्यये हितकरस्तथा पाचकाग्निं वर्द्धयति, स्रोतसाश्च शोधनं करोति ॥ २-३ ॥

अथान्ये हितकरा मदात्ययनिवारणयोगा

मद्यं सौवर्चलव्योषयुक्तं किञ्चिज्जलान्वितम्। जीर्णमद्याय दातव्यं वातपानात्ययापहम् ॥१॥
मद्योत्थानाञ्च रोगाणां मद्यमेव हि भेषजम् । यथा दहनदग्धानां दहनस्वेदनं हितम् ॥२॥
मध्यातिहीनमद्येन यो व्याधिरुपजायते । समेनैव हि पीतेन मद्येन स हि शाम्यति॥३॥
मुद्गयूषः सितायुक्तः स्वादुर्वा पैशितो रसः ।पित्तपानात्यये योज्या सर्वतश्च क्रिया हिमा ॥४॥
पानात्यये कफोद्भूते लङ्घनञ्च यथावलम्।दीपनीयौषधोपेतं पिबेन्मद्यं समाहितः ॥५॥
सर्वजे सर्वमेवेदं प्रयोक्तव्यं चिकित्सितम्।आभिः क्रियाभिः सिद्धाभिः शान्तिं याति मदात्ययः ॥६॥

मद्यं पीत्वा यदि ना तत्क्षणमवलेढि शर्करां सघृताम् ।
जातु न मदयति मद्यं मनागपि प्रथितवीर्यमपि ॥ ७ ॥
कूष्माण्डकरसः सगुडः शमयति मदमाशु मदनकोद्रवजम् ।
धौस्तूरजञ्च दुग्धं सशर्करं पानयोगेन ॥ ८ ॥

अथ मदात्ययपथ्यापथ्यव्यवस्था—

संशोधनं प्रशमनं स्वपनं लङ्घनं श्रमः । संवत्सरसमुत्पन्नाः शालयः षष्टिकैस्सह ॥१॥
मुद्गा माषाश्च गोधूमाः सतीनाः रागषाडवौ । एणतित्तिरिलावाजदक्षवर्हिशशामिषम् ॥२॥
वेशवारो विचित्रान्नं हृद्यं मद्यं पयः सिता । तण्डुलीयं पटोलञ्च मातुलुङ्गं परूषकम् ॥३॥
धारागृहं चन्द्रपादा मणयो मित्रसङ्गमः ।क्षौमाम्वरं प्रियाश्लेषो गीतं वादित्रमुद्धतम्॥४॥
शीताम्वुचन्दनस्नानं सेव्यमेतन्मदात्यये । इति पथ्यानि
स्वेदोऽञ्जनं धूमपानं नावनं दन्तघर्षणम्।ताम्वूलञ्चेत्यपथ्यं स्यान्मदात्ययविकारिणाम्॥५॥
इत्यपथ्यानि

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृतायां गूढार्थसन्दीपिका-व्याख्यायां मदात्ययचिकित्सा ॥

## अथ दाह-चिकित्सा

दाहान्तको रस —

सूतात् पञ्चार्कतश्चैकं कृत्वा पिण्डं सुशोभनम् ।
जम्बीरस्वरसैर्मर्द्यं सूततुल्यञ्च गन्धकम् ॥ १ ॥
नागवल्लीदलैः पिष्ट्वा ताम्रपत्रीं प्रलेपयेत् ।
प्रपुटेद् भूधरे यन्त्रे यावद् भस्मत्वमाप्नुयात् ॥ २ ॥
द्विगुञ्जमार्द्रकद्रावैस्त्र्यूषणेन च योजयेत् ।
निहन्ति दाहसन्ताप मूर्च्छां पित्तसमुद्भवाम् ॥ ३ ॥

( इति दाहचिकित्सा )

मदात्ययेऽपि दाहो भवति, अतस्तदनन्तरं दाहचिकित्सा प्रारभ्यते तत्र पूर्वं दाहान्तकरसनिर्माणमाह सूतेत्यादि—शुद्धपारद (५तो०), अर्क-शुद्धताम्रपत्र (१तो०), सूततुल्यश्च शुद्धगन्धक, पूर्वं पारदगन्धकयो कज्जलीं कृत्वा जम्बीर-रसेन ताम्बूलदलस्वरसेन च सह क्रमश सम्यगाप्लाव्य विमर्द्य च जातकल्केन ताम्रपत्रं लिप्त्वा भूधरयन्त्रे तावत्पचेत् यावद्भस्मतामाप्नुयात् । अथ दाहान्तको रसो द्विगुञ्जमितत्रिकटुचूर्णार्द्रकस्वरसाभ्या प्रत्यह सेवितो दाहसन्ताप, पित्तसमुद्भवा मूर्च्छाञ्च विनिहन्ति, यथारोगं यथावयश्च मात्रापरिवर्तनमपि विविच्य कर्तव्यम्॥१-३॥

अथ दाहे पथ्यापथ्यव्यवस्था—

शाल्य षष्टिका मुद्गा मसूराश्चणका यवा । धन्वमासरसा लाजमण्डस्तत् सक्तव सिता॥
शतधौत घृत दुग्ध नवनीत पयोभवम् । कूष्माण्ड कर्कटीं मोचं पनसं स्वादु दाडिमम्॥
धारावेश्म तथा सुशीतलशशीज्योत्स्ना तु पानानि च ।
वात शीतलचन्दनं च कमल प्रेमानुबन्धस्तथा ॥ ३ ॥
रामागूहनमर्दनं स्तनयुगे शुक्लार्द्रवस्त्राणि च ।
क्षीर शर्करशङ्खलौहरजत दाहप्रशान्त्यै हितम् ॥ ४ ॥ इति पथ्यानि
विरुद्धान्यन्नपानानि क्रोध वेगविधारणम् । गजाश्वयानमध्वानं क्षारं पित्तकराणि च ॥
व्यायाममातपं तक्र ताम्बूलं मधु रामठम् । व्यवायं कटु तीक्ष्णोष्णं दाहवान् परिवर्जयेत्।

इत्यपथ्यानि

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृताया गूढार्थसन्दीपिकाव्याख्याया दाहचिकित्सा ॥

# अथोन्मादरोग-चिकित्सा

उन्मादगजाङ्कुशो रस —

त्रिदिनं कनकद्रावैर्महाराष्ट्रीद्रवैः पुनः ।
विषमुष्टिजलैः सूतं समुत्थाप्यार्कचक्रिकाम् ॥ १ ॥
कृत्वा तप्तां सगन्धां तां युक्त्या बन्धनमाचरेत् ।
तत्समं कानकं बीजमभ्रकं गन्धकं विषम् ॥ २ ॥
मर्दयेत् त्रिदिनं सर्वं वल्लमात्रं प्रयोजयेत् ।
दोषोन्मादं द्रुतं हन्ति भूतोन्मादं विशेषतः ॥ ३ ॥

उन्मादस्य मदात्ययसादृश्येन मदात्ययचिकित्सानन्तरं यद्यप्युन्मादचिकित्सितमेव वक्तुमुचितमासीत्तथापि दाहस्य स्वल्पचिकित्सतत्वेन सूचीकटाहन्यायेन दाहचिकित्सामुक्त्वाऽधुनोन्मादचिकित्सा प्रारभ्यते तत्र पूर्वमुन्मादगजाङ्कुशरसनिर्माणमाह त्रिदिनमित्यादि—तोलकमितं शुद्धपारदं समादाय कनकद्रावैर्धुस्तूररसैः, महाराष्ट्रीरसैः—जलपिप्पलीकाथैः, विषमुष्टिकाथैश्च क्रमशः पृथक् २ सम्मर्द्योर्द्ध्वपातनेन समुत्थाप्य समभागशुद्धताम्रपत्रोपरि पारदस्य मर्दनयोगेनावरणं कृत्वा तस्योर्द्ध्वाधः पारदमितं गन्धकचूर्णं दत्वा सप्तधा पुटेत् । ततश्च पुटादुद्धृत्य खल्वे सञ्चूर्ण्य च पारदतुल्यं शुद्धधुस्तूरबीजचूर्णम् (१तो०) अभ्रकभस्म (१तो०), शुद्धगन्धकं (१तो०), शुद्धवत्सनाभचूर्णं (१तो०), दत्वा धुस्तूरादिद्रवैस्सह दिनत्रयं सम्मर्द्य वल्लमिता वटीश्चरेत् । अयं रसः प्रत्यहं यथाव्याध्यनुपानपूर्वकं सेवितो वातिकं, पैत्तिकं श्लैष्मिकञ्चोन्मादं भूतोन्मादञ्च विनिहन्ति ॥ १-३ ॥

भूताङ्कुशो रस —

सूतायस्ताम्रमभ्रञ्च मुक्तां चापि समं समम् ।
सूतपादोत्तमं वज्रं शिलागन्धकतालकम् ॥ ४ ॥
तुत्थं रसाञ्जनं शुद्धमब्धिफेनं शिलाञ्जनम् ।
पञ्चानां लवणानाञ्च प्रतिभागं रसोन्मितम् ॥ ५ ॥
भृङ्गराजचित्रवह्नि-दुग्धेनापि विमर्दयेत् ।
दिनान्ते पिण्डिकां कृत्वा रुद्ध्वा गजपुटे पचेत् ॥ ६ ॥
भूताङ्कुशरसो नाम नित्यं गुञ्जाद्वयं लिहेत् ।

आर्द्रकस्य रसेनापि भूतोन्मादनिवारणम् ॥ ७ ॥
पिप्पल्याक्तं पिबेच्चानु दशमूलकषायकम् ।
स्वेदयेत् कटुतुम्ब्या च तीक्ष्णं रूक्षञ्च वर्जयेत् ॥ ८ ॥
माहिषञ्च घृतं क्षीरं गुर्वन्नमपि भक्षयेत् ।
अभ्यङ्गः कटुतैलेन हितो भूताङ्कुशे रसे ॥ ९ ॥

अथ भूताङ्कुशरसनिर्माणमाह सूतेत्यादि—शुद्धपारदं, अयो लौहभस्म, ताम्रभस्म, अभ्रकभस्म, मुक्ताभस्म, एतेषां प्रत्येकं तोलकमितं तथा वज्र-हीरकभस्म (३मा०), शुद्धमनःशिला (१तो०), शुद्धगन्धकं (१तो०), शुद्धतालकं (१तो०), शुद्धतुत्थकचूर्णं (१तो०) रसाञ्जनं (१तो०), (रसगर्भं रसाञ्जनं ग्राह्यं न तु दार्वीक्वाथसममित्यादिविधिनिर्मितम्) शुद्धसमुद्रफेनं (१तो०), शिलाञ्जन-शुद्धशिलाजतु (१तो०) (शिला-शिलाजतु, अञ्जन-शुद्धनीलाञ्जनञ्च वा पृथक् २ तोलकैकं ग्राह्यम्) पञ्चानां लवणानां च प्रत्येकं तोलकमितं नमादाय पूर्वं पारदगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य भृङ्गराजरसेन, चित्रकक्वाथेन, स्नुहीदुग्धेन च क्रमशो भावयित्वा सम्मर्द्य च पिण्डिकां कृत्वा सम्पुटस्थं गजपुटे पचेत्। अयं भूताङ्कुशरसः प्रत्यहं गुञ्जाद्वयमितो मधुनाऽऽर्द्रकस्वरसेन च सेवितस्तदुपरि च पिप्पलीचूर्णमिश्रितदशमूलक्वाथानुपानेन भूतोन्मादं विनिहन्ति। पथ्यं माहिषं घृतं, दुग्धं, तथान्यद्गुर्वन्नादिकं, कटुतैलाभ्यङ्गः कटुतुम्ब्या स्वेदनञ्च हितकरं, तथा विदाहि तीक्ष्णं रूक्षञ्चान्नं विवर्जयेत् ॥ ८-९ ॥

उन्मादभञ्जिनी—

शुद्धं मनःशिलाचूर्णं सैन्धवं कटुरोहिणी ।
वचा शिरीषबीजञ्च हिङ्गु च श्वेतसर्षपः ॥ १० ॥
करञ्जबीजं त्रिकटु मलं पारावतस्य च ।
एतानि समभागानि गोमूत्रैर्वटिकां कुरु ॥ ११ ॥
गिरिमल्लीबीजसमां छायाशुष्कांश्च कारयेत् ।
प्रातः सन्ध्यानिशाकाले चक्षुषोरञ्जनं हितम् ॥ १२ ॥
मधुरादिरसेनाञ्ज्य रात्रावपि जलेन च ।
वटिकैका समाख्याता नाम्ना चोन्मादभञ्जिनी ।
चातुर्थकमपस्मारमथोन्मादं विनाशयेत् ॥ १३ ॥

अथ उन्मादभञ्जिनीवटीनिर्माणमाह शुद्धमित्यादि—शुद्धमनःशिलाचूर्णं, सैन्धवलवणं, कटुरोहिणी-कटुकीचूर्णं, वचाचूर्णं, शिरीषबीजचूर्णं, शुद्धहिङ्गुचूर्णं, श्वेतसर्षपचूर्णं, शुद्धकरञ्जबीजचूर्णं, त्रिकटु=शुण्ठीचूर्णं, मरिचचूर्णं, पिप्पलीचूर्णं, परावतस्य कपोतस्य मलं शुष्कविष्ठाचूर्णम्, एतेषां प्रत्येकं समं सममादाय खल्वे सूक्ष्मं पिष्ट्वा गोमूत्रेण सम्यगाप्लाव्य दृढं विमर्द्य च गिरिमल्लीबीजसमा-इन्द्रयवसमानवर्तिकां विधाय छायायाञ्च संशोष्य काचपात्रे स्थापयेत् । इमां वर्तिकां जलेन, मधुरादिरसेन-मधुना वा घृष्ट्वा प्रभाते सन्ध्याकाले निशायाञ्च नेत्रयोरञ्जनेन उन्मादं नाशयति, तथा प्रत्यहं सेविता चातुर्थिकज्वरम्, उन्मादमपसारञ्च विनिहन्ति ॥ १०-१३ ॥

त्रिकत्रयादिलोहम्—

**त्रिकत्रयसमायुक्तं जीवनीययुतं त्वयः ।**
**हन्त्यपस्मारमुन्मादं वातव्याधिं सुदुस्तरम् ॥ १४ ॥**

अथ त्रिकत्रयादिलौहनिर्माणमाह त्रिकत्रयमित्यादि—त्रिकत्रय=हरीतकीचूर्णं, विभीतकचूर्णं, आमलकीचूर्णं, शुण्ठीचूर्णं, मरिचचूर्णं, पिप्पलीचूर्णं, विडङ्गचूर्णं, शुद्धमुस्तकचूर्णं, चित्रकचूर्णं, जीवनीयगणोक्तद्रव्यचूर्णं यथा-जीवकचूर्णम्, ऋषभकचूर्णं, मेदाचूर्णं, महामेदाचूर्णं, काकोलीचूर्णं, क्षीरकाकोलीचूर्णम्, ऋद्धिचूर्णं, वृद्धिचूर्णं, यष्टीचूर्णं, जीवन्तीचूर्णं, मुद्गपर्णीचूर्णं, माषपर्णीचूर्णम्, एतेषां प्रत्येकं समं समं तथा सर्वसमञ्च लोहभस्म समादाय खल्वे श्लक्ष्णं सञ्चूर्ण्य काचपात्रे स्थापयेत् । इदं लौहं मधुना प्रत्यहं रक्तिकैकादारभ्य त्रिरक्तिमितं सेवितं वातव्याधिं, अपस्मारं, उन्मादञ्च निहन्ति (ऋद्धिवृद्ध्याद्यभावे 'वरी' विदार्यश्वगन्धा वाराही च क्रमात् क्षिपेत) ॥ १४ ॥

उन्मादभञ्जनो रसः—

**त्रिकटु त्रिफला चैव गजपिप्पलिका तथा ।**
**देवदारु विडङ्गञ्च किरातः कटुकी तथा ॥ १५ ॥**
**कण्टकारी च यष्टीन्द्रयवं चित्रकमेव च ।**
**वला च पिप्पलीमूलं मूलञ्च वीरणस्य च ॥ १६ ॥**
**शोभाञ्जनस्य बीजानी त्रिवृता चेन्द्रवारुणी ।**
**वङ्गं रूप्यकमभ्रञ्च प्रवालं समभागिकम् ॥ १७ ॥**
**सर्वचूर्णसमं लौहं सलिलेन विमर्दयेत् ।**

उन्मादमपि भूतोत्थमुन्मादं वातजं तथा ॥ १८ ॥
अपस्मारं तथा कार्श्यं रक्तपित्तं सुदारुणम् ।
नाशयेदविकल्पेन रसश्चोन्मादभञ्जन. ॥ १९ ॥

अथ उन्मादभञ्जनरसनिर्माणमाह त्रिकट्वित्यादि—त्रिकटुचूर्णं पृथक्३ (१तो०), त्रिफलाचूर्णं पृथक्२ (१तो०), गजपिप्पलीचूर्णं (१तो०), देवदारुचूर्णं (१तो०), विडङ्गचूर्णं (१तो०), किरातचूर्णं (१तो०), कटुकीचूर्णं (१तो०), कण्टकारीचूर्णं (१तो०), यष्टीचूर्णं (१तो०), इन्द्रयवचूर्णं (१तो०), चित्रकचूर्णं (१तो०), बलाचूर्णं (१तो०), पिप्पलीमूलचूर्णं (१तो०), वीरणमूलसुपारीचूर्णं (१तो०), शुद्धशोभाञ्जनबीजचूर्णं (१तो०), त्रिवृच्चूर्णं (१तो०), इन्द्रवारुणीचूर्णं (१तो०), वङ्गभस्म (१तो०), रूप्य–रजतभस्म (१तो०), अभ्रकभस्म (१तो०), प्रवालभस्म (१तो०), सर्वसमञ्च, लौहभस्म (२५तो०) समादाय खल्वे श्लक्ष्ण सञ्चूर्ण्य जलेन सह पिष्ट्वा संशोष्य च काचपात्रे स्थापयेत् । अयमुन्मादभञ्जनो रस प्रत्यह द्विरक्तिकादारभ्य यथारोग यथावयश्च माषकैकमितो मधुना सेवितो वातिकमुन्माद, भूतोत्थमुन्मादम्, अपस्मार, रक्तपित्त, कार्श्यञ्च नाशयति ॥ १५–१९ ॥

चतुर्भुजरस —

मृतसूतस्य भागौ द्वौ भागैकं हेमभस्मकम ।
शिला कस्तूरिका तालं प्रत्येकं हेमतुल्यकम् ॥ २० ॥
सर्वं खल्लतले क्षिप्त्वा कन्यया मर्दयेद्दिनम् ।
एरण्डपत्रैरावेष्ट्य धान्यगर्भे दिनत्रयम् ॥ २१ ॥
सस्थाप्य च तदुद्धृत्य सर्वरोगेषु योजयेत् ।
एतद्रसायनवरं त्रिफलामधुमर्दितम् ॥ २२ ॥
तद् यथाऽग्निबल खादेत् वलीपलितनाशनम् ।
अपस्मारे ज्वरे कासे शोषे मन्दानले क्षये ॥ २३ ॥
हस्तकम्पे शिरःकम्पे गात्रकम्पे विशेपतः ।
वातपित्तसमुत्थांश्च कफजान् नाशयेद् ध्रुवम् ॥ २४ ॥
सर्वौषधिप्रयोगैर्ये व्याधयो न प्रसाधिताः ।
कर्मभिः पञ्चभिश्चव मन्त्रौषधिप्रयागतः ॥ २५ ॥

**सर्वास्तान् नाशयत्याशु वृक्षमिन्द्राशनिर्यथा ।**
**चतुर्भुजरसो नाम महेशेन प्रकाशितः ॥ २६ ॥**

अथ चतुर्भुजरसनिर्माणमाह मृतेत्यादि—मृतसूतस्य—रससिन्दूरस्य द्वौ भागौ (२तो०), हेमभस्मन एक भागं (१तो०), शिला-शुद्धमन शिला (१तो०), कस्तूरिका (१तो०), तालं-शुद्धहरितालचूर्णं (१तो०), समादाय एतत् सर्वं खल्वे निक्षिप्य श्लक्ष्णं विचूर्ण्य च दिनैक कन्यया = घृतकुमारीस्वरसेन दृढं विमर्द्य गोलकं कृत्वा एण्डपत्रैश्चाच्छाद्य दिनत्रय धान्यसमूहमध्ये संस्थाप्य तदूर्ध्वं समादाय खल्वे विचूर्ण्य काचपात्रे स्थापयेत् । एतद्रसायनवर यथाव्याध्यनुपानैः सर्वरोगेषु प्रयोक्तव्यम् । अथ रसस्त्रिफलाचूर्णमधुभ्या प्रत्यह यथारोग यथावयश्च रक्तिकादारभ्य पञ्चरक्तिमितं सेवितो वलिपलितरोगं-कचाना (केशानामित्यर्थ ) श्वैत्यं पतनञ्च निवारयति । अयं रस कासे, श्वासे, ज्वरे, मन्दानले, क्षये, हस्तकम्पे, शिर शूले, सर्वगात्रकम्पे, अपस्मारे च हितकरस्तथा वातिकान् , पैत्तिकान् कफजाश्च रोगान् , तथा निखिलौषधिभि , पञ्चकर्मभि मन्त्रौषधिप्रयोगतश्च ये व्याधय शान्ति नैव गता स्तान् सर्वान् वृक्षमिन्द्राशनिरिव शीघ्र नाशयति । अथ चतुर्भुजरस श्रीशङ्करेण प्रकाशित ॥ २०-२६ ॥

उन्मादे कनकबीजप्रयोग —

**कृष्णधुस्तूरजैर्बीजैः पञ्चभिः पर्पटीरसः ।**
**सम्प्रयोज्य. प्रशमयेदुन्मादं भूतसम्भवम् ॥ २७ ॥**

( इत्युन्माद-चिकित्सा ) ।

अथोन्मादे कनकबीजप्रयोगमाह कृष्णेत्यादि—पूर्वोक्तपर्पटी रस ( रसपर्पटी ) प्रत्यहं द्विरक्तिमित शुद्धपञ्चधुस्तूरबीजचूर्णेन मधुना च सह सेवितो भूतोत्थमुन्मादं विनाशयति ॥ २७ ॥

अथोन्मादरोगे पथ्यापथ्यव्यवस्था—

गोधूममुद्गारुणशालयश्च धारोष्णदुग्धं शतधौतसर्पि ।
घृत नवीनञ्च पुरातनञ्च कूर्मामिषं धन्वरसा रसालम् ॥ १ ॥
पुराणकुष्माण्डफल पटोलं ब्राह्मीदल वास्तुकतण्डुलीयम् ।
खराश्वमूत्रं गगनाम्बु पथ्या सुवर्णचूर्णानि च नारिकेलम् ॥ २ ॥
द्राक्षाकपित्थं पनसञ्च वैद्यै विधेयमुन्मादगदेषु पथ्यम् ।

मद्यं विरुद्धाशनमुष्णभोजनं निद्रा क्षुधातृड् कृतवेगधारणम् ।
तिक्तानि तीक्ष्णानि भिषक् समादिशेदुन्मादरोगापहृतेषु गर्हितम् ॥ ३ ॥

इति पथ्यापथ्यव्यवस्था ।

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृताया गूढार्थ-
मन्दीपिका-व्याख्यायामुन्मादचिकित्सा ॥

---

## अथापस्माररोग-चिकित्सा ।

भूतभैरवो रसः —

**मृतसूतार्कलौहञ्च शिलागन्धकतालकम् ।**
**रसाञ्जनञ्च तुल्यांशं नरमूत्रेण मर्दयेत् ॥ १ ॥**
**तद्गोलं द्विगुणं गन्धं लोहपात्रे क्षणं पचेत् ।**
**पञ्चगुञ्जामितं खादेदपस्मारहरं परम् ॥ २ ॥**
**हिङ्गु सौवर्चलं व्योषं नरमूत्रेण सर्पिषा ।**
**कर्षमात्रं पिबेच्चानु रसोऽयं भूतभैरवः ॥ ३ ॥**

समानदोषदूष्यचिकित्सितत्वादुन्मादानन्तरमपस्मारचिकित्सा प्रारभ्यते, पूर्वं वातिकं वस्तिभिः प्रायः पैत्तं प्रायो विरेचनैः । श्लैष्मिकं वमनप्रायैरपस्मारमुपाचरेत्॥ बलवतो यथाशक्तिशोधनं कृत्वा तदूर्ध्वं रसादिकचिकित्सां कुर्यात् ।

अथ भूतभैरवरसनिर्माणमाह मृतसूतेत्यादि—मृतसूत-पारदभस्म रससिन्दूरम्वा (१तो०), अर्कस्ताम्रभस्म (१तो०), लौहभस्म (१तो०), शिला = शुद्धमनःशिलाचूर्णं (१तो०), शुद्धगन्धकं (१तो०), शुद्धहरिताल (१तो०), रसाञ्जनं (यलो आक्साइड) (१तो०), पूर्वं रसगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य श्लक्ष्णं सञ्चूर्ण्य च नरमूत्रेण सम्यगाप्लाव्य दृढं विमर्द्य गोलकं कृत्वा लौहपात्रे = कटाहे संस्थाप्य च पुनः सर्वद्रव्यद्विगुणगन्धकं गोलकस्योपर्यधो दत्वा क्षणं पचेत् । अयं भूतभैरवरसो यथारोगं यथावयश्च गुञ्जैकादारभ्य पञ्चगुञ्जामितं प्रत्यहं शुद्धहिङ्गुचूर्णेन, त्रिकटुचूर्णेन, सर्पिषा, नरमूत्रेण च कर्षमितेन सेवितोऽपस्मारं विनिहन्ति॥१-३॥

सूतभस्मप्रयोग —

शङ्खपुष्पी वचा ब्राह्मी कुष्ठमेलारसैः सह ।
सूतभस्मप्रयोगोऽयं रक्तिकाद्वयमानतः ।
सर्वापस्मारनाशाय महादेवेन भाषित. ॥ ४ ॥

अथ सूतभस्मप्रयोगमाह शङ्खपुष्पीत्यादि—रक्तिकाद्वयप्रमाणेन सूतभस्म = रससिन्दूर प्रत्यह शङ्खपुष्पी, वचा, ब्राह्मी, कुष्ठम्, बृहदेला, एतेषा क्वाथेन—सह, अथवा एतेषा प्रत्येकं समं सममादाय चूर्णं कृत्वा तोलकमितचूर्णेन मधुना च सह सेवित सर्वापस्मारप्रकार निहन्ति । अयं सूतभस्मप्रयोग श्रीमहादेवेन प्रोक्तो दृष्टफलश्च ॥ ४ ॥

इन्द्रब्रह्मवटी—

मृतसूताभ्रकं तीक्ष्णं तारं ताप्यं विषं समम् ।
पद्मकेशरसंयुक्तं दिनैकं मर्दयेत् द्रवैः ॥ ५ ॥
स्नुह्यग्निविजयैरण्ड-वचानिष्पावशूरणैः ।
निर्गुण्ड्याश्च द्रवैर्मर्द्य तद्गोलं पाचयेत् पुनः ॥ ६ ॥
कङ्गुनीसर्षपोत्थेन तैलेन गन्धसंयुतम् ।
ततः पक्त्वा समुद्धृत्य चणमात्रा वटी कृता ॥ ७ ॥
इन्द्रब्रह्मवटीनाम भक्षयेदार्द्रकद्रवैः ।
दशमूलकषायञ्च कणायुक्तं पिबेदनु ।
अपस्मारं जयत्याशु यथा सूर्योदयस्तमः ॥ ८ ॥

अथ इन्द्रब्रह्मवटीनिर्माणमाह मृतसूतेत्यादि—

मृतसूतं-रससिन्दूरम् (१तो०), अभ्रकमभ्रकभस्म(१तो०), तीक्ष्णलोहभस्म (१तो०), तारं—रजतभस्म (१तो०) ताप्यं—स्वर्णमाक्षिकभस्म (१तो०), विषं—शुद्धवत्सनाभचूर्णं (१तो०), पद्मकेशरचूर्णं (१तो०), सर्वं खल्वे निक्षिप्य श्लक्ष्णं सञ्चूर्ण्य च स्नुही = वज्री, अग्निश्चित्रक, विजया = भङ्गा, एरण्ड, वचा = उग्रगन्धा, निष्पाव, शूरणकन्द, निर्गुण्डी, एतेषा स्वरसै क्वाथैर्वा क्रमशो दिनैकं भावयित्वा विमर्द्य च गोलक कुर्यात्, पुनस्तद्गोलक कटाहे कङ्गुनीतैलेन(प्रियङ्गुतैलेन ज्योतिष्मतीतैलेन वा), सर्षपतैलेन, द्विगुणगन्धकेन च सह पचेत् । सम्यक्

पाकं ज्ञात्वा अवतार्येन्न चणकप्रमाणा वटीश्चरेत्। इयमिन्द्रब्रह्मनाम्नी वटी प्रत्यहम्, आर्द्रकस्वरसेन तथा पिप्पलीचूर्णमिश्रितदशमूलक्वाथानुपानेन च सह सेविता अपस्मार तथा नाशयति यथासूर्यस्तमोऽन्धकारं विनिहन्ति ॥ ५-८ ॥

वातकुलान्तक —

**मृगनाभिः शिवा नाग-केशर कलिवृक्षजम् ।**
**पारद. गन्धको जाती-फलमेला लवङ्गकम् ॥ ९ ॥**
**प्रत्येक कार्षिकश्चैव श्लक्ष्णचूर्णानि कारयेत् ।**
**जलेन मर्दयित्वा तु वटीं कुर्यात् द्विरक्तिकाम् ।**
**यथाव्याध्यनुपानेन योजयेच्च चिकित्सक. ॥ १० ॥**
**अपस्मारे महाघोरे मूर्च्छारोगे च शस्यते ।**
**वातजान् सर्वरोगांश्च हन्यादचिरसेवनात् ॥ ११ ॥**
**नात. परतर श्रेष्ठमपस्मारेषु वर्त्तते ।**
**ब्रह्मणा निर्मितः पूर्वं नाम्ना वातकुलान्तकः ॥ १२ ॥**

( इति अपस्मार-चिकित्सा )

अथ वातकुलान्तकरसनिर्माणमाह मृगेत्यादि—मृगनाभि —कस्तूरिका(१क०), शिवा = हरीतकीचूर्णं(१क०), नागकेशरचूर्ण(१क०), कलिवृक्षज—विभीतकफलत्वच-च्चूर्ण (१क०),शुद्धपारद (१क०),शुद्धगन्धक (१क०), जातीफलचूर्णम् (१क०), एलावीजचूर्णं (१क०),लवङ्गचूर्ण (१क०), पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेष-द्रव्याणि सम्मेल्य श्लक्ष्ण विचूर्ण्य जलेन पिष्ट्वा च द्विरक्तिप्रमाणा वटी श्चरेत् । इय-वटी यथाव्याध्यनुपानेन महाघोरेऽपस्मारे, मूर्च्छारोगे च प्रयोज्या । तथेय वटी वातजान्विविधरोगाश्च निहन्ति, अत परमपस्मारेषु नास्त्यन्यच्छ्रेष्ठम्। अग वात-कुलान्तकरस पुराकाले ब्रह्मणा निर्मित ॥ ९-१२ ॥

अथापस्मारे पथ्यापथ्यव्यवस्था—

नस्य सिराव्यधो दान त्रासन वन्धनं भयम्। तर्ज्जन ताडन हर्षो धूमपानञ्च विस्मयः॥१॥
धीधैर्यात्मादिविज्ञान स्नानमभ्यञ्जनानि च।लोहिता शालयो। मुद्गा गोधूमा प्रतन हवि ॥२॥
कूर्मामिष धन्वरसा दुग्ध ब्राह्मीदल वचा।पटोलं वृद्धकूष्माण्ड वास्तूकं स्वादु दाडिमम्॥३॥
... पेटी द्राक्षा धात्री परूषकम्। तैलं खरादवमूत्रञ्च गगानाम्बु हरीतकी ॥४॥

अपस्मारगदे नृणां पथ्यमेतदुदीरितम्। इति पथ्यानि। अथापथ्यम्—
चिन्ता शोकं भयं क्रोधमशुचीन्यशनानि च। मद्यं मत्स्यं विरुद्धान्नं तीक्ष्णोष्णगुरुभोजनम्॥१
अतिव्यवायमायासं पूज्यपूज्याव्यतिक्रमम्। पत्रशाकानि सर्वाणि बिम्बीमाषाढकं फलम्॥
तृषानिद्राक्षुधावेगमपस्मारी परित्यजेत्॥ इत्यपथ्यम्।

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृतायां गूढार्थसन्दीपिकाव्याख्यायामपस्मारचिकित्सा॥

## अथ वातव्याधि-चिकित्सा

द्विगुणाख्यो रसः—

गन्धकात् द्विगुणं सूतं शुद्धं मृद्वग्निना क्षणम्।
पक्त्वाऽवतार्य सञ्चूर्ण्य चैतत्तुल्याभयाऽन्वितम्॥ १॥
सप्तगुञ्जामितं खादेत् वर्द्धयेच्च दिने दिने।
गुञ्जैकैकक्रमेणैव यावत् स्यादेकविंशतिः॥ २॥
क्षीराज्यशर्कराभिश्च शाल्यन्नं पथ्यमाचरेत्।
कम्पवातप्रशान्त्यर्थं निर्वाते निवसेत् सदा।
द्विगुणाख्यरसो नाम त्रिपक्षात् कम्पवातजित्॥ ३॥

वातविशेषस्याक्षेपकादेरपस्मारवद्वेगकर्तृत्वात्तथा प्रायस्तुल्यचिकित्सितत्वाच्चापस्मारचिकित्सानन्तरं वातव्याधिचिकित्सा प्रारभ्यते। तत्र पूर्वं करणीयं सामान्योपचारं यथा—

"अभ्यङ्गं स्वेदनं वस्तिं नस्यं स्नेहविरेचनम्। स्निग्धाम्ललवणं स्वादु वृष्यं वातामयापहम्॥
तथा यथाग्निबलं पञ्चकर्म कृत्वा तदूर्ध्वं रसादिचिकित्सां कुर्यात्।

अथ द्विगुणाख्यरसनिर्माणमाह गन्धकादित्यादि—शुद्धगन्धकं (१तो०) तस्माच्च शुद्धं सूतं द्विगुणं (२तो०) समादाय पूर्वमुभयोः कज्जलीं कृत्वा कटाहे मन्दाग्निना किञ्चित्कालं पक्त्वा ह्यवतारयेत् ( वस्तुतो लौहदर्विकायां कज्जलीं निक्षिप्य मृद्वग्नौ प्रदाव्य यथाविधि पर्पटीं कृत्वा खल्वे सञ्चूर्णयेत् ) ततश्च सर्वतुल्यं हरीतकीचूर्णं (३तो०) सम्मेल्य विचूर्ण्य च काचपात्रे स्थापयेत्। अस्य द्विगुणाख्यरसस्य प्रथमदिने सप्तरक्तिमितां मात्रां शुण्ठीचूर्णमधुभ्यां भक्षयेत्। ततश्च प्रत्यहं रक्तिकैकक्रमेण

मात्रा वर्द्धयेत्, यावच्चैकविंशतिरक्तिमिता मात्रा पूर्णा स्यात्। इत्थं मात्राह्रास-वृद्धिपूर्वकमयं रसं सेव्य, तेन च कम्पादिविविधवातरोगाणां प्रशान्तिर्भवति। पथ्यञ्च दुग्ध, घृतं, शर्करा, शाल्यन्नञ्च, तथा निर्वातप्रदेशे वसतिं कुर्यात्। अयं द्विगुणाख्यो रसस्त्रिभिः पक्षैः कम्पवातं ध्रुवं नाशयति ॥ १-३ ॥

वातगजाङ्कुशः—

मृतं सूतं मृतं लौहं ताप्यं गन्धकतालकम्।
पथ्या शृङ्गी विषं व्योषमग्निमन्थञ्च टङ्कणम् ॥ ४ ॥
तुल्यं खल्ले दिनं मर्द्यं मुण्डीनिर्गुण्डिकाद्रवैः।
द्विगुञ्जां वटिकां खादेत् सर्ववातप्रशान्तये ॥ ५ ॥
कणाचूर्णयुतञ्चैव जिङ्गीक्वाथं पिबेदनु।
साध्यासाध्यं निहन्त्याशु रसो वातगजाङ्कुशः ॥ ६ ॥
सप्ताहाद् गृध्रसीं हन्ति दारुणं सान्निपातिकम्।
क्रोष्टुशीर्षकवातञ्चाप्यवबाहुकसंज्ञकम् ॥ ७ ॥
ऊरुस्तम्भं हनुस्तम्भं मन्यास्तम्भं विनाशयेत्।
पक्षाघातादिरोगेषु कथितः परमोत्तमः ॥ ८ ॥

अथ वातगजाङ्कुशनिर्माणमाह मृतमित्यादि—मृतं सूतं-रससिन्दूरं, मृतं लौहं-लौहभस्म, ताप्यं=स्वर्णमाक्षिकभस्म, शुद्धगन्धकं, शुद्धतालकं, पथ्या=हरीतकीचूर्णं, शृङ्गी-कर्कटशृङ्गीचूर्णं, विषं=शुद्धवत्सनाभचूर्णं, व्योषं=शुण्ठीचूर्णं, मरिचचूर्णं, पिप्पलीचूर्णम्, अग्निमन्थचूर्णम्, (अरणीचूर्णं), शुद्धटङ्कणञ्च, एतेषां प्रत्येकं समं समभादाय रससिन्दूरगन्धकयोः श्लक्ष्णं पेषणं कृत्वा सर्वद्रव्याणि सम्मेल्य मुण्डीरसेनाप्लाव्य दिनमेकं विमर्दयेत्। ततश्च निर्गुण्डीपत्रस्वरसेनापि सम्यगाप्लाव्य दिनैकं विमर्द्य द्विगुञ्जमितां वटीं धरेत्। अयं रसः प्रत्यहं पिप्पलीचूर्णमिश्रितेन जिङ्गीक्वाथानुपानेन (मजिष्ठाक्वाथानुपानेनेत्यर्थः) सेवितः साध्यमसाध्यम्वा सर्वविधम्वातिकरोगं विनिहन्ति, तथा सप्ताहपर्यन्तं सेवितो दारुणं सन्निपातं, गृध्रसीञ्च विनाशयेत्। तथैव क्रोष्टुशीर्षकवातं (इन्फ्लेम्ड नी), अवबाहुकसंज्ञकवातम्, ऊरुस्तम्भं, मन्यास्तम्भं (रायनेक्), हनुस्तम्भं, पक्षाघातादिरोगांश्च विनाशयति ॥४-८॥

औषधान्तरप्रयोगोपदेश —

**रसोऽम्बुशोषणो ह्यत्र युक्तोऽन्यो योगवाहिकः ॥ ९ ॥**

अथ औषधान्तरप्रयोगोपदेशमाह रस इत्यादि—अनेन रसेन सह अत्र = वातव्याधौ जलशोषकस्य रसस्य तथा योगवाहिकस्य रसान्तरस्यापि प्रयोग. कर्तव्यः॥९॥

बृहद्वातगजाङ्कुश —

**सूताभ्रतीक्ष्णकान्तानि ताम्रतालकगन्धकम् ।**
**स्वर्णं शुण्ठी बला धान्यं कट्फलञ्चाभया विषम् ॥ १० ॥**
**पथ्या शृङ्गी पिप्पली च मरिचं टङ्कणं तथा ।**
**तुल्यं खल्ले दिनं मर्द्यं मुण्डीनिर्गुण्डिजेर्द्रवैः ॥ ११ ॥**
**द्विगुञ्जां वटिकां खादेत् सर्ववातप्रशान्तये ।**
**साध्यासाध्यं निहन्त्याशु बृहद्वातगजाङ्कुशः ॥ १२ ॥**

अथ बृहद्वातगजाङ्कुशनिर्माणमाह सूताभ्रेत्यादि—शुद्धसूतम् , अभ्रमभ्रकभस्म, तीक्ष्णलौहभस्म, कान्तलौहभस्म, ताम्रभस्म, शुद्धतालकं, शुद्धगन्धक, स्वर्णभस्म, शुण्ठीचूर्णं, बलाचूर्णं, धान्यकचूर्णं, कट्फलचूर्णम्, अभया-हरीतकीचूर्णं, विष = शुद्धवत्सनाभचूर्णं, पथ्या-हरीतकीचूर्ण , शृङ्गी = कर्कटशृङ्गीचूर्णं, पिप्पलीचूर्णं, मरिचचूर्णं, शुद्धटङ्गणम् , एतेषा प्रत्येक सम सममादाय पूर्वं पारदगन्धकयो· कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य श्लक्ष्णं पिष्ट्वा च मुण्डीरसेन दिनैकं विमर्द्य निर्गुण्डीपत्रस्वरसैश्च दिनैक भावयित्वा दृढं विमर्द्य च द्विगुञ्जप्रमाणा वटीश्चरेत् । अयं बृहद्वातगजाङ्कुशो रसो द्विगुञ्जमित प्रत्यहं वातगजाङ्कुशानुपानपूर्वकं सेवित साध्यमसाध्यञ्च सर्वविधवातरोग विनिहन्ति ॥ १०–१२ ॥

महावातगजाङ्कुश —

**मृताभ्रतीक्ष्णताम्रञ्च सूततालकगन्धकम् ।**
**भार्गी शुण्ठी बला धान्यं कट्फलञ्चाभया विषम् ॥ १३ ॥**
**संपिष्य चपलाद्रावैः निष्कैकां भक्षयेद्वटीम् ।**
**वातश्लेष्महरो ह्येष महावातगजाङ्कुशः ॥ १४ ॥**

अथ महावातगजाङ्कुशनिर्माणमाह मृतेत्यादि—मृताभ्रमभ्रकभस्म, तीक्ष्णलौह-

त्रिगुणा त्रिफला ग्राह्या चतुर्भागन्तु चित्रकम् ॥ १८ ॥
गुग्गुलोः पञ्चभागश्चैरण्डतैलेन मर्दयेत् ।
क्षिप्त्वाऽत्र पूर्वकं चूर्णं पुनस्तेनैव मर्दयेत् ॥ १९ ॥
गुडिकां कर्षमात्रान्तु भक्षयेत् प्रातरुत्थितः ।
नागरैरण्डमूलानां क्वाथं तदनु पाययेत् ॥ २० ॥
अङ्गमेरण्डतैलेन स्वेदयेत् पृष्ठदेशतः ।
विरेके तेन सञ्जाते स्निग्धमुष्णञ्च भोजयेत् ।
वातारिसंज्ञको ह्येष रसो निर्वातसेवितः ॥ २१ ॥

अथ वातारिरसनिर्माणमाह रसेत्यादि—रसभाग शुद्धपारद (१तो०), शुद्ध-गन्धक (२तो०), त्रिफलाचूर्ण (३तो०), चित्रकचूर्ण (४तो०), शुद्धगुग्गुलो पञ्च-भागा (५तो०), पूर्वं पारदगन्धकयो कज्जलीं कृत्वा चूर्णानि निक्षिप्य सम्यक् मर्दयेत् । ततश्च गुग्गुलुमेरण्डतैलेन विमर्द्य तत्र पूर्वमर्दित चूर्णं दत्वा पुन स्वल्प-मेरण्डतैल निक्षिप्य दृढ विमर्द्य च कर्षप्रमाणा वटीश्चरेत् । अय रस प्रत्यहं माष-कैकादारभ्य यथारोगं यथावयश्च कर्षपर्यन्त शुण्ठीचूर्णमिश्रितैरण्डमूलक्वाथानुपान-पूर्वक सेवितो वातरोगान्निहन्ति । प्रत्यह वातरोगजुष्टस्याङ्ग विशेषत पृष्ठभागमेरण्ड-तैलेनाभ्यज्य स्वेदनीय, विरेकानन्तर प्रत्यहं स्निग्ध मन्दोष्णञ्च भोजनं देयं, निर्वा-तप्रदेशे च निवास कर्तव्यम् ॥ १८–२१ ॥

अनिलारिरस —

रसेन गन्ध द्विगुणं विमर्द्य वातारिनिर्गुण्डिरसैर्दिनैकम् ।
निवेशयेत् ताम्रमये पुटे तत् सर्वं मृदावेष्ट्य च वालुकाख्ये ॥२२॥
यन्त्रे पुटेत् गोमयचूर्णवह्नौ स्वभावशीते तु समुद्धरेत् तत् ।
निर्गुण्डिकावानहराग्नितोयैः सञ्चूर्ण्य यत्नेन विभावयेत् तत् ॥२३॥
रसोऽनिलारिः कथितोऽस्य वल्लमेरण्डतैलेन ससैन्धवेन ।
मरीचचूर्णेन ससर्पिषा वा निर्गुण्डिचित्रैश्च कटुत्रिकैर्वा ॥ २४ ॥

अथ अनिलारिरसनिर्माणमाह रसेनेत्यादि—शुद्धपारद (१तो०), तेन शुद्धग-न्धकं द्विगुणं (२तो०), समादाय पारदगन्धकयो कज्जलीं कृत्वा वातारिरसेन = एरण्डमूलक्वाथेन दिनैकं विमर्द्य निर्गुण्डीपत्रस्वरसेनापि दिनमेकं दृढं विमर्दयेत् ।

ततश्च संशुष्कं चूर्णं ताम्रशरावे प्रपूर्य ताम्रमयशरावान्तरेण सह सम्पुटं कृत्वा ...
...धमृद्वस्त्रैरालिप्य बालुकायन्त्रे संस्थाप्य वनोपलवन्हौ पुटेत्। स्वाङ्गशीतं समुद्धृ-
...त्य खल्वे सम्पूर्ण्य च निर्गुण्डीपत्रस्वरसेन, वातहरस्वरसेन (एरण्डमूलस्वरसेनेत्यर्थः),
अग्निश्चित्रकस्तस्य स्वरसेन च क्रमशः पृथक् १ दिनैकं विमर्द्य संशोष्य च काच-
पात्रे स्थापयेत्। अयमनिलारिरसः प्रत्यहं यथाग्निबलं द्विरक्तिकादारभ्य वल्लमितः
...सैन्धवेन एरण्डतैलेन, मरिचचूर्णमिश्रितघृतेन, अथवा त्रिकटुचूर्णेन मधुना,
चित्रकचूर्णेन निर्गुण्डीपत्रस्वरसेन च सह सेवितो वातिकरोगान्निहन्ति ॥२२-२४॥

वातकण्टको रसः —

वज्रमृताभ्रहेमार्क-तीक्ष्णमुण्डं क्रमोत्तरम्।
मरिचं मर्दयेदम्लवर्गेण दिवसत्रयम् ॥ २५ ॥
द्विक्षारं पञ्चलवणं मर्दितं स्यात् समं समम्।
ततो निर्गुण्डिकाद्रावैः मर्दयेत् दिवसत्रयम् ॥ २६ ॥
शुष्कमेतद्विचूर्ण्याथ विषश्चास्याष्टमांशतः।
टङ्कणं विषतुल्यांशं दत्त्वा जम्बीरजद्रवैः ॥ २७ ॥
भावयेत् दिनमेकन्तु रसोऽयं वातकण्टकः।
दातव्यो वातरोगेषु सन्निपाते विशेषतः।
द्विगुञ्जमार्द्रकद्रावैः घृतैर्वा वातरोगिणे ॥ २८ ॥

अथ वातकण्टकरसनिर्माणमाह वज्रेत्यादि—वज्र-हीरकभस्म (१तो०), मृता-भ्रमभ्रकभस्म (२तो०), हेम-स्वर्णभस्म (३तो०), अर्कस्ताम्रभस्म (४तो०), तीक्ष्ण-लौहभस्म (५तो०), मुण्डलौहभस्म (६तो०), मरिचचूर्णम् (७तो०), एतत् सर्वं खल्वे निक्षिप्य यथालब्धाम्लवर्गद्रव्यस्वरसैस्त्रिदिनं विमर्द्य द्विक्षारं=स्वर्जिक्षारं यवक्षारं, पञ्चलवणञ्च, एतेषां श्लक्ष्णचूर्णितं प्रत्येकं तोलकैकमितं दत्वा निर्गुण्डीपत्र-स्वरसेन सम्यगाप्लाव्य दिवसत्रयं विमर्दयेत्। तदनु तस्मिन् शुष्के सति तत्रैकतोल-कस्याष्टमांशं (द्वादशरक्तिमितमित्यर्थः) शुद्धवत्सनाभचूर्णं तथा तावन्मात्रमेव शुद्धटङ्कणं दत्वा मर्दनेन सम्मेल्य जम्बीरनिम्बुकरसेन सम्यगाप्लाव्य दिनैकं दृढं विमर्द्य च द्विरक्तिमिता वटीश्चरेत्। अयं वातकण्टकरसो द्विरक्तिमितः प्रत्यहं घृते-न, आर्द्रकस्वरसेन वा सह वातरोगेषु, सन्निपाते च प्रदातव्यः ॥ २५-२८ ॥

निर्गुण्डीगुग्गुलु —

निर्गुण्डीमूलचूर्णन्तु महिषाक्षञ्च गुग्गुलुम् ।
समांशं मर्दयेदाज्ये तद्वटी कर्षसम्मिता ॥ २९ ॥
अनुयोज्या घृतैर्नित्यं स्निग्धमुष्णञ्च भोजयेत् ।
मण्डलं नाशयेत् सर्वं वातरोगं विशेषतः ।
सन्निपाते पिबेच्चानु तालमूलीकषायकम् ॥ ३० ॥

अथ निर्गुण्डीगुग्गुलुयोगमाह निर्गुण्डीत्यादि—घृतमर्दितयो समभागकल्पित-निर्गुण्डीमूलचूर्णमाहिषाक्षगुग्गुल्वो कर्षमिता वटी घृतेन सह वातरोगिणे देया, तथा स्निग्धमुष्णञ्च भोजनं देयम् । अय योगो नित्य सेवितो मण्डलाख्यं कुष्टं, विशेषतो विविधवातरोगमण्डलं च नाशयति । सन्निपातरोगे अस्य सेवन कृत्वा तदनु ताल-मूलीक्वाथमपि पिबेत् ॥ २९–३० ॥

लघ्वानन्दो रस —

पारदः गन्धको लौहमभ्रकं विषमेव च ।
समांश मरिचस्याष्टौ टङ्कणन्तु चतुर्गुणम् ॥ ३१ ॥
भृङ्गराजरसेनैव दातव्याः सप्त भावनाः ।
तथा दाडिमतोयेन वटीं कुर्य्यात् समाहितः ।
निहन्ति वातजान् रोगान् भ्रमदाहपुरः सरान् ॥ ३२ ॥

अथ लघ्वानन्दरसनिर्माणमाह पारद इत्यादि—शुद्धपारद (१तो०), शुद्धगन्धक (१तो०), लौहभस्म (१तो०), अभ्रकभस्म (१तो०), विषं–शुद्धवत्सनाभ-चूर्णं (१तो०), मरिचचूर्णस्याष्टतोलक, शुद्धटङ्कणं चतुर्गुणमिति (४तो०), पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य भृङ्गराजस्वरसेन सम्यगाप्लाव्य दृढ विमर्द्य च शोषयेत्, एव भृङ्गराजरसस्य सप्तभावना दत्वा दाडिमतोयेन सम्यगाप्लाव्य दृढं विमर्द्य च द्विगुञ्जमिता वटीश्चरेत् । अय लघ्वानन्दरसो भ्रम-दाहपूर्वकान् विविधवातरोगान्निहन्ति ॥ ३१–३२ ॥

चिन्तामणिरस —

कर्षैकं रससिन्दूरं तत्समं मृतमभ्रकम् ।
तदर्द्धं मृतलौहञ्च स्वर्णं शाणं क्षिपेद् बुधः ॥ ३३ ॥

कन्यारसेन संमर्द्य गुञ्जामानां वटीं चरेत् ।
अनुपानादिकं दद्यात् बुद्ध्वा दोषबलाबलम् ॥ ३४ ॥
हन्ति श्लेष्मान्वितं वात केवल पित्तसयुतम् ।
हृल्लासमरुचि दाह वान्ति भ्रान्तिं शिरोग्रहम् ॥ ३५ ॥
प्रमेहं कर्णनादञ्च जडगद्गदमूकताम् ।
बाधिर्य्यं गर्भिणीरोगमश्मरीं सूतिकाऽऽमयम् ॥ ३६ ॥
प्रदर सोमरोगञ्च यक्ष्माणं ज्वरमेव च ।
बलवर्णाग्निद· सम्यक् कान्तिपुष्टिप्रसाधक ।
चिन्तामणिरसश्चायं चिन्तामणिरिवापरः ॥ ३७ ॥

अथ चिन्तामणिरसनिर्माणमाह कर्षैकमित्यादि—रससिन्दूर कर्षैक, (१तो०), मृतमभ्रकमभ्रकभस्म (१क०), मृतलौह तदर्द्ध -रससिन्दूरस्यापेक्षयार्द्धभागमित (अर्द्धकर्ष ), स्वर्णभस्म शाणमित (४मा०"चतुर्भिर्माषकैःशाण ")एतत् सर्व खल्वे श्लक्ष्ण सम्पेष्य कन्यारसेन =घृतकुमारीस्वरसेन सम्यगाप्लाव्य विमर्द्य च गुञ्जाप्रमाणा वटीश्चरेत् । अयं चिन्तामणिरसो यथादोषानुपानपूर्वक सेवित श्लेष्मान्वित केवलपित्तयुतम्वा वातरोग, हृल्लासम्, अरुचि, दाह, वमन, भ्रान्ति, शिरोग्रह, प्रमेहं, कर्णनाद, ज्वर, गद्गदमूकतामस्पष्टाक्षरवाणा, बाधिर्य , गर्भिणीविकारम्, अश्मरीं, सूतिकारोग, प्रदर, सोमरोग, यक्ष्माणञ्च विनाशयति । अथ चिन्तामणिरसो बल, वर्ण , पाचकाग्निं, कान्ति पुष्टिञ्च वर्द्धयति ॥ ३३–३७ ॥

चतुर्मुखोरस —

रसगन्धकलौहाभ्रं समं सूताङ्घ्रि हेम च ।
सर्व खल्लतले क्षिप्त्वा कन्यास्वरसमर्दितम् ॥ ३८ ॥
एरण्डपत्रैरावेष्ट्य धान्याराशौ दिनत्रम् ।
सस्थाप्य च तदुद्धृत्य त्रिफलारससंयुतम् ॥ ३९ ॥
एतद्रसायनवरं सर्वरोगेषु योजयेत् ।
तद् यथाग्निबलं खादेत् वलीपलितनाशनम् ॥ ४० ॥
पौष्टिकं बल्यमायुष्यं पुत्रप्रसवकारकम् ।
क्षयमेकादशविधं कासं पञ्चविधं तथा ॥ ४१ ॥

कुष्ठमेकादशविधं पाण्डुरोगान् प्रमेहकान् ।
शूलं श्वासञ्च हिक्काञ्च मन्दाग्निञ्चाम्लपित्तकम् ॥ ४२ ॥
अपस्मारं महोन्मादं सर्वार्शांसि त्वगामयान् ।
क्रमेण शीलितं हन्ति वृक्षमिन्द्राशनिर्यथा ॥ ४३ ॥
जगताञ्च हितार्थाय चतुर्मुखमुखोदितः ।
रसश्चतुर्मुखो नाम चतुर्मुख इवापरः ॥ ४४ ॥

अथ चतुर्मुखरसनिर्माणमाह रसेत्यादि—शुद्धपारद (१तो०), शुद्धगन्धक (१तो०), लौहभस्म(१तो०), अभ्रकभस्म(१तो०), सूताङ्घ्रि हेम चेति पारदापेक्षया पादाश स्वर्णभस्म (३मा०) समादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि खल्वे निक्षिप्य सञ्चूर्ण्य च घृतकुमारीस्वरसेनाप्लाव्य दृढ विमर्द्य गोलक कृत्वा एरण्ड-पत्रैरावेष्ट्य दिनत्रय धान्यराशौ स्थापयेत् , ततश्च खल्वे विचूर्ण्य काचपात्रे स्थापयेत् । अय रसस्त्रिफलाक्वाथानुपानपूर्वक यथाग्निबलमात्रया सर्वरोगेषु प्रयोज्य । अयं रसो वलिपलितमरपावस्थाया कचाना श्वैत्य पतनञ्च निवारयति, तथा एकादशविध क्षय, पञ्चविध कास, एकादशविध कुष्ट, पाण्डुरोगान् , विंशतिप्रमेहान् , शूल, श्वास, हिक्का, मन्दाग्निम् , अम्लपित्तम् , अपस्मार, महान्तमुन्मादं, सर्वाण्यर्शांसि, त्वग्रोगाश्च निहन्ति । अय चतुर्मुखनामकरसश्चतुर्मुखेन—ब्रह्मणा लोकाना हितार्थं प्रोक्तस्तथायमपरश्चतुर्मुख इव ज्ञेय । अय रस पुष्टिं, बलम् , आयुश्च वर्द्धयति तथा शुक्रदोषान् बीजदोषाश्च दूरीकृत्य पुत्रप्रसव करोति ॥ ३८–४४ ॥

लक्ष्मीविलासो रस —

पलं कृष्णाभ्रचूर्णस्य तदर्द्धौ रसगन्धकौ ।
बलानागबलाऽभीरु-विदारीकन्दमेव च ॥ ४५ ॥
कृष्णधुस्तूरनिचुलं गोक्षुरवृद्धदारयोः ।
बीजं शक्राशनस्यापि जातीकोषफले तथा ॥ ४६ ॥
कर्पूरञ्चैव कर्षांशं श्लक्ष्णचूर्णं पृथक् पृथक् ॥
गृहीत्वा चाष्टमांशेन स्वर्णं पर्णरसेन च ॥ ४७ ॥
वटिकां स्विन्नचणक-प्रमाणां कारयेद्भिषक् ।
रसो लक्ष्मीविलासोऽयं पूर्ववत् गुणकारकः ॥ ४८ ॥

अथ लक्ष्मीविलासरसनिर्माणमाह पलमित्यादि—कृष्णाभ्रचूर्णस्य-कृष्णाभ्रकभस्मन एक पल, मिलितौ शुद्धपारदगन्धकौ तदर्द्धौ (अर्धपलमितौ)तथा बलाचूर्ण (१क०), नागबलाचूर्ण (१क०), भीरु-शतावरीचूर्ण (१क०), विदारीकन्दचूर्ण (१क०), शुद्धकृष्णधुस्तूरबीजचूर्ण (१क०), निचुल-हिज्जलबीजचूर्ण (समुद्रफलचूर्ण (१क०), शुद्धगोक्षुरचूर्ण (१क०), शुद्धवृद्धदारकबीजचूर्ण (१क०), शक्राशनस्य विजयाया शुद्धबीजचूर्ण (१क०), जातीकोषचूर्ण ( जावित्रीचूर्ण ) (१क०), जातीफलचूर्ण (१क०), कर्पूर (१क०), पूर्व रसगन्धकयो कज्जलीं कृत्वा शेपद्रव्याणि, तथा कर्षस्याष्टभाग-द्वादशरक्तिमित स्वर्णभस्म च सम्मेल्य ताम्बूलपत्रस्वरसेन सम्यगाप्लाव्य दृट विमर्द्य च स्विन्नचणकप्रमाणा वटा श्चरेत्। अय लक्ष्मीविलासरसश्चतुर्मुखरस इव गुणकर ॥ ८५-८८ ॥

रोगेभसिंह श्रीखण्डवट्यौ—

सूताद् द्वयं यो घन-वराऽनलवेल्लभार्गी-
तिक्ताकटुत्रयवरै सवचै समांशैः।
रोगेभसिंह इति वातकफामयघ्नः
सान्द्रोऽयमल्पपटुनो विहितो द्विगुञ्ज ॥४९॥
एतै गुडप्रभृतिभि रसवर्जितै स्यात्
श्रीखण्डनामगुडिका विहिता द्विगुञ्जा।
शैत्याद्यजीर्णकफवातभवान् विकरान्
हन्त्यार्द्रकेण सहिताऽप्यथ केवला वा ॥५०॥

अथ रोगेभसिंहश्रीखण्डवट्योर्निर्माणमाह सूतादित्यादि—सूतात् द्विभाग—रससिन्दूर (२तो०), अयो लौहभस्म (१तो०), घनमभ्रकभस्म (१तो०), (घन = मुस्तकचूर्णमिति वा), वरा-त्रिफलाचूर्ण प्रत्येकतोलकमितम्, अनलश्चित्रकचूर्ण (१तो०), वेल्ल-विडङ्गचूर्ण (१तो०), भार्गीचूर्ण (१तो०) तिक्ता-कटुकीचूर्ण (१तो०), कटुत्रय पृथक्२ (१तो०) वचाचूर्णम् (१तो०), एतत् सर्वं खल्वे निक्षिप्य श्लक्ष्णं विचूर्ण्य काचपात्रे स्थापयेत्। अय रोगेभसिंहरस सान्द्र-सजल (जलेन सहेत्यर्थ) तथा अल्पपटुत—किञ्चिल्लवणचूर्णेन च सह प्रलह द्विगुञ्जमित सेवितो वातिकान् कफजाश्च रोगान्निहन्ति। उपर्युक्तरोगेभसिंहरसे रससिन्दूरस्थाने गुड दत्वा दृट

विमर्द्य च द्विगुञ्जमिता गुडिकाश्चरेत्। इत्थं श्रीखण्डनाम्नी गुडिका भवति । इयं श्री-खण्डनाम्नी गुडिका आर्द्रकस्वरसेन सहिता केवला वा प्रत्यहं सेविता शैत्यभवान्, अजीर्णनवान्, कफवातभवांश्च विकारान् विनिहन्ति ॥ ४९–५० ॥

पिण्डीरस —

**सूतात् पञ्चार्कतश्चैकं कृत्वा पिण्डं सगन्धकम् ।**
**सूतांशं नागवल्ल्याश्च द्रवैः पिष्ट्वा प्रलेपयेत् ॥ ५१ ॥**
**ताम्रपत्रीं प्रलिप्तां तां रुद्ध्वा गजपुटे पचेत् ।**
**द्विगुञ्जस्त्र्यूषणेनार्द्धवपुर्वातं सकम्पकम् ।**
**निहन्ति दाहसन्ताप-मूर्च्छापित्तसमन्वितम् ॥ ५२ ॥**

अथ पिण्डीरसनिर्माणमाह सूतादित्यादि—सूतात्पञ्च = शुद्धपारदात् (५तो०), अर्कतश्चैकं—शुद्धताम्रपत्रत एक तोलक, शुद्धगन्धकं (५तो०), पूर्वं सगन्धकं सूतं खल्वे कज्जलीस्वरूपेण विमर्द्य नागवल्ल्या द्रवैः—नागरवल्लीपत्रस्वरसैर्विमर्द्य तेन कल्केन ताम्रपत्रीं प्रलिप्य शरावे सम्पुटं कृत्वा गजपुटे पचेत् । स्वाङ्गशीतलमौषधमुद्धृत्य खल्वे सञ्चूर्ण्य च काचपात्रे स्थापयेत् । अथ रसो द्विगुञ्जमितं स्त्र्यूषणेन—त्रिकटु-चूर्णेन मधुना च सह सेवितो दाहसन्तापमूर्च्छापित्तविकारसमन्वितं सकम्पकञ्चार्ध-वपुषो वातविकारं विनिहन्ति ॥ ५१–५२ ॥

कुब्जविनोदो रस —

**रसगन्धौ समौ शुद्धौ चाभया तालकं तथा ।**
**विषं कटुकि व्योषञ्च बोलजैपालकौ समौ ॥ ५३ ॥**
**भृङ्गराजरसैर्मर्द्यं स्नुह्यर्कस्वरसैस्तथा ।**
**गुञ्जाद्वयं भक्षयेच्च हृच्छूलं पार्श्वशूलकम् ॥ ५४ ॥**
**आमवाताढ्यवातादीन् कटिशूलञ्च नाशयेत् ।**
**अग्निञ्च कुरुते दीप्तं स्थौल्यञ्चाप्यपकर्षति ।**
**रसः कुब्जविनोदोऽयं गहनानन्दभाषितः ॥ ५५ ॥**

अथ कुब्जविनोदरसनिर्माणमाह रसेत्यादि—शुद्धपारद ( १ तो० ), शुद्धग न्धक ( १ तो० ), अभया—हरीतकीचूर्णं ( १ तो० ), शुद्धतालकं ( १ तो० ), विषं—शुद्धवत्सनाभचूर्णं ( १ तो० ), कटुकि—तिक्ताचूर्णं ( १ तो० ),व्योषं—शुण्ठी चूर्णं ( १ तो० ), मरिचचूर्णं ( १ तो० ), पिप्पलीचूर्णं ( १ तो० ), बोल—गन्ध-

वोलचूर्णं ( १ तो० ), शुद्धजयपालबीजचूर्णं ( १ तो० ), पूर्वं पारदगन्धकयोः क-ज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य सञ्चूर्ण्य च भृङ्गराजस्वरसेन दिनैकविमर्द्य शुद्धस्नुहीदुग्धेन, अर्कदुग्धेन च (पत्ररसेनेति वा) सम्यग् भावयित्वा दृढं विमर्द्य च द्विगुञ्जप्रमाणा वटी धरेत् । श्रीगहनानन्दभाषितोऽयं कुब्जविनोदरसो द्विगुञ्जमितः प्रत्यह यथादोषानुपानपूर्वक सेवितो हृदयशूलं, पार्श्वशूलम्, आमवात, विविध वातविकारम्, आढ्यवात च हन्ति, देहस्थौल्यञ्चापकर्षति, पाचकशक्तिञ्च वर्द्धयति ॥५३–५५॥

शीतवातलक्षणम्—

**हिमवन्ति हि गात्राणि रोमाणि स्फुरितानि च ।**
**शिरोऽक्षिवेदनाऽऽलस्यं शीतवातस्य लक्षणम् ॥ ५६ ॥**

अथ प्रसङ्गाच्छीतवातलक्षणमाह—हिमेत्यादि—गात्राणि–शरीराङ्गानि हिमसमानशीतलानि, तथा देहरोमाणि–केशा स्फुरन्ति–हर्षमाप्नुवन्ति, शिरसि वेदना, अक्ष्णो वेंदना, आलस्यञ्च यत्र विकारे इमानि लक्षणानि भवन्ति तच्छीतवातस्य लक्षण ज्ञेयम् ॥ ५६ ॥

शीतारिरस —

**रसेन गन्ध द्विगुण प्रगृह्य पुनर्नवाऽग्निस्वरसैर्विभाव्य ।**
**पक्वार्कपत्रस्य रसेन पश्चाद्विपाचयेदष्टगुणेन यत्नात् ॥ ५७ ॥**
**रसार्द्धभागञ्च विषञ्च दत्त्वा विपाचयेदग्निजले क्षणं तत् ।**
**शीतारिसंज्ञस्य रसायनस्य वल्लञ्च सार्द्धं मरिचार्द्रकेण ।**
**मरीचचूर्णेन घृताप्लुतेन सेवेत मांसञ्च घृतञ्च पथ्यम् ॥ ५८ ॥**

अथ शीतारिरसनिर्माणमाह रसेनेत्यादि—शुद्धपारद (१तो०) तेन शुद्धगन्धकं द्विगुणं समादाय खल्वे कज्जलीं कृत्वा पुनर्नवास्वरसेन, अग्निश्चित्रकस्तस्य स्वरसेन च क्रमश सम्यगाप्लाव्य दृढ विमर्द्य च लौहपात्रे ( कटाहे ) रसगन्धकापेक्षया अष्टगुणे ( चतुर्विंशतितोलकमिते ) पक्वार्कपत्राणां स्वरसे रसक्षयावधिक पाकं कुर्यात् । ततस्तस्मिन् रसार्द्धभाग ( अर्धतोलकमित ) शुद्धवत्सनाभचूर्णं प्रक्षिप्य अग्निजले–चित्रकस्वरसे किञ्चित्काल सर्वं पक्त्वा अवतारयेत् । ततश्च खल्वे श्लक्ष्णं पिष्ट्वा संशोष्य च काचपात्रे स्थापयेत् । शीतारिसंज्ञकस्यास्य रसस्य वल्लमित ( द्विरक्तिमित मात्राम् ) चूर्णं मरिचचूर्णार्द्रकस्वरसाभ्यां सार्द्धं, घृताप्लुतमरिचचूर्णेन वा सार्द्धं

मासपर्यन्तं रोगनिवृत्तिपर्यन्तं वा भक्षयेत्। पथ्यञ्च मांसं, घृतम्, अविदाह्यन्नादिक ञ्च देयम्। इत्थमयं रसः शीतवात निवारयति ॥ ५७-५८ ॥

वातविध्वंसनो रस —

सूतमभ्रकसत्वञ्च कांस्यं शुद्धञ्च माक्षिकम्।
गन्धकं तालकं सर्वं भागोत्तरविवर्द्धितम् ॥ ५९ ॥
कज्जलीकृत्य तत्सर्वं वातारिस्नेहसंयुतम्।
सप्ताहं मर्दयित्वा तु गोलकीकृत्य यत्नतः ॥ ६० ॥
निम्बुद्रवेण संपीड्य तिलकल्केन लेपयेत्।
अर्द्धाङ्गुलदलेनैव परिशोष्य प्रयत्नत ॥ ६१ ॥
प्रपचेत् वालुकायन्त्रे द्वादशप्रहरं ततः।
जठरस्य रुजः सर्वास्तथा च मलविग्रहम् ॥ ६२ ॥
आध्मानकं तथाऽऽनाहं विसूचीं वह्निमान्द्यकम्।
आमदोषमशेषञ्च गुल्मं छर्दिञ्च दुर्जयाम् ॥ ६३ ॥
ग्रहणीं श्वासकासौ च क्रिमिरोगं विशेषतः।
हन्यात् सर्वाङ्गशूलञ्च मन्यास्तम्भं तथैव च ॥ ६४ ॥
ज्वरे चैवातिसारे च शूलरोगे त्रिदोषजे।
पथ्यं रोगानुसारेण देयमस्मिन् भिषग्वरैः।
कथितो नन्दिनाथेन वातविध्वंसनो रसः ॥ ६५ ॥

अथ वातविध्वंसनरसनिर्माणमाह सूतमित्यादि—भागोत्तरविवर्द्धितं क्रमशो वर्द्धित शुद्धसूतं (१तो०), अभ्रकसत्व (२तो०), कांस्यभस्म (३तो०), शुद्धं माक्षिकं-स्वर्णमाक्षिकभस्म (४तो०), शुद्धगन्धक (५तो०), तालक-शुद्धहरितालं (६तो०) समादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य सम्यक् घोटयित्वा च वातारिस्नेहसयुतमित्येरण्डतैलाप्लुत कृत्वा सप्ताहपर्यन्त दृढं विमर्द्य तथा निम्बुद्रवेण सम्यगाप्लाव्य विमर्द्य च गोलक कृत्वा पाषाणपिष्टतिलककल्केन अर्द्धाङ्गुलमितं सर्वत स्थूल विलेपन कृत्वा परिशोष्य च सम्पुटस्थं वालुकायन्त्रे द्वादशप्रहरपर्यन्त पचेत्। स्वाङ्गशीतमौषधमुद्धृत्य सञ्चूर्ण्य च काचपात्रे स्थापयेत्। अय रस प्रत्यह यथाव्याध्यनुपानपूर्वक रक्तिमित सेवितो जठरस्यो-

खर्जूरमज्जाचूर्णं, दाडिमबीजचूर्णम्। एतेषां प्रत्येकं समं सममादाय सर्वतुल्यां च सितां गृहीत्वा सम्यक् चूर्णादीनां पेषणं कृत्वा सितां सम्मेल्य स्वल्पेन जलेन सह विमर्द्य अर्द्धपलमितां वटीश्चरेत्। इयं दशसारवटी तोलकैकादारभ्य पलार्द्धमितां प्रत्यहं दुग्धेन सह सेविता सर्ववातविकारान्निहन्ति। "चन्दनवालुकम्" इत्यत्र "चन्दनवालकम्" इति पाठान्तरं, प्राञ्चस्तु "दाडिममित्यत्र दाडिम्बगणमिच्छन्ति॥ ६८-६९॥

गगनादिवटी—

मृतगगनरसार्कं मुण्डतीक्ष्णं सताप्यं
सबलिसममिदं स्यात यष्टितोयप्रपिष्टम्।
तदनु सलिलजातैर्वासकैर्गोस्तनीभिः
मृदितमनुविदारीवारिणा वस्त्रमेकम्॥ ७०॥
घृतमधुसहितेयं निष्कमात्रा वटीति
क्षपयति गुरुवातं पित्तरोगं क्षयञ्च।
भ्रम-मद कफशोषान् दाहतृष्णासमुत्थान्।
मलयजमिह पेयश्चानुपेयं सचन्द्रम्॥ ७१॥

अथ गगनादिवटीनिर्माणमाह मृतेत्यादि—मृतगगनमभ्रकभस्म (१तो०), रस शुद्धपारदः (१तो०), अर्कस्ताम्रभस्म (१तो०), मुण्डलौहभस्म (१तो०), तीक्ष्णलौहभस्म(१तो०), ताप्य-सुवर्णमाक्षिकभस्म (१तो०), बलि-शुद्धगन्धकः (१तो०), पूर्वं पारदगन्धकयोः शुभे पाषाणखल्वे कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य यष्टितोयं-मधुयष्टिक्वाथं दत्वा दृढं विमर्द्य वासकस्वरसेन, तथा गोस्तनी द्राक्षा तस्याः क्वाथेन, विदारीकन्दस्वरसेन च क्रमशः सम्यगाप्लाव्य पृथक् २दिनैकं विमर्द्य निष्कप्रमाणां वटीश्चरेत्। इयं गगनादिवटी यथाग्निबलं द्विरक्तिकादारभ्य निष्कमितां प्रत्यहं विषमैमात्रापरिकल्पितघृतमधुभ्यां सह सेविता गुरुवातं-दारुणं वातविकारं, पित्तरोगं, क्षयं, भ्रम, मद, कफविकार, शोष, दाहं, तृष्णादिकञ्च विनाशयति। अस्याः सेवनान्ते सचन्द्रं-सकर्पूरं (कर्पूराम्बुसहितम) मलयजं श्वेतचन्दनपङ्कं, श्वेतचन्दनक्वाथम्वा पिबेत्॥ ७०-७१॥

तालकविजयाचूर्णानि खल्वे निक्षिप्य श्लक्ष्णं पिष्ट्वा गुडं सम्मेल्य दृढ विमर्द्य च माषैकमिता वटीश्चरेत् । अय तालकेश्वररस प्रत्यह सेवितोऽस्पर्शवात निहन्ति, अस्य सेवनसमये विशेषेण घर्ममेवनं त्यजेत ॥ ७५-७६ ॥

त्रैलोक्यचिन्तामणिरस —

हीरं सुवर्णं सुमृतञ्च तारमेषां समं तीक्ष्णरजश्चतुर्णाम् ।
समं मृताभ्रं रससिन्दुरञ्च निष्पिष्य तीक्ष्णस्य तथाऽश्मनो वा ॥ ७७ ॥
खल्ले द्रवेणैव कुमारिकाया गुञ्जाप्रमाणां वटिकां प्रकुर्य्यात् ।
त्रैलोक्यचिन्तामणिरेष नाम्ना सम्पूज्य सम्यक् गिरिजां दिनेशम्॥७८॥
हन्त्यामयान् योगशतैर्विवर्ज्यानिथ प्रणाशाय मुनिप्रणीतः ।
अस्य प्रसादेन गदानशेषान् जरां विनिर्जित्य सुखं विभाति ॥ ७९ ॥
स्निग्धे श्लेष्मण्यार्द्रकस्य रसेन पाययेत् सुधीः ।
शुष्के च माक्षिकेणैव पित्ते घृतसितायुतम् ॥ ८० ॥
श्लेष्मणि मारुते सम्यग् दुष्टे च समतां गते ।
कणाचूर्णं क्षौद्रयुतं प्रमेहे दुग्धसयुतम् ॥ ८१ ॥
बलवर्णाग्निजननः कासघ्नः कफवातजित् ।
आयुःपुष्टिकरो वृष्यः सर्वरोगनिसूदनः ॥ ८२ ॥

( इति वातव्याधि-चिकित्सा )

अथ त्रैलोक्यचिन्तामणिरसनिर्माणमाह हीरमित्यादि--हीरकभस्म (१तो०), सुवर्णभस्म (१तो०), तार-रजतभस्म (१तो०), तीक्ष्णलौहभस्म (१तो०), (एषां हीरतारसुवर्णानां सम तीक्ष्णरज इत्यप्यर्थ समुचित ,द्वितीयसमशब्देन च चतुर्णां मसमभ्रकभस्मेति योज्यम् , अथवा हीर तार सुवर्ण तीक्ष्णरजश्च एषां प्रत्येक सम सम तथा चतुर्णां ममञ्चाभ्रकभस्म, इति यथारुचि समाचरेत् ) चतुर्णां तुल्य मृताभ्रमभ्रकभस्म(४तो०), चतुर्णां सममेव रससिन्दूरम्, एतत् सर्वं तीक्ष्णलौहखल्वे शुभे पाषाणखल्वे वा निक्षिप्य सञ्चूर्ण्य च घृतकुमारीस्वरसेनाप्लाव्य दृढ विमर्द्य च गुञ्जाप्रमाणा वटीश्चरेत् । अथ त्रैलोक्यचिन्तामणिरस प्रत्यहं रक्तिमितो यथाव्याध्यनुपानपूर्वक गिरिजा=पार्वतीं, दिनेशं-सूर्यश्च सम्पूज्य सेवितो योगशतैरप्यसाध्यान् रोगान्निहन्ति । अस्य सेवनेन पुरुष सकलरोगान्निर्जित्य जराव्याधिरहित सुख-

धुस्तूरः कृष्णजीरञ्च पिप्पलीपारिभद्रके ॥ ९ ॥
एतेषाञ्च रसैर्मर्द्यमार्द्रकैश्च विभावयेत् ।
उष्णतोयानुपानेन सर्वव्याधिं विनाशयेत् ॥ १० ॥
विंशतिं श्लैष्मिकान् रोगान् सन्निपातभवान् गदान् ।
उदराष्टकदुर्नाममामवातञ्च दारुणम् ॥ ११ ॥
पञ्च पाण्ड्वामयान् दोषान् क्रिमिं स्थौल्यमथो नृणाम् ।
यथा शुष्केन्धने वह्निस्तथैवाग्निविवर्द्धनः ॥ १२ ॥

अथ श्लेष्मशैलेन्द्ररसनिर्माणमाह पारद इत्यादि—शुद्धपारद, शुद्धगन्धक, लोहभस्म, त्र्यूषण = शुण्ठीचूर्ण, मरिचचूर्ण, पिप्पलीचूर्ण, श्वेतजीरकचूर्ण, कृष्णजीरकचूर्ण, शठी = कर्चूरचूर्ण, शृङ्गी–कर्कटशृङ्गीचूर्ण, यमानीचूर्ण, पुष्करमूलचूर्णम्, आर्द्रकचूर्ण, गैरिकचूर्ण, यावशूक–यवक्षारचूर्ण, शुद्धटङ्कण, गजपिप्पलीचूर्ण, जातीकोषचूर्ण (जावित्रीचूर्ण), अजमोदाचूर्ण, वरा–हरीतकीचूर्ण, बिभीतकचूर्णम्, आमलकीचूर्ण, यास –यवासचूर्ण, लवङ्गचूर्ण, कनक –शुद्धधुस्तूरबीजचूर्णम्, अरुण = शुद्ध गुञ्जाबीजचूर्णम्, (अथवा रक्तधुस्तूरबीजचूर्ण), कट्फलचूर्णम, चव्यचूर्णम् । एतेषां प्रत्येकं तोलकमितं समादाय पूर्वं पारदगन्धकयोः पाषाणखल्वे कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य विल्वमूलक्वाथेन सम्यगाप्लाव्य मर्दयेत्, ततश्च अर्क, चित्रक, त्रिफला, निर्गुण्डी, गणिका = अग्निमन्थ, वासा–वासक, इन्द्राशन = विजया, प्रचोदनी–लघुकण्टकारिका, धुस्तूर, कृष्णजीरक, पिप्पली, पारिभद्रकं–निम्ब, आर्द्रक, एतेषां क्वाथैः स्वरसैर्वा क्रमशः पृथक् ७ भावयित्वा दृढं विमर्द्य च काचपात्रे स्थापयेत् । अयं रसो यथादोषानुपानपूर्वकं प्रत्यहं कवोष्णजलानुपानपूर्वकं सेवितः सर्वव्याधिं, विशेषेण विंशतिप्रकारकान् श्लैष्मिकरोगान्, सन्निपातरोगान्, अष्टावुदररोगान्, दुर्नामरोगमर्शः, आमवात, पञ्चविधपाण्डुरोगान्, क्रिमिं, स्थौल्यञ्च विनाशयति, यथा शुष्ककाष्ठेषु वह्निः प्रकर्षेण ज्वलति तथैवायं रसः पाचकाग्निं वर्द्धयति ॥ ५–१२ ॥

महाश्लेष्मकालानलो रसः—

हिङ्गुलसम्भवं सूतं शिला गन्धकटङ्कणम् ।
ताम्रं वङ्गं तथाऽभ्रञ्च स्वर्णमाक्षिकतालकम् ॥ १३ ॥

धुस्तूरं सैन्धवं कुष्ठं पिप्पली हिङ्गु कट्फलम् ।
दन्तीबीजं सोमराजी वनराजफलं त्रिवृत् ॥ १४ ॥
वज्रीक्षीरेण संमर्द्य वटिकां कारयेद्भिषक् ।
कलायपरिमाणान्तु खादेदेकां यथाबलम् ॥ १५ ॥
सन्निपातं निहन्त्याशु वृक्षमिन्द्राशनिर्यथा ।
मत्तसिंहो यथाऽरण्ये मृगानां कुलनाशन ।
तथाऽयं सर्वरोगाणां सद्यो नाशकरो महान् ॥ १६ ॥

अथ महाश्लेष्मकालानलरसनिर्माणमाह हिङ्गुलेत्यादि—हिङ्गुलोत्थं सूत, शिला = शुद्धमन 'शिलाचूर्णं', शुद्धगन्धक, शुद्धटङ्कणं, ताम्रभस्म, वङ्गभस्म, अभ्रकभस्म, स्वर्णभस्म, माक्षिक–स्वर्णमाक्षिकभस्म, शुद्धतालकचूर्ण, धुस्तूर शुद्धधुस्तूरबीजचूर्ण, सैन्धवलवण, कुष्ठचूर्णम, पिप्पलीचूर्ण, शुद्ध हिङ्गुचूर्ण कट्फलचूर्णं, दन्तीबीज–शुद्ध जयपालबीजचूर्णं, सोमराजी–बाकुचीचूर्णं, वनराज –पाषाणभेदचूर्ण, फल = हरीतकीचूर्णं, विभीतकचूर्णम् आमलकचूर्ण, त्रिवृन्मूलचूर्णम् । एतेषा प्रत्येक सम सममादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य वज्रीक्षीरेण शुद्धस्नुहीदुग्धेन सम्यगाप्लाव्य दृढ विमर्द्य च कलायपरिमाणाश्चतुर्गुञ्जमिता वटी श्चरेत् । अय रसो यथाग्निबलं प्रत्यह सेवित सन्निपात तथा निहन्ति यथेन्द्रवज्र वृक्ष निहन्ति । तथाचाय रसो यथान्याध्यनुपानैर्मत्तसिंहो यथा वने मृगाणा कुलमिव सर्वरोगाणा समूह सद्यो विनाशयति ॥ १३–१६ ॥

महालक्ष्मीविलास —

पलं वज्राभ्रचूर्णस्य तदर्द्धो गन्धको भवेत् ।
तदर्द्धं वङ्गभस्मापि तदर्द्धः पारदस्तथा ॥ १७ ॥
तत्समं हरितालञ्च तदर्द्धं ताम्रभस्मकम् ।
रसतुल्यञ्च कर्पूरं जातीकोषफले तथा ॥ १८ ॥
वृद्धदारकबीजञ्च बीजं स्वर्णफलस्य च ।
प्रत्येकं कार्षिकं भागं मृतस्वर्णञ्च शाणकम् ॥ १९ ॥
निष्पिष्य वटिका कार्य्या द्विगुञ्जाफलमानतः ।
निहन्ति सन्निपातोत्थान् गदान् घोरान् सुदारुणान् ॥ २० ॥

गलोत्थानन्त्रवृद्धिश्च तथाऽतीसारमेव च ।
कुष्ठमेकादशविधं प्रमेहान् विंशतिं तथा ॥ २१ ॥
श्लीपदं कफवातोत्थं चिरजं कुलजं तथा ।
नाडीव्रणं व्रणं घोरं गुदामयभगन्दरम् ॥ २२ ॥
कासपीनसयक्ष्मार्शःस्थौल्यदौर्गन्ध्यरक्तनुत् ।
आमवातं सर्वरूपं जिह्वास्तम्भं गलग्रहम् ॥ २३ ॥
उदरं कर्णनासाक्षि-मुखवैजात्यमेव च ।
सर्वशूलं शिरःशूलं स्त्रीरोगञ्च विनाशयेत् ॥ २४ ॥
वटिकां प्रातरेकैकां खादेन्नित्यं यथाबलम् ।
अनुपानमिह प्रोक्तं मांसं पिष्टं पयो दधि ॥ २५ ॥
वारिभक्तं सुरासीधु सेवनात् कामरूपधृक् ।
वृद्धोऽपि तरुणस्पर्द्धी न च शुक्रक्षयो भवेत् ॥ २६ ॥
न च लिङ्गस्य शैथिल्यं न केशा यान्ति पक्वताम् ।
नित्यं गच्छेत् शतं स्त्रीणां मत्तवारणविक्रमः ॥ २७ ॥
द्विलक्षयोजनी दृष्टिर्जायते पौष्टिकं तथा ।
प्रोक्तः प्रयोगराजोऽयं नारदेन महात्मना ॥ २८ ॥
महालक्ष्मीविलासोऽयं वासुदेवो जगत्पतिः ।
प्रसादादस्य भगवान् ललनारीषु वल्लभः ॥ २९ ॥

अथ महालक्ष्मीविलासरसनिर्माणमाह पलमित्यादि—वज्राभ्रचूर्णस्य-वज्राभ्रकभस्मन (१पल), तदर्द्धं शुद्धगन्धक (अर्धपलमित ), वङ्गभस्मापि तदर्द्ध—गन्धकार्द्ध ( १ कर्षमितमित्यर्थ ), शुद्धपारदश्च तदर्द्धो वङ्गभस्मार्द्ध, ( १ कोलमित , या ८ माषकमित ), शुद्धहरितालचूर्णं तत्समभिति—तेन पारदेन सम तुल्य (१कोल), ताम्रभस्म तदर्द्धमिति—हरितालार्द्ध (शाणमित ४मा०), कर्पूर रसतुल्य (१ कोल या८मा०) जातिकोषचूर्ण (जावित्रीचूर्ण ) (१कर्षमितं), जातीफलचूर्ण (१क०), शुद्धवृद्धदारकबीजचूर्ण (१क०), स्वर्णफलस्य—धुस्तूरस्य शुद्धबीजाना चूर्ण (१क०), मृतस्वर्ण=स्वर्णभस्म शाणमित (४मा०), समदाय पूर्वं पारदगन्धकयो शुभे पाषाणखल्वे श्लक्ष्णा कज्जली कृत्वा शेषद्रव्याणि सम्मेल्य श्लक्ष्ण विचूर्ण्य जलेन सह ( तुलसीनागवल्ल्यादिनामन्यतमेन स्वरसेन सह विशेषगुणकर पेषण पुनर्यथेष्टम ) दृढ सम्पेष्य द्विगु-

आप्रमाणा वटिका कृत्वा छायायां मशोष्य च काचपात्रे स्थापयेत् । अयं रस प्रत्यह द्विरक्तिमितो यथाव्याध्यनुपानैः सेवितः सन्निपातभवान्, दारुणान् रोगान् गलरोगान्, आन्त्रवृद्धिम्, अतीसारम्, एकादशविधानि कुष्ठानि, विंशतिप्रकारकप्रमेहान्, कफजं श्लीपदं, वातजं श्लीपदं, कफवातोत्थं च श्लीपदं, चिरकालीनं कुलक्रमादागतञ्च श्लीपदं, नाडीव्रणं, घोरं व्रणं, गुदामयमर्शः, भगन्दरं, कासं पीनसं, क्षयं, स्थौल्यं देहदौर्गन्ध्यं, रक्तविकारम्, आमवातं, जिह्वास्तम्भ=जिह्वागतवातिकसूत्राणां विकारादुत्पन्नं जिह्वाऽकर्मण्यमित्यर्थः, गलग्रहम्, उदररोगं, कर्णवैरूप्यं, नासावैरूप्यम्, अक्षिवैरूप्यं, मुखवैरूप्यञ्च (एतत् सर्वं मज्जावाहकसूत्रविकारजन्यं वैरूप्यमवगन्तव्यम्), शिरःशूलं, सर्वाङ्गशूलं, स्त्रीरोगमिति–सोमप्रदरादिकञ्च विनिहन्ति । अस्य रसस्य प्रत्यहमेकैका वटी मधुना भक्षयन् तथाऽनुपाने च मांसरसं, पिष्टविकारमपूपादिकं, दुग्धं, दधि, वारि–जलं, भक्तमोदनं, सुरां सीधुञ्च सेवयन् पुरुषः कामदेवसमानसौन्दर्यं बिभर्ति, तथा वृद्धोऽपि तरुणैस्सह बलादिषु स्पर्द्धां करणशीलो भवति तथास्य रसस्य प्रत्यहं सेवनेन पुरुषजननेन्द्रियस्य शिथिलीभवनं वक्रीभवनं शीघ्रशुक्रपतनञ्च नश्यति, कामशक्तिर्वर्द्धते, तथास्य सेवनात् पुरुषो मदोन्मत्तगज इव विक्रमवान् दीर्घदृष्टिश्च जायते । अयं महालक्ष्मीविलासरसः श्रीनारदेन प्रोक्तस्तथाऽस्य सेवनादेव श्रीविष्णुभगवान् लक्षनारीणामपि वल्लभः । अयं रसः सान्निपातिकज्वरे प्रत्यक्षफलप्रद इति बहुशोऽनुभूतः ॥ १७–१९ ॥

कफकेतुरसः —

टङ्कणं मागधी शङ्खं वत्सनाभं समं समम् ।
आर्द्रकस्य रसेनैव भावयेद्दिवसत्रयम् ॥ २० ॥
गुञ्जामात्रं प्रदातव्यमार्द्रकस्य रसेन वै ।
पीनसं श्वासकासञ्च गलरोगं गलग्रहम् ॥ २१ ॥
दन्तरोगं कर्णरोगं नेत्ररोगं सुदारुणम् ।
सन्निपातं निहन्त्याशु कफकेतुरसोत्तमः ॥ २२ ॥

अथ कफकेतुरसनिर्माणमाह टङ्कणमित्यादि—शुद्धं टङ्कणं, मागधी–पिप्पलीचूर्णं शङ्खं–शङ्खभस्म, शुद्धवत्सनाभचूर्णम् । एतेषां प्रत्येकं समं सममादाय खल्वे सञ्चूर्ण्य आर्द्रकस्वरसेन सम्यगाप्लाव्य दृढं विमर्द्दयेत् । इत्थं दिवसत्रयं भावयित्वा गुञ्जाप्रमाणा वटीश्चरेत् । अयं रसः प्रत्यहं रक्तिमितः आर्द्रकस्वरसेन सह सेवितः

पीनस, श्वास, कास, गलरोग, गलग्रह, दन्तरोग, कर्णरोग, मुखरोगाश्च नेत्ररोग, तथा सन्निपातञ्च निहन्ति ॥३०-३२॥

कफचिन्तामणिरस —

हिङ्गुलेन्द्रयवं टङ्कं त्रैलोक्यबीजमेव च ।
मरिचञ्च समं सर्वं भस्मसूतं त्रिभागिकम् ॥ ३३ ॥
आर्द्रकस्य रसेनैव मर्दयेत् याममात्रकम् ।
चणकाभा वटी कार्य्या सर्ववातप्रशान्तये ।
कफरोगं निहन्त्याशु भास्करस्तिमिरं यथा ॥ ३४ ॥

( इति कफरोग-चिकित्सा )

अथ कफचिन्तामणिरसनिर्माणमाह हिङ्गुलेन्द्रेत्यादि—शुद्धहिङ्गुल (१तो०), इन्द्रयवचूर्ण (१तो०), शुद्धटङ्कण (१तो०), त्रैलोक्यबीज-शुद्धविजयाबीजचूर्ण (१तो०), मरिचचूर्ण (१तो०), भस्मसूत-रससिन्दूर त्रिभागिक (३तो०), एतत् सर्व खल्वे श्लक्ष्णं पिष्ट्वा आर्द्रकस्वरसेन सम्यगाप्लाव्य दृढ याममात्र विमर्द्य चणक-प्रमाणा ( द्विगुञ्जमिता ) वटीश्चरेत् । अथ रस प्रत्यहं शुण्ठीचूर्णेन सह सेवित सर्ववातविकार, कफरोगञ्च यथासूर्यस्तिमिर तथैव निहन्ति ॥ ३३-३४ ॥

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृताया गूढार्थ-सन्दीपिकाव्याख्याया कफरोगचिकित्सा ॥

## अथ पित्तरोग-चिकित्सा ।

गुडूच्यादिलौहम्—

गुडूचीसारसयुक्त त्रिकत्रययुतं त्वयः ।
वातरक्तं निहन्त्याशु सर्ववातहरं परम् ॥ १ ॥

प्रागुक्तरीत्या कफरोगानन्तर पित्तरोगचिकित्सामाह तत्र पूर्वं गुडूचीलौहयोगमाह गुडूचीत्यादि—गुडूचीसत्व (१तो०), त्रिकत्रय = शुण्ठीचूर्ण (१तो०), मरिचचूर्ण (१तो०), पिप्पलीचूर्ण (१तो०), हरीतकीचूर्ण (१तो०), विभीतकचूर्ण (१तो०),

आमलकीचूर्ण (१तो०), विडङ्गचूर्ण (१तो०), मुस्तकचूर्ण (१तो०), चित्रकचूर्ण (१तो०), सर्वचूर्णसमञ्च अयो-लौहभस्म (१०तो०) समादाय एतत् सर्वं खल्वे निक्षिप्य सम्यक् पिष्ट्वा च काचपात्रे स्थापयेत्। इदं गुडूच्यादिलौहं यथाग्निवलं प्रत्यह सेवितं वातरक्तं सर्ववातरोगञ्च विनिहन्ति, तथा घृतेन शर्करया च सह निखिलपित्तरोगान्नाशयेत्॥ १॥

धात्रीलौहम्—

धात्रीचूर्णस्याष्टौ पलानि चत्वारि लौहचूर्णस्य।
यष्टीमधुकरजश्च द्विपलं दद्यात् पटे घृष्टम्॥ २॥
अमृताक्वाथेनैतद्भाव्यं चूर्णन्तु सप्ताहम्।
चण्डातपे सुशुष्कं भूयः पिष्ट्वा नवे घटे स्थाप्यम्॥ ३॥
घृतेन मधुना युक्तं भोजनाद्यन्तमध्यतः।
त्रीन् वारान् भक्षयेन्नित्यं पथ्यं दोषानुवन्धतः॥ ४॥
भक्तस्यादौ नाशयेच्च दोषान् पित्तकृतानपि।
मध्ये चानाहविष्टम्भं तथाऽन्ते चाग्निमान्द्यताम्।
रक्तपित्तसमुद्भूतान् रोगान् हन्ति न संशयः॥ ५॥

अथ धात्रीलौहनिर्माणमाह धात्रीत्यादि—धात्रीचूर्णस्य—आमलकीचूर्णस्याष्टौ पलानि, लौहचूर्णस्य—लौहभस्मनश्चत्वारि पलानि, तथा पटे घृष्ट—वस्त्रसारितं यष्टीमधुकरजो मधुयष्टीचूर्णं द्विपल समादाय सर्वं खल्वे पिष्ट्वा अमृताक्वाथेन—गुडूचीक्वाथेन सम्यगाप्लाव्य दृढं दिनैक विमर्द्दयेत्। इत्थमेकसप्ताह भावयित्वा निदाघे संशोष्य सञ्चूर्ण्य च नवे घटे (शुद्धकाचपात्रे) संस्थापयेत्। इद धात्रीलौह यथाग्निवलं विषममात्राकल्पितघृतमधुभ्या सह भोजनस्यादौ, मध्ये, अन्ते च नित्य वारत्रय सेवितव्यम्। पथ्यञ्च यथादोषविपरीत कल्पयेत्। इदं लौह भोजनादौ सेवित पित्तजन्यरोगान्निहन्ति, मध्ये च सेवितमानाहं, तथा विष्टब्ध-विष्टम्भ हन्ति, तथा अन्ते सेवितमग्निमान्द्यं हन्ति। विशेषेणेदं लौह रक्तपित्तजन्यरोगान्निहन्ति॥ २-५॥

पित्तान्तको रस—

जातीकोषफले मांसी कुष्ठ तालीशपत्रकम्।
माक्षिकं मृतलौहञ्च अभ्रं दिव्यं समांशिकम्॥ ६॥

सर्वतुल्यं मृत तार सम निष्पिष्य वारिणा ।
द्विगुञ्जामा वटी कार्य्या पित्तरोगविनाशिनी ॥ ७ ॥
कोष्ठाश्रितञ्च यत् पित्त शाखाश्रितमथापि वा ।
शूलञ्चैवाम्लपित्तञ्च पाण्डुरोग हलीमकम् ॥ ८ ॥
दुर्नाम भ्रान्तिवान्ती च क्षिप्रमेव विनाशयेत् ।
रसः पित्तान्तको ह्येष काशिराजेन भाषितः ॥ ९ ॥

अथ पित्तान्तकरसनिर्माणमाह जातीत्यादि--जातीकोषचूर्ण ( जावित्रीचूर्ण ), जातीफलचूर्ण, मासी = जटामासीचूर्ण, कुष्ठचूर्ण, तालीशपत्रचूर्ण, माक्षिक-स्वर्णमाक्षिकभस्म, मृतलोह-लौहभस्म, अभ्रकभस्म, दिव्य-शुद्धमनःशिलाचूर्णम्, एतेषां प्रत्येकं तोलकैकमितं तथा सर्वतुल्यं मृतं तार-रजतभस्म (९ता०), समादाय सर्वं खल्वे निक्षिप्य श्लक्ष्णं पिष्ट्वा च जलेन सह विमर्द्य द्विगुञ्जमितां वटीं धारयेत् । अयं रसो यथाग्निबलं यथाव्याध्यनुपानैस्सह सेवितः कोष्ठाश्रितं पित्तं, शाखाश्रितं पित्तं, शूलम्, अम्लपित्तं, पाण्डुरोगं, हलीमकं, दुर्नामरोगमर्शं, भ्रान्तिं, वान्तिञ्च शीघ्रं नाशयति । अयं पित्तान्तकरसः काशिराजेन प्रोक्तः ॥ ६-९ ॥

महापित्तान्तको रसः —

यद्यत्र माक्षिकं त्यक्त्वा सुवर्णमपि दीयते ।
महापित्तान्तको नाम सर्वपित्तविनाशनः ॥ १० ॥

( इति पित्तरोगचिकित्सा )

अथ महापित्तान्तकरसनिर्माणमाह यद्यत्रेति-पूर्वोक्तपित्तान्तकरसान्तर्गतमाक्षिकस्थाने तत्समं सुवर्णभस्म दीयते तदाऽयं महापित्तान्तकरसः कथ्यते । अयं महापित्तान्तकरसः शर्करया घृतेन च सह सेवितः सर्वपित्तविकारान्निहन्ति ॥ १० ॥

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृताया गूढार्थसन्दीपिकाव्याख्यायां पित्तरोगचिकित्सा ।

## अथ वातरक्त चिकित्सा ।

लाङ्गल्याद्य लौहम्—

विशुद्धलाङ्गलीमूलं-त्रिकटुत्रिफलैस्तथा ।
द्राक्षागुग्गुलुभिस्तुल्यं लौहचूर्णं नियोजयेत् ॥ १ ॥
मातुलुङ्गरसेनैव त्रिफलाया रसेन च ।
विमृद्य यत्नतः पश्चात् गुडिका कोलसम्मिताम् ॥ २ ॥
भक्षयेन्मधुना सार्द्धं करोति शृणु यान् गुणान् ।
आजानुस्फुटितं घोरं सर्वाङ्गस्फुटितं तथा ।
तत् सर्वं नाशयत्याशु साध्यासाध्यञ्च शोणितम् ॥ ३ ॥

पित्तजन्यरक्तदुष्टिसाधर्म्यात् पित्तरोगचिकित्सानन्तर वातरक्तचिकित्सा प्रारभ्यते तत्र पूर्वं लाङ्गलाद्यलोहनिर्माणमाह विशुद्धेत्यादि—विशुद्ध लाङ्गलीमूलचूर्ण, त्रिकटु = शुण्ठीचूर्ण, मरिचचूर्ण, पिप्पलीचूर्ण , त्रिफला = हरीतकीचूर्ण, विभीतकफलचूर्णम् , आमलकचूर्ण , द्राक्षा, शुद्धगुग्गुलुश्च, एतेषा प्रत्येक सम सममादाय सर्वतुल्यञ्च लौहचूर्ण—लोहभस्म गृहीत्वा सर्वं खल्वे विमर्द्य मातुलुङ्गरसेन, त्रिफलाक्वाथेन च क्रमशो भावयित्वा दृढ विमर्द्य च कोलसम्मिता —बदरीफलसमाना वटीश्चरेत् । इद लौह प्रत्यह यथाग्निबलं मधुना सह सेवित जानुपर्यन्तमङ्गस्फोट, सर्वाङ्गस्फुटित, साध्यम् , असाध्यञ्च शोणित—वातरक्त विनाशयति ॥ १—३ ॥

वातरक्तान्तको रस —

गन्धकं पारदं लौहं शिलां तालं घनं तथा ।
शिलाजतु पुरं शुद्धं समभागं विचूर्णयेत ॥ ४ ॥
श्वेतापराजिता दार्वी वागुजी चित्रकं तथा ।
पुनर्नवा देवकाष्ट-त्रिफलाव्योषवेल्लकम् ॥ ५ ॥
चूर्णमेषां पृथक् तुल्यं सर्वमेकत्र कारयेत् ।
त्रिफला भृङ्गराजस्य रसेनैव त्रिधा-त्रिधा ॥ ६ ॥
भावयेत् भक्षयेत् पश्चात् चणमात्रं दिने दिने ।
ततोऽनुपानं निम्बस्य पत्रं पुष्पं त्वचं समम् ॥ ७ ॥

शाणमात्रं घृतैः कुर्य्यात् सर्ववातविकारनुत् ।
वातरक्त महाघोरं गम्भीर सर्वजञ्च यत् ।
सर्वोपद्रवसंयुक्त साध्यासाध्यं निहन्त्यलम् ॥ ८ ॥

अथ वातरक्तान्तकरसनिर्माणमाह गन्धकमित्यादि—शुद्धगन्धक, शुद्धपारद लौहभस्म, शुद्धमन शिलाचूर्णं, शुद्धहरितालचूर्णं, घनमभ्रकभस्म, शुद्ध शिलाजतु, शुद्ध पुर-गुग्गुलुचूर्णं, श्वेतापराजिता-विष्णुक्रान्ताचूर्णं, दार्वा-दारुहरिद्राचूर्णं, वागुजा=सोमराजाचूर्णं, चित्रकचूर्णं, पुनर्नवाचूर्णं, देवकाष्ट-देवदारुचूर्णं, त्रिफला-हरीतकीचूर्णं, विभीतकचूर्णम् , आमलकचूर्णं, व्योप=शुण्ठीचूर्णम मरिचचूर्णं,पिप्पलीचूर्णं, वेल्लज-विडङ्गचूर्णम् , एतेषां प्रत्येक तोलकैकमित समादाय पूर्वं पारदगन्धकयोः कज्जलीं कृत्वा लौहादिगुग्गुल्वान्त द्रव्य निक्षिप्य मर्द्दयेत् , ततश्च श्वेतापराजितादिकाना चूर्णं प्रक्षिप्य सम्पेष्य च त्रिफलाक्वाथेन, भृङ्गराजस्वरसेन च त्रिधा त्रिधा क्रमशः भावयित्वा दृढ विमर्द्य च चणकप्रमाणा वटीश्चरेत् । अस्य रसस्य प्रत्यहमेकैका वटीं समभागगृहीतेन शाणमितेन निस्त्वस्य त्वक्पत्रपुष्पचूर्णेन सघृतेन अनुपानेन सह भक्षयेत् । इत्थ सेवितोऽय रसो महाघोरं वातविकारसमूह तथा सर्वोपद्रवसयुक्त साध्यमसाध्यम्वा सर्वाङ्गज गम्भीरं वातरक्तञ्च निश्चयेन विनिहन्ति ॥४-८॥

तालभस्म—

हरिताल पल शुद्ध तथा कर्ष विषस्य च ।
श्वेताङ्कोठरसेनैव द्वयमेकत्र खल्लयेत् ॥ ९ ॥
पलाशभस्म द्विपलं निधाय स्थालिकोपरि ।
तद्भस्मोपरि तालस्य गोलक स्थापयेत् सुधीः ॥ १० ॥
तस्योपरि ह्यपामार्ग-भस्म दद्यात् पलत्रयम् ।
स्थालीमुखे शरावञ्च दद्यात् यत्नेन लेपयेत् ॥ ११ ॥
लेपयित्वा ततश्चुल्ल्यामहोरात्रं पचेत् भिषक् ।
ततस्तु जायते भस्म शुद्धकर्पूरसन्निभम् ॥ १२ ॥
गुञ्जात्रय ततो भक्ष्यमनुपानविशेषतः ।
वातरक्तञ्च कुष्ठञ्च दद्रुविस्फोटकापचीम् ॥ १३ ॥
विचर्चिका चर्मदलं वातदुष्टञ्च शोणितम् ।

**रक्तपित्तं तथा शोथं गलत्कुष्ठं विनाशयेत् ।**
**हलीमकं तथा शूलमग्निमान्द्यमरोचकम् ॥ १४ ॥**

अथ तालभस्मयोगमाह हरितालमित्यादि—शुद्ध हरिताल पलमित, तथा विषस्य-शुद्धवत्सनाभचूर्णस्य कर्ष (१तो०), समादाय खल्वे पिष्ट्वा श्वेताङ्कोठरसेन मर्दयित्वा गोलकं कुर्यात्, ततश्च मृण्मयस्थाल्या आभ्यन्तरे द्विपलं पलाशभस्म निक्षिप्य तदुपरि शुष्क हरितालगोलक निधाय हरितालगोलकोपरि पलत्रयमितमपामार्गभस्म निक्षिप्य च स्थालीमुख शरावेणाच्छाद्य स्निग्धमृदा सन्धिबन्धन कृत्वा सशोष्य चाहोरात्र-रात्रिन्दिनमेक चुल्यामारोप्य सततज्वालया पचेत्। ततश्च स्वाङ्गशीतला स्थालीमुन्मोच्य शुद्धकर्पूरसन्निभ हरितालभस्म गृह्णीयात् । इद तालभस्म प्रत्यहं गुञ्जात्रय यथाग्निबलम्वा यथादोषानुपानपूर्वक सेवित वातरक्त, कुष्ठ, दद्रु-विस्फोटकापचीन्, विचर्चिका, चर्मदल, वातरक्त, दुष्टशोणित, रक्तपित्त, शोथ, गलत्कुष्ठ, हलीमक, शूलम्, अग्निमान्द्यम्, अरोचकञ्च विनाशयति ॥ ९–१४ ॥

महाताल्लेश्वरो रस —

**तथा सिद्धेन तालेन गन्धतुल्येन मेलयेत् ।**
**द्वयोस्तुल्यं जीर्णताम्रं वालुकायन्त्रगं पचेत् ॥ १५ ॥**
**अयं तालेश्वरो नाम रसः परमदुर्लभः ।**
**हन्यात् कुष्ठानि सर्वाणि वातरक्तमथापि च ।**
**शूलमष्टविधं श्वित्रं रसस्तालेश्वरो महान् ॥ १६ ॥**

अथ महातालेश्वररसनिर्माणमाह तथेत्यादि—उपर्युक्तविधिकृतं हरितालभस्म (१तो०), शुद्धगन्धकं (१तो०), द्वयोस्तुल्य जीर्णताम्र-पुराणं ताम्रभस्म (२तो०), एतत् सर्व खल्वे पिष्ट्वा कवचीयन्त्रविधिना गन्धजारणपर्यन्तं वालुकायन्त्रे पचेत् । अयं तालेश्वररस प्रत्यह रक्तिमित सेवित सर्वाणि कुष्ठानि, वातरक्तम्, अष्टविधं शूलं, श्वित्रञ्च विनाशयति ॥ १५–१६ ॥

विश्वेश्वरो रस —

**रसात् दश विषात् पञ्च गन्धकात् दश शोधितात् ।**
**तुत्थात् दश पलाशस्य वीजेभ्यः पञ्च कारयेत् ॥ १७ ॥**
**क्षुद्राऽश्वमारधुस्तूर-नीलोतः करहाटकात् ।**

दशकं दशक कुर्य्यात् शोषयित्वा जटात्वचः ॥ १८ ॥
दशक दशकं दत्वा कुचिलात् दश नूतनात् ।
भल्लातकाच्च दशकं चूर्णयित्वा भिषक् तत ॥ १९ ॥
सुदिने च वलिं दत्वा वैद्यः पूजापरायणः ।
रक्तिकाद्वितयं दद्यात् सहते यदि वा त्रयम् ॥ २० ॥
वातरक्त ज्वर कुष्ट खरस्पर्शमसौख्यदम् ।
आजानुस्फुटित हन्ति विपज वाऽस्थिनिःसृतम् ॥ २१ ॥
कुष्टमष्टादशविधमग्निमान्द्यमरोचकम् ।
विश्वेश्वरो रसो नाम विश्वनाथेन भाषित ॥ २२ ॥

अथ विश्वेश्वररसनिर्माणमाह रसादित्यादि—रसाच्छुद्धपारदाद्दशभागान्, विषच्छुद्धवत्सनाभचूर्णात्पञ्चभागान, शोधितगन्धसाद्दशभागान्, शुद्धतुत्थकचूर्णाद्दशभगान्, पलाशस्य-शुद्धबीजचूर्णात्पञ्चभागान्, क्षुद्रा-लघुकण्टकारिका तस्या दशभागान् अश्वमार -करवीर तस्य चूर्णात् दशभागान्, शुद्धधुस्तूरबीजचूर्णाद्दश, नीलीचूर्णाद्दश करहाटकात् = अस्थिसंहारिचूर्णाद्दश, जटामासीचूर्णाद्दश, त्वचो-दारुसिताचूर्णाद्दश शुद्धकुचिलचूर्णाद्दश, तथा नूतनशुद्धभल्लातकचूर्णाद्दशभागान् समादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य श्लक्ष्णं विचूर्ण्य च काचपात्रे स्थापयेत् अयं विश्वेश्वररसो द्विरक्तिमितस्त्रिरक्तिमितो वा यथाग्निबलं वीक्ष्य स्वेष्टदेवतादिपूजापरायणेन कृतवलिर्वैश्वदेवादिकर्मवता वैद्येन रोगिणे प्रयोक्तव्य । श्रीविश्वनाथेन भाषितोऽय विश्वेश्वरनामको रसो यथाऽन्यान्यनुपानपूर्वक सेवितो वातरक्त, ज्वर, कुष्टम्, असौख्यद देहस्य खरस्पर्श, तथा देहस्याजानुस्फुटित, विपजं देहस्फुटितम्, अस्थिनि -सृत वातरक्तम, अष्टादशविध कुष्टम, अग्निमान्द्यम्, अरोचकञ्च विनिहन्ति॥ १५-२२ ॥

कुष्ठोक्तौषधप्रयोगोपदेश —

वक्ष्यते कुष्टरोगे यदौषध भिषजां वरै. ।
वारक्ते प्रयुञ्जीत कुर्य्याच्च रक्तमोक्षणम् ॥ २३ ॥

( इति वातरक्त-चिकित्सा । )

अथ वातरक्ते कुष्ठोक्तौषधप्रयोगोपदेशमाह वक्ष्यत इत्यादि—कुष्टरोगचिकि-

त्माया यदौषधमग्रे वक्ष्यते तत्, तथा अशुद्धरक्तमोक्षणञ्च भिषजा वरैः कर्तव्यम्। अथवा जलौकादिभि र्यथेष्टं रक्तमोक्षणं कुर्यात् ॥ २३ ॥

अथ वातरक्ते पथ्यापथ्यव्यवस्था—

उत्तानेऽभ्यञ्जनं सेकः सोपनाहं प्रलेपनम्। गम्भीरे स्नेहपानञ्च स्थापनञ्च विरेचनम्॥१॥
द्वयोरस्रस्रुतिः सूच्याजलौकाशृङ्गघलाबुभिः। शतधौतघृताभ्यङ्गो मेषीदुग्धावसेचनम्॥२॥
यवषष्टिकनीवारकलमारुणशालयः। गोधूमाश्चणका मुद्गा स्तुवर्योऽपि मकुष्ठकाः ॥३॥
अजानां महिषाणाञ्च गवामपि पयांसि च। लावतित्तिरसर्पछिन्नताम्रचूडादिविष्किराः ॥४॥
प्रतुदाः शुकदात्यूहकपोतचटकादयः। उपोदिका काकमाची वेत्राग्रं सुनिषण्णिकम्॥५॥
वास्तुकं कारवेल्लञ्च तण्डुलीयं प्रसारणी। पत्तूरं वृद्धकूष्माण्डं सर्पिः शम्पाकपल्लवम्॥६॥
पटोलं रसुनलञ्च मृद्वीका श्वेतशर्करा। नवनीतं सोमवल्ली कस्तूरीसितचन्दनम् ॥७॥
शिंशपागुरुदेवाह्वसरलस्नेहमर्दनम्। तिक्तञ्च पथ्यमुद्दिष्टं वातरक्तगदे नृणाम् ॥८॥

इति पथ्यानि।

अथापथ्यानि—

माषा कुलत्था निष्पावा कलाया क्षारसेवनम्। अम्बुजानूपमांसानि विरुद्धानि दधीनि च॥१॥
इक्षवो मूलकं मद्यं पिण्याकोऽम्लानि काञ्जिकम्। दिवास्वप्नादिसन्तापं व्यायामं मैथुनं तथा ॥
कटूष्णगुर्वभिष्यन्दि लवणाम्लानि वर्जयेत् ॥ २ ॥ इत्यपथ्यानि।

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृतायां गूढार्थसन्दीपिकाव्याख्यायां वातरक्त-चिकित्सा।

## अथोरुस्तम्भ-चिकित्सा।

गुञ्जाभद्ररसः—

निष्कत्रयं शुद्धसूतं निष्कद्वादश गन्धकम्।
गुञ्जाबीजञ्च षड्निष्कं जयन्तीनिम्बबीजकम् ॥ १ ॥
प्रत्येकं निष्कमात्रन्तु निष्कं जैपालबीजकम्।
जयाजम्बीरधुस्तूरकाकमाचीद्रवैर्दिनम् ॥ २ ॥
भावयित्वा वटीं कुर्य्यात् चतुर्गुञ्जाप्रमाणतः।
गुञ्जाभद्ररसो नाम हिङ्गुसैन्धवसंयुतः।

**शमयत्युल्वणं दुःखमूरुस्तम्भं सुदारुणम् ॥ ३ ॥**

वातजन्यत्वसाधर्म्याद्वातरक्तचिकित्सानन्तरमूरुस्तम्भचिकित्सा प्रारभ्यते तत्र पूर्वं गुञ्जाभद्ररसनिर्माणमाह निष्केत्यादि—शुद्धसूतं निष्कत्रयं (१२मा०), शुद्धगन्धकं द्वादशनिष्कमितं (४तो०), शुद्धगुञ्जावीजचूर्णं षड्निष्कमितं (२तो०), जयन्तीवीजचूर्णं निष्कमितं, शुद्धनिम्बवीजचूर्णं निष्कमितं, शुद्धजयपालवीजचूर्णं निष्कमितं समादाय पूर्वं पारदगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य जया-भङ्गा, जम्बीर, धुस्तूर, काकमाची, एषां स्वरसैः क्वाथैर्वा क्रमशः पृथक् २ दिनैकं भावयित्वा चतुर्गुञ्जाप्रमाणा वटीश्चरेत्। अयं गुञ्जाभद्ररसः यथाग्निवलं शुद्धहिङ्गुसैन्धवाभ्यां सह दारुणं दुःखदश्चोरुस्तम्भं विनाशयति ॥ १-३ ॥

शिलाजत्वादियोगचतुष्टयम्—

**शिलाजतु गुग्गुलुं वा पिप्पलीमथ नागरम्।**
**ऊरुस्तम्भे पिवेत् मूत्रैर्दशमूलीरसेन वा ॥ ४ ॥**

अथ शिलाजत्वादियोगचतुष्टयमाह शिलाजत्वित्यादि—ऊरुस्तम्भे शुद्धं शिलाजतु, शुद्धं गुग्गुलुं वा, पिप्पलीचूर्णं वा, नागरं=शुण्ठीचूर्णम्वा गोमूत्रेण दशमूलक्वाथेन वा सह प्रत्यहं पिवेत् ॥ ४ ॥

वारिशोषणरसादिप्रयोगोपदेश —

**प्लीहाधिकारे कथितं रसेंद्रं वारिशोषणम्।**
**ऊरुस्तम्भे प्रयुञ्जीत चान्यद्वा योगवाहिकम् ॥ ५ ॥**

( इति ऊरुस्तम्भ-चिकित्सा )

अथ वारिशोषणरसादिप्रयोगोपदेशमाह प्लीहेत्यादि—प्लीहाधिकारे कथितं वारिशोषणं रसेन्द्रमन्यद्वा योगवाहिकमौषधं प्रत्यहमूरुस्तम्भरोगे प्रयुञ्जीत ॥ ५ ॥

अथोरुस्तम्भे कतिपयदृष्टफला योगाः—

श्लेष्मणः क्षपणं यत्स्यान्न च मारुतकोपनम्। तत्सर्वं सर्वदा कार्यमूरुस्तम्भस्य भेषजम् ॥१॥
शिलाजतु गुग्गुलं वा पिप्पलीमथ नागरम्। ऊरुस्तम्भे पिवेन्मूत्रैर्दशमूलीरसेन वा ॥२॥
भल्लातकामृताशुण्ठीदारुपथ्यापुनर्नवा। पञ्चमूलीद्वयोन्मिश्रा ऊरुस्तम्भनिवर्हणा ॥३॥
पिप्पली पिप्पलीमूलभल्लातक्वाथ एव वा। कल्को वा समधुर्देय ऊरुस्तम्भविनाशनः ॥४॥
त्रिफला चव्यकटुकं ग्रन्थिकं मधुना लिहेत्। ऊरुस्तम्भविनाशाय पुरं मूत्रेण वा पिवेत् ॥५॥

-लिह्याद्वा त्रिफलाचूर्णं, क्षौद्रेण कटुकायुतम्। सुराम्बुना पिबेद्वापि चूर्णं षड्धरणं नर ॥६॥

षड्धरचूर्णं यथा—

चित्रकेन्द्रयवा पाठाकटुकातिविषाभया । महाव्याधिप्रशमनो योग षड्धरणो मत ॥७॥

क्षौद्रसर्षपवल्मीकमृत्तिकासयुत भिषक् । गाढमुत्सादन कुर्यादूरुस्तम्भे प्रलेपनम् ॥ ८ ॥

अथोरुस्तम्भे पथ्यापथ्यव्यवस्था—

रुक्ष सर्वविधि स्वेद कोद्रवा रक्तशालय ।यवा कुलत्था श्यामाका उद्दालाश्च पुरातना ॥१॥

शोभाञ्जन कारवेल्ल पटोल लशुनानि च । सुनिषण्ण काकमाची वेत्राग्र निम्बपल्लवम् ॥२॥

पत्तूरो वास्तुक पथ्या वार्ताकु तप्तवारि च।शम्पाकशाक पिण्याकस्तक्रारिष्टमधूनि च॥३॥

कटुतिक्तकषायाणि क्षारसेवा गवाञ्जलम्।व्यायामश्च यथाशक्ति स्थलस्याक्रमणानि च॥४॥

स्वच्छे ह्रदे सन्तरण प्रतिस्रोतो नदीषु च।एतत् पथ्य नरै सेव्यमूरुस्तम्भविकारिभि ॥५॥

इति पथ्यानि ।

अथापथ्यम्—

गुरुशीतद्रवस्निग्धविरुद्धासात्म्यभोजनम् । विरेचन स्नेहनञ्च वमन रक्तमोक्षणम् ।
वस्तिं च न हित प्राहुरूरुस्तम्भविकारिणाम् ॥ ६ ॥

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृताया गूढार्थसदीपिकाव्याख्यायामूरुस्तम्भचिकित्सा ।

---

## अथामवात चिकित्सा

आमवातारिवटिका—

रसगन्धकलौहाभ्रं तुत्थ टङ्कणसैन्धवम् ।
समभाग त्रिचूर्ण्याथ चूर्णाद्द्विगुणगुग्गुलुः ॥ १ ॥
गुग्गुलोः पादिकं देयं त्रिवृतामूलवल्कलम् ।
तत्समं चित्रक देयं घृतेन परिमर्दयेत् ॥ २ ॥
खादेत् माषद्वयञ्चास्य त्रिफलाचूर्णयोगतः ।
आमवातारिवटिका पाचिका भेदिका मता ॥ ३ ॥
आमवातं निहन्त्याशु गुल्मशूलोदराणि च ।

यकृत्प्लीहोदराष्ठीला-कामलापाण्डवरोचकान् ॥ ४ ॥
ग्रन्थिशूलं शिरःशूलं वातरोगञ्च गृध्रसीम् ।
गलगण्ड गण्डमालां क्रिमिकुष्ठभगन्दरान् ॥ ५ ॥
विद्रधिश्चान्त्रवृद्धिश्च ह्यर्शांसि गुदजानि च ।
आमवातारिवटिका पुरेशानेन चोदिता ॥ ६ ॥

ऊरुस्तम्भे वायु माम इति निदानादौ प्रोक्तमन ऊरुस्त-भचिकित्सानन्तरम मवातचिकित्सा प्रारभ्यते तत्र पूर्वं क्रियाक्रम —
लङ्घनं स्वेदन तिक्त दीपनानि कटूनि च । विरेचन स्नेहपान वस्तयश्चाममारुते

विरेचनार्थं यथा—

त्रिवृत् सैन्धवशुण्ठानामारनालेन चूर्णितम्। पीत्वा विरेचयेज्जन्तुमामवातहर परम्
सप्ताहञ्च त्रिवृच्चूर्णं त्रिवृत्क्वाथेन भावितम्।काञ्जिकेन तु तत्पीत रेचनञ्चामवातिना

अथामवातारिवटिकानिर्माणमाह रसेत्यादि—शुद्धरस (१तो०), शुद्धगन्ध (१तो०), लौहभस्म (१तो०),अभ्रकभस्म (१तो०), शुद्ध तुत्थकचूर्णं (१तो शुद्धटङ्कण (१तो०), सैन्धवलवण (१तो०), उपर्युक्तद्रव्याद्द्विगुण शुद्धगुग्गु (१४तो०), गुग्गुलो पादिकं त्रिवृतामूलवल्कलमिति-गुग्गुलोश्चतुर्थांश त्रिवृन्मूल (३॥तो०)त्रिवृत्सम चित्रकमूलचूर्णं(३॥तो०) समादाय पूर्वं पारदगन्धकयो क कृत्वा शेषद्रव्याणि सम्मेल्य घृतेन दृढ सम्मर्द्य मापद्वयमिता वटी श्वरेत् । गुटिका चतुर्गुञ्जाप्रमाणादारभ्य मापद्वयमिता यथाग्निवल त्रिफलाचूर्णेन क्वाथेन सह प्रत्यह सेविता गुरुभोजनादिक पाचयति । निरुद्धमलादिकञ्च भेदयति । न गुडिका यथाव्याध्यनुपानैस्सह सेविता आमवात, गुल्म, शूलम्,उदररोगं, यकृत्प्लं दराष्ठीलाना वृद्धि, कामला, पाण्डुरोगम् ,अरोचक, ग्रन्थिशूल, शिर शूल, वातरं विशेषेण गृध्रसीं, गलगण्ड,गण्डमाला, क्रिमिं, कुष्ठ, भगन्दर, विद्रधिम् , आन्त्र गुदजान्यर्शांसि च विनाशयति । इयमामवातारिवटिका पुरेशानेन =पुरा ईशानेन-शङ्करेण प्रोक्ता ॥ १-६ ॥

अपराऽऽमवातारिवटिका—

रसगन्धौ वराचह्नी गुग्गुलु क्रमवर्द्धित ।
एतदेरण्डतैलेन मर्दयेदतिचिक्कणम् ॥ ७ ॥

कर्षोऽस्यैरण्डतैलेन हन्त्युष्णजलपायिनः ।
आमवातमतीवोग्रं दुग्धं मुद्गादि वर्जयेत् ॥ ८ ॥

अथ प्रकारान्तरेणामवातारिवटिकानिर्माणमाह रसगन्धावित्यादि—क्रमवर्द्धितौ रस–शुद्धपारद (१तो०), शुद्धगन्धक (२तो०), वरा–त्रिफलाचूर्णं प्रत्येक क्रमवर्द्धित यथा हरीतकीचूर्णं (३तो०), विभीतकचूर्णं (४तो०), आमलकचूर्णं (५तो०), वन्हिश्चित्रकचूर्णं (६तो०), शुद्धगुग्गुलु (७तो०) पूर्वं पारदगन्धकयो कज्जली कृत्वा शेषद्रव्याणि सम्मेल्य वटिका कृत्वा प्रत्यह चतुर्गुञ्जप्रमाणादारभ्य यथाग्निबलं कर्षमिता उष्णोदकानुपानेन सेविता वटिका अत्युग्रमामवात निहन्ति । अस्या सेवनकाले दुग्ध, मुद्गादिकञ्च वर्जयेत् । सदधि सघृतमोदन पथ्यम् ॥ ७–८ ॥

आमवातेश्वरो रस —

शुद्धगन्ध. पलार्द्धश्च मृतताम्रञ्च तत्समम् ।
ताम्रार्द्धः पारदः शुद्धः रसतुल्यं मृतायसम् ॥ ६ ॥
सर्वं पञ्चाङ्गुलेनैव भावयेच्च पुनः पुनः ।
सञ्चूर्ण्य पञ्चकोलोत्थैः क्वाथैः सर्वं विभावयेत् ॥ १० ॥
रौद्रे विंशतिवारांश्च गुडूचीनां रसैर्दश ।
भृष्टटङ्कणचूर्णेन तुल्येन सह मेलयेत् ॥ ११ ॥
टङ्कणार्द्धं विडं देयं मरिचं विडतुल्यकम् ।
तिन्तिडीक्षारतुल्यञ्च सूततुल्यञ्च दन्तिकम् ॥ १२ ॥
त्रिकटु त्रिफलञ्चैव लवङ्गञ्चार्द्धभागिकम् ।
आमवातेश्वरो नाम विष्णुना परिकीर्त्तित. ॥ १३ ॥
महाग्निकारको ह्येष आमवातान्तको मतः ।
स्थूलानां कर्षण श्रेष्ठः कृशानां स्थौल्यकारकः ॥ १४ ॥
अनुपानविशेषेण सर्वरोगविनाशनः ।
अनेन सदृशो नास्ति वह्निदीप्तिकरो महान् ।
गुल्मार्शोग्रहणीदोष-शोथपाण्डुरुजापहः ॥ १५ ॥

अथामवातेश्वररसनिर्माणमाह शुद्धगन्ध इत्यादि—शुद्धगन्धक पलार्द्धमित, मृतताम्र–ताम्रभस्म पलार्द्धमित, शुद्धपारदस्ताम्रभस्मार्द्ध, पारदतुल्यं च लोहभस्म,

समादाय पूर्वं पारदगन्धकयो कज्जली कृत्वा लौहताम्रभस्मनी सम्मेल्य पञ्चाङ्गुलेन-
एरण्डमूलक्राथेन पुन पुनरिति–सप्तवारं भावयित्वा दृढ विमर्द्य च पञ्चकोलक्राथे वि-
शतिवारान् रौद्रातपे तथा गुडूचीस्वरसेन च दशवारं भावयेत् । तदनु मृष्टसौभाग्यचू-
समभागं, विडलवणं टङ्कणार्द्धं, मरिचचूर्णं विडलवणतुल्यं, तथा तावन्मितमेव
तिन्तिडीक्षार–चिञ्चाफलत्वच क्षारं, पारदतुल्यञ्च दन्तिमूलचूर्णं, तथा त्रिकटुत्रिफ
लाचूर्णं प्रत्येक पारदादर्द्धभागमित तथा लवणचूर्णं पारदतुल्य दत्वा श्लक्ष्णं सञ्चूर्ण्य
च काचपात्रे स्थापयेत् । श्रीविष्णुना भाषितोऽयमामवातेश्वररस प्रत्यहं यथामिषल
द्वरक्तिकश्चतुरक्तिमितो यथाव्याध्यनुपानैस्सह सेवितव्य । अयं रस पाचकाग्नि
वर्द्धयति, आमवातं निहन्ति, स्थूलानां वृद्धधातुह्रासकर , कृशानाम क्षीणधातुवृद्धि
कर स्तथानुपानविशेषेण सर्वव्याधिविध्वंसक । अय रसो गुल्मे,अर्शस्सु, ग्रहणीदोषे
च फलप्रद , तथा शोथ, पाण्डु ,विविधरुजाश्च विनाशयति । अनेन सदृशोऽन्यरसो
वह्निदीप्तिकरो नास्ति । भैषज्यरत्नावल्यादौ तु कज्जल्या लौहताम्रभस्मनी दत्वा
वह्नौ लौहदर्विकायां प्रद्राव्यैरण्डपत्रोपरि ढालयित्वा (प्रपात्येत्यर्थ ) पर्पटीञ्च कृत्वा
सञ्चूर्ण्य च पञ्चकोलाग्निक्राथं भावयित्वा सर्वं सम्मेल्य च निर्माणं क्रियते ॥ –१

वृद्धदाराद्यं लौहम्—

वृद्धदारत्रिवृद्दन्ती-गजपिप्पलिमाणकैः ।
त्रिकत्रयसमायुक्तैरामवातान्तक त्वयः ।
सर्वानेव गदान् हन्ति केशरी करिणो यथा ॥ १६ ॥

अथ वृद्धदाराद्यलौहनिर्माणमाह वृद्धेत्यादि—वृद्धदारचूर्णं ( शुद्धवृद्धदारबीज
र्णमिति केचित् ), त्रिवृन्मूलचूर्णं, दन्तीमूलचूर्णं, गजपिप्पलीचूर्णं,माणकन्दचूर्णं,त्रि
त्रय–शुण्ठीचूर्णं,मरिचचूर्णं,पिप्पलीचूर्णं, हरीतकीचूर्णं, विभीतकचूर्णम् ,आमलक
विडङ्गचूर्णं, मुस्तकचूर्णं, चित्रकचूर्णञ्च, एतेषां प्रत्येक समं समं ग्राह्यं तथा सर्व
सममयो–लौहभस्म समादाय खल्वे श्लक्ष्णं सञ्चूर्ण्य काचपात्रे स्थापयेत् । इ
दाराद्यं लौहं यथाव्याध्यनुपानैस्सह सेवित सर्वान रोगानभिहन्ति यथा केश
करिण–गजं निहन्ति । विशेषेणेद लौहमामवातं, वातिकरोगांश्च निहन्ति ॥

शिवागुग्गुलु —

शिवाविभीतामलकीफलानां प्रत्येकशो मुष्टिचतुष्टयञ्च ।

तोयाढके तत् क्वथितं विधाय पादावशेषे त्ववतारणीयम् ॥१७॥
एरण्डतैलं द्विपलं निधाय पिचुत्रयं गन्धकनामकस्य ।
पचेत् पुरस्यात्र पलद्वयञ्च पाकावशेषे च विचूर्ण्य दद्यात् ॥१८॥
रास्ना विडङ्गं मरिच कणा च दन्ती जटा नागरदेवदारु ।
प्रत्येकशः कोलमित तथैषां विचूर्ण्य निक्षिप्य नियोजयेच्च ॥१९॥
आमवाते कटीशूल गृध्रसीक्रोष्टुशीर्षके ।
न चान्यदस्ति भैषज्य यथाऽय गुग्गुलुः स्मृतः ॥ २० ॥

अथ शिवागुग्गुलो निर्माणमाह शिवेत्यादि—शिवा-हरीतकी, विभीतकफल, आमलकीफलञ्च प्रत्येक मुष्टिचतुष्टय-तूर्यपलमित ( द्वादशपलमिता ४८ तो० त्रिफलेत्यर्थ ) समादाय तोयाढके चतु प्रस्थमिते ( चतु षष्टिपलमिते २५६ तो० ) जले क्वाथयित्वा पादावशेषं (६४ तो०) ज्ञात्वा ह्यवतारयेत् । अस्मिन् क्वाथे द्विपलमेरण्डतैल तथा शुद्ध गन्धकं पिचुत्रय-तोलकत्रय (पिचुत्रय षट्तोलकमिति केचित्), पुरस्य-शुद्धगुग्गुलोश्च पलद्वय दत्वा कटाहे पाक कुर्यात् । आसन्नपाके च रास्नाचूर्णं, विडङ्गचूर्णं, मरिचचूर्णम्, कणा-पिप्पलीचूर्णं, दन्तीमूलचूर्णं, जटामासीचूर्णं, नागरशुण्ठीचूर्णं, देवदारुचूर्णम्, एषा प्रत्येक कोलमितं (अर्द्धतोलकमिति) दत्वा सम्यक् लौहदर्व्या सम्मेल्य माषकमिता वटीश्चरेत् । इय शिवागुग्गुलुवटी यथाग्निबल वीक्ष्य आमवाते, कटीशूले, गृध्रस्या, क्रोष्टुशीर्षकवातविकारे च प्रयोक्तव्या । एतेषा रोगाणा नाशने शिवा गुग्गुलारस्मान्नास्ति श्रेष्ठमन्यद्भेषजम् ॥ १७-२० ॥

आमवातगजसिंहमोदक —

शुण्ठीचूर्णस्य प्रस्थैक यमान्याश्च पलाष्टकम् ।
जीरकस्य पले द्वे च धन्याकस्य पलद्वयम् ॥ २१ ॥
पलैकं शतपुष्पाया लवङ्गस्य पलं तथा ।
टङ्कणस्य पलं भृष्टं मरिचस्य पलानि च ॥ २२ ॥
त्रिवृतात्रिफलाक्षार-पिप्पलीनां पलं तथा ।
शट्येलातेजपत्राणां चविकानां पलं तथा ॥ २३ ॥
अभ्रं लौहं तथा वङ्गं प्रत्येकञ्च पलं पलम् ।
एतेषां सर्वचूर्णानां खण्डं दद्यात् गुणत्रयम् ॥ २४ ॥

घृतेन मधुना मिश्रं कर्षमात्रन्तु मोदकम् ।
एकैकं भक्षयेत् प्रातः श्नश्चानु पिबेत् पयः ॥ २५ ॥
शूलघ्नो रक्तपित्तघ्नश्चाम्लपित्तविनाशनः ।
आमवातकुलध्वंसी केशरी विधिनिर्मितः ॥ २६ ॥

अथामवातगजसिंहमोदकनिर्माणमाह शुण्ठीत्यादि—शुण्ठीचूर्णस्य वस्त्रपूरितस्यैक प्रस्थ ( १६ पल, या ६४ तो० ), यमानीचूर्णस्य अष्टौ पलानि (३२तो०), जीरकचूर्णस्य द्वे पले (८तो०), धान्यचूर्णस्य पलद्वय (८तो०), शतपुष्पाचूर्णस्यैक पल (४तो०), लवङ्गचूर्णस्यैक पलं, वह्निमृष्टटङ्कणस्यैक पल, मरिचचूर्णस्य (१पल), त्रिवृन्मूलचूर्ण (१प०), त्रिफलाचूर्ण प्रत्येक पलमित, यवक्षार पलमित , पिप्पलीचूर्ण (१पल), शठीचूर्णम् (१प०), एलाचूर्ण (१प०), तेजपत्रचूर्ण (१प०), चव्यचूर्ण (१प०), अभ्रकभस्म (१प०), लौहभस्म (१प०), वङ्गभस्म (१प०), तथा सर्वद्रव्यापेक्षया खण्ड त्रिगुण गृह्णीयात् । इमानि द्रव्याणि सम्यक् सम्मेल्य घृत मधु च दत्वा सम्यगालोड्य कर्षप्रमाणानि मोदकानि कुर्यात् । प्रत्यहं प्रभाते मोदकैकं भक्षयित्वा तदुपरि घृतसंयुक्त दुग्धं पिबेत् । इद मोदक शूल, रक्तपित्तम्, अम्लपित्तम्, आमवातकुलश्च निहन्ति ॥ २१-२६ ॥

योगवाहिरसान्तरप्रयोगोपदेश —

रामबाणो रसो देयो योगवाहिरसेन्द्रकाः ।
आमवाते विधीयन्ते सानुपानैः प्रयत्नतः ॥ २७ ॥

( इति आमवात-चिकित्सा )

अथ योगवाहिरसान्तरप्रयोगोपदेशमाह रामबाण इत्यादि—आमवातरोगे रामबाणरसस्तथाऽन्येऽपि योगवाहिरसा सानुपानै प्रयत्नत प्रयोक्तव्या ॥ २७ ॥

अथामवाते पथ्यापथ्यव्यवस्था--

आमवाते पञ्चकोलसिद्ध पानान्नमिष्यते । पटोल गोक्षुरश्चैव वरुण कारवेल्लकम् ॥१॥
यवकोद्रवशाल्यादिप्रपुराण सतिक्तकम् । लावादीना तथा मास तक्रेण मस्तुना हितम् ॥२॥
यवा कुलत्था श्यामाका कोद्रवा रक्तशालय । वास्तुकं शिग्रु वर्षाभू कारवेल्लं पटोलकम् ॥३॥
आर्द्रक तप्तनीरञ्च लशुन तक्रसंस्कृतम् । जाङ्गलाना तथा मासं सामवातगदे हितम् ॥४॥
मन्दारगोकण्टकरुद्धदार भल्लातक गोजलमार्द्रकञ्च ।

कटूनि तिक्तानि च दीपनानि स्युरामवातामयिने हितानि ॥ ५ ॥ इति पथ्यानि ।

अथापथ्यानि--

दधिमत्स्यगुड़क्षीरोपोदिकामाषपिष्टकान् ।दुष्टनीर पूर्ववातं विरुद्धान्यशनानि च ॥१
असात्म्यं वेगरोधञ्च जागरं विषमाशनम्। वर्जयेदामवातार्तो मासञ्चानूपसम्भवम्॥२

इत्यपथ्यानि ।

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृतायां गूढार्थसन्दीपिकाव्याख्यायामामवातचिकित्सा ।

---

## अथ शूलरोग-चिकित्सा

सप्तामृतलौहम्--

**मधुकं त्रिफलाचूर्णमयोरजः समं लिहन् ।**
**मधुसर्पिर्युतं सम्यक् गव्यक्षीरं पिवेदनु ॥ १ ॥**
**छर्दिं सतिमिरं शूलमम्लपित्तं ज्वरारुचिम् ।**
**मूत्रकृच्छ्रं तथा मेहं हन्यादेतन्न संशयः ॥ २ ॥**

आमवाते शूलं भवत्यतस्तच्चिकित्सानन्तरमामवातचिक्रित्सा प्रारभ्यते, तत्र साधारणक्रियाक्रमो यथा--

वमनं लंघनं स्वेदः पाचनं फलवर्तयः । क्षारचूर्णानि गुड़िका शस्यन्ते शूलशान्तये । एंम शूलाभिपन्नस्य स्वेद एव सुखावहः ।पायसैः कृशरैः पिष्टैः स्निग्धैर्वा पिशितोत्करैः ॥इति

अथ सप्तामृतलौहनिर्माणमाह मधुकमित्यादि--मधुकं-मधुयष्टिचूर्णं (१तो०) त्रिफलाचूर्णं (३तो०), अयोरजो लौहभस्म (४तो०), एतत् सर्वं खल्वे सम्मेल्य श्लक्ष्णं सञ्चूर्ण्य च काचपात्रे स्थापयेत् । प्रत्यहं चतुर्गुञ्जाप्रमाणमिदं लौहं विषममात्राकल्पितघृतमधुभ्यां युतेन गव्यपयसा सह सेवितं वमनं, तिमिररोगं, शूलम्, अम्लपित्तं, ज्वरम्, अरुचिं, मूत्रकृच्छ्रं, प्रमेहञ्च हन्ति ।

मूत्रकृच्छ्रं तथा मेहं हन्यादेतन्न संशयः । इत्यत्र--
आनाहं मूत्रसादञ्च शोथञ्चैव निहन्ति च ॥ इति पठान्तरम् ॥ १-२ ॥

त्रिफलालौहम्—

तीक्ष्णायश्चूर्णसंयुक्तं त्रिफलाचूर्णमुत्तमम् ।
क्षीरेण पाययेद्धीमान् सद्य. शूलनिवारणम् ॥ ३ ॥

अथ त्रिफलालौहप्रयोगमाह तीक्ष्णेत्यादि—पलमितं त्रिफलाचूर्णं, तीक्ष्णलौहभस्म च चूर्णापेक्षया द्विगुण (२पल), समादाय खल्वे सम्यग् विचूर्ण्य काचपात्रे स्थापयेत् । लौहमिदं प्रत्यहं यथाग्निबलं द्विरक्तिमितं गोदुग्धानुपानेन पीतं सद्य. शूलं निवारयति ॥ ३ ॥

चतुःसमलोहम्—

अभ्रं ताम्रं रसं लौहं गन्धकं संस्कृतं पलम् ।
सर्वमेतत् समाहृत्य यत्नतः कुशलो भिषक् ॥ ४ ॥
आज्ये पले द्वादशके दुग्धे वत्सरसंख्यके ।
पक्त्वा तत्र क्षिपेत् चूर्णं सुपूतं घनवाससा ॥ ५ ॥
विडङ्गत्रिफलावह्नि-त्रिकटूनां तथैव च ।
पिष्ट्वा पलोन्मितानेतानथ समिश्रितान् नयेत् ॥ ६ ॥
ततः पिष्ट्वा शुभे भाण्डे स्थापयेच्च विचक्षणः ।
आत्मनः शोभने चाह्नि पूजयित्वा रविं गुरुम् ॥ ७ ॥
घृतेन मधुनाऽऽलोड्य भक्षयेत् माषकाद्विकम् ।
अष्टौ माषान् क्रमेणैव वर्द्धयेच्च समाहितः ॥ ८ ॥
अनुपानं प्रयोक्तव्यं नारिकेलजलं पयः ।
जीर्णे लोहितशाल्यन्नं मुद्गमांसरसं तथा ॥ ९ ॥
भक्षयेत् घृतसंयुक्तं सद्यः शूलात् विमुच्यते ।
हृच्छूलं पार्श्वशूलञ्च सामवातं कटीग्रहम् ।
गुल्मशूलं शिरःशूलं योगेनानेन नाशयेत् ॥ १० ॥

अथ चतुःसमलौहनिर्माणमाह अभ्रमित्यादि—अभ्रमभ्रकभस्म (१पल), ताम्रभस्म (१पल), रस—शुद्धपारदं (१पलं), लौहभस्म (१पल), संस्कृतं—सम्यक् शुद्धं गन्धकं (१पलं) समादाय पूर्वं पारदगन्धकयोः कज्जलीं कृत्वा अभ्रताम्रलौहभस्मानि सम्मेल्य लौहकटाहे द्वादशपलं गोघृतं, वत्सरसंख्यक—द्वादशपलमितं गोदु-

ग्वञ्च निक्षिप्य तत्र पूर्वद्रव्याणि दत्वा पाक कुर्यात् । आसन्नपाके च विडङ्गा-दीना घनवस्त्रेण सारित सूक्ष्म चूर्ण प्रत्येक पलमित निक्षिप्य लौहदर्विकया सम्यक् सम्मेल्य शीघ्रमवतार्य स्वाङ्गशीत च कृत्वा नवीने शुभे भाण्डे स्थापयेत् । तत स्वात्मन शुभनक्षत्रवारादिकयुक्ते दिवसे सूर्य गुरुञ्च सम्पूज्य माषकमित पाकं घृतेन मधुना चालोड्य भक्षयेत् । द्वितीयदिने च द्विमाषकमित भक्षयेत् । इत्थ लौहस्यास्य अष्टमाषकभवनपर्यन्त प्रत्यह माषकैक वर्द्धयेत् । अनुपान नारिकेलजल, दुग्धम्वा हित-कर भवति तथा जीर्णौषधे च (प्रहरानन्तरमित्यर्थ) मुद्गयूषैर्मांसरसादिभिर्घृतेन च युत लोहितशाल्यन्नादिकं देयम् । इद लौह प्रत्यहमुपर्युक्तविधिसेवित हृच्छूल, पार्श्वशूल-म् , आमवात, कटीग्रह, गुल्म, शूलं, शिर शूलञ्च शीघ्र निहन्ति । रामरसेनस्तु—

अभ्रं ताम्र रस गन्धं लौहं प्रत्येकश पलम् ।

इति पाठान्तरं स्वीकृत्य अभ्रादिगन्धान्ताना मिलिताना चतुर्णां द्रव्याणा तुल्यं लौहभस्म गृह्णाति, अतश्चास्य चतु समलौहमितिसञ्ज्ञा इति वदति ॥ ४–१० ॥

पञ्चात्मको रस —

**मृतसूताभ्रक चाम्लवेतस ताम्रगन्धकम् ।**
**विषं फलत्रयाच्चूर्ण तुल्यं मर्द्य दिनावधि ॥ ११ ॥**
**जयन्ती मुण्डिरी वासा बृहती च गुडूचिका ।**
**महाराष्ट्री जम्बूरसैस्तथा नीलोत्पलस्य च ॥ १२ ॥**
**प्रतिद्रावैर्दिन भाव्यं तत संशोष्य यत्नत. ।**
**अर्द्धांश पञ्चलवणं दत्वाऽऽर्द्रकरसेन च ॥ १३ ॥**
**दिनं पेष्य तत. कुर्य्याद् वटिकां चणसम्मिताम् ।**
**प्रातर्मध्याह्नरात्रौ च भक्षयेद् वटिकात्रयम् ॥ १४ ॥**
**माषेक्षुपिष्टगुर्वन्न गोपयश्च हितं तथा ।**
**सेवेत वातशूलार्त्तो रसं पञ्चात्मक शुभम् ॥ १५ ॥**

अथ पञ्चात्मकरसनिर्माणमाह मृतसूतेत्यादि—मृतसूत–रससिन्दूर तोलकमितम् , अभ्रकभस्म (१तो०), अम्लवेतसचूर्ण (१तो०), ताम्रभस्म (१तो०), शुद्धगन्धकं (१तो०), विष–शुद्धवत्सनाभचूर्ण (१तो०), फलत्रयात् पृथक् २ तोलकमित चूर्ण समादाय सर्वं खल्वे श्लक्ष्ण सञ्चूर्ण्य जयन्त्यादिना स्वरसै क्राथैर्वा क्रमश पृथक् २ दिनैकं भावयित्वा सर्वद्रव्यापेक्षया मिलित पञ्चलवणमर्द्धांश (४॥तो०) दत्वा आर्द्रक-

स्वरसेन दिनैक सम्यगाप्लाव्य दृढ विमर्द्य च चणकप्रमाणा वटी श्चरेत्। अस्य पश्चात्मकरस्य प्रभाते मध्याह्ने सन्ध्यायाञ्च एकैका वटीं ( एकस्मिन् दिने वटीत्रयमित्यर्थ ) वातशूलपीडितजनो भक्षयेत्। पथ्यञ्च मापा, इक्षुरस, गोधूमपिष्ट विकारं, गोदुग्ध तथान्यद्धितञ्च ज्ञेयम् ॥ ११-१५ ॥

धात्रीलौहम्—

कुडव शुद्धमण्डूर यवञ्च कुडवं तथा।
पाकार्थञ्च जल प्रस्थ चतुर्भागावशेषितम् ॥ १६ ॥
शतावरीरसस्याष्टावामलक्या रसस्य च।
तथा दधि पयो भूमि-कूष्माण्डस्य चतुःपलम् ॥ १७ ॥
चतु पलमिक्षुरस दद्यात् तत्र विचक्षणः।
प्रक्षिपेत् जीरक धान्य त्रिजात करिपिप्पलीम् ॥ १८ ॥
मुस्त हरीतकीञ्चैव अभ्र लौह कटुत्रयम्।
रेणुका त्रिफला चैव तालीश स्वर्णकेशरम् ॥ १९ ॥
कटुक मधुक रास्ना चाश्वगन्धा च चन्दनम्।
एतेषां कार्षिक भाग चूर्णयित्वा विनिक्षिपेत् ॥ २० ॥
भोजनाद्यवसाने च मध्ये चैव समाहित।
तोलैकं भक्षयेन्नित्यमनुपानं पयस्तथा ॥ २१ ॥
शूलमष्टविध हन्ति साध्यासाध्यमथापि वा।
वातिक पैत्तिकञ्चैव श्लैष्मिक सान्निपातिकम् ॥ २२ ॥
परिणामसमुत्थञ्च ह्यन्नद्रवभव तथा।
द्वन्द्वजानपि शूलांश्च ह्यम्लपित्तं सुदारुणम्।
सर्वशूलहर श्रेष्ठ धात्रीलौहमिद शुभम् ॥ २३ ॥

अथ धात्रीलौहनिर्माणमाह कुडवमित्यादि—कुडव—चतुष्पलमित मण्डूरभस्म समादाय कुडवमितयवाना प्रस्थमिते जले क्वाथ कृत्वा पादावशिष्ट क्वाथ कटाहे निक्षिप्य, तथा शतावरीस्वरसस्याष्टौ पलानि, आमलकफलाना रसस्य चाष्टौ पलानि, तथा दधिपयोभूमिकूष्माण्डानाञ्च पृथक् २ चत्वारि पलानि तथा चतु पलमितञ्चेक्षुस्वरसञ्च कटाहे सम्मेल्य पूर्वोक्त मण्डूरभस्म यथा विधिपचेत्। आमन्नपाके च जीरकचूर्ण

धान्यकचूर्णं, त्रिजातं-दारुसिताचूर्णम्, एलाबीजचूर्णं, तेजपत्रचूर्णं, गजपिप्पलीचूर्णं, मुस्तकचूर्णं, हरीतकीचूर्णम्, अभ्रकभस्म, लौहभस्म, कटुत्रयं-शुण्ठीचूर्णं, मरिचचूर्णं-पिप्पलीचूर्णं, रेणुका-हरेणुकाचूर्णं, त्रिफलाचूर्णं प्रत्येकं ग्राह्यं, तालिशपत्रचूर्णं, स्वर्ण-केशरं-नागकेशरचूर्णं, ( स्वर्णं = स्वर्णभस्म, केशरं नागकेशरमिति केचित् ) कटुकं -कटुकीचूर्णं, मधुक-मधुयष्टिचूर्णं, रास्नाचूर्णम , अश्वगन्धाचूर्णं, रक्तचन्दनचूर्णञ्च । एतेषां पृथक् २ कार्षिकं भागं-तोलकैक क्षिप्त्वा लौहदर्विकया सम्यगालोड्य शीघ्रम-वतार्य स्वाङ्गशीत काचपात्रे स्थापयेत् । इद धात्रीलौह प्रत्यह भोजनस्यादौ, मध्ये, अन्ते च ( प्रतिवार चतुर्माषकमितम् ) तोलकमित गोदुग्धानुपानपूर्वक सेवितं साध्यमसाध्यम्वा शूलम् , अष्टविध शूल, वातिकशूल, पैत्तिकशूल, श्लैष्मिकशूल, सान्निपातिकं शूलं, परिणामोत्पन्न शूलम् , अन्नद्रवोत्थं शूल, द्वन्द्वजशूलं, दारुण-मम्लपित्तं, सर्वशूलञ्च नाशयति । "कुडव शुद्धमण्डूरम्" इत्यत्र "षट्पलं शुद्ध-मण्डूरम्" तथा "पाकार्थञ्च जलं प्रस्थम्" इत्यत्र "पाकाय नीरप्रस्थार्द्धम्" इति पाठान्तरम । एव "चतु पलमिक्षुरसम्" इत्यत्र "चतुष्पल सर्पिरिक्षु" तथा "अभ्र लौह कटुत्रयम्" इत्यत्र ताम्र लौहं कटुत्रयम्" इति च पाठान्तर दृश्यते । त्रिजात यथा—

चातुर्जात समाख्यात त्वगेलापत्रकेशरै ।
तदेव त्रिसुगन्धि स्यात्त्रिजातकमकेशरम् ॥ इति ॥ १९-२३ ॥

शूलराजलौहम्—

**कर्षैकं कान्तलौहस्य शुद्धमभ्रं पलं तथा ।**
**सितायाश्च पलञ्चैक मधु सर्पिस्तथैव च ॥ २४ ॥**
**सर्वमेकीकृतं पात्रे लौहदण्डेन मर्दयेत् ।**
**त्रिकटु त्रिफला मुस्तं विडङ्गं चव्यचित्रकम् ॥ २५ ॥**
**प्रत्येकं तोलकं मान चूर्णितं तत्र दापयेत् ।**
**भक्षयेत् प्रातरुत्थाय शिशिराम्ब्वनुपानतः ॥ २६ ॥**
**सर्वदोषभवं शूलं कुक्षिशूलञ्च यत भवेत् ।**
**हृच्छूलं पार्श्वशूलञ्च अम्लपित्तञ्च नाशयेत् ॥ २७ ॥**
**अर्शांसि ग्रहणीदोषं प्रमेहांश्च विसूचिकाम् ।**
**शूलराजमिदं लौहं हरेण परिनिर्मितम् ॥ २८ ॥**

अथ शूलराजलौहनिर्माणमाह कर्षेकमित्यादि—कान्तलौहस्य—कान्तलौहभस्मन एक कर्षं, शुद्धमभ्रमभ्रकभस्म (१पलं), सितायाश्चैक पल, मधु (१पल), सर्पि (१पल), एतत् सर्वं लौहखल्वे निक्षिप्य लौहदण्डेन आलोड्य सम्यक् मेलयेत्, ततस्तस्मिन् त्रिकटु—शुण्ठीचूर्ण, मरिचचूर्ण, पिप्पलीचूर्णं, त्रिफला—हरीतकीचूर्ण, विभीतकफलचूर्णं, आमलकचूर्ण, शुद्धमुस्तकचूर्णं, विडङ्गचूर्णं, चव्यचूर्णं, चित्रकचूर्णम्, एतेषां प्रत्येकं सूक्ष्मवस्त्रपूत तोलकमित पृथक् २ चूर्णमादाय प्रक्षिप्य सम्मेल्य च काचपात्रे स्थापयेत्। इद लौह प्रत्यह चतुर्गुञ्जप्रमाणादारभ्य द्विमाषकपर्यन्त यथाग्निबलम्वा प्रभाते शीतलजलानुपानपूर्वकं सेवित सर्वदोषभव शूल, कुक्षिशूल, हृच्छूल, पार्श्वशूलम्, अम्लपित्त, सर्वाण्यर्शांसि, ग्रहणीदोष, विंशतिप्रमेहान्, वसूचिकाश्च विनिहन्ति। इद शूलराजलौह हरेण—श्रीशङ्करेण निर्मितम ॥ २४–२८ ॥

विद्याधराभ्रम्—

विडङ्गमुस्तत्रिफलागुडूचीदन्तीत्रिवृच्छह्निकटुत्रिकञ्च।
प्रत्येकमेषां पिचुभागचूर्णं पलानि चत्वार्य्ययसो मलस्य ॥ २९ ॥
गोमूत्रशुद्धस्य पुरातनस्य यद्वाऽयसस्तानि शिवाह्निकायाः।
कृष्णाभ्रचूर्णस्य पलं विशुद्धं निश्चन्द्रकं शुद्धमतीव सूनात् ॥ ३० ॥
पादोनकर्षं स्वरसेन खल्ले शिलातले मन्युमणीदलस्य।
संमर्द्य पश्चादतिशुद्धगन्धपाषाणचूर्णेन पिचून्मितेन ॥ ३१ ॥
युक्त्या ततः पूर्वरजांसि दत्त्वा सर्पिर्मधुभ्यामवमर्द्य यत्नात्।
निधापयेत् स्निग्धविशुद्धभाण्डे ततः प्रयोज्यास्य रसायनस्य ॥ ३२ ॥
प्राङ्माषको वाऽप्यथवा द्वितीयो गव्यं पयो वा शिशिरं जलं वा।
पिबेदयं योगवरः प्रभूतकालप्रनष्टानलदीपकश्च ॥ ३३ ॥
रोगं निहन्यात् परिणामशूल शूल तथाऽन्नद्रवसंज्ञकञ्च।
यक्ष्माऽम्लपित्तं ग्रहणीं प्रवृद्धां जीर्णज्वरं लोहितपित्तमुग्रम्।
न सन्ति ते यान्न निहन्ति रोगान् योगोत्तमः सम्यगुपास्यमानः ॥ ३४ ॥

अथ विद्याधराभ्रनिर्माणमाह विडङ्गेत्यादि—विडङ्गचूर्ण, शुद्धमुस्तकचूर्ण, त्रिफला—हरीतकीचूर्ण, विभीतकचूर्णम्, आमलकचूर्णं, गुडूचीचूर्णं, दन्तीमूलचूर्णं, त्रिवृन्मूलचूर्णं, वह्निश्चित्रकश्च, कटुत्रिकं—शुण्ठीचूर्ण, मरिचचूर्ण, पिप्पलीचूर्णम्, एतेषां प्रत्ये-

वं वस्त्रपूतं चूर्णं पिचुमागमित-कर्षमित, गोमूत्रशुद्धस्य पुरातनस्य-जीर्णस्य अयसो मलस्य-मण्डूरभस्मनश्चत्वारि पलानि, यद्वेति पुरातनमण्डूरभस्माभावे तानि चत्वारि पलानि अयसो-लौहभस्मनो ग्राह्याणि, अथवा शिवाटिकाया -लौहपत्रिकायाश्चत्वारि पलानि, कृष्णाभ्रचूर्णस्य निश्चन्द्रक विशुद्ध पलमिति निश्चन्द्रीकृतकृष्णाभ्रकभस्म (१पल), मन्युमणोदलस्य-मण्डूकपर्णापत्राणा स्वरसेन शुद्ध पारद पादोनकर्ष-पादहीनकर्षमितम्, अर्थात् द्वादशमाषकमितम्, पिचून्मितेन कर्षमितेन, अतिशुद्धगन्धपाषाणचूर्णेन-शुद्धगन्धकेन सह सम्मर्द्य कज्जला कुर्यात्। पूर्वोक्तविडङ्गादिद्रव्याणि कज्जलिकाया निक्षिप्य सर्पिर्मधुभ्याम्प्लाव्य दृढ विमर्द्य च विशुद्धे तथा घृतेन स्निग्धे मृण्मयभाण्डे युक्त्या निधापयेत्। अस्य रसायनस्य पूर्व माषकैकं द्विमाषकम्वा यथाग्निबल गोदुग्धानुपानेन शीतलजलानुपानेन वा सह प्रत्यह भक्षयेत्, युक्त्या च मात्रा वर्द्धयेत्। अय योगवर प्रभूतकालेन-चिरकालेन प्रनष्टानलस्य नष्टपाचकाग्नेर्दीपकस्तथा परिणामशूलम्, अन्नद्रवसंज्ञकशूल, यक्ष्माणम्, अम्लपित्त, ग्रहणीं, जीर्णज्वरम्, उग्रं लोहितपित्तञ्च ( रक्तपित्तं ) निहन्ति। ते रोगा न सन्ति यान् सम्यगुपास्यमानो यथाव्याध्यनुपानपूर्वक सेवितोऽय योगोत्तमो न निहन्ति, अपि तु सर्वरोगान्निहन्तीत्यर्थ, "प्राङ्माषको वाप्यथवा द्वितीय" इत्यत्र "प्राङ्माषको द्वावथ त्रयो वा" इति पाठान्तरम्॥ २९-३४॥

बृहद्विद्याधराभ्रम्—

शुद्धसूतं तथा गन्धः फलत्रयकटुत्रयम्।
विडङ्गं मुस्तकं दन्ती त्रिवृता चित्रकं तथा॥ ३५॥
आखुपर्णी ग्रन्थिकञ्च प्रत्येकं कर्षसम्मितम्।
पलं कृष्णाभ्रचूर्णस्य मृतायश्च चतुर्गुणम्॥ ३६॥
घृतेन मधुना पिष्ट्वा वटिकां कोलसम्मिताम्।
एकैकां वटिकां खादेत् प्रातरुत्थाय नित्यशः॥ ३७॥
अनुपानं गवां क्षीरं नीरं वा नारिकेलजम्।
सर्वशूलं निहन्त्याशु वातपित्तभवं तथा॥ ३८॥
एकजं द्वन्द्वजञ्चैव तथैव सान्निपातिकम्।
परिणामोद्भवं शूलमामवातोद्भवं तथा॥ ३९॥
कार्श्यं वैवर्ण्यमालस्यं तन्द्राऽरुचिविनाशनम्।

साध्यासाध्यं निहन्त्याशु भास्करस्तिमिरं यथा ॥ ४० ॥

अथ बृहद्विद्याधराभ्रनिर्माणमाह—शुद्धेत्यादि—शुद्धसूतं-शुद्धपारदं तथा शुद्ध-गन्धकं, फलत्रयं-हरीतकीचूर्णं विभीतकचूर्णम् आमलकचूर्णं, कटुत्रयं-शुण्ठीचूर्णं, मरिचचूर्णं, पिप्पलीचूर्णं, विडङ्गचूर्णं, शुद्धमुस्तकचूर्णं, दन्तीमूलचूर्णं, त्रिवृन्मूलचूर्णं, चित्रकचूर्णं, लाङ्गलीचूर्णं, मण्डूकपर्णीचूर्णं, ग्रन्थिक-पिप्पलीमूलचूर्णम्, एतेषां प्र-त्येकं कर्षमितं, तथा कृष्णाभ्रचूर्णम्-कृष्णाभ्रकभस्म (१पल), लोहाथो-लौहभस्म चतुर्गुणं-चतुष्पलमितं सर्वादपि पूर्वं पारदगन्धकयोः कज्जलीं कृत्वा चैकत्र्याः मन्दोष्ण घृतेन मधुना च (यावता सम्यग् वटिकानिर्माणं भवेत्) सह दृढं विमर्द्य कोलप्रमिता वटीः कुर्यात्। अस्य रसस्य प्रत्यहं यथाबलं गोदुग्धानुपानेन नारि-केलोदकानुपानेन वा सह एकैका वटी प्रभाते भक्षयेत्। अयं रसः सर्वशूलं, वात-शूलं, पैत्तिकशूलम् एकदोषजं, द्विदोषजं सान्निपातिकं शूलं, परिणामशूलं, अन्नद्रवाख्यं शूलं कार्श्यं वर्णविकारम्, आलस्यं, तन्द्राम्, अरुचिं, साध्यशूलम्, असाध्यञ्च शूलं भास्करस्तिमिरमिव शीघ्रं निहन्ति ॥ ३७—४० ॥

सर्वाङ्गसुन्दरो रसः—

शुद्धसूतं तथा ताम्रं शिलामाक्षिकतालकम् ।
रजतं स्वर्णवङ्गञ्च लौहमभ्रं सनागरम् ॥ ४१ ॥
चूर्णयेत् पञ्चलवणं देयं सर्वन्तु तुल्यकम् ।
गन्धकं मिश्रयेत् सर्वं रसैरेषां विभावयेत् ॥ ४२ ॥
शुण्ठी-जयन्ती-विजया-महाराष्ट्रिक-वृन्तजैः ।
सर्वाङ्गसुन्दरो नाम्ना रसोऽयं विष्णुनिर्मितः ॥ ४३ ॥
खादेदेरण्डशुण्ठीभ्यां माषमात्रं दिने दिने ।
कफवातामयं हन्ति चानुपानं वदाम्यहम् ॥ ४४ ॥
व्योषं सौवर्चलं हिङ्गु करञ्जबीजसंयुतम् ।
पिबेदुष्णाम्बुना चानु सर्वशूलनिकृन्तनम् ॥ ४५ ॥

अथ सर्वाङ्गसुन्दररसनिर्माणमाह शुद्धसूतमित्यादि—शुद्धसूतं-शुद्धपारदं, ताम्रं-ताम्रभस्म, शिला-शुद्धमनःशिला, माक्षिकं-स्वर्णमाक्षिकभस्म, तालकं-शुद्धहरिताल रजतं-रजतभस्म, स्वर्णं-स्वर्णभस्म, वङ्गं-वङ्गभस्म, लौहं-लौहभस्म, अभ्रकं

भस्म, नागरं–शुण्ठीचूर्णं, पञ्चलवण–सैन्धवलवणं, सामुद्रलवण, विडलवणं, सौवर्चललवणं, रोमकलवण, शुद्धगन्धकञ्च एतेषा प्रत्येक सम सममादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य शुण्ठीक्वाथेन, जयन्तीपत्रस्वरसेन, विजया भङ्गा तस्या स्वरसेन क्वाथेन वा, महाराष्ट्रिका ब्रह्मयष्टिर्जलपिप्पली वा तस्या क्वाथेन, धूर्त्तो धुस्तूरस्तस्य स्वरसेन च क्रमश सम्यगाप्लाव्य दृढ विमर्द्य सशोष्य च काचपात्रे स्थापयेत् । श्रीविष्णुना निर्मितोऽय सर्वाङ्गसुन्दररसो माष कमित प्रत्यहमेरण्डशुण्ठीचूर्णाभ्या सह सेवितव्यस्तदुपरि च व्योषचूर्णं द्विरक्तिमित, सौव र्चललवण द्विरक्तिमित, शुद्धहिङ्गुचूर्णं द्विरक्तिमित, शुद्धकरञ्जवीजचूर्णं द्विरक्तिमित ममादाय उष्णोदके सम्मेल्यानुपान कुर्यात्, तेनाय रस कफजन्यरोग, वातरोगं विविध शूलञ्च विनिहन्ति ॥ ४१–४५ ॥

शूलवज्रिणी वटिका—

रसगन्धकलौहानां पलार्द्धेन समन्वितम् ।
त्रिफला रामठं शुल्वं शटी त्रिकटु टङ्कणम् ॥ ४६ ॥
पत्रं त्वगेला-तालीश-जातीफल-लवङ्गकम् ।
यमानी जीरकं धान्यं प्रत्येकं तोलकं मतम् ॥ ४७ ॥
माषैका वटिका कार्य्या छागीदुग्धेन वा पुनः ।
एकैका भक्षिता चेयं वटिका शूलवज्रिणी ॥ ४८ ॥
शूलमष्टविधं हन्ति प्लीहगुल्मोदरं तथा ।
अम्लपित्तामवातञ्च पाण्डुत्वं कामलां तथा ॥ ४९ ॥
शोथ गलग्रहं वृद्धि श्लीपदं सभगन्दरम् ।
वृद्धवालकरी चैव मन्दाग्नेरपि दीपनी ॥ ५० ॥

अथ शूलवज्रिणीवटिकानिर्माणमाह रसेत्यादि—शुद्धरस , शुद्धगन्धक , लौहभस्म च, एतेषा प्रत्येकस्य पलार्द्धेन समन्वित त्रिफला–हरीतकीचूर्णं, विभीतकचूर्णम, आमलकचूर्णं, रामठ–शुद्धहिङ्गुचूर्णं, शुल्व–ताम्रभस्म, शटी–कर्चूरचूर्णं, त्रिकटु-शुण्ठीचूर्णं, मरिचचूर्णं, पिप्पलीचूर्णं, वन्हिभृष्ट टङ्कण, पत्र–तेजपत्रचूर्णं, त्वग्–दारुसिताचूर्णम् , एलावीजचूर्णं, तालीशपत्रचूर्णं, जातीफलचूर्णं, लवङ्गचूर्णं, यमानीचूर्णं, जीरकचूर्णम् , धान्यकचूर्णञ्च प्रत्येक तोलकैक समादाय पूर्वं पारदगन्धकयो कज्जलीं

कृत्वा शेषद्रव्याणि सम्मेल्य जलेन सह दृढ पिष्ट्वा च माषकमेता वटीश्चरेत् । प्रत्यहमेकैका इय शूलवज्रिणी वटिका छागीदुग्धानुपानेन भक्षिता अष्टविध शूलं, प्लीहवृद्धिं गुल्मम्, उदररोग (विशेषेण जलोदरम्), अम्लपित्तम्, आमवात, पाण्डुरोग, कामला, शोथ, गलग्रह (गलसन्निकटधातुवृद्धया गलावरोधम्), श्लीपद, भगन्दरञ्च विनाशयति, तथा वृद्धबालकरोति वृद्धपुरुषं शक्तियुक्त करोति, मन्दाग्नेः पाचकशक्तेर्दीपिका च वर्त्तते । "रसगन्धकलौहाना पलार्द्धेन समन्वितम्" इत्यत्र "रसगन्धकलौहात्र प्रत्येकञ्च पलार्द्धकम्" इति "पलार्द्धं लौहमभ्रञ्च कर्षञ्च रसगन्धकम्" इति च पाठान्तरद्वय दृश्यते, एव "शुल्वम्" इत्यत्र "शुण्ठी" इति पाठान्तरम् ॥ ४६–५० ॥

त्रिपुरभैरवो रस —

**भागो रसस्याश्महेम्नः भागो ग्राह्योऽतियत्नतः ।**
**तयोर्द्वादशभागानि ताम्रपत्राणि लेपयेत् ॥ ५१ ॥**
**पचेत् शूलहरः सूतो भवेत् त्रिपुरभैरवः ।**
**माषो मध्वाज्यसंयुक्तो देयोऽस्य परिणामजे ।**
**अन्ये त्वेरण्डतैलेन हिङ्गुत्रययुतो रसः ॥ ५२ ॥**

अथ त्रिपुरभैरवरसनिर्माणमाह भाग इत्यादि—रसस्य शुद्धपारदस्य (१भाग), अश्महेम्न –शुद्धगन्धकस्य (१भाग), उभयो खल्वे कज्जलीं कृत्वा द्वादशभागानि शुद्धताम्रपत्राणि कज्जलिकया लिम्पेत् ( वस्तुत पूर्वं ताम्रस्य तनुपत्राणि खल्वे निक्षिप्य पारदेन सह मर्दयेत्, पारदस्य ताम्रपत्रोपरि जाते सम्यक् लेपे पृथक् खल्वे घृतेन सह गन्धक पिष्ट्वा तेन सञ्जातपारदस्तराणा ताम्रपत्राणामुपरि लेप कृत्वा शरावसम्पुट कृत्वा वालुकायन्त्रे पचेत्, इति साधु पन्था ) तत शरावसम्पुट कृत्वा वालुकायन्त्रे पचेत् । स्वाङ्गशीतमुद्धृत्य खल्वे सञ्चूर्ण्य काचपात्रे स्थापयेत् । अय त्रिपुरभैरवरसो माषमित (रक्तिमित) घृतमधुभ्या सह परिणामशूले प्रयोक्तव्य । अन्ये–वातजन्यान्यरोगे हिङ्गुत्रययुत इति त्रिरक्तिमितशुद्धहिङ्गुचूर्णेन (अथवा हिङ्गुचूर्णेन त्रिकत्रयचूर्णेन च सह) तथा एरण्डतैलेन च सह अय रस प्रयोक्तव्य ॥५१–५२॥

अग्निमुखो रस —

**रसबलिगगनार्कं वेतसाम्लं विषं स्यात्**

सवरमिह पृथक् स्याद् भावयेद् घस्रमेतैः।
कनकभुजगवल्ली-कण्टकारीजयाऽद्भिः
कमलसलिलवासा-मुष्टिवज्रयम्बुपूरैः ॥ ५३ ॥
अरुणसदृशपाकैर्मातुलुङ्गैश्च योज्यः
पटुगण इह तुल्यो भावऽयेदार्द्रकाद्भिः ।
दहनवदननाम्ना वल्लमात्रो निहन्ति
प्रबलसकलशूलं तद्विकारानशेषान् ॥ ५४ ॥

अथाग्निमुखरसनिर्माणमाह रसेत्यादि—रस –शुद्धपारद , वलि –शुद्धगन्धक, गगनम्–अभ्रकभस्म, अर्कस्ताम्रभस्म, वेतसाम्लमम्लवेतसचूर्ण, विष–शुद्धवत्सनाभ-चूर्ण, सवरमिति, हरीतकी विभीतकामलकचूर्णसहित प्रत्येक पृथक् २ तोलकैकं समादाय पूर्व रसगन्धकयो कज्जली कृत्वा शेषद्रव्याणि सम्मेल्य कनक–धुस्तूर,भुज-गवल्ली—ताम्बूलपत्राणि, कण्टकारी–क्षुद्रा ( छोटोकटेरी ), जया—भङ्गा, एतेषा स्वरसै क्वाथैर्वा दिनमेक पृथक् २ क्रमश सम्यगाप्लाव्य विमर्दयेत् । ततस्तत्र कमलपत्रचूर्ण, सलिल—वालकचूर्ण, वासा—वासकचूर्ण, मुष्टि —शुद्धकुचेलकचूर्ण, वज्र्यम्बु–शुद्धस्नुहीक्षीरं, पुर –शुद्धगुग्गुलु , पटुगण –पञ्चलवणानि । एतेषां प्रत्येकं तोलकैकमितं निक्षिप्य विमर्द च अरुणसदृशपाकैरिति परिपक्वै र्मातुलुङ्ग–मातुलुङ्गनि-म्बुकरसै तथा आर्द्रकस्वरसैश्च क्रमश सर्वद्रव्य सम्यगाप्लाव्य दृढ विमर्दयेत् । दहनमग्निर्वदन मुख तयोर्मिलितेन"अग्निमुखेन' नाम्ना प्रसिद्धोऽय रसो वल्लमित प्रत्यह सेवित प्रबलवेदन सकलशूल तथा तेन सह जातान् सकलविकाराश्च निहन्ति । पुरशब्दस्य कोषादिप्रामाण्याद् ह्रस्वत्वेऽपि छन्दोऽनुरोधाद्दीर्घत्व तथा च छन्दोवत् कवय कुर्वन्तीति प्रसिद्धि ॥ ५३–५४ ॥

शूलगजकेशरी रस —

शुद्धसूतं द्विधा गन्ध यामैकं मर्दयेद् दृढम् ।
द्वयोस्तुल्यं शुद्धताम्रं सम्पुटे सन्निवेशयेत् ॥ ५५ ॥
ऊर्द्धाधो लवणं दत्त्वा मृद्भाण्डे स्थापयेद् भिषक् ।
रुद्ध्वा गजपुटं दत्त्वा स्वाङ्गशीतं समुद्धरेत् ॥ ५६ ॥
सम्पुटं चूर्णयेत् श्लक्ष्णं पर्णखण्डे द्विगुञ्जकम् ।

भक्षयेत् सर्वशूलार्त्तो सशुण्ठीहिङ्गुजीरकम् ॥ ५७ ॥
वचामरिचजं चूर्णं कर्षमुष्णजलैः पिबेत् ।
असाध्यं नाशयेत् शूलं श्रीशूलगजकेशरी ॥ ५८ ॥

अथ शूलगजकेशरीरसनिर्माणमाह शुद्धसूतमित्यादि—तोलकमितं शुद्धसूतं—शुद्धपारदं, द्विधा—पारदेन द्विगुणं—द्वितोलकं शुद्धगन्धकं च समादाय खल्वे यामैकं दृढं विमर्द्य यथोक्तलक्षणां कज्जलीं कुर्यात्, ततः पारदगन्धकयोस्तुल्यं तोलकत्रयं तनुपत्रस्वरूपं शुद्धताम्रं कज्जल्यां निक्षिप्य दृढं मर्द्दयेत्, ततश्च शरावसम्पुटं कृत्वा लवणपूरितार्द्धभागस्य बृहद्भाण्डस्य मध्ये सम्पुटं निधाय सम्पुटोपरि वालुकां प्रपूरयेत्, तदनु भाण्डस्य मुखं दीर्घशरावेणाच्छाद्य सन्धिबन्धनं कृत्वा दिनैकं तीव्राग्निना पचेत् । स्वाङ्गशीतमौषधमुद्धृत्य खल्वे सञ्चूर्ण्य काचपात्रे स्थापयेत् । अयं रसः प्रत्यहं द्विरक्तिमितस्ताम्बूलपत्ररसेन ताम्बूलवीटिकया वा सह सेवितव्यः स्तदुपरि च शुण्ठीहिङ्गुवचामरिचानां मिलितं कर्षमितं चूर्णमुष्णोदके सम्मेल्य पिबेत् । उपर्युक्तविधिपूर्वकं नित्यं सेवितोऽयं रसः सर्वविधं शूलं नाशयति ॥ ५५–५८ ॥

त्रिगुणाख्यो रसः—

टङ्कणं हारिणं शृङ्गं स्वर्णं गन्धः मृतं रसम् ।
दिनैकमार्द्रकद्रावैर्मर्द्यं रुद्ध्वा पुटे पचेत् ॥ ५९ ॥
त्रिगुणाख्यो रसो नाम्ना माषैकं मधुसर्पिषा ।
सैन्धवं जीरकं हिङ्गु मध्वाज्याभ्यां लिहेदनु ।
पक्तिशूलहरः ख्यातो याममात्रान्न संशयः ॥ ६० ॥

अथ त्रिगुणाख्यरसनिर्माणमाह टङ्कणमित्यादि—शुद्धटङ्कणं, हारिणं शृङ्गं—मृगशृङ्गभस्म, स्वर्णं—स्वर्णभस्म, शुद्धगन्धकं, मृतं रसं—रससिन्दूरं, प्रत्येकं समं समादाय दिनमेकमार्द्रकस्वरसेनाप्लाव्य विमर्द्दयेत् । ततश्च सम्पुटं कृत्वा गजपुटे पचेत् । अयं त्रिगुणाख्यो रसः प्रत्यहं माषकैकमितो घृतमधुभ्यां सह सेवितव्यस्तदुपरि च हिङ्गुजीरकसैन्धवलवणानां कर्षमितं चूर्णं मध्वाज्याभ्यां लिह्यात्, अनेन विधिना सेवितोऽयं रसो याममात्रात् पक्तिशूल–परिणामशूलं निहन्ति ॥५९–६०॥

शूलहरणयोगः—

हरीतकी त्रिकटुकं कुचिलं हिङ्गु सैन्धवम् ।

गन्धकश्च समं सर्वं वटीं कुर्य्यात् सुखावहाम् ॥ ६१ ॥
लघुकोलप्रमाणान्तु शस्यते प्रातरेव हि ।
एकैका वटिका ग्राह्या गुल्मशूलविनाशिनी ॥ ६२ ॥
ग्रहण्यामतिसारे च साजीर्णे मन्दपावके ।
योजयेदुष्णपयसा सुखमाप्नोति निश्चितम् ।
सुवर्णञ्च भवेत् देहं सदोत्साहयुतं नृणाम् ॥ ६३ ॥

अथ शूलहरणयोगमाह हरीतकीत्यादि—हरीतकीचूर्णं त्रिकटुकं-शुण्ठीचूर्णं, मरिचचूर्णं, पिप्पलीचूर्णं, कुचिल-शुद्धकुचेलकचूर्णं, शुद्धहिङ्गुचूर्णं, सैन्धवलवण, शुद्ध-गन्धक । एतेषां प्रत्येकं समं सममादाय खल्वे पिष्ट्वा लघुकोलप्रमाणा वटी श्चरेत् । अस्य प्रत्यह प्रभाते, एकैका वटी उष्णदुग्धेन जलेन वा सह सेविता गुल्मं, शूलं, अतीसारम , अजीर्णम् , अग्निमान्द्यञ्च विनिहन्ति । अस्य सेवनेन नृणा देह शोभ-नवर्णयुक्तं, उत्साहशीलञ्च भवति ॥ ६१-६३ ॥

शर्करालौहम्—

त्रिफलायास्तथा धात्र्याश्चूर्णं वा काललौहजम् ।
शर्कराचूर्णसंयुक्तं सर्वशूलेषु योजयेत् ॥ ६४ ॥

अथ शर्करालौहयोगमाह त्रिफलाया इत्यादि—त्रिफलाया प्रत्येकस्य चूर्णं तो-लकमितं तथा धात्र्याश्चूर्णमामलकचूर्णं तोलकमित, तोलकमिता शर्करा, सर्वद्रव्य-समञ्च काललौहज-काललौहभस्म, एतत् सर्वं खल्वे विमर्द्य काचपात्रे स्थापयेत् । लौहमिद चतुर्गुञ्जमित मधुना सह सर्वशूलेषु प्रयोक्तव्यम् ॥

काललौहलक्षणं यथा—

नीलकृष्णप्रभं सान्द्रं मसृणं गुरु भासुरम् । लौहघातेऽप्यभङ्गात्मधारं कालायसं मतम् ॥ ६४

शङ्खादिचूर्णम्—

शङ्खचूर्णस्य च पलं पञ्चैव लवणानि च ।
क्षारं टङ्कणकं जाती शतपुष्पा यमानिका ॥ ६५ ॥
हिङ्गु त्रिकटुकञ्चैव सर्वमेकत्र चूर्णयेत ।
आमवातं यकृच्छूलं परिणामसमुद्भवम् ।
अन्नद्रवकृतं शूलं शूलञ्चैव त्रिदोषजम् ॥ ६६ ॥

अथ शङ्खादिचूर्णमाह खट्खेत्यादि—शङ्खचूर्णस्य-शङ्खभस्मन (१पलं), सैन्धवलवण (१प०), सौवर्च्चलल० (१प०), विड़लवण (१प०), सामुद्रलवण (१प०) रोमकलवण ( पल) क्षार यवक्षार (१प०) शुद्धटङ्कण (१प०) जातीफलचूर्ण (१प०), शतपुष्पाचूर्ण (१प०), यमानीचूर्ण (१प०) भृष्टहिङ्गुचूर्ण, (१प०), त्रिकटुक-शुण्ठीचूर्ण (१प०), मरिचचूर्ण (१प०), पिप्पलीचूर्ण (१प०) सर्वमेकत्र सञ्चूर्ण्य काचपात्रे स्थापयेत्। इद शङ्खादिचूर्णं माषकैकमित प्रत्यह मध्वाज्याभ्या सह सेवित यकृच्छूलम्, आमवात, परिणामसमुत्थ शूलम्, अन्नद्रवकृत शूलं, त्रिदोषज शूलञ्च निहन्ति ॥ ६५–६६ ॥

अपथ्यानि—

**व्यायामं मैथुनं मद्य लवणानि कटूनि च ।**
**वेगरोधं शुच क्रोधं वर्जयेत् शूलवान् नरः ॥ ६७ ॥**

( इति शूलरोग चिकित्सा )

अथ शूले वर्जनीयमाह–व्यायामं ( शूलवेगसमये विशेषतया वर्ज्यम्) मैथुनं, मद्य, लवणानि, कटूनि, अधारणीयमलमूत्रादीना वेगरोध, शुचं क्रोधञ्च शूलवान् नरस्त्यजेत् ॥ ६७ ॥

अथ पक्तिशूलेऽपथ्यमाह—

माषादिशिम्बीधान्यानि मद्यानि वनिता हिमम्। आतप जागर क्रोधं शुचं सन्धानमम्लकम्॥
वर्जयेत् पक्तिशूलार्त्तस्तथाऽजीर्ण तिलानपि ॥ १ ॥

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृताया गूढार्थ सन्दीपकाव्याख्याया शूलचिकित्सा ॥

---

## अथोदावर्त्तानाह-चिकित्सा ।

वैद्यनाथवटी

**पथ्या त्रिकटु सूतञ्च द्विगुणं कानकं तथा ।**
**मन्युमणीरसैरम्ल-लोणिकाया रसैः कृता ॥ १ ॥**
**गुडिकोदरगुल्मादि-पाण्डवामयविनाशिनी ।**

**क्रिमिकुष्ठगात्रकण्डू पिडकांश्च–निहन्ति हि।**
**गुडी सिद्धफला चेयं वैद्यनाथेन भाषिता ॥ २ ॥**

उदावर्त्तेऽपि शूल भवतीतिशूलरोगसाधर्म्याच्छूलचिकित्सानन्तरमुदावर्त्तचिकित्सा प्रारभ्यते, तत्र पूर्वं वैद्यनाथवटीनिर्माणमाह पथ्येत्यादि—पथ्या–हरीतकीचूर्णं (१तो०), त्रिकटु—शुण्ठीचूर्ण (१तो०), मरिचचूर्ण (१तो०), पिप्पलीचूर्ण (१तो०), सूत–रससिन्दूर (१तो०), कानकं–शुद्धजयपालबीजचूर्णं द्विगुणम् (२तो०), एतत् स खल्वे सूक्ष्मं पिष्ट्वा मन्युमणोरसैं–मण्डूकपर्णास्वरसै सम्यगाप्लाव्य मर्द्दयेत्, ततश्च अम्ललोणिकाया श्चाङ्गेर्या स्वरसैस्सह दृढ विमर्द्य माषकैकमिता वटीश्चरेत्। इयं गुडिका प्रत्यह सेविता उदरगुल्मपाण्डुक्रिमिकुष्ठगात्रकण्डूपिडकान्निहन्ति, श्रीवैद्यनाथेन भाषिता इय गुडिका पूर्वोक्तरोगाञ्नि सशय निहन्ति। कानकमिति शुद्धधुस्तूरबीजचूर्णम्वा ज्ञेयम् ॥ १–२ ॥

बृहत् इच्छाभेदी रस —

**शुद्धं पारदटङ्कण समरिच गन्धाश्मतुल्य त्रिवृत्**
**विश्वा च द्विगुणा ततो नवगुणं जैपालचूर्णं क्षिपेत्।**
**खल्वे दण्डयुगं विमर्द्य विधिना चार्कस्य पत्रे ततः**
**स्वेदं गोमयवह्निना च मृदुना स्वेच्छावशाद्भेदकः ॥ ३ ॥**
**गुञ्जैकप्रमितो रसो हिमजलैः संसेवितो रेचयेत्**
**यावन्नोष्णजलं पिबेदपि वर पथ्यञ्च दध्योदनम्।**
**आमं सर्वभव सुजीर्णमुदरं गुल्मं विशालं हरेत्**
**वह्नेर्दीप्तिकरो वलासहरणः सर्वामयध्वंसनः ॥ ४ ॥**

अथ बृहदिच्छाभेदीरसनिर्माणमाह शुद्धमित्यादि—शुद्धपारद (१तो०), शुद्धटङ्कण (१तो०), मरिचचूर्णं (१तो०), गन्धाश्म—शुद्धगन्धक (१तो०), त्रिवृन्मूलचूर्णं (१तो०), द्विगुणा विश्वा—शुण्ठीचूर्ण (२तो०), शुद्धजयपालबीजचूर्णं च नवगुणं (९तो०), समादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य द्विदण्डपर्यन्त–प्रहरद्वयपर्यन्तमर्कपत्रस्वरसेन विमर्द्यार्कपत्रपुटकेन विधिपूर्वकं सवेष्ट्य मृदुगोमयाग्नौ संस्वेद्य गुञ्जाप्रमाणा वटी श्चरेत्। अस्य स्वेच्छापूर्वकभेदकस्य रसस्य प्रत्यहमेकैका वटी हिमजलै–शीतलजलै सेविता विरेचयति, तथा मुहुर्मुहु

खल्वं ? शीतलजलं यावद्वारं पिबति तावद्वारं विरेचयति । सम्यग्रेचनं ज्ञात्वा स्वल्प-मुष्णोदकं पिबेत्, विरेचनानन्तरं च दधियुक्तमोदनं पथ्ये ग्राह्यम् । अयमिच्छाभेदी-रसो यथाव्याध्यनुपानपूर्वकं सेवित सर्वदोपभवमामं, चिरकालीनमजीर्णरोगम्, उद-ररोग, गुल्म, वलास-कफजन्यरोग, सर्वामयाश्च निहन्ति, वन्हे-पाचकाग्ने दीप्तिं च करोति ॥ ३-४ ॥

योगवाहिरसादिप्रयोगोपदेश —

**योगवाहिरसान् सर्वान् रेचके कथितानपि ।**
**प्लीहाधिकारे कथितं रसेन्द्रं वारिशोषणम् ।**
**उदावर्त्ते तथाऽऽनाहे प्रयुञ्जीतानुपानत. ॥ ५ ॥**

अथान्ययोगवाहिरसादिप्रयोगोपदेशमाह योगेत्यादि—विरेकाधिकारे वर्णितान् सर्वान् योगवाहिरसान् तथा प्लीहाधिकारे कथितं वारिशोषणरसेन्द्रञ्च उदावर्त्ते, आनाहरोगे च योग्यानुपानैः सह प्रयोजयेत् ॥ ५ ॥

लौहप्रयोग —

**पुटितं भावितं लौहं त्रिवृत्क्वाथैरनेकश ।**
**उदावर्त्तहरं युञ्ज्यात् ससितं वा यथाबलम् ॥ ६ ॥**

अथ लौहप्रयोगमाह पुटितमित्यादि—त्रिवृत्क्वाथैरनेकवारं भावयित्वा बहुश पुटितं लौहभस्म ससित-शर्करया सह उदावर्त्तनाशार्थं प्रयोजयेत् ॥ ६ ॥

उदरोक्तरसप्रयोगोपदेश —

**उदावर्त्ते प्रयोक्तव्या उदरोक्ता रसा खलु ॥ ७ ॥**

[ इत्युदावर्त्तानाह-चिकित्सा ]

अथ उदरोक्तरसप्रयोगोपदेशमाह उदावर्त्तेत्यादि—एवमुदरचिकित्सायां प्रोक्ता रसा अपि अनुपानभेदैरुदावर्त्ते प्रयोक्तव्या ॥ ७ ॥

अथ पथ्यापथ्यानि—

विष्टम्भीनि विरुद्धानि कषायाणि गुरूणि च । उदावर्त्ते प्रयत्नेन वर्जयेन्मतिमान्नर ॥१॥
उदावर्त्ते हितं सर्वं पाचनं लङ्घनं तथा । आनाहेऽपि यथायोग्यं सेवयेन्मतिमान्नरः ॥२॥

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृतायां गूढार्थसन्दीपिकाव्याख्यायामुदावर्त्तानाहचिकित्सा ॥

# अथ गुल्मरोग-चिकित्सा ।

महानाराचरस —

**ताम्रं सूतं समं गन्धं जैपालञ्च फलत्रिकम् ।**
**कटुकं पेषयेत् क्षारैर्निष्कं गुल्महरं पिबेत् ।**
**उष्णोदक पिबेच्चानु नाराचोऽयं महारसः ॥ १ ॥**

गुल्मेऽप्यानाहो भवतीत्यानाहचिकित्सानन्तरं गुल्मचिकित्सा प्रारभ्यते तत्र पूर्वं क्रियाक्रम ।

लघन दोपनं स्निग्धमुष्ण वातानुलोमनम् । बृहणं यद्भवेत् सर्व तद्धितं सर्वगुल्मिनाम् ॥
स्नेहन स्वेदनं चैव निरूहमनुवासनम् । विरेकवमने चाभे लघन बृहणं तथा ॥
शमनश्चावसेकश्च शोणितस्याग्निकर्म च । कारयेदितिगुल्माना यथारम्भ चिकित्सितम् ॥ इति ॥

अथ महानाराचरसनिर्माणमाह ताम्रमित्यादि—ताम्र–ताम्रभस्म, सूत–शुद्धपारदं, शुद्धगन्धकं, जैपालवीजचूर्णं, फलत्रिकं–त्रिफलाचूर्णं, कटुक–कुटकीचूर्णं, क्षारं –स्वर्जिटङ्कणयवक्षारकादिभिस्सह सर्वेषा समं २ भागमादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य सम्यक् श्लक्ष्णं पिष्ट्वा च काचपात्रे स्थापयेत् । अयं नाराचरसो निष्कमित उष्णोदकानुपानेन सह सेवितो गुल्मं विनाशयति । अस्य रसस्य थथाग्निबल मात्रा कार्या ॥ १ ॥

पञ्चाननरस —

**पारद शिखितुत्थञ्च गन्धजैपालपिप्पलीः ।**
**आरग्वधफलान्मज्जां वज्रीक्षीरेण पेषयेत् ॥ २ ॥**
**धात्रीरसयुतं खादेद्रक्तगुल्मप्रशान्तये ।**
**चिञ्चाफलरसञ्चानु पथ्यं दध्योदनं हितम् ॥ ३ ॥**

अथ पञ्चाननरसनिर्माणमाह पारदमित्यादि—शुद्धपारद, शिखितुत्थ–शुद्धतुत्थकचूर्णं, शुद्धगन्धक, शुद्धजयपालवीजचूर्णं, पिप्पलीचूर्णम्, आरग्वधफलात्–कर्णिकारफलो -मज्जाचूर्णम्, एतेषा प्रत्येक समं सममादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेलय शुद्धेन वज्रीक्षीरेण सम्यगाप्लाव्य दृढं पिष्ट्वा सशोष्य च काचपात्रे स्थापयेत् । अय रस प्रत्यहं पञ्चरक्तिमितो धात्रीस्वरसेन सह रक्तगु-

ल्मप्रशान्तये भक्षयितव्य , तदुपरि च चिञ्चाफलरस पिबेत् । पथ्यञ्च जीर्णोषधे सति दध्योदन देयम् । वज्रीदुग्ध शुद्धमेव सर्वत्र ग्राह्य तस्माद् वज्रीदुग्धशोधनविधिर्यथा-
पलद्वय सुधादुग्ध तोलकद्वयसम्मिते । चिञ्चादलद्रवे वस्त्रपूते घर्मे विशोषयेत् ॥
द्रव विशुष्कं विज्ञाय सुधादुग्ध समाहरेत् । तत सर्वत्र योगेषु प्रयुञ्जीत भिषग्वर ॥इति।

अयं पञ्चाननरसो रक्तगुल्मं विनाशयति। रक्तगुल्मस्तु स्त्रीणामेव भवति तथाहि चरके—"शोणितगुल्मस्तु खलु स्त्रिया एव भवति नतु पुरुषस्य" इति चरकनिदान स्थान, तन्निर्वृत्तिस्तथा चिकित्सोपदेशश्च यथा—

नवप्रसूताऽहितभोजना या या चामगर्भं विसृजेदृतौ वा ।
वायुर्हि तस्या परिगृह्य रक्त करोति गुल्म सरुज सदाहम् ॥
पैत्तस्य लिङ्गेन समानलिङ्ग विशेषण चाप्यपरं निबोध ।
य स्पन्दते पिण्डित एव नाङ्गैश्चिरात् स शूल समगर्भलिङ्ग ।
स रौधिर स्त्रीभव एव गुल्मो मासे व्यतीते दशमे चिकित्स्य ॥

अन्यदपि—

ऋतावनाहारतया भयेन विरूक्षणैर्वेगविनिग्रहैश्च ।
संस्तम्भनोल्लेखनयोनिदोषैर्गुल्म स्त्रिय रक्तभवोऽभ्युपैति ॥
रौधिरस्य तु गुल्मस्य गर्भकालव्यतिक्रमे । स्निग्धस्विन्नशरीरायै दद्यात् स्निग्ध विरेचनम्॥

इति सर्वं विविच्य रक्तगुल्मे चिकित्सा विधेया ॥ २—३ ॥

गुल्मवज्रिणी वटिका—

**रसगन्धकताम्रञ्च कांस्य टङ्कणतालकम् ।**
**प्रत्येक पलिक ग्राह्यं मर्दयेदतियत्नत ॥ ४ ॥**
**तद् यथाऽग्निबल खादेद्रक्तगुल्मप्रशान्तये ।**
**निर्मिता नित्यनाथेन वटिका गुल्मवज्रिणी ॥ ५ ॥**
**गुल्मप्लीहोदराष्ठीला-यकृदानाहनाशिनी ।**
**कामलापाण्डुरोगघ्नी ज्वरशूलविनाशिनी ॥ ६ ॥**

अथ गुल्मवज्रिणीवटिकानिर्माणमाह रसेत्यादि—रस —शुद्धपारद , शुद्धगन्धक , ताम्रभस्म, कांस्यभस्म, शुद्धटङ्कण, शुद्धहरितालम्, एतेषा प्रत्येक पलमितं समादाय । पूर्वं पारदगन्धकयो कज्जली कृत्वा शेषद्रव्याण सम्मेल्य दृढ सम्पेष्य जलेन

( त्रिवृन्मूलक्काथेन वा ) सह पिष्ट्वा द्विरक्तिमिता वटी कृत्वा सशोष्य च काचपात्रे स्थापयेत् । इयं वटिका यथाग्निबल रक्तगुल्मशान्त्यर्थं प्रयोक्तव्या । इयं नित्यनाथेन निर्मिता गुल्मवज्रिणी वटिका यथान्यान्यनुपानैस्सह सेविता गुल्मं, प्लीहवृद्धिम्, उदररोगान्, अष्ठीलावृद्धिं, यकृद्वृद्धिम्, आनाह, कामला, पाण्डुरोगं, ज्वर, शूलञ्च विनाशयति ॥ ४–६ ॥

गुल्मकालानलो रस —

**सूतक लौहकं ताम्रं तालकं गन्धक समम् ।**
**तोलद्वयमित भागं यवक्षारञ्च तत्समम् ॥ ७ ॥**
**मुस्तकं मरिचं शुण्ठी पिप्पलीं गजपिप्पलीम् ।**
**हरीतकीं वचां कुष्ठ तोलैकं चूर्णयेद् बुधः ॥ ८ ॥**
**सर्वमेकीकृत पात्रे क्रियन्ते भावनास्ततः ।**
**पर्पटं मुस्तकं शुण्ठ्यपामार्ग पापचेलिमम् ॥ ९ ॥**
**तत्पुनश्चूर्णयेत् पश्चात् सर्वगुल्मनिवारणम् ।**
**गुञ्जाचतुष्टयं खादेद्धरीतक्यनुपानत. ॥ १० ॥**
**वातिक पैत्तिकं गुल्मं तथा चैव त्रिदोषजम् ।**
**द्वन्द्वजं श्लैष्मिकं हन्ति वातगुल्मं विशेषतः ।**
**गुल्मकालानलो नाम सर्वगुल्मकुलान्तकृत् ॥ ११ ॥**

अथ गुल्मकालानलरसनिर्माणमाह सूतकमित्यादि–सूतकं–शुद्धपारदं, (२तो०), लौहकं–लौहभस्म (२तो०), ताम्रभस्म (२तो०), शुद्धतालकं (२तो०), शुद्धगन्धकं (२तो०), "यवक्षारञ्च तत् समम्" इति सर्वद्रव्यसम–द्वादशतोलकमित्यर्थः ( तोलकद्वयमेवेति केचित् ), तथा मुस्तकचूर्णं, मरिचचूर्णं, शुण्ठीचूर्णं, पिप्पलीचूर्णं, गजपिप्पलीचूर्णं, हरीतकीचूर्णं, वचाचूर्णं, कुष्ठचूर्णञ्च प्रत्येकं तोलकैक समादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य पर्पटस्वरसेन, मुस्तकक्काथेन, शुण्ठीकाथेन, अपामार्गकाथेन, तथा वातगुल्मे विशेषत प्रचरतीति पापचेलिका पाठा तत्क्काथेन च क्रमश पृथक् २ सप्त २ वारं भावयित्वा दृढ विमर्द्य संशोष्य सञ्चूर्ण्य च काचपात्रे स्थापयेत् । अय गुल्मकालानलरस प्रत्यह गुञ्जाचतुष्टयमितो हरीतकीचूर्णेन, स्वरसेन, तस्या क्काथेन वा सह सेवितो वातिकगुल्मं, पैत्तिकगुल्म, त्रिदोषोत्थ गुल्म, द्वन्द्वजगुल्मं, श्लैष्मिकगुल्म, विशेषेण वातगुल्मञ्च विनाशयति । "लोहकम्"

इत्यत्र "टङ्कणम्" इति तथा "पर्पट मुस्तकं शुण्ठ्यपामार्गं पापचेलिकम्" इत्यत्र "पर्पटं हस्तिशुण्ठी च ह्यपामार्गं पटोलकम्" इति च पाठान्तरम् ॥ ७-११ ॥

वडवानलो रस —

**पारद गन्धक ताप्य यवक्षारार्कमभ्रकम् ।**
**अग्न्यम्बुनाऽहिपत्रेण संमर्द्याथ द्विगुञ्जकम् ॥ १२ ॥**
**भक्षयेत् पर्णखण्डेन हिङ्गुसिन्धुसुवर्चलैः ।**
**दाडिमश्च तथा विल्व कार्षिक भृङ्गजैर्द्रवैः ॥ १३ ॥**
**पिष्ट्वा तु सुरया दृक्त देयं स्यादनुपानकम् ।**
**सर्वगुल्मं निहन्त्याशु शूलश्च परिणामजम् ॥ १४ ॥**

अथ वडवानलरसनिर्माणमाह पारदमित्यादि—पारदं-शुद्धपारद, शुद्धगन्धक ताप्य-स्वर्णमाक्षिकभस्म, यवक्षार , अर्क-ताम्रभस्म, अभ्रकमभ्रकभस्म, एतेषा प्रत्येकं सम सममादाय पूर्वं पारदगन्धकय कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य अग्न्यम्बुना-चित्रकस्वरसेन, अहिपत्रेण-नागवल्लीपत्रस्वरसेन च क्रमश पृथक् ७ सप्तवार भावयित्वा द्विगुञ्जप्रमाणा वटी कृत्वा काचपात्रे स्थापयेत् । अय रस पर्णखण्डेन सह भक्षयेत् , तदुपरान्ते च वह्निभृष्ट हिङ्गुचूर्णं (१तो०),सिन्धु -सैन्धवलवण (१तो०), सुवर्च्चललवण (१तो०) दाडिमबीजचूर्णं ( १ तो० ), शुष्कविल्वफलमज्जाचूर्णं (१ तो०) समादाय खल्वे च सञ्चूर्ण्य भृङ्गराजरसेन सह पिष्ट्वा सशोष्य च काचपात्रे स्थापयेत् । चूर्णमिदं कर्षमित सुरया सह-वडवानलरससेवनान्ते भक्षयेत् । इत्थ सेवितोऽय रस सर्वगुल्म, परिणामज शूलञ्च विनिहन्ति । सुरास्वरूप यथा—परिपक्वान्नसन्धानसमुत्पन्ना सुरां जगु ॥ १२-१४ ॥

महानाराचरस —

**सूतटङ्कणतुल्यांश मरिचं सूततुल्यकम् ।**
**गन्धक पिप्पलीशुण्ठ्यो द्वौ द्वौ भागौ विमिश्रयेत् ॥ १५ ॥**
**सर्वतुल्य क्षिपेद् दन्ती-बीजं निस्तुषमेव च ।**
**द्विगुञ्ज रेचन सिद्ध नाराचाख्यो महारस ॥ १६ ॥**

अथ महानाराचरसनिर्माणमाह सूतेत्यादि—सूत -शुद्धपारद (१तो०), शुद्ध-

टङ्कणं (१तो०), मरिचचूर्णं सूततुल्यं (१तो०), शुद्धगन्धकं (२तो०), पिप्पलीचूर्णं (२तो०), शुण्ठीचूर्णं (२तो०), सर्वतुल्यं निस्तुष दन्तीबीजमिति-सर्वद्रव्यसमं (९तो०), शुद्धजयपालबीजचूर्णं समादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य दृढ विचूर्ण्य च काचपात्रे स्थापयेत् । अथ नाराचसञ्ज्ञको महारसो द्विगुञ्जमित सेवितो विरेचयति ॥ १५-१६ ॥

विद्याधररस —

पारदं गन्धकं तालं ताप्यं स्वर्णं मनःशिलाम् ।
कृष्णाक्वाथैः स्नुहीक्षीरैर्दिनैकं मर्दयेत् सुधीः ॥ १७ ॥
निष्कार्द्धं श्लैष्मिकं गुल्मं हन्ति मूत्रानुपानतः ।
रसो विद्याधरो नाम गोदुग्धञ्च पिबेदनु ॥ १८ ॥

अथ विद्याधररसनिर्माणमाह पारदमित्यादि—शुद्धपारद, शुद्धगन्धकं, शुद्धं ताल ताप्यं-स्वर्णमाक्षिकभस्म, स्वर्णभस्म, शुद्धमन शिलाचूर्णञ्च प्रत्येकं समं सममादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य सघोट्य च कृष्णाक्वाथै - पिप्पलीक्वाथै, शुद्धस्नुहीक्षारैश्च क्रमश पृथक् २ सम्यगाप्लाव्य दिनैकं विमर्द्य निष्कप्रमाणा वटीश्चरेत् । अथ विद्याधररसो द्विगुञ्जप्रमाणादारभ्य यथाग्निबल निष्कमित. प्रत्यह गोमूत्रानुपानेन सह सेवित श्लैष्मिक गुल्म निहन्ति । औषधजीर्णानन्तर गोदुग्ध पथ्ये पिबेत् । "ताप्य स्वर्णम्" इत्यत्र "तुत्थ ताम्रम्" इति पाठान्तरम् ॥ १७-१८ ॥

महागुल्मकालानलो रस —

गन्धकं तालकं ताम्रं तथैव तीक्ष्णलौहकम् ।
समांशं मर्दयेत् गाढं कन्यानीरेण यत्नतः ॥ १९ ॥
सम्पुटं कारयेत् पश्चात् सन्धिलेपञ्च कारयेत् ।
ततो गजपुटं दत्त्वा स्वाङ्गशीतं समुद्धरेत् ॥ २० ॥
द्विगुञ्जां भक्षयेत् गुल्मी शृङ्गवेरानुपानतः ।
सर्वगुल्मं निहन्त्याशु भास्करस्तिमिरं यथा ॥ २१ ॥

अथ महागुल्मकालानलरसनिर्माणमाह गन्धकमित्यादि—शुद्धगन्धकं, शुद्धतालकं, ताम्रभस्म, तीक्ष्णलौहभस्म, एतेषा प्रत्येकं समं सममादाय खल्वे निक्षिप्य

श्लक्ष्ण विचूर्ण्य च कन्यानीरेण–घृतकुमारीस्वरसेन दृढ विमर्द्य चक्रिकाश्च कृत्वा शरावद्वये सम्पुटं विधाय स्निग्धमृदा सन्धिबन्धन कृत्वा सशोष्य च गजपुटे पचेत्। अथ रसो द्विगुञ्जमित शृङ्गवेरानुपानत –आर्द्रकस्वरसानुपानेन सह सेवित सर्व-गुल्मं शीघ्रं निहन्ति यथा सूर्यस्तिमिर हन्ति ॥ १९–२१ ॥

अभयावटी—

अभया मरिचं कृष्णा टङ्कणञ्च समांशिकम् ।
सर्वचूर्णसमञ्चैव दद्यात् कानकजं फलम् ॥ २२ ॥
स्नुहीक्षीरै वटी कार्य्या धीरैः स्विन्नकलायवत् ।
वटीद्वय शिवामेकां पिष्ट्वा चोष्णाम्बुना पिबेत् ॥ २३ ॥
उष्णाद्विरेचयेदेषा शीते स्वास्थ्यमुपैति च ।
जीर्णज्वर पाण्डुरोग प्लीहाष्ठीलोदराणि च ।
रक्तपित्ताम्लपित्तादि सर्वाजीर्णञ्च नाशयेत् ॥२४॥

अथ अभयावटीनिर्माणमाह अभयेत्यादि—अभयाचूर्णं–हरीतकीचूर्णं (१तो०), मरिचचूर्णं (१तो०), कृष्णा–पिप्पलीचूर्णं (१तो०), शुद्धटङ्कण (१तो०), सर्वचूर्णसम (४तो०) कानकज फल–शुद्धधुस्तूरबीजचूर्णं समादाय खल्वे श्लक्ष्ण पिष्ट्वा शुद्ध स्नुहीदुग्धेन सम्यगालोड्य स्विन्नकलायप्रमाणा –माषकैकमिता वटीश्चरेत् । अस्य योगस्य वटीद्वय खल्वे सञ्चूर्ण्य एका शिवा–हरीतकीञ्च जलेन सह चन्दनपङ्कवत्पाषाणे पिष्ट्वा तेन कल्केन सह उष्णोदकानुपानपूर्वकं ता भक्षयेत् । इत्थं सेवितेयं वटी विरेचयति, सम्यग् विरेचन ज्ञात्वा शीतोदकपानेन विरेकातिरेकं निरोधयेत् । तथैव वटी प्रत्यह सेविता जीर्णज्वर, पाण्डुरोग, प्लीहवृद्धिम्, उदरवृद्धिम्, अष्ठीला वृद्धि ( इन्लार्जमेण्ट आफ् दी प्रोस्टेट ), रक्तपित्तम् , अम्लपित्त, सर्वविधमजीर्णञ्च नाशयति ॥ २२–२४ ॥

गोपीजल —

जैपालाभ्रौ द्विको गन्धः शुण्ठी मरिचचित्रकम् ।
एकः सूत ससौभाग्यो गोपीजल इति स्मृतः ॥२५॥
शूलव्याध्याश्रयान् गुल्मान् कोष्ठादौ दश पैत्तिकान् ।
भगन्दरादिहृद्रोगान् नाशयेदेव भक्षणात् ॥ २६ ॥

अथ गोपीजलनिर्माणमाह जैपालेत्यादि—शुद्धजयपालवीजचूर्णं (८तो०), शुद्धगन्धक (२तो०), शुण्ठीचूर्णं (१तो०), मरिचचूर्णं (१तो०), चित्रकचूर्णं (१तो०), सूत -शुद्धपारद (१तो०), शुद्धसौभाग्यं-टङ्कण (१तो०) समादाय पूर्वं पारदगन्धकयो कज्जला कृत्वा शेषद्रव्याणि सम्मेल्य दृढ विमर्द्य च काचपात्रे स्थापयेत् । अथ गोपीजलरस प्रत्यह द्विरक्तिमितो यथाव्याध्यनुपानपूर्वक सेवित शूलव्याध्याश्रयान् शूलाद्युपद्रवजुष्टान् गुल्मान्, कोष्ठभवान् पित्तजन्यदशरोगान्, भगन्दर, हृदयरोगाश्च शीघ्र निहन्ति ॥ २५-२६ ॥

काङ्कायनगुडिका—

शटीं पुष्करमूलञ्च दन्तीं चित्रकमाढकीम् ।
शृङ्गवेर वचाञ्चैव पलिकानि समाहरेत् ॥ २७ ॥
त्रिवृतायाः पलञ्चैकं कुर्यात् त्रीणि च हिंगुनः ।
यवक्षारात् पले द्वे च द्वे पले चाम्लवेतसात् ॥२८॥
यमान्यजाजी मरिच धान्यकञ्चेति कार्षिकम् ।
उपकुञ्च्यजमोदाभ्यां पृथगर्द्धपल भवेत् ॥ २९ ॥
मातुलुङ्गरसेनैव गुडिकां कारयेद्भिषक् ।
तासामेकां पिबेत् द्वे वा तिस्रो वाऽथ सुखाम्बुना ॥ ३० ॥
अम्लैर्मद्यैश्च यूषैश्च घृतेन पयसाऽथवा ।
एषा काङ्कायनेनोक्ता गुडिका गुल्मनाशिनी ॥ ३१ ॥
अर्शोहृद्रोगशमनी क्रिमीणाञ्च विनाशिनी ।
गोमूत्रयुक्ता शमयेत् कफगुल्मं चिरोत्थितम् ॥ ३२ ॥
क्षीरेण पित्तगुल्मञ्च मद्यैरम्लैश्च वातिकम् ।
त्रिफलारसमूत्रैश्च नियच्छेत् सान्निपातिकम् ।
रक्तगुल्मेषु नारीणामुष्ट्रीक्षीरेण पाययेत् ॥ ३३ ॥

अथ काङ्कायनगुडिकानिर्माणमाह शटीमित्यादि—शटी-कचूरचूर्णं (१पल), पुष्करमूलचूर्णं (१पलं), दन्तीमूलचूर्णं (१पल), चित्रकचूर्णम् (१पल), आढकी-तुवरीमूलचूर्णं ( १पल ), शृङ्गवेरम्-आर्द्रकचूर्णं (१पलं), वचाचूर्णं (१पल), त्रिवृताया -त्रिवृन्मूलचूर्णस्य (१पल), हिङ्गुन -शुद्धहिङ्गुचूर्णस्य त्रीणि पलानि, यवक्षाराद् द्वे पले,

अम्लवेतसात्–अम्लवेतसचूर्णाच्च द्वे पले, यमानीचूर्णम् (१कर्षम् ), अजाजी–जीरकचूर्णं (१कर्ष), मरिचचूर्णं (१कर्ष), धान्यकचूर्णम् (१ कर्षम्), उपकुञ्ची–कृष्णजीरकचूर्णं पलार्द्धम् , अजमोदाचूर्णं पलार्द्धम् , एतत् सर्वं खल्वे निक्षिप्य श्लक्ष्ण विचूर्ण्य मातुलुङ्गरसेन सम्यगाप्लाव्य दृढ विमर्द्य च माषकैकमिता गुडिका कृत्वा सशोष्य च काचपात्रे स्थापयेत् । तासा प्रत्यहमेकैका द्वे तिस्रो वा गुडिका यथाग्निबल सुखाम्बुना–ईषदुष्णाम्बुना, अम्ले , मद्यै , यूषै , घृतेन, पयसा–दुग्धेन वा सह यथारुचि सेविता गुल्मं विनाशयन्ति । वाद्धायनेन प्रोक्तेय गुडिका गुल्मम् , अर्श, हृदयरोगं, क्रिमींश्च विनाशयति । गोमूत्रेण सह पीतेयं वटी कफगुल्म, क्षीरेण सह पित्तगुल्म, मद्यैरम्लैश्च सह वातिक गुल्मं, त्रिफलाक्वाथेन मूत्रेण सह वा सान्निपातिक गुल्म विनाशयति । स्त्रीणा रक्तगुल्मेषु गुडिकेयमुष्ट्रीक्षीरेण सह सेव्या ॥२७–३३॥

गुल्मशार्दूलो रस —

रसं गन्ध शुद्धलौह गुग्गुलोः पिष्टतं पलम् ।
त्रिवृता पिप्पली शुण्ठी शटी धान्यकजीरकम् ॥ ३४ ॥
प्रत्येक पलिक ग्राह्यं पलार्द्धं कानकं फलम् ।
सञ्चूर्ण्य वटिका कार्य्या घृतेन वल्लमानतः ॥ ३५ ॥
वटीद्वयं भक्षयेच्चार्द्रकोष्णाम्बु पिबेदनु ।
हन्ति प्लीहयकृद्गुल्म-कामलोदरशोथकम् ॥ ३६ ॥
वातिकं पैत्तिकं गुल्मं श्लैष्मिक रौधिरं तथा ।
गहनानन्दनाथोक्त-रसोऽय गुल्मशार्दूलः ॥ ३७ ॥

अथ गुल्मशार्दूलरसनिर्माणमाह रसमित्यादि—रस–शुद्धपारद (१पलं), गन्धं–शुद्धगन्धकं (१पल), शुद्धलौहं–लौहभस्म (१पल), गुग्गुलो पिष्टितमिति–शुद्धगुग्गुलोर्बहुवार मर्दितं चूर्णम् (१पलं), त्रिवृन्मूलचूर्णं (१पल), पिप्पलीचूर्णं (१पलं), शुण्ठीचूर्णं (१पल), शटी–कर्चूरचूर्णं (१पलं), धान्यकचूर्णं (१पलं), जीरकचूर्णं (१पल), कानकं फल–शुद्धधुस्तूरबीजचूर्णं पलार्द्धमित च समादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य घृतेन सह दृढ विमर्द्य च वल्लप्रमाणा वटीश्चरेत् । अस्य रसस्य वटीद्वय प्रत्यहमार्द्रकस्वरसेन सह भक्षयित्वा तदुपरि उष्णोदक–पिबेत् । अय रस प्लीहवृद्धिं, यकृद्वृद्धिं, गुल्म, कामलाम्, उदररोग, शोथ, वाति-

कगुल्म, पैत्तिकगुल्मं, श्लैष्मिकगुल्मं, रौधिर-रक्तगुल्मञ्च विनाशयति। अथ गुल्मशार्दूलरसो गहनानन्देन प्रोक्त ॥ ( कानकं फलमिति शुद्धजयपालबीजचूर्णमिति केचित् )। "गुग्गुलो पिट्टित पलम्" इत्यत्र "गुग्गुलो पिप्पल पलम्" इति पाठान्तरम् ॥ ३४-३७ ॥

प्राणवल्लभो रस —

लौहं ताम्रं वराटञ्च तुत्थं हिगु फलत्रिकम्।
स्नुहीमूल यवक्षारं जैपाल टङ्कणं त्रिवृत् ॥ ३८ ॥
प्रत्येक पलिकं ग्राह्य छागीदुग्धेन पेषयेत्।
चतुर्गुञ्जां वटीं खादेद् वारिणा मधुनाऽपि वा ॥ ३९ ॥
प्राणवल्लभनामायं गहनानन्दभाषितः।
निहन्ति कामलां पाण्डुं मेहं हिक्कां विशेषतः ॥ ४० ॥
असाध्यं सन्निपातञ्च गुल्मं रुधिरसम्भवम्।
वातरक्तञ्च कुष्ठञ्च कण्डु-विस्फोटकापचीम् ॥ ४१ ॥

अथ प्राणवल्लभरसनिर्माणमाह लौहमित्यादि—लौहभस्म, ताम्रभस्म, वराट-कपर्दिकाभस्म, शुद्धतुत्थकचूर्ण, हिङ्गुचूर्ण, फलत्रिकं—हरीतकीचूर्ण, विभीतकचूर्णम्, आमलकचूर्ण, स्नुहीमूलं=स्नुहीमूलक्षार, यवक्षार, शुद्धजयपालबीजचूर्णं, शुद्धटङ्कण, त्रिवृत्—त्रिवृन्मूलचूर्णम्, एतेषा प्रत्येकं पलमित समादाय खल्वे श्लक्ष्णं चूर्णं कृत्वा छागीदुग्धेन सम्यगाप्लाव्य दृढ विमर्द्य च चतुर्गुञ्जाप्रमाणा वटीश्चरेत्। अथ गहनानन्देन प्रोक्त प्राणवल्लभनामको रस प्रत्यह चतुर्गुञ्जामितो मधुना, वारिणा सुखाम्बुना सह वा सेवित कामला, पाण्डु, मेह—प्रमेह, हिक्काम्, असाध्यगुल्मं, सान्निपातिकगुल्म, रुधिरसम्भव—रक्तगुल्म, वातरक्तं, कुष्ठ, कण्डूं, विस्फोटकम्, अपचीञ्च हन्ति ॥ ३८-४१ ॥

सर्वश्वरो रस —

ताम्रं दशगुणं स्वर्णात स्वर्णपाद कटुत्रिकम्।
त्रिफला त्रिकटोः तुल्या, त्रिफलाऽर्द्धमयोरजः ॥ ४२ ॥
अयसोऽर्द्धं विषञ्चैव सर्वं संमर्द्य यत्नतः।
सर्वेश्वररसो नाम रक्तगुल्मविनाशनः ॥ ४३ ॥

( इति गुल्मरोग-चिकित्सा )

अथ सर्वेश्वररसनिर्माणमाह ताम्रमित्यादि—स्वर्णभस्म (१तो०), तस्माच्च ताम्रं-ताम्रभस्म दशगुण (१०तो०), कटुत्रिक-शुण्ठीचूर्णं, मरिचचूर्णं, पिप्पलीचूर्णमेतत् प्रत्येकं स्वर्णपादं-स्वर्णाच्चतुर्थांशभागमितं ग्राह्य ( प्रत्येकं माषकत्रयमित्यर्थ ), त्रिफला त्रिकटो स्तुल्या (प्रत्येकं माषकत्रय ग्राह्यम् ) त्रिफलाचूर्णं नवमाषक, तथा त्रिफलार्द्धम् (४॥मा०) अयोरज —लोहभस्म, अयसोऽर्द्धं च (२।मा०) विष-शुद्धव त्सनाभचूर्णं समादाय खल्वे श्लक्ष्ण विमर्द्य च काचपात्रे स्थापयेत् । अय सर्वेश्वर रसो रक्तगुल्म विनाशयति ॥ ४२-४३ ॥

अथ गुल्मेऽपथ्यानि—

वल्लूर मूलक मत्स्यान् शुष्कशाकानि वैदलम् । खादेच्चालुकं गुल्मी मधुराणि फलानि च ॥ १ ॥

गुल्मलक्षण यथा—

हृन्नाभ्योरन्तरे ग्रन्थि सञ्चारी यदि वाऽचल । वृत्तश्चयोपचयवान् स गुल्म इति कीर्तित

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृताया गूढार्थसन्दीपिकाव्याख्याया गुल्मरोगचिकित्सा ॥

## अथ हृद्रोग-चिकित्सा ।

हृदयार्णवो रस —

शुद्धसूतसम गन्ध मृतताम्र तयोः समम् ।
मर्दयेत् त्रिफलाक्वाथैः काकमाचीद्रवैर्दिनम् ॥ १ ॥
चणमात्रां वटीं खादेद् रसोऽय हृदयार्णवः ।
काकमाचीफल कर्षं त्रिफलाफलसयुतम् ॥ २ ॥
द्वात्रिंशत् तोलकं तोय क्वाथमष्टावशेषितम् ।
अनुपान पिबेच्चात्र हृद्रोगे च कफोत्थिते ॥ ३ ॥

गुल्मस्य हृन्नाभ्योर्मध्यस्थानत्वेन स्थानसाम्याद् गुल्मचिकित्सानन्तर हृदयरोगचिकित्सा प्रारभ्यते, अथ पूर्वं हृदयार्णवरसनिर्माणमाह शुद्धेत्यादि—शुद्धपारद-(१तो०), शुद्धगन्धक (१तो०), उभयो खल्वे कज्जला कृत्वा पारदगन्धकयो सम (२तो०), मृतताम्र-ताम्रभस्म सम्मेल्य दिनमेक त्रिफलाक्वाथै सम्यगाप्लाव्य विमर्दयेत् । तदनु काकमाचीस्वरसैरपि सम्यगाप्लाव्य दिनैकं विमर्द्य चणकप्रमाणा-

वटीश्चरेत्। अस्य रसस्यादौ वटिकैका भक्षयित्वा तदनु त्रिफलाकाकमाचीफलाना मिलित्वा कर्षं गृहीत्वा द्वात्रिंशत्तोलकजले क्वाथयित्वा अष्टावशेष समादाय अनुपान कुर्यात्। उपर्युक्तविधिपूर्वक सेवितोऽय रस कफोत्पन्न हृदयरोग विनिहन्ति॥१-३॥

नागार्जुनाभ्रम्--

सहस्रपुटनैः शुद्धं वज्राभ्रमर्जुनत्वचः।
सत्त्वैर्विमर्दितं सप्त-दिनं खल्ले विशोषितम्॥ ४॥
छायाशुष्का वटी कार्या नाम्नेदमर्जुनाह्वयम्।
हृद्रोगं सर्वशूलार्शो-हृल्लासच्छर्द्यरोचकान्॥ ५॥
अतीसारमग्निमान्द्यं रक्तपित्तं क्षतक्षयम्।
शोथोदराम्लपित्तञ्च विषमज्वरमेव च।
हन्त्यन्यान्यपि रोगाणि बल्यं वृष्यं रसायनम्॥ ६॥

अथ नागार्जुनाभ्रनिर्माणमाह सहस्रेत्यादि—सहस्रपुटनै शुद्धं वज्राभ्र—सहस्रवारपुटित वज्राभ्रकभस्म यथेच्छ समादाय अर्जुनत्वच सत्वैरिति—अर्जुनवल्कलक्वाथै सम्यगाप्लाव्य दृढ विमर्दयेत्। इत्थ सप्तवारं भावयित्वा दृढं विमर्द्य च रक्तिमिता वटी कृत्वा छायायाञ्च सशोष्य काचपात्रे स्थापयेत्। अथ रस प्रत्यहं रक्तिप्रमाणादारभ्य यथाग्निबल यथारोगञ्च माषैकमितो यथाव्याध्यनुपानैस्सह सेवितो हृदयरोग, सर्वविध शूलम्, अर्श, हृल्लास, छर्दिम्, अरोचकम्, अतीसारम्, अग्निमान्द्यं, रक्तपित्त, क्षतक्षय, शोथम्, उदररोगम्, अम्लपित्तं, विषमज्वरञ्च निहन्ति, तथान्यान्यपि रोगाणि हन्ति। तथेद बलकर, वृष्यगुणकर, रसायनञ्च वर्तते॥ ४-५॥

पञ्चाननो रस —

सूतगन्धौ द्रवैर्धात्र्या मर्दयेत् गोस्तनीद्रवैः।
यष्टिखर्जूरसलिलैर्दिनञ्च परिमर्दयेत्।
धात्रीचूर्णं सिताञ्चानु पिबेत् हृद्रोगशान्तये॥ ७॥

( इति हृद्रोग-चिकित्सा )

अथ पञ्चाननरसनिर्माणमाह सूतगन्धावित्यादि—समानभागौ शुद्धपारद गन्धकौ समादाय तयो कज्जलीं कृत्वा धात्र्या—आमलकीस्वरसेन सम्यगाप्लाव्य

दिनमेक विमर्दयेत् तथा गोस्तनीद्रवै द्राक्षाक्वाथैर्यष्टिक्वाथै , खर्जूरक्वाथैश्च पृथक्२ दिनमेकं दृढ विमर्द्य द्विरक्तिमिता वटीश्चरेत्। अस्य रसस्य प्रत्यहमेकैका वटी धात्री चूर्णेन सितया च सह सेविता विविध हृदयविकारं प्रशमयति ॥ ७ ॥

अथ हृद्रोगे पथ्यापथ्यम्—

शालिमुद्गा यवा मास जाङ्गल मरिचान्वितम्।पटोल कारवेल्लञ्च पथ्य प्रोक्त हृदामये॥१॥
तैलाम्लतक्रगुर्वन्नकषायश्रममातपम्।रोषं स्त्रीनर्मचिन्ता वा भाष्यं हृद्रोगवास्त्यजेत्॥२॥

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृताया
गूढार्थसन्दीपिकाव्याख्याया हृद्रोगचिकित्सा ।

## अथ मूत्रकृच्छ्र-चिकित्सा ।

त्रिनेत्राख्यो रस —

**वङ्ग सूत गन्धक भावयित्वा लोहे पात्रे मर्दयेदेकघस्रम् ।**
**दूर्वायष्टीगोक्षुरैः शाल्मलीभिः मूषामध्ये भूधरे पाचयित्वा ॥ १ ॥**
**तत्तद्द्रावैर्भावयित्वाऽस्य वल्ल दद्यात् शीत पायस वक्ष्यमाणम् ।**
**दूर्वायष्टीशाल्मलीतोयदुग्धैस्तुल्यै कुर्य्यात् पायसं तद्वदीत ।**
**प्रात.काले शीतपानीयपानात् मूत्रे जाते स्यात् सुखी च क्रमेण ॥ २ ॥**

सप्तोत्तरे मर्मशते, त्रीणि मर्माणि शिरोहृदयवस्तयश्च प्रधानानि; तत्र हृदय गतरोगचिकित्सानन्तरं वस्तिगतमूत्रकृच्छ्ररोगचिकित्सा प्रारभ्यते, तत्र च पूर्वं त्रिनेत्राख्यरसनिर्माणमाह वङ्गमित्यादि—वङ्गभस्म, सूतं–शुद्धपारदं, शुद्धगन्धकञ्च प्रत्येक सम सममादाय पारदगन्धकयो कज्जलीं कृत्वा वङ्गभस्म च सम्मेल्य दूर्वास्वरसेन, मधुयष्टिक्वाथेन, गोक्षुरक्वाथेन, तथा शाल्मलिमूलस्वरसैश्च क्रमश पृथक् २ दिन- मेकं विमर्द्य गोलकं कृत्वा मूषायाञ्च निरुध्य भूधरयन्त्रे पचेत् । पक्वमौषध खल्वे विचूर्ण्य पूर्वोक्तद्रव्यस्वरसै क्वाथैर्वा पृथक् २ दिनमेक भावयित्वा दृढ विमर्द्य सशोष्य च काचपात्रे स्थापयेत् । अयं रस प्रत्यह वल्लमित ( द्विगुञ्जमित- पर्याप्त ) वक्ष्यमाणपायसानुपानेन सह सेवितो मूत्रकृच्छ्रं विनिहन्ति । पायसनि- र्माण—दूर्वास्वरस , मधुयष्टिक्वाथ , शाल्मलिस्वरस , दुग्धञ्च, एतेषा प्रत्येकं समभागेनादाय कटाहे निक्षिप्य चूल्यां पचेत् । क्षीरावशेषञ्च ज्ञात्वा जातं पायसं

गृह्णीयात् । अथवा दुर्वादीनां क्वाथे क्षीरपाकविधिना दुग्धं पक्त्वा तस्मिन् स्वल्प-तण्डुलानि निक्षिप्य पायसं कुर्यात् । तदनु पायसे शर्करां प्रक्षिप्य भेषजं भक्षयेत् । एवं कुर्वाणस्तथा नित्यं प्रभातेऽव्युषितं शीतं जलञ्च पिबन् मूत्रकृच्छ्राद्विमुच्यते॥१-२॥

वरुणाद्यं लौहम्—

द्विपलं वरुणं धात्र्यास्तदर्द्धं धातृपुष्पिकाम् ।
हरीतक्याः पलार्द्धञ्च पृश्निपर्णं तदर्द्धकम् ॥ ३ ॥
कर्षमानञ्च लौहाभ्रं चूर्णमेकत्र कारयेत् ।
भक्षयेत् प्रातरुत्थाय शाणमानं विधानवित् ॥ ४ ॥
मूत्राघातं तथा घोरं मूत्रकृच्छ्रञ्च दारुणम् ।
अश्मरीं विनिहन्त्याशु प्रमेहं विषमज्वरम् ॥ ५ ॥
बलपुष्टिकरञ्चैव वृष्यमायुष्यमेव च ।
वरुणाद्यमिदं लौहं चरकेण विनिर्मितम् ॥ ६ ॥

अथ वरुणाद्यलौहनिर्माणमाह द्विपलमित्यादि—वरुण-वरुणत्वचश्चूर्णं द्विपलं, तदर्द्धमेकपलमितं धात्र्याश्चूर्णं, धातृपुष्पिका-धात्रीपुष्पचूर्णम् (धायफूलचूर्णं) अर्द्धपलं, हरीतक्याश्चूर्णमर्द्धपलं, पृश्निपर्णचूर्णं तदर्द्धमिति पलस्य चतुर्थांशमितं, तथा लौहभस्म ( १ कर्षं ), अभ्रकभस्म ( १ कर्षं ), एतत् सर्वं खल्वे सम्यक् सञ्चूर्ण्य काचपात्रे स्थापयेत् । लौहमिदं शाणमितं (चतुर्भिर्माषकैः शाणः) यथाग्निबलं स्वल्पमात्रया वा प्रत्यहं प्रभाते सेवितं मूत्रकृच्छ्रम् , अश्मरीं, प्रमेहं, विषमज्वरञ्च निहन्ति । तथेदं लौहं बलं, पुष्टिं च करोति, वृष्यमायुष्यञ्च वर्त्तते ॥ लौहाभ्रं मिलितं कर्षमानमिति ग्राह्यं ॥ ३-६ ॥

मूत्रकृच्छ्रान्तकयोगौ—

अयोरजः श्लक्ष्णपिष्टं मधुना सह योजयेत् ।
मूत्राघातं निहन्त्याशु मूत्रकृच्छ्रं सुदारुणम् ॥ ७ ॥
रसगन्धयवक्षारं सितातक्रयुतं पिबेत् ।
मूत्रकृच्छ्राण्यशेषाणि निहन्ति नियतं नृणाम् ॥ ८ ॥
भैषज्यैरश्मरीप्रोक्तैर्मूत्रकृच्छ्रमुपाचरेत् ।
योगवाहिरसैर्वाऽपि चानुपानविशेषतः ॥ ९ ॥

अथ मूत्रकृच्छ्रान्तकयोगौ, अथ इत्यादि—श्लक्ष्णपिष्टमयोरज इति वारितर लोहभस्म प्रत्यहं द्विरक्तिमितं मधुना सह सेवितं मूत्राघातं, मूत्रकृच्छ्रञ्च विनिहन्ति। तथा द्वितीययोगमाह रसेति—रस—शुद्धपारद, शुद्धगन्धक, यवक्षार, प्रत्येक समं सममादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा यवक्षारं सम्मेल्य दृढं विमर्द्य, च काचपात्रे स्थापयेत्। अस्य योगस्य प्रत्यहं द्विरक्तिमितं सितातक्रयुतं प्रभाते पिबेत्, तेन नृणां विविधानि मूत्रकृच्छ्राणि नश्यन्ति। प्रायो मूत्रकृच्छ्रे युक्त्या-नुपानभेदैरश्मरीप्रोक्तभेषज्यैस्तथा योगवाहिरसैश्च सम्यगुपाचरेत्॥ ७-९॥

मूत्रकृच्छ्रान्तको रसः—

शतावरीरसैः पिष्ट्वा मृतसूतञ्च तालकम्।
शिखितुत्थञ्च तुल्यांशं दिनैकं मर्दयेत् दृढम्॥ १०॥
तद्गोलं सार्षपे तैले पाच्यं यामञ्च चूर्णयेत्।
मूत्रकृच्छ्रान्तकश्चास्य क्षौद्रैर्गुञ्जाचतुष्टयम्॥ ११॥
भक्षणान्नात्र सन्देहो मूत्रकृच्छ्रं निहन्त्यलम्।
तुलसीतिलपिण्याकं विल्वमूलं तुषाम्बुना।
कर्षैकं चाऽनुपानेन सुरया वा सुवर्चलैः॥ १२॥

[ इति मूत्रकृच्छ्र-चिकित्सा ]

अथ मूत्रकृच्छ्रान्तकरसनिर्माणमाह शतावरीत्यादि—मृतसूत-रससिन्दूर (१ तो०), शुद्धतालक (१तो०), शिखितुत्थ-शुद्धनीलतुत्थचूर्णं (१तो०), एतत् सर्वं खल्वे निक्षिप्य श्लक्ष्णं विचूर्ण्य च शतावरीस्वरसैः सम्यगाप्लाव्य दिनमेकं निरन्तरं दृढं विमर्द्य गोलकं कृत्वा सर्षपतैलकटाहे निक्षिप्य तस्मिन् यामैकं तद्गोलकं पक्त्वा स्वाङ्गशीतं खल्वे विचूर्ण्य काचपात्रे स्थापयेत्। अस्य रसस्य गुञ्जाचतुष्टयं मधुना प्रत्यहं सेवितं निश्चयेन मूत्रकृच्छ्रं निहन्ति। अथवा रसोऽयं चतुर्गुञ्जामितं कर्षमितैः तुलसीचूर्णतिलचूर्णविल्वमूलचूर्णैः तुषाम्बुना च सह प्रयोक्तव्यः। अथवा सुवर्चलल्वणमिश्रितसुरया सह देयः।

तुषाम्बुनिर्माणं यथा—

तुषाम्बु चासुतं ज्ञेयं माषैर्विदलितैर्यवैः।

अन्यदपि—

भृष्टान् माषतुषान् सिद्धान् यवचूर्णसमन्वितान् ।

आश्रितानम्भसा तद्वज्जातं तच्च तुषोदकम् ॥ इति चरक ॥१०-१२॥

अथ मूत्रकृच्छ्रे पथ्यापथ्यमाह—

पुरातना लोहितशालयश्च धन्वामिषं मुद्गरसः सिता च ।

तक्रं पयो गोश्च दधि प्रभूतं पुराणकुष्माण्डफलं पटोलम् ॥ १ ॥

उर्वारुखर्जूरकनारिकेलं तण्डुलीयं चामलकञ्च सर्पिः ।

प्रतीरनीरं हिमवालुका च मित्रं नृणां स्यात् सति मूत्रकृच्छ्रे ॥ २ ॥

मद्यं श्रमं निधुवनं गजवाजियानं सर्वं विरुद्धमशनं विषमाशनञ्च ।

ताम्बूलमत्स्यलवणार्द्रकतैलभृष्टं पिण्याकहिङ्गुतिलसर्षपमूत्रवेगान् ॥

माषान् करीरमतितीक्ष्णविदाहिरुक्षमम्लं प्रमुञ्चतु जनः सति मूत्रकृच्छ्रे ॥३॥

इति पथ्यापथ्यम् ।

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृताया

गूढार्थसन्दीपिकाव्याख्याया मूत्रकृच्छ्रचिकित्सा ।

## अथ मूत्राघात-चिकित्सा ।

तारकेश्वरो रसः—

**मृतसूताभ्रगन्धश्च मर्द्दयेन्मधुना दिनम् ।**

**तारकेश्वरनामायं गहनानन्दभाषितः ॥ १ ॥**

**माषमात्रं भजेत् क्षौद्रैर्बहुमूत्रप्रशान्तये ।**

**औडुम्बरफलं पक्कं चूर्णितं कर्षमात्रकम् ।**

**संलिह्यान्मधुना सार्द्धमनुपानं सुखावहम् ॥ २ ॥**

वस्तिगतविकारसाधर्म्यान्मूत्रकृच्छ्रचिकित्सानन्तरं मूत्राघातचिकित्सा प्रारभ्यते ।

(१) अथ तारकेश्वररसनिर्माणमाह मृतेत्यादि—मृतसूतं-रससिन्दूरम्, अभ्रकभस्म, शुद्धगन्धकञ्च प्रत्येकं समं सममादाय खल्वे श्लक्ष्णं पिष्ट्वा मधुनाऽऽप्लाव्य दिनैकं दृढं विमर्द्य च काचपात्रे स्थापयेत् । अस्य रसस्य द्विरक्तित समारभ्य माषैकमितं भागं यथाग्निबलं मधुना सह प्रत्यहं संसेव्य तदुपरि पक्कशुष्कौडुम्बरफलस्य कर्ष-

मितं चूर्णं मधुना लिह्यात्, इत्थं सेवितोऽयं रसो बहुमूत्रप्रशान्तये श्रेष्ठः ॥ १-

लघुलोकेश्वरो रस —

शुद्धसूतस्य भागैकं चतुरः शुद्धगन्धकात् ।
पिष्ट्वा वराटिका पूर्य्या रसपादेन टङ्कणम् ॥ ३ ॥
क्षीरैः पिष्ट्वा मुखं लिप्त्वा भाण्डे रुद्ध्वा पुटे पचेत् ।
स्वाङ्गशीतं विचूर्ण्याथ लघुलोकेश्वरो मतः ॥ ४ ॥
चतुर्गुञ्जाप्रमाणन्तु मरिचेन तथैव च ।
जातीमूलफलैर्युक्तमजाक्षीरेण पाययेत् ।
शर्कराभावितश्चानु पिबेत् कृच्छ्रहरं परम् ॥ ५ ॥

अथ लघुलोकेश्वररसनिर्माणमाह शुद्धेत्यादि—शुद्धपारदस्य एकं भागं, तथा शुद्धगन्धकाच्चतुरो भागान् समादाय खल्वे कज्जलीं कृत्वा शुद्धवराटिकासु प्रपूरयेत्। तदनु तासां छिद्राणि रसपादेन—रसस्यापेक्षया पादेन चतुर्थांशभागेन युतं टङ्कणं छागीदुग्धेन पिष्ट्वा तेन लेपयेत्। पश्चादेताः कपर्दिकाः स्वल्पे मृद्भाण्डे निक्षिप्य तस्य मुखबन्धनं कृत्वा गजपुटे पचेत्। स्वाङ्गशीतं सकपर्दिकौषधं खल्वे श्लक्ष्णं सञ्चूर्ण्य काचपात्रे स्थापयेत। अयं लघुलोकेश्वररसश्चतुर्गुञ्जमितः प्रत्यहं मरिचानां चूर्णस्य, जातीमूलचूर्णस्य (चमेलीकी जड़का चूर्ण) त्रिफलाचूर्णस्य च मिलित्वा कर्षप्रमाणं चूर्णमजादुग्धे निक्षिप्य "शर्कराभावितश्चेति" अजादुग्धे शर्करां निक्षिप्य तेन दुग्धेन सह पीतः मूत्रकृच्छ्रं निहन्ति ॥ ३-५ ॥

क्षुद्रयोगा —

येनौषधेन मतिमान् मूत्रकृच्छ्रमुपाचरेत् ।
तेनौषधेन श्रेष्ठेन मूत्राघातानुपाचरेत् ॥ ६ ॥
लवणाम्लवरायुक्तं घृतञ्चापि पिबेन्नरः ।
तस्य नश्यन्ति वेगेन मूत्राघातास्त्रयोदश ॥ ७ ॥
पक्वैर्वारुकबीजानामक्षमात्रं ससैन्धवम् ।
धान्याम्लयुक्तं पीत्वैव मूत्राघातात् विमुच्यते ॥ ८ ॥
त्रिकण्टकैरण्डशतावरीभिः सिद्धं पयो वा तृणपञ्चमूलैः ।
गुडप्रगाढं सघृतं पयो वा रोगेषु कृच्छ्रादिषु शस्तमेतत् ॥ ९ ॥

[ इति मूत्राघात-चिकित्सा ]

अथ मूत्रकृच्छ्रचिकित्सा मूत्राघातेऽप्यतिदिशति येनेत्यादि—येन भेषजेन मूत्रकृच्छ्रमुपाचरेत्, तेनौषधेन मूत्राघातमप्युपाचरेत्। मूत्रकृच्छ्रहरौषधं मूत्राघातेऽपि प्रयोजयेत्॥ ६॥

अथ कतिपयक्षुद्रयोगानाह लवणेत्यादि—लवण-सैन्धवं चतुर्माषकम्, अम्ल-काञ्जिकं द्वितोलकं, वरा-त्रिफलाचूर्णं तोलकमितं, घृतं द्वितोलकम्, एतत् सर्वं सम्मेल्य निर्दिष्टमात्रायुक्तं प्रत्यहं पिबेत्, एतेन पुरुषस्य कतिपयैरहोभिः त्रयोदशविधं मूत्राघातं नश्यति। काञ्जिकस्वरूपं यथा—

कुल्माषो धान्यमण्डेन चासुतं काञ्जिकं भवेत्।

अन्यच्च—

आशुधान्यं क्षोदितञ्च बालमूलन्तु खण्डशः। कृतं प्रस्थमितं पात्रे जलं तत्राढकं क्षिपेत्॥ १॥
तावत् सन्धीय संरक्षेद्यावदम्लत्वमागतम्। काञ्जिकं तत्तु विज्ञेयमेतत् सर्वत्र पूजितम्॥ २॥

इत्येको योगः।

अथ द्वितीययोगमाह पक्वेत्यादि—पक्वैर्वारुकबीजाना-पक्वकर्कटीबीजानाम-क्षमात्र-कर्षैकमितं चूर्णं कर्षैकमितलवणयुक्तं कृत्वा धान्याम्लेन-काञ्जिकेन सह प्रत्यहं पिबन्नरो मूत्रकृच्छ्राद्विमुच्यते॥ इति द्वितीययोगः।

अथ तृतीययोगमाह त्रिकण्टकेत्यादि-त्रिकण्टकः-गोक्षुरः, एरण्डमूलं, शतावरी च, एषां प्रत्येकं कर्षमितं समादाय क्षीरपाकविधिना दुग्धं पक्त्वा स्वल्पं घृतं स्वल्पं गुडञ्च सम्मेल्य प्रत्यहं पिबन्नरो मूत्रकृच्छ्रादिरोगाद्विमुच्यते। अथवा तृणपञ्चमूलैः-पञ्चतृणमूलकल्कैः सिद्धं सगुडं सघृतञ्च दुग्धं पिबन्नरः कृच्छ्रादिरोगाद्विमुच्यते।

अथ पञ्चतृणमूलम्—

कुशः काशः शरो दर्भ इक्षुश्चैव तृणोद्भवम्। पञ्च तृणमिदं ख्यातं तृणजं पञ्चमूलकम्॥

क्षीरपाकविधिर्यथा—

द्रव्यादष्टगुणं क्षीरं क्षीरात्तोयं चतुर्गुणम्। क्षीरावशेषः कर्तव्यः क्षीरपाके त्वयं विधिः॥

यदि पञ्चतृणकल्कं मिलित्वा (५) तोलकं स्यात्तदा तस्मिन्नष्टगुणं दुग्धं (४०तो०) दुग्धात् जलञ्च चतुर्गुणं (१६०तो०) दत्त्वा दुग्धावशेषं पाकं कृत्वा पिबेत्॥ ६-९॥

अथ मूत्राघाते पथ्यापथ्यम्—

तक्रं पयो दध्यपि माषयूषं पुराणकुष्माण्डफलं पटोलम्।
महार्द्रकं तालफलास्थिमज्जा हरीतकी कोमलनारिकेलम्॥ १॥

उर्वारु खर्जूरकनारिकेलतालद्रुमाणामपि मस्तकानि ।
यथानलं सर्वमिदं मूत्राघातातुराणां हितमामनन्ति ॥ २ ॥

इति पथ्यानि ।

अथ अपथ्यानि—

विरुद्धानि च सर्वाणि व्यायामं मार्गमानलम् । रूक्षं विदाहि विष्टम्भि व्यवायं वेगधारणम्
करीरं वमनञ्चापि मूत्राघाती विवर्जयेत् ॥ १ ॥

इति श्रीगङ्गात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृतायां
गूढार्थसन्दीपिकाव्याख्यायां मूत्राघात-चिकित्सा ।

## अथाश्मरी चिकित्सा ।

पाषाणवज्रको रसः —

शुद्धसूतं द्विधा गन्धं रसे श्वेतपुनर्नवे ।
मर्दयित्वा दिनं खल्ले रुद्ध्वा तद् भूधरे पचेत् ॥ १ ॥
दिनान्ते तत् समुद्धृत्य मर्दयेद् गुडसंयुतम् ।
अश्मरीं वस्तिशूलञ्च हन्ति पाषाणवज्रकः ॥ २ ॥
गोरक्षकर्कटीमूलं क्वाथं कौलत्थकं तथा ।
अनुपानं प्रयोक्तव्यं गुञ्जा द्वयं बलाबलम् ॥ ३ ॥

मूत्राघातचिकित्सानन्तरं मूत्रनिरोधसामान्यादश्मरीचिकित्सा प्रारभ्यते तत्र पूर्वं पाषाणवज्रकरसनिर्माणमाह शुद्धसूतमित्यादि—शुद्धसूतं (१तोलक), तथा शुद्धगन्धकञ्च द्वितोलकं समादाय खल्वे यथाविधि कज्जलीं कृत्वा श्वेतपुनर्नवायाः स्वरसैः क्वाथैर्वा सम्यगाप्लाव्य दिनमेकं दृढं विमर्द्य मूषायां निरुध्य च भूधरयन्त्रे पचेत् । स्वाङ्गशीतं खल्वे विचूर्ण्य काचपात्रे स्थापयेत् । स्वल्पगुडसंयुतो द्विरक्तिमितोऽयं रसो गोरक्षकर्कटीमूलक्वाथानुपानेन—इन्द्रवारुणिकामूलक्वाथानुपानेन, कुलत्थक्वाथानुपानेन सह वा सेवितः कतिपयैरहोभिः शीघ्रमश्मरीं, वस्तिशूलञ्च निहन्ति ॥१-३॥

त्रिविक्रमो रसः —

मृतताम्रमजाक्षीरैः पाच्यं तुल्यं गते द्रवे ।
तत् ताम्रं शुद्धसूतञ्च गन्धकञ्च समं समम् ॥ ४ ॥
निर्गुण्डीस्वरसैर्मर्द्यं दिनं तद्गोलकीकृतम् ।

यामैकं बालुकायन्त्रे पक्त्वा याज्य द्विगुञ्जकम् ॥ ५ ॥
वीजपूरस्य मूलञ्च सजलञ्चानुपाययेत् ।
रसस्त्रिविक्रमो नाम शर्करामश्मरीं जयेत् ॥ ६ ॥

अथ त्रिविक्रमरसनिर्माणमाह मृनेत्यादि—तोलकमितं ताम्रभस्म अजादुग्धे पचेत्, एवं दुग्धपाचित ताम्रभस्म (१तो०), शुद्धसूतं (१तो०), शुद्धगन्धकं (१तो०), समादाय पूर्व पारदगन्धकयो कज्जलीं कृत्वा पूर्वोक्तं ताम्रभस्म निक्षिप्य निर्गुण्डीस्वरसैर्दिनमेकं दृढं विमर्द्य गोलक कृत्वा मूषाया सन्निरुध्य यामैक बालुकायन्त्रे पचेत्। तत स्वाङ्गशीतमुद्धृत्य खल्वे सञ्चूर्ण्य काचपात्रे स्थापयेत्। अयं त्रिविक्रमरस प्रत्यह द्विगुञ्जामितो वीजपूरस्य—मातुलुङ्गस्य मूलं सजल—नेत्रबालकसहित जले क्वाथयित्वा तत्क्वाथानुपानेन सह सेवित शर्कराश्मरीं—शर्कराधिक्यजाताश्मरी हन्ति, अथवा शर्कराम्, अश्मरीञ्च निहन्ति ॥ ४–६ ॥

लौहप्रयोग —

अयोरजः श्लक्ष्णपिष्टं मधुना सह योजितम् ।
अश्मरीं विनिहन्त्याशु मूत्रकृच्छ्रञ्च दारुणम् ॥ ७ ॥

अथ लौहप्रयोगमाह, अयोरज इत्यादि—श्लक्ष्णपिष्ट—वारितरसञ्ज्ञकमयोरज —लौहभस्म द्विरक्तिमितं प्रत्यह मधुना सह सेवितं दारुणं मूत्रकृच्छ्रम्, अश्मरीञ्च निहन्ति ॥ ७ ॥

क्षुद्रयोगौ—

इन्द्रवारुणिकामूल मरिच क्षीरपाचितम् ।
पर्पटीरससंयुक्त सप्ताहादश्मरीं जयेत् ॥ ८ ॥
गन्धको जीरकं क्षुद्राफलं टङ्कद्वयं सदा ।
अश्मरीं शर्करां मूत्रकृच्छ्र क्षपयति ध्रुवम् ॥ ९ ॥

( इति अश्मरी-चिकित्सा )

अथ क्षुद्रयोगावाह इन्द्रेत्यादि—इन्द्रवारुणिकामूल तोलकमितं, मरिचचूर्णञ्च तोलकमितं समादाय पाषाणे जलेन सह पिष्ट्वा कल्क कुर्यात्, ततस्तेन कल्केना ष्टगुणं दुग्धं (१६तो०) दुग्धाच्चतुर्गुण जलञ्च (६४तो०) समादाय सर्वं कटाहे निक्षिप्य दुग्धावशेषं पाक कुर्यात्, तदनु द्विगुञ्जमिता रसपर्पटी प्रत्यहमुपर्युक्तरीत्या दुग्ध पक्त्वा तेन सह सेवितव्या। इत्थमस्य योगस्य सेवनेनैकसप्ताहादश्मरी

नश्यति ॥ इत्येको योग ।

अथ द्वितीययोगमाह गन्धक इत्यादि—शुद्धगन्धक, जीरकचूर्ण क्षुद्रा–लघुकण्टकारिकाचूर्ण, फल–त्रिफलाचूर्ण, (क्षुद्राफल–बृहतीफलमिति केचित् ) एतत् प्रत्येकं सम ममादाय खल्वे सञ्चूर्ण्य काचपात्रे स्थापयेत्। चूर्णमिदं प्रत्यह द्विटङ्कमित (अष्टमाषकमितम) सेवितं ध्रुवमश्मरीं, शर्करा, मूत्रकृच्छ्रञ्च विनाशयति ॥८–९॥

अथाश्मरीरोगे पथ्यापथ्यमाह—

कुलत्था मुद्गगोधूमा जीर्णशालियवा हिता ।
धन्वामिष तण्डुलीयं जीर्णकुष्माण्डकफलम्। आर्द्रक यावशूकञ्च पथ्यमश्मरिरोगिणाम॥१॥

इति पथ्यानि ।

अथापथ्यानि—

मूत्रस्य शुक्रस्य च वेगमम्ल विष्टम्भि रूक्षं गुरुचान्नपानम ।
विरुद्धमन्नाशनमश्मरीमान् विवर्जयेत् सन्ततमप्रमत्त ॥ २ ॥

इत्यपथ्यानि ।

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृताया गूढार्थसन्दीपिकाव्याख्यायामश्मरीरोग–चिकित्सा ।

## अथ प्रमेह-चिकित्सा ।

हरिशङ्करो रस —

**मृतसूताभ्रकं तुल्यं धात्रीफलनिशाद्रवैः ।**
**सप्ताहं भावयेत् खल्ले योगोऽयं हरिशङ्कर ।**
**माषमात्रां वटीं खादेत् सर्वमेहप्रशान्तये ॥ १ ॥**

वस्तिविकारसामान्यादश्मरीचिकित्सानन्तर प्रमेहचिकित्सा प्रारभ्यते तत्र पूर्वं क्रियाक्रम —

स्थूल प्रमेही बलवानिहैक कृशस्तथान्य परिदुर्बलश्च ।
सबृंहणं तत्र कृशस्य कार्यं संशोधन दोषबलाधिकस्य ॥
ऊर्ध्वं तथाऽधश्च मलेऽपनीते मेहेषु सन्तर्पणमेव कार्यम् ।
संशोधन नार्हति य प्रमेही तस्य क्रिया संशमनी विधेया ॥

बलवतो दोषाधिकस्योर्ध्वमधश्च संशोधनं तथाऽसंशोधनार्हस्य कृशस्य संशमनीक्रिया विधेया, संशमनस्वरूपं यथा—
न शोधयति यद्दोषान् समान्नोदीरयत्यपि । समीकरोति विषमान् शमनं तत् ॥इति॥
अथ विशेषचिकित्सार्थं पूर्वं हरिशङ्कररसनिर्माणमाह मृतेत्यादि—मृतसूत—रससिन्दूरम्, अभ्रकभस्म च एतद्द्वयं समं सममादाय खल्वे विचूर्ण्य धात्रीफलानां स्वरसेन क्वाथेन वा सप्ताहं भावयेत् (प्रतिदिवसं क्वाथं दत्वा निरन्तरं (१२घण्टे) मर्द्दयेत् )। ततो निशाद्रवैर्हरिद्राया स्वरसैः क्वाथैर्वा सप्ताहं भावयित्वा दृढं विमर्द्य संशोष्य च काचपात्रे स्थापयेत् । अथ हरिशङ्करयोगं प्रत्यहं माषमात्रं (१-२रक्तिमितं ) यथादोषानुपानपूर्वकं सर्वप्रमेहप्रशान्तये प्रयोक्तव्यं ॥
अत्र "सूताभ्रमामलजलैः सप्ताहं भावयेदयम् । हरिशङ्करसंज्ञः स्याद् रसः सर्वप्रमेहनुत्" इति पाठान्तरम् ॥ १ ॥

इन्द्रवटी—

**मृतं सूतं मृतं वङ्गमर्जुनस्य त्वचान्वितम् ।**
**तुल्यांशं मर्दयेत् खल्ले शाल्मल्या मूलजैः द्रवैः ॥ २ ॥**
**दिनान्ते वटिका कार्य्या माषमात्रा प्रमेहहा ।**
**एषा इन्द्रवटी नाम्ना मधुमेहप्रशान्तिकृत् ॥ ३ ॥**

अथेन्द्रवटीनिर्माणमाह मृतमित्यादि—मृतं सूत-रससिन्दूर, मृतं वङ्गं-वङ्गभस्म, अर्जुनस्य त्वचश्चूर्णञ्च प्रत्येकं समं सममादाय खल्वे श्लक्ष्णं पिष्ट्वा शाल्मलीमूलस्य स्वरसैः क्वाथैर्वा सम्यगाप्लाव्य दिनमेकं निरन्तरं विमर्द्य च सायङ्काले माषमात्रा वटी श्चरेत् ( अधुना माषमात्राया अधिकत्वाद्यथाग्निबलं वीक्ष्य रक्तित आरभ्य माषपर्यन्तं प्रयोजयेत् )। एषेन्द्रवटी मधुमेहं निहन्ति । मधुमेहे गुडमारचूर्णेन सह प्रयोक्तव्या तेनेयं वटी विशेषगुणकरी शीघ्रफलदा च भवति ॥२-३॥

वङ्गावलेह —

**वङ्गभस्म द्विवल्लञ्च लेहयेन्मधुना सह ।**
**ततो गुडसमं गन्धं भक्षयेत् कर्षमात्रकम् ॥ ४ ॥**
**गुडूचीसत्त्वमथवा शर्करासहितं तथा ।**
**सर्वमेहहरो ज्ञेयो वङ्गावलेह उत्तमः ॥ ५ ॥**

अथ वङ्गावलेहमाह वङ्गभस्मेत्यादि—द्विवल्ल वङ्गभस्म मधुना सह प्रत्यहं समे व्य तदुपरि शुद्धगन्धक(½ क०,)पुराणगुडञ्च (½क०) सम्यक् सम्मेल्य भक्षयेत्। अथवा गुडूचीसत्व चतुर्गुञ्जामित कर्षमितशर्करया सह भक्षयेत्। अयं वङ्गावलेह सर्वप्रमेहविनाशने श्रेष्ठ ॥ ४–५ ॥

प्रमेहसेतुरस —

सूताभ्रञ्च वटक्षीरैर्मर्दयेत् प्रहरद्वयम ।
विशोष्य पक्वमूषाया सर्वरोगे प्रयोजयेत् ॥ ६ ॥
विशेषान्मेहरोगेषु त्रिफलामधुसंयुतम् ।
युञ्जीत वल्लमेकन्तु रसेन्द्रस्यास्य वैद्यराट् ॥ ७ ॥

अथ प्रमेहसेतुनिर्माणमाह सूतेत्यादि—सूत-रससिन्दूरम्, अभ्रमभ्रकभस्म च प्रत्येक समं सममादाय खल्वे श्लक्ष्ण विचूर्ण्य वटदुग्धेन सम्यगाप्लाव्य दृढ विमर्द्य सशोष्य च मूषाया सन्निरुध्य वालुकायन्त्रे पचेत्। अथवा पूर्वोक्तकच्चीयन्त्रविधिना पचेत्। अथ रसो यथाव्याध्यनुपानं सर्वत्र देय, विशेषेणास्य रसस्यैक वल्लं प्रत्यह त्रिफलाचूर्णमधुभ्या सह मेहरोगेषु प्रयोजयेत् ॥ ६–७ ॥

विडङ्गाद्यलोह —

विडङ्गत्रिफलामुस्तैः कणया नागरेण च ।
जीरकाभ्यां युता हन्ति प्रमेहानतिदारुणान् ।
लौहो मूत्रविकारांश्च सर्वानेव विनाशयेत् ॥ ८ ॥

अथ विडङ्गाद्यलौहनिर्माणमाह विडङ्गेत्यादि—विडङ्गचूर्णं, त्रिफला-हरीतकीचूर्णं, विभीतकचूर्णम्, आमलकचूर्णं, शुद्धमुस्तकचूर्णं, कणा-पिप्पलीचूर्णं, नागर-शुण्ठीचूर्णं, श्वेतजीरकचूर्णं, कृष्णजीरकचूर्णम्, एतेषा प्रत्येक तोलकमित तथा सर्वसमञ्च लौहभस्म समादाय खल्वे श्लक्ष्ण पिष्ट्वा च काचपात्रे स्थापयेत्। अथ विडङ्गाद्यलौह प्रत्यह यथादोषानुपानपूर्वक सेवितो दारुणान् प्रमेहान् सर्वमूत्रविकाराश्च निहन्ति ॥ ८ ॥

बृहद्वरिशङ्करो रस —

रसगन्धकलौहञ्च स्वर्णं वङ्गञ्च माक्षिकम् ।
समभागन्तु सम्पिष्य वटिकां कारयेद्भिषक् ॥ ९ ॥

सप्ताहमामलाद्रावैर्भावितोऽयं रसेश्वरः ।
हरिशङ्करनामायं गहनानन्दभाषितः ।
प्रमेहान् विंशतिं हन्ति सत्यं सत्यं न संशयः ॥ १० ॥

अथ बृहद्धरिशङ्कररसनिर्माणमाह रसेत्यादि—शुद्धपारद, शुद्धगन्धकं, लौह-भस्म, स्वर्णभस्म, वङ्गभस्म, माक्षिकं—स्वर्णमाक्षिकभस्म, एतेषां प्रत्येकं समं सममादाय पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य सप्ताहमामलकस्वरसैर्भावयित्वा दृढ विमर्द्य द्विरक्तिमिता वटीश्चरेत् । श्रीगहनानन्देन प्रोक्तोऽयं हरिशङ्कररसो यथादोषानुपानैर्विंशतिप्रमेहान्निश्चयेन विनिहन्ति ॥ ९–१० ॥

आनन्दभैरवो रस —

वङ्गभस्म मृतं स्वर्णं रसं क्षौद्रैर्विमर्दयेत् ।
द्विगुञ्जं भक्षयेन्नित्यं हन्ति मे ' चिरोद्भवम्
गुञ्जामूलं तथा क्षौद्रैरनुपानं प्रशस्यते ॥ ११ ॥

अथानन्दभैरवरसनिर्माणमाह वङ्गभस्मेत्यादि—वङ्गभस्म, स्वर्णभस्म, रसं—रस-सिन्दूरं प्रत्येकं समं सममादाय खल्वे श्लक्ष्णं पिष्ट्वा काचपात्रे स्थापयेत् । अयं रस प्रत्यहं द्विगुञ्जमितो गुञ्जामूलचूर्णेन मधुना च सह सेवितश्चिरोद्भवं प्रमेहं निहन्ति ॥ ११ ॥

विद्यावागीशो रस —

मृतसूताभ्रनागञ्च स्वर्णं तुल्यं प्रकल्पयेत् ।
महानिम्बस्य चूर्णन्तु चतुर्भि· सममाहरेत् ॥ १२ ॥
मधुना लेहयेन्माषं लालामेहप्रशान्तये ।
सक्षौद्रं रजनीचूर्णं लेह्यं निष्कद्वयं तथा ।
असाध्यं नाशयेन्मेहं विद्यावागीशको रसः ॥ १३ ॥

अथ विद्यावागीशरसनिर्माणमाह मृतेत्यादि—मृतसूतं—रससिन्दूरम्, अभ्रमभ्रकभस्म, नागं—नागभस्म, स्वर्णभस्म च प्रत्येकं समं सममादाय चतुर्णां तुल्यं महानिम्बस्य चूर्णञ्च (बकायनत्वचश्चूर्णं) समादाय खल्वे श्लक्ष्णं पिष्ट्वा काचपात्रे स्थापयेत् । अयं रस प्रत्यहं माषमित (२रक्तिमित) मधुना सह लालामेहप्रशान्तये देयस्तथा सर्वमेहनाशार्थं निष्कद्वयहरिद्राचूर्णेन मधुना च सह प्रयोक्तव्य ॥१२–१३॥

मेहमुद्गरो रसः—

रसाञ्जनं विडं दारु विल्वगोक्षुरदाडिमम् ।
भूनिम्बः पिप्पलीमूलं त्रिकटु त्रिफला त्रिवृत् ॥ १४ ॥
प्रत्येकं तोलकं देयं लौहचूर्णन्तु तत्समम् ।
पलैकं गुग्गुलुं दत्त्वा घृतेन वटिकां कुरु ॥ १५ ॥
माषैका निर्मिता चेयं मेहमुद्गरसंज्ञिनी ।
श्रीमद्गहननाथेन लोकनिस्तारकारिणा ॥ १६ ॥
अनुपानं प्रकर्त्तव्यं छागीदुग्धं जलञ्च वा ।
विंशन्मेहं निहन्त्याशु मूत्रकृच्छ्रं हलीमकम् ॥ १७ ॥
अश्मरीं कामलां पाण्डुं मूत्राघातमरोचकम् ।
अर्शांसि व्रणकुष्ठञ्च वातरक्तं भगन्दरम् ॥ १८ ॥

अथ मेहमुद्गररसनिर्माणमाह रसाञ्जनमित्यादि—रसाञ्जन (१तो०), विड्लवणं (१तो०), दारुहरिद्राचूर्णं (१तो०), विल्वमूलत्वचश्चूर्णं (१तो०) गोक्षुरस्त्रिकण्टकचूर्णं (१तो०), दाडिमबीजचूर्णं (१तो०), भूनिम्ब -किरातकचूर्णं (१तो०), पिप्पलीमूलचूर्णं (१तो०), त्रिकटु-शुण्ठीचूर्णं (१तो०), मरिचचूर्णं (१तो०), पिप्पलीचूर्णं (१तो०), त्रिफला-हरीतकीचूर्णं (१तो०), विभीतकचूर्णम् (१तो०), आमलकचूर्णं (१तो०), त्रिवृन्मूलचूर्णं (१तो०), सर्वचूर्णसमं लौहचूर्णं लोहभस्म (१५तो०), एतत् सर्वं खल्वे निक्षिप्य पलमितं शुद्धगुग्गुलुं दत्त्वा दृढं विमर्द्य स्वल्पं घृतञ्च दत्त्वा पुनर्विमर्द्य माषकमितां वटीश्चरेत् । श्रीमद्गहननाथेन लोकोपकारार्थमयं रसो निर्मितस्तथाच रसः प्रत्यहं छागीदुग्धानुपानेन जलानुपानेन वा सह सेवितो विंशतिमेहान्, अश्मरीं, मूत्रकृच्छ्रं हलीमकं, पाण्डुरोगं, कामलां, मूत्राघातम्, अरोचकं, विविधार्शांसि, व्रणं, कुष्ठान्, वातरक्तं, भगन्दरञ्च यथानुपानैर्वा निहन्ति ।

रसाञ्जन—

दार्वीक्वाथसमं क्षीरं पादं पक्त्वा यदा घनम् । तदा रसाञ्जनं स्यात् रसगर्भं वा रसाञ्जनं आख्यम् ॥ १४-१८ ॥

मेघनादो रसः—

भस्मसूतं समं कान्तमभ्रकन्तु शिलाजतु ।

शुद्धताप्यं शिलाव्योष-त्रिफलाऽङ्कोठजीरकम् ॥ १९ ॥
कार्पासबीजं रजनी-चूर्णं भाव्यञ्च वह्निना ।
विंशद्वारं विशोष्याथ लिह्याच्च मधुना सह ।
माषमात्रो हरेन्मेहं मेघनादरसो महान् ॥ २० ॥

अथ मेघनादरसनिर्माणमाह भस्मसूतमित्यादि—भस्मसूत-रससिन्दूरं, कान्त-कान्तलौहभस्म, अभ्रकमभ्रकभस्म, शुद्धशिलाजतु, शुद्धताप्य-स्वर्णमाक्षिकभस्म, शिला-शुद्धमन शिला, व्योष-शुण्ठीचूर्ण, मरिचचूर्ण, पिप्पलीचूर्ण, त्रिफला-हरीतकीचूर्ण, विभीतकचूर्णम्, आमलकचूर्णम्, अङ्कोठ-अङ्कोलचूर्णं, जीरकचूर्ण, शुद्धकार्पासबीजचूर्णं, रजनीचूर्ण-हरिद्राचूर्णम्, एतत् प्रत्येक सम सममादाय खल्वे श्लक्ष्णं विचूर्ण्य वह्निना-चित्रकस्वरसेन सम्यगाप्लाव्य विमर्दयेत् । एवं सम्यग् विंशवार भावयित्वा माषमात्रा वटीश्चरेत् । अयं मेघनादो रस प्रत्यह यथाग्निबल माषमितो मधुना सह सेवितो मेह विनिहन्ति ॥ १९-२० ॥

चन्द्रप्रभा वटिका—

मृतसूताभ्रक लौहं नागं वङ्गं समं समम् ।
एलाबीजं लवङ्गञ्च जातीकोषफलं तथा ॥ २१ ॥
मधुकं मधुयष्टीञ्च धात्रीञ्च समशर्कराम् ।
कर्पूरं खादिरं सारं शताह्वां कण्टकारिकाम् ॥ २२ ॥
अम्लवेतसकं तुल्यं दिनैकं लाङ्गलीद्रवैः ।
भावयेत् मेषदुग्धेन नागवल्ल्या रसैर्दिनम् ॥ २३ ॥
वटिद [illegible] ास्थ्याभा कार्य्या चन्द्रप्रभा परा ।
भक्षयेद् [illegible]टिकामेकां सर्वमेहकुलान्तकाम् ॥ २४ ॥
धात्रीपटोलपत्राणां कषायं वाऽमृतायुतम् ।
सक्षौद्रं भक्षयेच्चानु सर्वमेहप्रशान्तये ॥ २५ ॥

अथ चन्द्रप्रभावटिकानिर्माणमाह मृतेत्यादि—मृतसूतं-रससिन्दूरम्, अभ्रकमभ्रकभस्म, लौहं-लौहभस्म, नागं-नागभस्म, वङ्ग-वङ्गभस्म, एलाबीजचूर्ण, लवङ्गचूर्ण, जातीकोषं-जातीफलत्वचश्चूर्ण, ( जावित्रीचूर्ण ), जातीफलचूर्ण, मधुकं-मधुकवृक्षत्वचश्चूर्ण, मधुयष्टीचूर्ण, धात्रीश्चेत्यामलकचूर्ण, शर्करा-सिता, कर्पूरं, खादिरं सारं-

खदिरसत्वचूर्णं (कत्थाचूर्णं), शताह्वा-शतपुष्पाचूर्णं, कण्टकारिकाचूर्णम, अम्लवेतस-चूर्णम्, एतेषां प्रत्येकं सम सममादाय खल्वे श्लक्ष्णं विचूर्ण्य लाङ्गलीद्रवै -कलिहारी-मूलक्वाथैः, मेषदुग्धेनाजाक्षीरेण, नागवल्ल्या-पर्णपत्रस्वरसेन च क्रमशः पृथक् ३ दिनैकं विमर्द्य बदरफलास्थिप्रमाणां (माषकमितां) वटीं धारयेत्। सर्वमेहकुलान्तकारिकामेषा चन्द्रप्रभावटीं प्रत्यहं मधुयुतेन धात्रीपटोलपत्राणां क्वाथेन वा अमृता-गुडूची तस्याः क्वाथेन मधुमिश्रितेन सर्वप्रमेहप्रशान्तये भक्षयेत्। "धात्रीञ्च सम शर्कराम्" इत्यत्र "धात्रीदाडिमशर्करा" इति पाठान्तरम् ॥ २१-२५ ॥

वङ्गेश्वरो रस इक्षुमेहे—

रसभस्मसमायुक्तं वङ्गभस्म प्रकल्पयेत्।
अस्य माषद्वयं हन्ति मेहान् क्षौद्रसमन्वितम् ॥ २६ ॥

अथेक्षुमेहे वङ्गेश्वररसयोगमाह रसभस्मेत्यादि-रसभस्म-रससिन्दूर, वङ्गभस्म, प्रत्येकं समं सममादाय खल्वे विचूर्ण्य काचपात्रे स्थापयेत्। अस्य योगस्य माषद्वयं (द्विरत्तिक) प्रत्यहं मधुना सह सेवितं सर्वप्रमेहान्निहन्ति ॥ २६ ॥

बृहद्वङ्गेश्वरो रस —

वङ्गभस्म रसं गन्धः रौप्यं कर्पूरमभ्रकम्।
कर्षं कर्षं मानमेषां सूताद्र्त्रि हेममौक्तिकम् ॥ २७ ॥
केशराजरसैर्भाव्यं द्विगुञ्जाफलमानतः।
प्रमेहान् विंशतिञ्चैव साध्यासाध्यमथापि वा ॥ २८ ॥
मूत्रकृच्छ्रं तथा पाण्डुं धातुस्थञ्च ज्वरं जयेत्।
हलीमकं रक्तपित्तं वातपित्तकफोद्भवम् ॥ २९ ॥
ग्रहणीमामदोषञ्च मन्दाग्नित्वमरोचकम्।
एतान् सर्वान् निहन्त्याशु वृक्षमिन्द्राशनिर्यथा ॥ ३० ॥
बृहद्वङ्गेश्वरो नाम सोमरोगं निहन्त्यलम्।
बहुमूत्रं बहुविधं मूत्रमेहं सुदारुणम् ॥ ३१ ॥
मूत्रातिसारं कृच्छ्रञ्च क्षीणानां पुष्टिवर्द्धनः।
ओजस्तेजस्करो नित्यं स्त्रीषु सम्यक् वृषायते।

**बलवर्णकरो रुच्यः शुक्रसञ्जनन परः ॥ ३२ ॥**
**छागं वा यदि वा गव्यं पयो वा दधि निर्मलम् ।**
**अनुपानं प्रयुञ्जीत बुद्ध्वा दोषगतिं भिषक् ॥ ३३ ॥**
**दद्याच्च बाले प्रौढे च सेवनार्थं रसायनम् ॥ ३४ ॥**

अथ बृहद्वङ्गेश्वररसनिर्माणमाह रसेत्यादि—वङ्गभस्म, रस–शुद्धपारद, शुद्धगन्धक, रौप्य–रजतभस्म, कर्पूरम्, अभ्रकमभ्रकभस्म, एतेषा प्रत्येकं कर्षं कर्षं, तथा "सूत्राद्ङ्घ्रि हेममौक्तिकम्" इति स्वर्णभस्म मुक्ताभस्म च प्रत्येक पारदात् चतुर्थांशम् (प्रत्येकं शाणमितमित्यर्थ) समादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य श्लक्ष्ण विचूर्ण्य च केशराजस्वरसै सम्यगाप्लाव्य दृढं विमर्द्य च द्विगुञ्जमिता वटी श्चरेत् । अय रस प्रत्यहं यथाव्याध्यनुपानपूर्वक सेवितो विंशतिप्रमेहान्, साध्यमसाध्यम्वा मूत्रकृच्छ्र, पाण्डु, धातुगतज्वर, हलीमक, रक्तपित्त, वातिकरोग, पित्तरोग, कफरोग, ग्रहणीम्, आमदोष, मन्दाग्निम्, अरुचिं, सोमरोगं, बहुमूत्र, बहुविध मूत्रमेह, दारुण मूत्रातीसार, मूत्रकृच्छ्रञ्च विनिहन्ति । अयं रस क्षीणाना स्नेहधातुवृद्धिकर, ओजस्तेजस्कर, स्त्रीसम्भोगशक्तिजनक, बलवर्णकर, रुचिवर्द्धक, शुक्रवर्धकश्च ज्ञेय । अस्य सेवनसमये दोषप्रकोप बुद्ध्वा पथ्ये छागीक्षीर, गोक्षीरं, दधि, अविदाहि कटुतिक्तरसवर्ज्यं वस्तु दद्यात । इदं रसायन बाले प्रौढे च सेवनार्थं प्रयोजयेत् ॥ २७–३४ ॥

वङ्गादियोग —

**वङ्गाभ्रमथ नागाभ्रं नागं वङ्गञ्च केवलम् ।**
**मेहरोगे प्रयोक्तव्यं शिलाजतुसमन्वितम् ॥ ३५ ॥**

अथान्यद्वङ्गादियोगमाह वङ्गेत्यादि—वङ्गभस्म, अभ्रकभस्म, प्रत्येक तोलकैक समादाय तोलकमितशुद्धशिलाजतुना सह सम्मर्द्य धात्रीरसेन भावयित्वा च द्विरक्तिमिता वटी श्चरेत् । अय शिलाजतुसहितवङ्गाभ्रयोग प्रमेहे प्रयोक्तव्य, इत्येको योग । नागभस्म (१तो०), अभ्रभस्म (१तो०) समादाय तोलकमितशिलाजतुना सह सम्यक् सम्मेल्य धात्रीरसेन भावयित्वा द्विरक्तिमिता वटी श्चरेत् । अयं नागाभ्रयोग प्रमेहे देय । अथवा द्विरक्तिमित नागभस्म शाणमितशिलाजतुयुक्तं कृत्वा प्रमेहे दद्यात् । एव मेव वङ्गभस्म शाणमितशिलाजतुयुक्तं कृत्वा प्रमेहे प्रयोजयेत् । केवलं ना-

गभस्म द्विरक्तिमित मधुना, केवल वङ्गभस्म द्विरक्तिमित मधुना, केवल शुद्धशिलाजतुचूर्णं शाणमित मधुना सर्वयोगेषु धात्रीस्वरसानुपानपूर्वक प्रमेहे प्रयोजयेत् ॥३५॥

कस्तूरीमोदक —

कस्तूरी वनिता क्षुद्रा त्रिफला जीरकद्वयम् ।
एलावीज त्वच यष्टि-मधुक मिषि वालकम् ॥ ३६ ॥
शतपुष्पोत्पलं धात्री मुस्तक भद्रसंज्ञकम् ।
कदलीनां फल पक्क खर्जूर कृष्णतिलकम् ॥ ३७ ॥
कोकिलाक्षस्य वीजञ्च माषमात्रं सम समम् ।
यावन्त्येतानि चूर्णानि द्विगुणा सितशर्करा ॥ ३८ ॥
धात्रीरसेन पयसा कूष्माण्डस्वरसेन च ।
विपचेत् पाकविद्वैद्यो मन्दमन्देन वह्निना ॥ ३९ ॥
अवतार्य्य सुशीते च यथालाभ विनिक्षिपेत् ।
अक्षमात्रं प्रयुञ्जीत सर्वमेहप्रशान्तये ॥ ४० ॥
वातिक पैत्तिकञ्चैव श्लष्मिक सान्निपातिकम् ।
सोमरोग वहुविध मूत्रातीसारमुल्वणम् ॥ ४१ ॥
मूत्रकृच्छ्र निहन्त्याशु मूत्राघात तथाऽश्मरीम् ।
ग्रहणीं पाण्डुरोगञ्च कामलां कुम्भकामलाम् ॥ ४२ ॥
वृष्यो वलकरो हृद्य' शुक्रवृद्धिकर' पर' ।
कस्तूरीमोदकश्चाय चरकेण च भाषितः ॥ ४३ ॥

अथ कस्तुरीमोदकनिर्माणमाह कस्तूरीत्यादि—कस्तूरी, वनिता—प्रियङ्गुचूर्णं, क्षुद्रा—कण्टकारीचूर्णं, त्रिफला—हरीतकीचूण, विभीतकचूर्णम्, आमलकचूर्णं, जीरकद्वय—श्वेतजीरकचूर्णं, कृष्णजीरकचूर्णम्, एलावीजचूर्णम्, त्वच—दारुसिताचूर्णं, यष्टिमधुक—मधुयष्टिचूर्णं, मिषि —शतपुष्पाचूर्ण , वालकं—ह्रीवेरचूर्णं, शतपुष्पाचूर्णं, नीलोत्पलचूर्णं, (शतपुष्प,कमलचूर्णम्, उत्पल—कुष्ठचूर्णमिति केचित्)। धात्रीचूर्णं, शुद्धभद्रमुस्तकचूर्णं, खर्जूरफलमज्जाचूर्णं, कृष्णतिलचूर्णम्, सुपक्ककदलीफल, कोकिलाक्षस्य वीजानां चूर्णम्, तेषा प्रत्येक माषकैकमित तथा सर्वचूर्णाच्चतुर्गुणा सितशर्करा गृह्णीयात्। पूर्वं स्तूरीशर्करातिरिक्तसर्वचूर्णद्रव्य समादाय सर्वचूर्णादष्टगुण क्षीर तथा धात्रीफलस्व-

रस कूष्माण्डस्वरसश्च मिलित्वा क्षीराच्चतुर्गुणं समादाय सर्वं कटाहे निक्षिप्य पचेत्। शुष्के द्रवांशे घनीभूत पिण्ड स्वल्पघृतेन सह भृष्ट्वा चूर्णमवतार्य पूर्वोक्तशर्कराया पाक (चाशनीं) कृत्वा तस्मिन् पूर्वपाकसिद्ध चूर्णपिण्ड सम्मेल्य स्वल्प पाकं कृत्वा अवतारयेत्, तदनु तस्मिन् कस्तूरिकाचूर्णं निक्षिप्य सम्यगालोडय च अक्षप्रमाणानि मोदकानि कुर्यात् । अस्य प्रत्यहमेकैकं मोदक सर्वप्रमेहप्रशान्तये भक्षयेत् । तथेद मोदक यथाऽव्याध्यनुपानपूर्वक सेवित वातिक पैत्तिक श्लैष्मिक सान्निपातिकञ्च सोमरोगं निहन्ति, तथा बहुविध मूत्रातीसारम्, उल्बण मूत्रकृच्छ्र, मूत्राघातम्, अश्मरी, ग्रहणीं, पाण्डुरोग, कामला, कुम्भकामला च नाशयति, तथा वृष्य , देहबलकर , हृदयव्याधिहर., शुक्रमञ्जनकश्च वर्तते। अय कस्तूरीमोदकश्चरकेण प्रोक्त ॥३६-४३॥

मेहवज्र —

भस्मसूतं मृतं कान्त-लौहभस्म शिलाजतु ।
शुद्धताप्यं शिला व्योषं त्रिफला विल्वजीरकम् ॥ ४४ ॥
कपित्थं रजनीचूर्णं भृङ्गराजेन भावयेत् ।
त्रिंशद्वारं विशोष्याथ लिह्याच्च मधुना सह ।
निष्कमात्रं हरेन्मेहान् मूत्रकृच्छ्रं सुदारुणम् ॥ ४५ ॥
महानिम्बस्य वीजञ्च षड्निष्कं पेषितञ्च यत् ।
पलतण्डुलतोयेन घृतनिष्कद्वयेन च ।
एकीकृत्य पिवेच्चानु हन्ति मेहं चिरोत्थितम् ॥ ४६ ॥

अथ मेहवज्ररसनिर्माणमाह भस्मसूतमित्यादि—भस्मसूतं-रससिन्दूरं, मृतं-कान्तलौहभस्मेति कान्तलौहभस्म, ( मृतं कान्त-कान्तलौहभस्म, साधारणलौह भस्मेति च केचित्), शुद्धशिलाजतु, शुद्धताप्य-स्वर्णमाक्षिकभस्म, शिला-शुद्धमन -शिला, व्योष-शुण्ठीचूर्णं, मरिचचूर्णं, पिप्पलीचूर्णं , त्रिफला-हरीतकीचूर्णं विभीतकचूर्णम्, आमलकचूर्णं, विल्वमूलत्वचश्चूर्णं, जीरकचूर्णं, कपित्थवृक्षत्वचश्चूर्णं, रजनीचूर्णं-हरिद्राचूर्णम् एतेषा प्रत्येकं सम सममादाय भृङ्गराजस्वरसेन सम्यगाप्लाव्य दृढं विमर्दयेत् । इत्थ त्रिंशद्वार भावयित्वा विशोष्य च काचपात्रे स्थापयेत् । अयं मेहवज्रो रस प्रत्यह निष्कमितो मधुना सह सेवितो मेहान् , दारुणं मूत्रकृच्छ्रञ्च हरति । अनुपानं-शुद्धमहानिम्बवीजचूर्णं षड्निष्कमित द्विनिष्कघृतमिश्रितेन

पलपरिमिततण्डुलोदकेन सह सम्मेल्य प्रत्यहमनुपाने पिबेत् ॥ ४४-४६ ॥

कुमारिकायोग —

कुमारी केवला देया चेपल्लवणसयुता ।
प्रमेह हन्ति सकल सप्ताहात परतो नृणाम् ॥ ४७ ॥

अथ कुमारिकायोगमाह कुमारीत्यादि—लवणयुक्ता केवला घृतकुमारीं सप्ताह-पर्यन्तं रोगनिवृत्तिपर्यन्तम्वा भक्षयेत्, तेन नृणा सर्वे प्रमेहा नश्यन्ति ॥ ७४ ॥

मेहकेशरी—

मृत वङ्ग सुवर्णञ्च कान्तलौहञ्च पारदम् ।
मुक्तां गुडत्वचञ्चैव सूक्ष्मैला नागकेशरम् ॥ ४८ ॥
समभाग विचूर्ण्याथ कन्यानीरेण भावयेत् ।
द्विमाषां वटिकां खादेद् दुग्धान्न प्रपिबेत् ततः ।
प्रमेह नाशयत्याशु केशरी करिण यथा ॥ ४९ ॥
शुक्रप्रमेह शमयेत् त्रिरात्रान्नात्र सशयः ।
चिरजात प्रमेहञ्च मधुमेहञ्च नाशयेत् ॥ ५० ॥

अथ मेहकेशरीरसनिर्माणमाह मृतमित्यादि—मृत वङ्ग-वङ्गभस्म, सुवर्ण—स्वर्णस्म, कान्तलौहभस्म, शुद्धपारद-रससिन्दूर, मुक्ताभस्म, गुडत्वच-दारुसिताचूर्ण, सूक्ष्मैलावीजचूर्ण, नागकेशरचूर्णम्, एतेषा प्रत्येकं सम सममादाय खल्वे सञ्चूर्ण्य सप्तधा कन्यास्वरसेन भावयित्वा दृढ विमर्द्य च द्विमाषकप्रमिता वटी श्चरेत्। अथ मेहकेशरी रस प्रत्यह द्विमाषकमितो मधुना सह दुग्धानुपानपूर्वक सेवित केशरी सिंहो गजमिव प्रमेह विनाशयति । तथा शुक्रप्रवाहं-शुक्रमेह त्रिरात्रान्नाशयति, तथा मधुमेहं, चिरकालीनं प्रमेहञ्च विनिहन्ति ॥ ४८-५० ॥

योगेश्वरो रस —

सूतकं गन्धको लौह. नागश्चापि वराटिका ।
ताम्रक वङ्गभस्मापि व्योमकञ्च समांशिकम् ॥ ५१ ॥
सूक्ष्मैलापत्रमुस्तञ्च विडङ्गं नागकेशरम् ।
रेणुकाऽऽमलकञ्चैव पिप्पलीमूलमेव च ॥ ५२ ॥

एषाञ्च द्विगुणं भाग मर्दयित्वा प्रयत्नत. ।
भावना तत्र दातव्या धात्रीफलरसेन च ॥ ५३ ॥
मात्रा चणकतुल्या च गुडिकेय प्रकीर्त्तिता ।
प्रमेहं वहुमूत्रञ्च अश्मरीं मूत्रकृच्छ्रकम् ॥ ५४ ॥
व्रणं हन्ति महाकुष्ठं ह्यर्शांसि च भगन्दरम् ।
योगेश्वरो रसो नाम महादेवेन भाषितः ॥ ५५ ॥

( इति प्रमेह-चिकित्सा )

अथ योगेश्वररसनिर्माणमाह सूतकमित्यादि—सूतक-शुद्धपारद (१तो०), शुद्धगन्धक, (१तो०), लौहभस्म (१तो०), नागभस्म (१तो०), वराटिकाभस्म (१तो०), ताम्रव-ताम्रकभस्म (१तो०) वङ्गभस्म (१तो०), व्योमकम्-अभ्रकभस्म (१तो०), तथा सूक्ष्मैलाचूर्ण (२तो०,) पत्र-तेजपत्रचूर्ण (२तो०), मुस्तं-शुद्ध मुस्तकचूर्ण (२तो०), विडङ्गचूर्ण (२तो०), नागकेशरचूर्ण (२तो०) रेणुका हरेणुकाचूर्ण (२तो०) आमलकचूर्ण (२तो०)पूर्व पारदगन्धकयो कज्जली कृत्वा शेषद्रव्याणि सम्मेल्य श्लक्ष्ण विचूर्ण्य च धात्रीफलानामामलकाना स्वरसेन क्वाथेन वा सप्ताहं भावयित्वा दृढ विमर्द्य च चणकप्रमाणा गुडिकाश्चरेत् । अयं रस प्रत्यह द्विरक्तित समारभ्य माषकैकपर्यन्त यथाग्निवल यथाव्याध्यनुपानैस्सह सेवितो वहुमूत्रं, प्रमेहम्, अश्मरीं, मूत्रकृच्छ्र, व्रण, महाकुष्ठम्, अर्शांसि, भगन्दरञ्च विनिहन्ति । अय योगेश्वररस पूर्व श्रीमहादेवेन प्रोक्त ॥ "नागकेशरम्" इत्यत्र "पत्रकेशरम्" इति पाठान्तरम ॥ ५१-५५ ॥

अथ प्रमेहे पथ्यापथ्यव्यवस्था—

ये विष्किरा ये प्रतुदा विहङ्गास्तेषा रसैर्जाङ्गलजैर्मनोज्ञै ।
मन्दा कषाया रसचूर्णलेहा मसूरमुद्गा लघवश्च भक्ष्या ॥ १ ॥

"भूमि विलिख्य नखरैर्विष्किरन्तीति विष्किरा " अथवा विकीर्य भक्षयन्त्येते यस्मात्तस्माद्धि विष्किरा इति, ते च—

वर्त्तकलावववर्त्तीरकपिञ्जलकतित्तिरा । कुलिङ्गकुक्कुटाद्याश्च विष्किरा समुदाहृता ॥इति।

श्यामाककोद्रवोद्दालगोधूमचूर्णमाढकी ।
जाङ्गलं तिक्तशाकञ्च यवान्नञ्च श्रमो मधु । कुलत्थाश्च हिता भाज्ये पुराणा मेहिना सदा॥२॥
रूक्षमुद्वर्त्तन गाढं व्यायामो निशि जागर । यच्चान्यच्छ्लेष्मपित्तघ्नं वहिरन्तश्च तद्धितम्॥३॥

मेदोघ्ना वद्धमूत्राश्च समा सर्वेषु धातुषु । यवास्तस्मात्प्रशस्यन्ते मेहेषु च विशेषत ॥४॥
तिक्तशाक पटोलानि जाङ्गलामिषजा रसा । सैन्धव मरिच चैव मेहिनामाहरेद्भिषक् ॥५॥
शालिमुद्गकुलित्थाश्च मेहिना देहिना हिता ॥ इति पथ्यानि ॥
मद्याऽऽसन दिवा निद्रा नवान्नानि दधीनि च । मूत्रवेग धूमपान स्वेद शोणितमोक्षणम् ॥१॥
सौवीरक सुरा सूक्त तैल क्षार घृत गुडम् । अम्लेक्षुरसपिष्टान्नानूपमासानि वर्जयेत् ॥२॥

इत्यपथ्यानि ॥

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृताया गूढार्थसन्दीपिकाव्याख्याया प्रमेहचिकित्सा ।

## अथ सोमरोग-चिकित्सा ।

तालकेश्वरो रस —

**ताल सूतं सम गन्धं मृतलौहाभ्रवङ्गकम् ।**
**मर्दयेन्मधुना चैव रसोऽयं तालकेश्वरः ॥ १ ॥**
**माषमात्र भजेत् क्षौद्रैर्बहुमूत्रप्रशान्तये ।**
**उडुम्बरफलं पक्कं चूर्णित कर्षमानतः ।**
**संलेह्य मधुना सार्द्धमनुपान सुखावहम् ॥ २ ॥**

वस्तिगतविकारसाधर्म्यात् तथा प्रमेहान्तरस्य प्रायस्तुल्यत्वात् प्रमेहाधिक एव प्रमेहविशेषस्य सोमरोगस्य चिकित्सा प्रारभ्यते, तत्र पूर्वं तालकेश्वररसनिर्माणमाह तालमित्यादि—ताल-शुद्धतालक, सूत-शुद्धपारद, शुद्धगन्धक, मृतलौह लौहभस्म, अभ्रकभस्म, वङ्गभस्म, एतेषा प्रत्येक सम सममादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य श्लक्ष्ण सञ्चूर्ण्य च काचपात्रे स्थापयेत् । अय रस प्रत्यह माषमात्र ( द्विरक्तिमित ) मधुना सह बहुमूत्रप्रशान्तये प्रयोज्य । अनुपाने च कर्षमित पक्कोडुम्बरचूर्णं मधुना सह गृह्णीयात् ॥ १-२ ॥

गगनादिलौहम्—

**गगनं त्रिफला लौह कुटज कटुकत्रयम् ।**
**पारद. गन्धकश्चैव विषटङ्कणसर्जिकाः ॥ ३ ॥**
**त्वगेला तेजपत्रञ्च वङ्गं जीरकयुग्मकम् ।**

एतानि समभागानि श्लक्ष्णचूर्णानि कारयेत् ॥ ४ ॥
तदर्द्धं चैत्रकं चूर्णं कर्षैकं मधुना लिहेत् ।
अवश्यं विनिहन्त्याशु मूत्रातीसारसोमकम् ॥ ५ ॥

अथ गगनादिलौहनिर्माणमाह गगनमित्यादि—गगनम्–अभ्रकभस्म, त्रिफला–हरीतकीचूर्णं, विभीतकचूर्णम्, आमलकचूर्णं, लौह–लौहभस्म, कुटजं–वत्सकत्वचश्चूर्णं, कटुकत्रय–शुण्ठीचूर्णं, मरिचचूर्णं, पिप्पलीचूर्णं, शुद्धपारद, शुद्धगन्धक, विषं–शुद्धवत्सनाभचूर्णं, टङ्कणं वह्निभृष्टसौभाग्य, सर्जिक–स्वर्जिकाक्षार, त्वग्–दारुसिताचूर्णम्, एलाबीजचूर्णं, तेजपत्रचूर्णं, वङ्गभस्म, श्वेतजीरकचूर्णम्, कृष्णजीरकचूर्णम्, एतेषा प्रत्येकं सम सममादाय पूर्वं पारदगन्धकयो कज्जली कृत्वा शेषद्रव्याणि सम्मेल्य सर्वद्रव्यार्द्धक चित्रकचूर्णञ्च सम्मेल्य श्लक्ष्ण विचूर्ण्य काचपात्रे स्थापयेत् । अस्य रसस्य प्रत्यह कर्षैक मधुना सह सेवितं शीघ्र निश्चयेन मूत्रातीसार सोमरोगञ्च हन्ति ।

"विषटङ्कणसर्जिका" इत्यत्र "विड्सैन्धवसर्जिका" इति पाठान्तरम् ॥३–५॥

सोमनाथरस —

कर्षं जारितलौहञ्च तदर्द्धं रसगन्धकम् ।
एलापत्रं निशायुग्मं जम्बूवीरणगोक्षुरम् ॥ ६ ॥
विडङ्गं जीरकं पाठा धात्रीदाडिमटङ्कणम् ।
चन्दनं गुग्गुलुः लोध्र-शालार्जुनरसाञ्जनम् ॥ ७ ॥
छागीदुग्धेन वटिकां कारयेद् दशरक्तिकाम् ।
निर्मितो नित्यनाथेन सोमनाथरसस्त्वयम् ॥ ८ ॥
सोमरोगं बहुविधं प्रदरं हन्ति दुर्जयम् ।
योनिशूलं मेढ्शूलं सर्वजं चिरकालजम् ।
बहुमूत्रं विशेषेण दुर्जयं हन्त्यसंशयम् ॥ ९ ॥

अथ सोमनाथरसनिर्माणमाह कर्षमित्यादि—जारितलौहं–लौहभस्म कर्षमितं तथा शुद्धपारद, शुद्धगन्धक एलाबीजचूर्णं, पत्रं–तेजपत्रचूर्णं, निशायुग्मं–हरिद्राचूर्णं, दारुहरिद्राचूर्णञ्च, जम्बूफलास्थिचूर्णं, वीरणम्–उशीरचूर्णं, गोक्षुरचूर्णं, विडङ्गचूर्णं, जीरकचूर्णं, पाठाचूर्णं, धात्रीफलचूर्णं, दाडिमबीजचूर्णं, शुद्धटङ्कण, रक्तचन्दनचूर्णं, शुद्धगुग्गुलु, लोध्रचूर्णं, शालवृक्षत्वचश्चूर्णम्, अर्जुनत्वचश्चूर्णं, रसाञ्जनं दार्व्या–

दिक्वाथकृत रसगर्भं रसाञ्जन वा, एतेषा प्रत्येक सम समादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य छागीदुग्धेन सम्यगाप्लाव्य दृढ विमर्द्य च द्वरक्तिप्रमाणा वटीश्चरेत् । अथ सोमनाथरसा निलनाथेन निर्मितस्तथा द्विरक्तिप्रमाणादारभ्य दशरक्तिमित प्रत्यहं सेवितो बहुविध सोमरोग, दुर्जय प्रदर, योनिशूल, विशेषेण दुर्जय मेदृशूल तथा विशेषेण दुर्जय बहुमूत्रञ्च विनिहन्ति ॥ ६–९ ॥

बृहत् सोमनाथरस —

हिङ्गुलसम्भव सूत पालिधा-रसमर्दितम् ।
रण्डाशोधितगन्धश्च तेनैव कज्जलीकृतम् ॥ १० ॥
तद्द्वयोर्द्विगुण लौह कन्यारसविमर्दितम् ।
अभ्रक वङ्गकं रौप्य खर्पर माक्षिक तथा ॥ ११ ॥
सुवर्णञ्च सम सर्वं प्रत्येकञ्च रसार्द्धकम् ।
तत सर्वं कन्यकाद्रावैर्मर्दयेद् भावयेत् तत ॥ १२ ॥
भेकपर्णीरसेनैव गुञ्जाद्वयवटीं तत ।
मधुना भक्षयेच्चापि सोमरोगनिवृत्तये ॥ १३ ॥
प्रमेहान् विंशति हन्ति बहुमूत्रञ्च सोमकम् ।
मूत्रातिसार कृच्छ्रञ्च मूत्राघातं सुदारुणम् ॥ १४ ॥
बहुदोष बहुविध प्रमेह मधुसंज्ञकम् ।
हस्तिमेहमिक्षुमेह लालामेह विनाशयेत् ॥ १५ ॥
वातिक पैत्तिकञ्चैव श्लैष्मिकं सोमसंज्ञकम् ।
नाशयेद् बहुमूत्रञ्च प्रमेहमविकल्पत ॥ १६ ॥

अथ बृहत्सोमनाथरसनिर्माणमाह हिङ्गुलेत्यादि—पालिधारसेन–निम्बपत्रस्वरसेन मर्दित शोधित हिङ्गुलोत्थपारद (१तो०), रण्डा–मण्डूकपर्णी तस्या स्वरसेन शुद्ध गन्धकं च (१तो०) समादाय कज्जलीं कुर्यात्, ततश्च घृतकुमारीस्वरसभावनायोगे पुटित लौहभस्म पारदगन्धकयोर्द्विगुण (४तो०), तथा वङ्गभस्म, रौप्य–रजतभस्म, खर्परभस्म, माक्षिक–स्वर्णमाक्षिकभस्म सुवर्णभस्म, एतेषा प्रत्येक रसार्द्धकं ( अर्द्धतोलकम् ) समादाय सर्वं खल्वे निक्षिप्य श्लक्ष्ण विचूर्ण्य च घृतकुमारीस्वरसेन सप्तधा भावयेत्, ततश्च दृढ विमर्द्य द्विगुञ्जप्रमाणावटीश्चरेत् ( अस्य रसस्य प्रत्यहं

द्विगुणकं मधुना सह सेवितं सामरोग विंशतिप्रमेहान्, बहुमूत्रं, मूत्रातीसार, मूत्र कृच्छ्रं, दारुण मूत्राघात, बहुविध बहुदोषयुक्तश्च प्रमेह, हस्तिमेहम्, इक्षुमेह, लालामेहं वातिकं सोमरोगं, पैत्तिक सोमरोग, श्लैष्मिक सोमरोग, सर्वान् वस्तिगतरोगांश्च निहन्ति ॥ १०-१६ ॥

सोमेश्वरो रस —

शालार्जुनं लोध्रकञ्च कदम्बागुरुचन्दनम् ।
अग्निमन्थो निशायुग्मं धात्रीदाडिमगोक्षुरम् ॥ १७ ॥
जम्बूवीरणमूलञ्च भागमेषां पलार्द्धकम् ।
रसगन्धकधान्याब्दमेलां पत्रं तथाऽभ्रकम् ॥ १८ ॥
लौहं रसाञ्जन पाठा विडङ्गं टङ्कजीरकम ।
प्रत्येकं पलिकं भागं पलार्द्धं गुग्गुलोरपि ॥ १९ ॥
घृतेन वटिकां कृत्वा खादेत् षोडशरक्तिकाम् ।
गहनानन्दनाथेन रसो यत्नेन निर्मितः ॥ २० ॥
सोमेश्वरो महातेजाः सोमरोग निहन्त्यलम् ।
एकजं द्वन्द्वजञ्चैव सन्निपातसमुद्भवम् ।
मूत्राघात मूत्रकृच्छ्रं कामलाञ्च हलीमकम् ॥ २१ ॥
भगन्दरोपदंशौ च विविधान् पैडकान् व्रणान् ।
विस्फोटार्बुदकण्डूश्च सर्वमेहं विनाशयेत् ॥ २२ ॥

( इति रसेन्द्रसारसग्रहे सोमरोग-चिकित्सा )

अथ सोमेश्वररसनिर्माणमाह शालेत्यादि—शालवृक्षसत्व-शालमूलत्वचश्चूर्णं वा, अर्जुनत्वचश्चूर्णं, लोध्रक-कदम्बत्वचश्चूर्णम्, अगुरुचूर्णं, रक्तचन्दनचूर्णम्, अग्नि-मन्थ -गणिकारिकाचूर्णं, निशायुग्मं-हरिद्राचूर्णं, दारुहरिद्राचूर्णं, धात्रीफलचूर्णं, दाडिमबीजचूर्णं-दाडिमत्वचश्चूर्णं वा, गोक्षुरचूर्णं, जम्बूफलास्थिमज्जाचूर्णं, वीरण-मूलम्-उषारचूर्णम्, एषां प्रत्येक पलार्द्धमित तथा शुद्धपारद, शुद्धगन्धक, धान्यकचूर्णम्, अब्दं-नागरमुस्तकचूर्णम्, एलाबीजचूर्णं, पत्रं-तेजपत्रचूर्णम्, अभ्रकभस्म, लौहभस्म, रसाञ्जनचूर्णं, पाठाचूर्णं, विडङ्गचूर्णं, शुद्धटङ्कण, जीरकचूर्णं, प्रत्येकं पलमित तथा शुद्धगुग्गुलोश्च अर्द्ध पल समादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि

सम्मेल्य खल्वे गोघृतं निक्षिप्य दृढं विमर्द्य च षोडशरक्तिमितां वटीं धारयेत्। श्रीगहनानन्देन भाषितोऽयं रसः प्रत्यहं यथाग्निबलं सेवितश्चैकदोषजं, द्विदोषजं, सान्निपातिकञ्च सोमरोगं, मूत्राघातं, मूत्रकृच्छ्रं, कामलां, हलीमकं, भगन्दरम्, उपदंशं, विविधान् पिडकान्, व्रणान्, विस्फोटम्, अर्बुदं, कण्डू, सर्वप्रमेहञ्च विनिहन्ति ॥ १७–२२ ॥

अत्रापि प्रमेहवत् पथ्यापथ्यं ज्ञेयम्।

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृतायां गूढार्थसन्दीपिकाव्याख्यायां सोमरोगचिकित्सा।

---

## अथ स्थौल्य-चिकित्सा।

त्र्यूषणाद्यं लौहम्—

त्र्यूषणं विजया चव्यं चित्रकं विडमौद्भिदम्।
वागुजी सैन्धवञ्चैव सौवर्चलसमन्वितम् ॥ १ ॥
अयश्चूर्णेन संयुक्तं भक्षयेन्मधुसर्पिषा।
स्थौल्यापकर्षणं श्रेष्ठं बलवर्णाग्निवर्द्धनम् ॥ २ ॥
मेहघ्नं कुष्ठशमनं सर्वव्याधिहरं परम्।
नाहारे यन्त्रणा कार्या न विहारे तथैव च।
त्र्यूषणाद्यमिदं लौहं रसायनवरोत्तमम् ॥ ३ ॥

प्रमेहात् स्थौल्यस्यापि व्यायामसाध्यत्वात्, तथा दुष्टमेदोजन्यत्वाच्च प्रमेहानन्तरं स्थौल्यचिकित्सा प्रारभ्यते। तत्र पूर्वं त्र्यूषणाद्यलौहनिर्माणमाह त्र्यूषणमित्यादि— त्र्यूषण–शुण्ठीचूर्णं, मरिचचूर्णं, पिप्पलीचूर्णं, विजया–शुद्धभङ्गाचूर्णं, चव्यचूर्णं, चित्रकचूर्णं, विड्लवणम्, औद्भिद्लवणं, वागुजी–सोमराजीचूर्णं, सैन्धवलवणं, सौवर्चललवणम्, एतेषां प्रत्येकं तोलकैकं समादाय सर्वचूर्णद्विगुणेन अयश्चूर्णेन–लौहभस्मना सह खल्वे श्लक्ष्णचूर्णं कृत्वा काचपात्रे स्थापयेत्। इदं त्र्यूषणादिलौहं द्विरक्तितो माषकैकमितं प्रत्यहं मधुसर्पिषा सह सेवितं स्थौल्यापकर्षणं करोति, तथा देहस्य बलं, वर्णं, पाचकाग्निं, च वर्द्धयति, यथाव्याध्यनुपानैश्च प्रमेहं, कुष्ठं, विविधव्याधिञ्च विनिहन्ति। आहारविहारादिषु नास्ति कोऽपि विशेषनियमः ॥ १–३ ॥

वडवाग्निलौहम्—

सूतभस्म सतालञ्च लौहं ताम्रं समं समम्।
मर्दयेत् सूर्य्यपत्रेण चास्य वल्ल प्रयोजयेत् ॥ ४ ॥
मधुना स्थूलरोगे च शोथे शूले तथैव च।
मध्वाज्यमनुपानञ्च देयं वाऽपि कफोल्वणे ॥ ५ ॥

अथ वडवाग्निलौहनिर्माणमाह सूतेत्यादि—सूतभस्म—रससिन्दूर, शुद्धहरिताल, लौहभस्म, ताम्रभस्म, एतेषा प्रत्येकं समं सममादाय खल्वे श्लक्ष्ण विचूर्ण्य सूर्य-पत्रेण—अर्कपत्रस्वरसेन सह दृढ विमर्द्य वल्लमिता ( द्विरक्तिमिता ) वटी श्चरेत्। इद वडवाग्निलौह प्रत्यह द्विरक्तिमित मधुना सह सेवित स्थौल्य विनिहन्ति, तथाऽय रस शोथे, शूले च हितकर स्तथा कफोल्वणे—कफवृद्धौ घृतमध्वनुपानेन सह प्रयोक्तव्य ॥ ४-५ ॥

वडवाग्निरस —

शुद्धसूतं समो गन्धः ताम्रं ताल समं समम्।
अर्कक्षीरैर्दिनं मर्द्यं क्षौद्रैर्लेह्यं त्रिगुञ्जकम्।
वडवाग्निरसो नाम्ना स्थौल्यमाशु नियच्छति ॥ ६ ॥

( इति रसेन्द्रसारसंग्रहे स्थौल्य चिकित्सा )

अथ वडवाग्निरसनिर्माणमाह शुद्धेत्यादि—शुद्धसूत—शुद्धपारद, शुद्धगन्धक, ताम्रभस्म, ताल—शुद्धहरितालम्, एतेषा प्रत्येक सम सममादाय पूर्व पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य दिनमेव रविदुग्धेन सह दृढ विमर्द्य काचपात्रे स्थापयेत्। अथ वडवाग्निरस प्रत्यह त्रिगुञ्जमित क्षौद्रेण सह सेवित शीघ्रमिति कतिपयैरहोभि स्थौल्यं विनाशयति ॥ ६ ॥

अथ स्थौल्ये पथ्यापथ्यमाह—

'पुराणशालयो मुद्गकुलत्थोद्दालकोद्रवा। लेखना वस्तयश्चैव सेव्या मेदस्विना सदा ॥१॥
श्रमचिन्ताव्यवायाध्वक्षौद्रजागरणप्रिय। हन्त्यवश्यमतिस्थौल्य यवश्यामाकभोजनै ॥२॥
अस्व प्नं व्यवायञ्च व्यायामं चिन्तनानि च। स्थौल्यमिच्छन् परित्यक्तुं क्रमेणातिप्रवर्द्धयेत् ३॥
प्रातर्मधुयुत वारि सेवित स्थौल्यनाशनम्। उष्णमन्नस्य मण्ड वा पिबन् कृशतनुर्भवेत् ॥४॥

इति पथ्यानि।

काचपात्रे स्थापयेत् । घृतमिद कर्षमितं प्रत्यह त्रैलोक्यसुन्दररसमेवनानन्तर भक्षयेत् । "प्रत्येक कर्षमात्रकम्, इत्यत्र "प्रत्येकं स्याद्रमार्द्धकम्"इति पाठान्तरम्॥१-४॥

वैश्वानरी वटी—

शुद्धसूतं द्विधा गन्धं मृतार्कायः शिलाजतु ।
रसमानं प्रदातव्यं रसस्य द्विगुणं विषम् ॥ ५ ॥
त्रिकटु चित्रकं वीरा निर्गुण्डी मूषलीरजः ।
अजमोदा विषांशेन प्रत्येकञ्च नियोजयेत् ॥ ६ ॥
निम्बपञ्चाङ्कुलक्काथैर्भावना चैकविंशतिः ।
भृङ्गराजरसै. सप्त दत्त्वा क्षौद्रैर्विलोडयेत् ॥ ७ ॥
भक्षयेद्बदरास्थ्याभां वटिकां तां दिवा निशि ।
श्लेष्मोदर निहन्त्याशु नाम्ना वैश्वानरी वटी ॥ ८ ॥
देवदारुवह्निमूल-कल्क क्षीरेण पाययेत् ।
भोजनं मेषदुग्धेन कुलत्थानां रसेन तु ॥ ९ ॥

अथ वैश्वानरीवटीनिर्माणमाह शुद्धसूतमित्यादि—शुद्धसूतं-शुद्धपारद (१तो०), शुद्धगन्धकं द्वितोलक, मृतार्कस्ताम्रभस्म (१तो०), मृतायो-लौहभस्म (१तो०), शुद्धशिलाजतु(१तो०),विष-शुद्धवत्सनाभचूर्ण रसस्य-पारदस्यापेक्षया द्विगुण (२तो०) तथा त्रिकटु-शुण्ठीचूर्णं, मरिचचूर्णं, पिप्पलीचूर्णं, चित्रकचूर्णं, वीरा-काकोलीचूर्णं, निर्गुण्डीचूर्णं, मूषलीरजो मूषलीचूर्णम्, अजमोदाचूर्णञ्च प्रत्येक विषांशेन विषार्द्धभागेन (प्रत्येकंतोलकैकप्रमाणेनेति) समादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेष द्रव्याणि सम्मेल्य श्लक्ष्ण सञ्चूर्ण्य च निम्बत्वच क्काथै, पञ्चाङ्कुलस्यैरण्डमूलस्य क्काथैश्च क्रमश पृथक्२ एकविंशतिवारं भावयेत् । ततश्च भृङ्गराजस्वरसेन सप्तभावना प्रदाय दृढ विमर्द्य सशोष्य च क्षौद्रेण सम्यगालोड्य बदरास्थिप्रमाणा (मापकमिता) वटीश्चरेत् । प्रत्यह प्रात सन्ध्यायाञ्च एकैका वटीं ससेव्य तदुपरान्ते देवदारुणश्चित्रकस्य च दृषदि पिष्ट मूलकल्क दुग्धेन सह पिबेत्, अथवा देवदारुचित्रकमूलकल्कसिद्ध दुग्ध पिबेत् । अजादुग्धेन, कुलत्थक्काथेन च सह भोजन हितकरम् । उपर्युक्तविधिपूर्वक सेवितेय वैश्वानरी वटी श्लेष्मप्रकोपयुक्तमुदररोग शीघ्र विनिहन्ति । अत्र प्राचीनटीकाकार "निम्बपञ्चाङ्कुलक्काथै." इत्यत्र

"पञ्चाङ्गनिम्बक्वाथेन" इतिपाठं साधु स्वीकृत्य केवलं निम्बस्य पञ्चाङ्गानां (मूल त्वक्-पत्र-पुष्पफलानां) क्वाथेन एकविंशतिभावनादानमुपदिशति ॥ ५-९ ॥

जलोदरारिरसः—

पिप्पली मरिचं ताम्रं रजनीचूर्णसंयुतम् ।
स्नुहीक्षीरैर्दिनं मर्द्यं तुल्यं जैपालवीजकम् ॥ १० ॥
निष्कं खादेद्विरेकः स्यात् सद्यो हन्ति जलोदरम् ।
रेचनानाञ्च सर्वेषां दध्यन्नं स्तम्भने हितम् ।
दिनान्ते च प्रदातव्यमन्नं वा मुद्गयूषकम् ॥ ११ ॥

अथ जलोदरारिरसनिर्माणमाह पिप्पलीत्यादि—पिप्पलीचूर्णं, मरिचचूर्णं, ताम्रभस्म, रजनीचूर्णं, हरिद्राचूर्णं, प्रत्येकं सम समनादाय खल्वे सञ्चूर्ण्य शुद्धस्नुहीदुग्धेन सम्यगाप्लाव्य दिनैकं दृढं विमर्दयेत्, ततस्तत्र सर्वद्रव्यसमं शुद्धजयपालबीजचूर्णं निक्षिप्य सम्यक् विमर्द्य च काचपात्रे स्थापयेत् । अयं रसः प्रत्यहं निष्कमितः (४मा०) सेवितो विरेकं कारयित्वा जलोदरं निहन्ति । सर्वविधविरेचनद्रव्यैर्जातस्य विरेकाधिक्यस्य स्तम्भने-निवारणे दधियुक्तौदनं हितं ज्ञेयम् । अस्य रसस्य सेवनसमये सायङ्काले हितमन्नं मुद्गयूपेन सह दद्यात्, केवलं मुद्गयूषं वा पथ्यम् । यथाग्निबलं यथारोगञ्च समीक्ष्य मात्राया हासमपि कुर्यात् ॥ १०-११ ॥

महावह्निरसः—

चतुः सूतस्य गन्धाष्टौ रजनीत्रिफलाशिलाः ।
प्रत्येकञ्च द्विभागं स्यात् त्रिवृत् जैपालचित्रकम् ॥ १२ ॥
प्रत्येकञ्च त्रिभागं स्याद्दन्ती-त्र्यूषणजीरकम् ।
प्रत्येकमष्टभागं स्यादेकीकृत्य विचूर्णयेत् ॥ १३ ॥
जयन्तीस्नुक्पयोभृङ्ग-वह्निवातारितैलकैः ।
प्रत्येकेन क्रमाद्भाव्यं सप्तवारं पृथक् पृथक् ॥ १४ ॥
महावह्निरसो नाम्ना निष्कमुष्णजलैः पिबेत् ।
विरेचनं भवेत् तेन तक्रं भक्तं ससैन्धवम् ॥ १५ ॥
दिनान्ते दापयेत् पथ्यं वर्जयेच्छीतलं जलम् ।
सर्वोदरहरः प्रोक्तः श्लेष्मवातहरः परः ॥ १६ ॥

अथ महावह्निरसनिर्माणमाह चतुरित्यादि—सूतस्य-शुद्धपादस्य चतुस्तोलकं, शुद्धगन्धकस्याष्टौ तोलकानि, रजनी-हरिद्राचूर्णं (२तो०), त्रिफला-हरितकीचूर्णं (२तो०), विभीतकचूर्णं (२तो०), आमलकफलचूर्णं (२तो०), शुद्धमन शिलाचूर्णं (२तो०), त्रिवृन्मूलचूर्णं (३तो०), शुद्धजयपालबीजचूर्णं (३तो०), चित्रकचूर्णं (३तो०), तथा दन्तीमूलचूर्णं (८तो०), त्र्यूषणचूर्णं प्रत्येकं (८तो०), जीरकचूर्णं (८तो०), पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य जयन्तीपत्रस्वरसेन, शुद्धस्नुहीदुग्धेन, भृङ्गराजस्वरसेन, वह्निश्चित्रकस्तस्य स्वरसेन, वातारितैलेन-ऐरण्ड-तैलेन च क्रमश पृथक् ७ सप्तवार भावयित्वा दृढ विमर्द्य च काचपात्रे स्थापयेत् । अथ महावह्निरस प्रत्यहं निष्कमित (४मा०) यथाग्निबल वा उष्णोदकेन सह सेवितो विरेचयति । दिनान्ते सैन्धवलवणयुक्त तक्र पथ्ये पिबेत्, शीतलजलपान निषिद्धम्। अय रस सर्वविधोदररोगान्, तथा श्लेष्मविकार वातविकारञ्च विनिहन्ति "चतु सूतस्य गन्धाष्टौ" इत्यत्र "सूतस्य गन्धकस्याष्टौ" तथा "प्रत्येकमष्टभागम" इत्यत्र "प्रत्येक सप्तभागम्" इति पाठान्तराणि क्वचिद्दृश्यन्ते, तत्र पारदस्य गन्धकस्य च पृथक् २ अष्टौ भागा ज्ञेया, "शिला" इत्यत्र क्वचित् "शिवा" इति पाठे हरितकीचूर्णमिति विशेष ॥ १२-१६ ॥

त्रैलोक्योडुम्बरो रस —

द्वौ भागौ शिववीजस्य गन्धकस्य चतुष्टयम् ।
अभ्रवह्निविडङ्गानां गुडूचीसत्त्वनागयोः ॥ १७ ॥
कृष्णजीरकट्वनाञ्च लवणक्षारयोरपि ।
प्रत्येकं भागमादाय मर्दयेत् सुरसाद्रवैः ॥ १८ ॥
वीजपूररसैर्भूयो मर्दयित्वा विशोषयेत् ।
त्रैलोक्योडुम्बरो नाम वातोदरकुलान्तकः ॥ १९ ॥
गुञ्जाढ्य ततश्चास्य ददीत घृतसंयुतम् ।
भोजयेत् स्निग्धमुष्णञ्च पायसञ्च विवर्जयेत् ॥ २० ॥

अथ त्रैलोक्योडुम्बररसनिर्माणमाह द्वावित्यादि—शिववीजस्य-शुद्धपारदस्य "शिववीज रस विद्यात्" इति, द्वितोलकं, शुद्धगन्धकस्य (४तो०), अभ्रकभस्मन. (१तो०), वह्ने श्चित्रकचूर्णस्य (१तो०), विडङ्गचूर्णस्य (१तो०), गुडूचीसत्वस्य (१तो०) नागभस्मन (१तो०) कृष्णजीरकचूर्णस्य (१तो०), कटूनामिति शुण्ठी-

मरिचपिप्पलीचूर्णानां पृथक् (१तो०), सैन्धवलवणस्य (१तो०), क्षारस्य-यव-क्षारस्य (१तो०) च यथाकल्पित भागं समादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य श्लक्ष्ण विचूर्ण्य सुरसाद्रवैरिति तुलसीस्वरसे सप्तधा भावयेत्, ततो बीजपूररसै-र्मातुलुङ्गस्वरसैरपि तथैव सम्यग् भावयित्वा दृढ विमर्द्य संशोष्य च काचपात्रे स्थापयेत्। अय त्रैलोक्योडुम्बररस प्रत्यह द्विगुञ्जमितो घृतेन सह सेवितो वातप्रकोपयुक्तमुदररोग विनिहन्ति। पथ्ये च दुग्धं दुग्धपक्ववस्तु च विवर्ज्य तथा स्निग्धमुष्णान्न भोजन देयम् ॥ १७–२० ॥

इच्छाभेदी रस —

**शुण्ठीमरिचसयुक्त रसगन्धकटङ्कणम्।**
**जैपालो द्विगुण प्रोक्त. सर्वमेकत्र चूर्णयेत् ॥ २१ ॥**
**इच्छाभेदी द्विगुञ्ज स्यात् सितया सह दापयेत्।**
**पिबेत्तु चुल्लकान् यावत् तावद्वारान् विरेचयेत्।**
**तक्रौदनञ्च दातव्य पथ्यमत्र विजानता ॥ २२ ॥**

अथेच्छाभेदीरसनिर्माणमाह शुण्ठीन्यादि—शुण्ठीचूर्ण (१तो०), मरिचचूर्ण (१तो०), शुद्धपारद (१तो०), शुद्धगन्धक (१तो०), शुद्धटङ्कण (१तो०) शुद्ध-जयपालबीजचूर्ण द्विगुण (१०तो०), समादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य काचपात्रे स्थापयेत्। अयमिच्छाभेदी रसो द्विगुञ्जमित कर्पमि-तशर्करया सह सेवितो यावद्वार चुल्लकमित शीतलजल पिबेत्तावद्वार विरेचयेत्। सम्यग् विरेकानन्तर पथ्ये तक्रौदन देयम् ॥ २१–२२ ॥

पिप्पल्याद्य लौहम्—

**पिप्पलीमूलचित्राभ्र-त्रिकत्रयेन्दुसैन्धवम्।**
**सर्वचूर्णसमं लौहं हन्ति सर्वोदरामयम् ॥ २३ ॥**

अथ पिप्पल्याद्यलौहनिर्माणमाह पिप्पलीत्यादि—पिप्पलीमूलचूर्णम्, (१तो०), चित्रकचूर्णम्, (१तो०), अभ्रकभस्म (१तो०), त्रिकत्रय-हरीतकीचूर्णं (१तो०), बिभीतकचूर्णम् (१तो०), आमलकफलचूर्णं (१तो०), शुण्ठीचूर्णं (१तो०), मरिचचूर्णं (१तो०), पिप्पलीचूर्णं (१तो०), विडङ्गचूर्णं (१तो०), मुस्तकचूर्णं (१तो०), चित्रकचूर्णं (१तो०), इन्दु-कर्पूर (१तो०), सैन्धवलवण (१तो०), सर्वचूर्ण समञ्च (१४तो०) लौहभस्म समादाय खल्वे सर्वं निक्षिप्य श्लक्ष्ण विचूर्ण्य च

काचपात्रे स्थापयेत् । इद लौहं द्विरक्तित प्रारभ्य यथाग्निवल मापक्रमितं सेवितं सर्वोदरविकारान्निहन्ति ॥ २३ ॥

उदरारिरस —

पारदं शिखितुत्थञ्च जैपाल पिप्पलीसमम् ।
आरग्वधफलान्मज्जा वज्रीक्षीरेण मर्दयेत् ।
माषमात्रां वटीं खादेत् स्त्रीणा जलोदर जयेत् ॥ २४ ॥
चिञ्चाफलरसञ्चानु पथ्य दध्योदन हितम् ।
दकोदरहरश्चैव तीव्रेण रेचनेन च ॥ २५ ॥

अथोदरारिरसनिर्माणमाह पारदमित्यादि—पारद-रससिन्दूरं, शिखितुत्थं—शुद्धनीलतुत्थकचूर्णं, जैपाल-शुद्धजयपालबीजचूर्णं, पिप्पलीचूर्णम् , आरग्वधफलस्य-कर्णिकारफलस्य मज्जाचूर्णं, प्रत्येक सम सममादाय पूर्वं खल्वे रससिन्दूर श्लक्ष्ण सम्पेष्य ततस्तत्र सर्वद्रव्यचूर्णं निक्षिप्य विमर्द्य च वज्रीक्षीरेण-शुद्धस्नुहीदुग्धेन सम्यगाप्लाव्य दृढ विमर्द्य च काचपात्रे स्थापयेत् । अथ रस प्रत्यहं यथाग्निबल रक्तित प्रारभ्य माषमात्र चिञ्चाफलस्वरसानुपानेन सह सेवित स्त्रीणा जलोदर विनिहन्ति, औषधजीर्णानन्तरं पथ्ये दध्योदन दद्यात् ॥ २४-२५ ॥

वङ्गेश्वरो रस —

सूतभस्म वङ्गभस्म भागैकं सम्प्रकल्पयेत् ।
गन्धकं मृतताम्रञ्च प्रत्येकञ्च चतुःपलम् ॥ २६ ॥
अर्कक्षीरैर्दिनं मर्द्य सर्वं तद्गोलकीकृतम् ।
रुद्ध्वा तद्भूधरे पक्त्वा पुटकेन समुद्धरेत् ॥ २७ ॥
एष वङ्गेश्वरो नाम प्लीहगुल्मोदरान् जयेत् ।
घृतैर्गुञ्जाद्वयं लेह्यं निष्कां श्वेतपुनर्नवाम् ।
गवां मूत्रैः पिबेच्चानु रजनीं वा गवां जलैः ॥ २८ ॥

( इति उदररोग-चिकित्सा )

अथ वङ्गेश्वररसयोगमाह सूतेत्यादि—सूतभस्म-रससिन्दूरं, वङ्गभस्म, प्रत्येकं पलमित, तथा शुद्धगन्धक, मृतताम्रं-ताम्रभस्म, प्रत्येकं चतुष्पल समादाय खल्वे निक्षिप्य श्लक्ष्ण पिष्ट्वा च शुद्धार्कदुग्धेन सम्यगाप्लाव्य दिनैकं दृढं विमर्द्य च गोलक

कुर्यात्, ततो मूषाया सन्निरुध्य भूधरयन्त्रे पक्त्वा स्वाङ्गशीतमौषधं पुटादुद्धृत्य सञ्चूर्ण्य च काचपात्रे स्थापयेत्। अथ वङ्गेश्वररस प्रत्यह द्विरक्तिमितो घृतेन सह ससेव्य । अनुपान निष्कमित श्वेतपुनर्नवाचूर्णं गोमूत्रेण सह पिवेत्, अथवा निष्कमित हरिद्राचूर्णं गोमूत्रेण सह पिवेत्। इत्थमुपर्युक्तविधिपूर्वक सेवितोऽयं रसः प्लीहवृद्धिं, गुल्म, जलोदराद्युदररोगाश्च निहन्ति ॥ २६–२८ ॥

अथोदररोगे पथ्यापथ्यव्यवस्था—

दोषै कुक्षौ हि सम्पूर्णे वह्निर्मन्दत्वमृच्छति। तस्माद्भोज्यानि योज्यानि दीपनानि लघूनि च १॥
शालिषष्टिकगोधूमयवनीवारभोजनम् । विरेकास्थापन श्रेष्ट सर्वेषु जठरेषु च ॥२॥

विरेचन लङ्घनमब्दसम्भवा कुलत्थमुद्गारुणशालयो यवा ।
मृगा द्विजा जाङ्गलसंज्ञयाऽन्विता पेया सुरा माक्षिकसीधुसैन्धवा ॥३॥
तक्र रसोनोरुबुतैलमार्द्रक शालिं च शाक कुलक कठिल्लकम् ।
पुनर्नवा शिग्रुफल हरीतकी ताम्बूलमेलायवशूकमायसम् ॥ ४ ॥
अजागवोष्ट्रीमहिषीपयोजलं लघूनि तीव्राणि च दीपनान्यपि ।
यथाऽमल पथ्यगणोऽयमाश्रित सखा नृणा स्यादुदरामये सति ॥५॥

रक्तशालिन् यवान् मुद्गान् जाङ्गलान् मृगपक्षिण । पयो मूत्रासवारिष्टमधु शीधु च शीलयेत् ६॥

इति पथ्यानि ।

अम्बुपानं दिवास्वप्न गुर्वभिष्यन्दिभोजनम्। व्यायाम चाध्वयानञ्च जठरी परिवर्जयेत् ॥१॥

इत्यपथ्यानि ।

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृताया
गूढार्थसन्दीपिकाव्याख्यायामुदररोगचिकित्सा ।

---

## अथ प्लीहरोग-चिकित्सा ।

रोहीतकलौहम्—

**रोहितकसमायुक्त त्रिकत्रययुतं त्वय ।**
**प्लीहानमग्रमांसञ्च यकृतञ्च विनाशयेत् ॥ १ ॥**

प्लीहवृद्धया उदररोगसम्भवादनन्तरं प्लीहचिकित्सा प्रारभ्यते । तत्र पूर्वं रोहितकयोगमाह रोहितकेत्यादि—रोहितकत्वचश्चूर्णं, त्रिकत्रय—शुण्ठीचूर्णं, मरिचचूर्णं,

पिप्पलीचूर्णं, हरीतकीचूर्णं, विभीतकचूर्णम्, आमलकचूर्णं, विडङ्गचूर्णं, शुद्धमुस्तकचूर्णं, चित्रकचूर्णम्, एतत् प्रत्येक तोलकैक तथा सर्वचूर्णसमच लौहभस्म समादाय खल्वे निक्षिप्य श्लक्ष्णचूर्णं कुर्यात्। इदं लौह द्विरक्तित प्रारभ्य मधुना सह माषकैकमित यथाग्निबल प्रत्यह सेवित प्लोहान-प्लीहवृद्धि ( इन्लार्जमेण्ट आफ स्प्लीन ) यकृद्वृद्धिं, तथाग्रमासवृद्धिञ्च निहन्ति ॥ १ ॥

लोकनाथो रस —

पारदं गन्धकञ्चैव समभागं विमर्दयेत् ।
मृताभ्रं रसतुल्यञ्च पुनस्तत्रैव मर्दयेत् ॥ २ ॥
रसात् द्विगुणलोहञ्च लौहतुल्यञ्च ताम्रकम् ।
भस्म वराटिकायाश्च ताम्रतस्त्रिगुणं कुरु ॥ ३ ॥
नागवल्लीरसेनैव मर्दयेत् यत्नतो भिषक् ।
पुटेद् गजपुटे विद्वान् स्वाङ्गशीतं समुद्धरेत् ॥ ४ ॥
यकृत्प्लीहोदरं गुल्मं श्वयथुञ्च विनाशयेत् ।
पिप्पलीमधुसंयुक्तां सगुडां वा हरीतकीम् ।
गोमूत्रञ्च पिबेच्चानु गुडं वा जीरकान्वितम् ॥ ५ ॥

अथ लोकनाथरसनिर्माणमाह पारदमित्यादि—शुद्धपारद (१तो०,) शुद्धगन्धक (१तो०), मृताभ्रमभ्रकभस्म (१तो०), लौहभस्म (२तो०), ताम्रभस्म (२तो०), ताम्रतस्त्रिगुण वराटिकाभस्म (६तो०) समादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य श्लक्ष्ण विचूर्ण्य च नागवल्लीपत्राणा स्वरसेन सप्ताह भावयित्वा शरावसम्पुटं कृत्वा गजपुटे पुटेत्, स्वाङ्गशोत पुटादुद्धृत्य काचपात्रे स्थापयेत्। अय रस प्रत्यहं द्विरक्तिमित सेवितो यकृत्प्लीहवृद्धिम्, उदररोग, गुल्मं शोथञ्च विनिहन्ति । अनुपान पिप्पलीमधुसंयुक्त हरीतकीचूर्णम्, अथवा सगुडं हरीतकीचूर्णं, गोमूत्र, माषकैकमितजीरकचूर्णयुत तोलकमितं पुराणगुड वा देयम् ॥ २-५॥

वृहल्लोकनाथो रस —

शुद्धसूतं द्विधा गन्ध खल्ले कृत्वा तु कज्जलम् ।
सूततुल्यं जारिताभ्रं मर्दयेत् कन्यकाम्बुना ॥ ६ ॥

ततो द्विगुणितं दद्यात् ताम्रं लौहं प्रयत्नतः।
काकमाचीरसेनैव सर्वं तत् परिमर्दयेत् ॥ ७ ॥
सूताच्च द्विगुणं गन्धं वराटीसम्भवं रजः।
पिष्ट्वा जम्बीरनीरेण मूषायुग्मं प्रकल्पयेत् ॥ ८ ॥
तन्मध्ये गोलकं क्षिप्त्वा यत्नेन छादयेद् भिषक्।
शरावसम्पुटं कृत्वा मृद्भस्मलवणाम्बुभिः ॥ ९ ॥
शरावसन्धिमालिप्य चातपे शोषयेत् क्षणम्।
ततो गजपुटं दत्त्वा स्वाङ्गशीतं समुद्धरेत् ॥ १० ॥
पिष्ट्वा तु सर्वमेकत्र स्थापयेद् भाजने शुभे।
खादेत् वल्लद्वयञ्चास्य मूत्रञ्चानु पिबेन्नरः ॥ ११ ॥
मधुना पिप्पलीचूर्णं सगुडां वा हरीतकीम्।
अजाजीं वा गुडेनैव भक्षयेत् तुल्ययोगतः ॥ १२ ॥
यकृत्प्लीहोदराग्निञ्च श्वयथुञ्च विनाशयेत्।
वाताष्ठीलाञ्च कमठीं प्रत्यष्ठीलां तथैव च ॥ १३ ॥
कांस्यक्रोडाग्रमांसञ्च गलञ्चैव भगन्दरम्।
वह्निमान्द्यञ्च कासञ्च लोकनाथरसोत्तमः ॥ १४ ॥

अथ बृहल्लोकनाथरसनिर्माणमाह शुद्धसूतमित्यादि—शुद्धं पारदं (१तो), शुद्धगन्धकं (२तो) समादाय खल्वे मर्दयित्वा कज्जलीं कृत्वा पारदतुल्यं (१तो०) जारिताभ्रकभस्म निक्षिप्य कन्यकाम्बुना—घृतकुमार्याः स्वरसेन सम्यगाप्लाव्य दृढं विमर्द्य द्विगुणं (२तो०) ताम्रभस्म, द्विगुणञ्च लौहभस्म दत्त्वा सर्वं काकमाचीरसेनाप्लाव्य दृढं विमर्दयेत्, ततस्तत्र सूताद्द्विगुणं (२तो०) वराटभस्म सम्मेल्य जम्बीरनिम्बुरसेन सम्यगाप्लाव्य सर्वं विमर्द्य गोलकं कृत्वा मूषायां संनिवेश्य तां शरावसम्पुटगतां कृत्वा शरावसन्धिं जलनिर्मितमृद्भस्मलवणपङ्केन सम्यगालिप्य घर्मे च संशोष्य गजपुटे पचेत्। स्वाङ्गशीतं पुटादुद्धृत्य खल्वे सञ्चूर्ण्य च काचपात्रे स्थापयेत्। अयं रसः प्रत्यहं रक्तिकाप्रारभ्य द्विरक्तिमितो शाणमितपिप्पलीचूर्णयुक्तेन मधुना सह सेवितः, अथवा शाणमितहरीतकीचूर्णयुक्तेन कर्षमितपुरातनगुडेन सह सेवितः, अथवा यवानीचूर्णमिश्रितेन गुडेन सह भक्षितो गोमूत्रानुपानेन वा सेवितो यकृत्प्लीहोदराणां वृद्धिं, शोथं, वातप्रकोपजन्याष्ठीलावृद्धिं कमठीं, प्रत्य

ष्ठीला, कास्यकोष्ठम्, अग्रमाग-हृदयाग्रमासवृद्धिं, शूलं, भगन्दरं, वह्निमान्द्यं, कासञ्च स्वस्वानुपानैर्विनिहन्ति ॥९-१४॥

ताम्रेश्वरवटी—

हिङ्गु त्रिकटुकञ्चैवापामार्गस्य च पत्रकम् ।
अर्कपत्रं स्नुहीपत्रं तथा च समभागिकम् ॥ १५ ॥
सैन्धवं तत्सम ग्राह्य लौहं ताम्रञ्च तत्समम् ।
प्लीहानं यकृत गुल्ममामवातं सुदारुणम् ॥ १६ ॥
अर्शांसि घोरमुदरं मूर्च्छां पाण्डु हलीमकम् ।
ग्रहणीमतिसारञ्च यक्ष्माणं शोथमेव च ॥ १७ ॥

अथ ताम्रेश्वरवटीनिर्माणमाह हिङ्ग्वित्यादि-घृतभर्जितहिङ्गुचूर्णं, त्रिकटुक-शुण्ठी-चूर्णं, मरिचचूर्णं, पिप्पलीचूर्णम्, अपामार्गस्य पत्राणां चूर्णम्, अर्कपत्रचूर्णं, स्नुहीपत्र-चूर्णञ्च प्रत्येक तोलकैकमित (अपामार्गपत्रस्नुहीपत्रार्कपत्रशब्दैस्तेषां त्रयाणां क्षारं ग्राह्यमिति वृद्धव्यवहारस्तदेव च सम्यक्) । तथा सैन्धवलवण पूर्वोक्तद्रव्यसम (७तो०) लौहभस्म (७तो०), ताम्रभस्म (७तो०) समादाय एतत् सर्वं खल्वे निक्षिप्य श्लक्ष्ण संचूर्ण्य जलेन पिष्ट्वा शाण मिता वटी श्चरेत् । प्रत्यहमेकैका वटी मधुना सह सेविता प्लीहयकृद्वृद्धिं, गुल्म, दारुणमामवातं, विविधान्यर्शांसि, घोरमुदररोगं, मूर्च्छां, पाण्डुरोग, हलीमक, ग्रहणीम्, अतीसारं, शोथ, यक्ष्माणञ्च विनिहन्ति ॥१५-१७॥

अग्निकुमारलौहम्—

तुत्थरामठटङ्कानि सैन्धवं धान्यजीरकम् ।
यमानी मरिचं शुण्ठी लवङ्गैला विडङ्गकम् ॥ १८ ॥
प्रत्येक तोलकं चूर्णं लौहचूर्णन्तु तत्समम् ।
रसस्य गन्धकस्यापि पलैकं कज्जलीकृतम् ॥ १९ ॥
घृतेन मधुना खाद्यं लौहमग्निकुमारकम् ।
यकृत्प्लीहोदरहरं गुल्मञ्चापि हलीमकम् ॥ २० ॥
बलवर्णाग्निजननं कान्तिपुष्टिविवर्द्धनम् ।
श्रीमद्गहननाथेन निर्मितं विश्वसम्पदे ॥ २१ ॥

अथाग्निकुमारलौहनिर्माणमाह तुत्थेत्यादि—शुद्धतुत्थकचूर्णं, रामठं-घृतभृष्ट

हिङ्गुचूर्णं, शुद्धटङ्कण, सैन्धवलवण, धान्यकचूर्णं, जीरकचूर्णं, यमानीचूर्णं, मरिच चूर्णं, शुण्ठीचूर्णं, लवङ्गचूर्णम्, एलावीजचूर्णं, विडङ्गचूर्णम्, एतेषां प्रत्येकं तोलकैकं तथा लौहचूर्णं-लौहभस्म सर्वचूर्णसम (१२तो०), शुद्धपारदस्य शुद्धगन्धकस्य च कृता कज्जली पलमिता, एतत् सर्वं खल्वे निक्षिप्य श्लक्ष्ण विचूर्ण्य च काचपात्रे स्थापयेत्। इदमग्निकुमारलोहं प्रत्यहं द्विरक्तित प्रारभ्य यथाग्निबल माषकैकमितं घृतमधुभ्या सह सेवित यकृत्प्लीहोदराणा वृद्धिं, गुल्म, हलीमकञ्च निहन्ति, तथेदं लौहं देहस्य बल, वर्णम्, अग्निं, कान्ति, पुष्टिञ्च विवर्द्धयति। श्रीमद्गहननाथेन लोकोपकारार्थमिद लौह निर्मितम्॥ १८-२१॥

प्राणवल्लभो रस —

लौह ताम्र वराटञ्च तुत्थं हिङ्गु फलत्रिकम्।
स्नुहीमूल यवक्षारः जपाल टङ्कणं त्रिवृत्॥ २२॥
प्रत्येकञ्च पलं ग्राह्य छागीदुग्धेन पेषितम्।
चतुर्गुञ्जा वटीं खादेद्वारिणा मधुनाऽपि वा॥ २३॥
प्राणवल्लभनामाऽय गहनानन्दभाषितः।
दोष रोगञ्च सर्वोदय युक्त्या वा त्रुटिवर्द्धनम्॥ २४॥
निहन्ति कामला पाण्डुमानाह श्लीपदार्बुदम्।
गलगण्ड गण्डमालां व्रणानि च हलीमकम्॥ २५॥
अपचीं वातरक्तञ्च कण्डू विस्फोटकुष्ठकम्।
नातः परतर' श्रेष्ठः कामलाऽर्त्तिभयेष्वपि॥ २६॥

अथ प्राणवल्लभरसनिर्माणमाह लौहमित्यादि—लौहभस्म, ताम्रभस्म, वराटभस्म, शुद्धतुत्थकचूर्णं, शुद्धहिङ्गुचूर्णं, फलत्रिकं—हरीतकीचूर्णं, विभीतकचूर्णम्, आमलकचूर्णं, स्नुहीमूलचूर्णं ( स्नुहीक्षारम्वा ), यवक्षार, शुद्धजयपालवीजचूर्णं, शुद्धटङ्कण, त्रिवृन्मूलचूर्णम्, एतेषा प्रत्येक पलमितं समादाय खल्वे श्लक्ष्ण विचूर्ण्य छागीदुग्धेनाप्लाव्य दृढ विमर्द्य च चतुर्गुञ्जाप्रमाणा वटीश्चरेत्। श्रीमद्गहनानन्दभाषितोऽयं प्राणवल्लभनामकरस श्चतुर्गुञ्जामित प्रत्यहं मधुना, केवल जलेन सह वा सेवित, अथवा दोषप्रकोप, रोगं, रोगिवयश्च दृष्ट्वा युक्त्या त्रुटिवर्द्धनमिति—सूक्ष्मैलावीजप्रमाणत प्रारभ्य प्रत्यह मात्रा वर्द्धयन् चतुर्गुञ्जामितो भक्षित कामला, पाण्डुरोगम्,

आर्द्रकस्वरसेनैव गुडूच्या स्वरसेन च ।
मधुनः कुडवैर्भाव्य वटिका माषमात्रतः ॥ ३४ ॥
अनुपानं प्रदातव्यं बुद्ध्वा दोषानुसारतः ।
भक्षयेत् प्रातरुत्थाय सर्वरोगकुलान्तकम् ॥ ३५ ॥
प्लीहानं ज्वरमग्रञ्च कासञ्च विषमज्वरम् ।
चिरजं कुलजञ्चैव श्लीपदं हन्ति दारुणम् ॥ ३६ ॥
रोगानीकविनाशाय धन्वन्तरिकृतं पुरा ।
मृत्युञ्जयमिदं लौहं सिद्धिदं शुभदं नृणाम् ॥ ३७ ॥

अथ मृत्युञ्जयलौहनिर्माणमाह शुद्धसूतमित्यादि—शुद्धसूत-शुद्धपारदं (१तो०), शुद्धगन्धकं (१तो०), जारिताभ्रम्-अभ्रकभस्म (१तो०), गन्धकाद् द्विगुणं (२तो०) लौहभस्म, तथा मृतताम्र-ताम्रभस्म चतुर्गुणं (४तो०) तथा द्विक्षार—यवक्षार, स्वर्जिक्षार, शुद्धटङ्कण, विड्लवण, वराटभस्म, शङ्खभस्म, चित्रकमूलचूर्णं, कुनटी-शुद्धमनःशिलाचूर्णं, शुद्धहरितालचूर्णं, कटुकीचूर्णं, रामठ-हिङ्गुचूर्णं, रोहितकत्वचश्चूर्णं, त्रिवृन्मूलचूर्णं, चिञ्चा-तिंतिडीपक्वफलस्य तिन्तिडीवृक्षस्य वा त्वचश्चूर्णं, क्षारो वा, विशाला-इन्द्रायणमूलचूर्णं, धवलाङ्कोठं-श्वेताङ्कोलचूर्णम्, अपामार्गपञ्चाङ्गचूर्णं ( क्षारो वा), तालखण्डं-तालजटाक्षार, अम्लिका-अम्लवेतसचूर्णं, निशायुग्मं-हरिद्राचूर्णं, दारुहरिद्राचूर्णञ्च, कानक-शुद्धधुस्तूरबीजचूर्णं, ( कानक-शोधितजयपालबीजमिति केचित् ), शुद्धतुत्थकचूर्णं, चक्रन्मर्द—रक्तरोहितकत्वचश्चूर्णं ( शरपुङ्खाक्षारमिति केचित्) । रसाञ्जनम्, एतेषां प्रत्येकं तौलकैकं समादाय पूर्वं पारदगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य आर्द्रकस्वरसेन सम्यगाप्लाव्य दृढं विमर्दयेत्, ततश्च गुडूचीस्वरसेनापि सम्यग् भावयेत्, तदनु मधुनः कुडवैरिति चतुःपलमितमधुना च सम्यक् विमर्द्य माषप्रमाणां वटीश्चरेत् । सर्वरोगकुलान्तकमिदं मृत्युञ्जयलौहं यथाग्निबलं माषकमितं प्रत्यहं यथान्याय्यनुपानैः यथादोषविपरीतैर्वानुपानैस्सह सेवितं प्लीहवृद्धिम्, उग्रं ज्वरं, विषमज्वरं, कासं, चिरकालीनं कुलक्रमादागतं श्लीपदञ्च विनिहन्ति । इदं मृत्युञ्जयं लौहं रोगसमूहनाशार्थं धन्वन्तरिणा निर्मितं, तथा प्रत्यहं सेवितं नृणां देहसिद्धिं, शुभञ्च करोति, ॥ ३०-३७ ॥

प्लीहार्णवो रसः—

हिङ्गुलं गन्धकः टङ्कममभ्रकं विषमेव च ।

प्रत्येक पलिक भाग चूर्णयेदतिचिक्कणम् ॥ ३८ ॥
पिप्पली मरिचञ्चैव प्रत्येकञ्च पलार्द्धकम् ।
मर्दयित्वा वटीं कुर्य्यात् वल्लमात्रां प्रयत्नत ॥ ३९ ॥
सेव्या शेफालिदलजैर्वटी माक्षिकसंयुता ।
प्लीहानं षट्प्रकारञ्च हन्ति शोथं न संशयः ॥ ४० ॥
ज्वर मन्दानलञ्चैव कास श्वासं वमिं भ्रमिम् ।
प्लीहार्णव इति ख्यातो गहनानन्दभाषितः ॥ ४१ ॥

अथ प्लीहार्णवरसनिर्माणमाह हिङ्गुल इत्यादि—शुद्धहिङ्गुल, शुद्धगन्धक, शुद्धटङ्कणम्, अभ्रकमभ्रकभस्म, विष–शुद्धवत्सनाभचूर्णम्, एतेषा प्रत्येकं पलमित, तथा पिप्पलीचूर्णं, मरिचचूर्णञ्च प्रत्येकमर्द्धपलं समादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य श्लक्ष्ण विचूर्ण्य जलेन पिष्ट्वा वल्लप्रमाणा वटीश्चरेत्। अस्य रसस्यैका वटी प्रत्यह मधुना तथा शेफालीदलजै निर्गुण्डीपत्रस्वरसानुपानैस्सह "नीलपुष्पी तु निर्गुण्डी शेफाली सुवहा च सा, हरश्रृङ्गारपत्रस्वरसै सहेति वा सेविता षट्प्रकार च प्लीहरोगं, ज्वरं, मन्दानलम्–अग्निमान्द्यं, कासं, श्वासं, वमिं, भ्रमिञ्च निहन्ति ॥ ३८–४१ ॥

प्लीहशार्दूलो रस —

सूतक गन्धक व्योषं समभागं पृथक् पृथक् ।
एभिः समं ताम्रभस्म योजयेच्चैव बुद्धिमान् ॥ ४२ ॥
मनःशिला वराटञ्च तुत्थं रामठलौहकम् ।
जयन्ती रोहितञ्चैव क्षारटङ्कणसैन्धवम् ॥ ४३ ॥
विडङ्गं चित्रं कानकञ्च रसतुल्यं पृथक् पृथक् ।
भावयेत् त्रिदिनं यावत् त्रिवृच्चित्रकणाऽऽर्द्रकैः ॥ ४४ ॥
गुञ्जामात्रां वटीं खादेत् सद्यः प्लीहविनाशिनीम् ।
पिप्पलीमधुसंयुक्तां द्विगुञ्जां वा प्रयोजयेत् ॥ ४५ ॥
प्लीहानमग्रमांसञ्च यकृद्गुल्मं सुदुस्तरम् ।
आमाशयेषु सर्वेषु चोदरे शोथविद्रधौ ॥ ४६ ॥
अग्निमान्द्ये ज्वरे चव प्लीहि सर्वज्वरेषु च ।

श्रीमद्गहननाथेन भाषितः प्लीहशार्दूलः ॥ ४७ ॥

अथ प्लीहशार्दूलरसनिर्माणमाह सूतकमित्यादि—सूतकं-शुद्धपारदं (१तो०), शुद्धगन्धक (१तो०), व्योष—शुण्ठीचूर्णं (१तो०), मरिचचूर्णं (१तो०), पिप्पली-चूर्णं (१तो०), एभिस्तुल्यं (५तो०) ताम्रभस्म, तथा शुद्धमन शिलाचूर्णं (१तो०), वराटभस्म (१तो०), तुत्थं—शुद्धनीलतुत्थकचूर्णं (१तो०), रामठं-घृतभृष्टहिङ्गु-चूर्णं (१तो०), लौहक-लौहभस्म (१तो०), जयन्तीचूर्णं (१तो०), राहितत्वचश्चूर्णं (१तो०), क्षारो यवक्षार (१तो०), टङ्कण-वन्हिभृष्टसौभाग्य (१तो०), सैन्धवल-वण ( १ तो० ), विडलवण (१ तो०), चित्रकचूर्णं (१तो०), कानक-शुद्धधुस्तूर-बीजचूर्णं ( १ तो० ), ( कानकशब्देन वृद्धा शुद्धजयपालबीजचूर्णं गृह्णन्ति ), पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य श्लक्ष्णंविचूर्ण्य च त्रिवृमूल्लक्वाथेन, चित्रकक्वाथेन, कणा-पिप्पली तस्या क्वाथेन, आर्द्रकस्वरसेन च क्रमश पृथक् ? त्रिदिनं भावयित्वा गुञ्जाप्रमाणा वटी धरेत् । अय रसो गुञ्जाप्रमाणादारभ्य द्विगुञ्जापर्यन्त पिप्पलीचूर्णमधुभ्या सेवित प्लीहयकृदुद राग्रमासवृद्धिं, गुल्मञ्च विनिहन्ति तथाऽय रस शोथे, विद्रधौ, आमाशयरोगेषु च हितकर ॥ "त्रिवृच्चित्रकणाऽऽर्द्रकै ", इत्यत्र "त्रिवृच्चित्रार्द्रधुस्तूरैं ,, इति पाठान्तरम् ॥ ४०–४७ ॥

प्लीहारिरस —

द्विकर्ष लौहभस्मापि कर्षं ताम्र प्रदापयेत् ।
शुद्धसूत तथा गन्ध कर्षमान भिषग्वरः ॥ ४८ ॥
मृगाजिनभस्मपल लिम्पाकाङ्घ्रित्वचः पलम् ।
एव भागक्रमेणैव कुर्य्यात् प्लीहारिकां वटीम् ॥ ४९ ॥
नवगुञ्जामितां खादेच्चाथ नित्य हि पूतवाक् ।
प्लीहान यकृतं गुल्मं हन्त्यवश्य न संशयः ॥ ५० ॥

अथ प्लीहारिरसनिर्माणमाह द्विकर्षमित्यादि—लौहभस्म द्विकर्षं, ताम्रभस्म (१कर्षम ), शुद्धसूतं-शुद्धपारद (१क०), शुद्धगन्धकं (१क०), मृगाजिनं-मृगचर्म तस्य भस्म (१पल), लिम्पाकाङ्घ्रि-निम्बूकमूलं तस्य त्वचश्चूर्णं पलमितं समादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य श्लक्ष्ण विचूर्ण्य

जलेन सह पिष्ट्वा नवगुञ्जाप्रमाणा वटी ध्वरेत् । अय रस प्रत्यहं द्विरक्तित प्रारभ्य यथाग्निवल नवरक्तिमितो मधुना सेवितो यकृत्प्लीहवृद्धिं, गुल्मञ्च निश्चयेन विनिहन्ति ॥ ४८–५० ॥

अपरप्लीहारिरस —

कर्षैकं तालचूर्णस्य तत्पादांशं सुवर्णकम् ।
पलार्द्धं मृततास्रञ्च तत्सम शुद्धमभ्रकम् ॥ ५१ ॥
मृगाजिनस्य भस्मापि कर्षमत्र प्रदापयेत् ।
लिम्पाकाङ्घ्रित्वचस्तद्वत् सर्वमेकत्र कारयेत् ॥ ५२ ॥
रसगुञ्जाप्रमाणेन वटिकां कारयेत् ततः ।
मधुना वह्निचूर्णेन खादेन्नित्य यथावलम् ॥ ५३ ॥
असाध्यमपि प्लीहानं हन्त्यवश्य न संशयः ।
यकृतं पाण्डुरोगञ्च गुल्मादिकभगन्दरम् ॥ ५४ ॥

अथ प्रकारान्तरेण प्लीहारिरसनिर्माणमाह कर्षैकमित्यादि—तालचूर्णस्य–शुद्धहरितालचूर्णस्य (१कर्ष), तालस्य चतुर्थांश च स्वर्णभस्म (४मा०), मृततास्र–ताम्रभस्म अर्द्धपलमितम्, अर्द्धपलमितमाभ्रकभस्म, मृगाजिनस्य–मृगचर्मणो भस्म (१कर्ष), लिम्पाकाङ्घ्रि –निम्बूकमूल तस्य त्वचश्चूर्ण (१कर्षम्) एतत् सर्वं खल्वे निक्षिप्य श्लक्ष्णं पिष्ट्वा च जलेन सह विमर्द्य रसगुञ्जाप्रमाणा –षड्गुञ्जाप्रमाणा वटी ध्वरेत् । अयं रस प्रत्यह यथाग्निवलं द्विरक्तित प्रारभ्य षड्रक्तिपर्यन्त चित्रकचूर्णमधुभ्या सेवितोऽसाध्यमपि प्लीहरोगं, यकृद्वृद्धि, पाण्डुरोग, गुल्मं, भगन्दरञ्च विनिहन्ति ॥ ५१–५४ ॥

लौहमृत्युञ्जयो रस ––

रसगन्धकलौहाभ्रं कुनटी मृतताम्रकम् ।
विषमुष्टिवराटञ्च तुत्थं शङ्खं रसाञ्जनम् ॥ ५५ ॥
जातीफलञ्च कटुकी द्विक्षारं कानकं तथा ।
व्योषं हिङ्गु सैन्धवञ्च प्रत्येकं सूततुल्यकम् ॥ ५६ ॥
श्लक्ष्णचूर्णिकृतं सर्वमेकत्र भावयेत ततः ।
सूर्य्यावर्त्तरसेनैव विल्वपत्ररसेन च ॥ ५७ ॥

सूर्य्यावर्त्तेन मतिमान् वटिकां कारयेत् ततः ।
प्लीहानं यकृत गुल्ममष्ठीलाञ्च विनाशयेत ॥ ५८ ॥
अग्रमांसं तथा शोथं तथा सर्वोदराणि च ।
वातरक्तञ्च कमठ चान्तर्विद्रधिमेव च ॥ ५६ ॥

अथ लौहमृत्युञ्जयरसनिर्माणमाह रसेत्यादि—शुद्धपारद (१तो०), शुद्धगन्धक (१तो०), लौहभस्म (१तो०), अभ्रकभस्म (१तो०), कुनटो-शुद्धमन शिलाचूर्णं (१ तो०), मृतताम्रक-ताम्रभस्म (१तो०), विषमुष्टि -शुद्धकुचेलकचूर्णं (१तो०), वराटभस्म (१तो०), शुद्धतुत्थकचूर्णं (१तो०), शङ्खभस्म (१तो०), रसाञ्जनं (१तो०), जातीफलचूर्णं (१तो०), कटुकाचूर्ण (१तो०), द्विक्षारं-यवक्षार (१तो०), स्वर्जिक्षार (१तो०), कानक-शुद्धधुस्तूरवीजचूर्णं शुद्धजेपालवीजचूर्णम्वा (१तो०), व्योषं-शुण्ठीचूर्णं (१तो०), मरिचचूर्णं (१तो०), पिप्पलीचूर्णं (१तो०), हिङ्गु-घृतमृष्टहिङ्गुचूर्णं (१तो०), सैन्धवलवण (१तो०) समादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य श्लक्ष्ण विचूर्ण्य च सूर्यावर्त्तरसेन ( सूर्यमुखीरसेन ) विल्वपत्रस्वरसेन च पृथक् ७ सप्तधा भावयेत्, ततश्च पुन सूर्यावर्त्तस्वरसेन भावयित्वा दृढ विमर्द्य च द्विरक्तिमिता वटी धरेत् । अय रस प्रत्यह सेवित प्लीहयकृदुदराग्रमासाना वृद्धिं, गुल्मम्, अष्ठीलावृद्धिं, शोथ, वातरक्तम्, अन्तर्विद्रधिं, कमठञ्च ( वातरोगविशेषो येन पुरुष-कूर्मस्येवाङ्गानि सकोचयति ) । विनिहन्ति ॥ ५५-५९ ॥

महामृत्युञ्जयो रस —

रसगन्धकलौहाभ्र कुनटी तुत्थताम्रकम् ।
सैन्धवञ्च वराटञ्च वागुजी विडशङ्खकम् ॥ ६० ॥
चित्रकं हिङ्गु कटुकी द्विक्षार कटूफलं तथा ।
रसाञ्जन जयन्ती च टङ्कणं समभागिकम् ॥ ६१ ॥
एतत्सर्वं विचूर्ण्याथ दिनमेक त्रिभावयेत ।
आर्द्रकस्वरसेनैव गुडूच्याः स्वरसेन च ॥ ६२ ॥
गुञ्जामात्रां वटीं कृत्वा भक्षयेन्मधुना सह ।
नानारोगप्रशमनो यकृद्गुल्मोदराणि च ॥ ६३ ॥
अग्रमांसं तथा प्लीहमग्निमान्द्यमरोचकम ।

**एतान् सर्वान् निहन्त्याशु भास्करस्तिमिरं यथा ।**
**महामृत्युञ्जयो नाम महेशेन प्रकाशितः ॥ ६४ ॥**

अथ महामृत्युञ्जयरसनिर्माणमाह रसेत्यादि—शुद्धपारद, शुद्धगन्धक, लौहभस्म, अभ्रकभस्म, कुनटी-शुद्धमन शिलाचूर्णं, शुद्धतुत्थकचूर्णं, ताम्रभस्म, सैन्धवलवणं, वराटभस्म, वागुजी-सोमराजीचूर्णं, विड्लवण, शङ्खभस्म, चित्रकचूर्णं, शुद्धहिङ्गुचूर्णं, कटुकीचूर्णं, द्विक्षारं-यवक्षार, स्वर्जिक्षारश्च, कट्फलचूर्णं, रसाञ्जनचूर्णं, जयन्तीचूर्णं, शुद्धटङ्कणम्, एतेषा प्रत्येक सम सममादाय खल्वे निक्षिप्य सर्वं श्लक्ष्णं विचूर्ण्य च दिनमेकमार्द्रकस्वरसेन सह मर्दयेत् । तथा गुडूचीस्वरसेनापि दिनैकं दृढ विमर्द्य च गुञ्जाप्रमाणा वटी श्चरेत् । अय रस प्रत्यहं गुञ्जाप्रमाणादारभ्य पञ्चगुञ्जामितो यथाग्निवलं मधुना सह सेवितो यकृत्प्लीहोदराग्रमासाना वृद्धिम्, अग्निमान्द्यम्, अरुचिं, गुल्मञ्च विनिहन्ति । अय महामृत्युञ्जयरसो महेश्वरेण प्रोक्त ॥ ६०-६४ ॥

हृद्गुडपिप्पली—

**विडङ्गं त्र्यूषणं हिङ्गु कुष्ठ लवणपञ्चकम् ।**
**त्रिक्षारं फेनकं चव्यं श्रेयसी कृष्णजीरकम् ॥ ६५ ॥**
**तालपुष्पोद्भवं क्षारं नाड्या· कूष्माण्डकस्य च ।**
**अपामार्गोद्भवं क्षारं चिञ्चायाश्चित्रकं तथा ॥ ६६ ॥**
**एतानि समभागानि पुराणो द्विगुणो गुडः ।**
**गुडतुल्यं प्रदातव्यं चूर्णञ्चैव कणोद्भवम् ॥ ६७ ॥**
**मर्दयित्वा दृढे पात्रे मोदकानुपकल्पयेत् ।**
**भक्षयेद् वर्द्धयेन्नित्यं प्लीहानं हन्ति दुस्तरम् ॥ ६८ ॥**
**प्रमेहं पाण्डुरोगञ्च कामलां वह्निमान्द्यकम् ।**
**यकृतं पञ्चगुलमञ्च तूदरं सर्वरूपकम् ॥ ६९ ॥**
**जीर्णज्वरं तथा शोथं कासं पञ्चविधं तथा ।**
**अश्विभ्यां निर्मिता ह्येषा सुबृहद्गुडपिप्पली ॥ ७० ॥**

अथ बृहद्गुडपिप्पलीनिर्माणमाह विडङ्गमित्यादि—विडङ्गचूर्णं, त्र्यूषणं-शुण्ठीचूर्णं, मरिचचूर्णं, पिप्पलीचूर्णं, घृतभृष्टहिङ्गुचूर्णं, कुष्ठचूर्णं, लवणपञ्चकं-सैन्धवं, सा-

मुद्र, सौवर्च्चल, विड्म्, औद्भिदल्वणश्च, (सैन्धवञ्चाथ सामुद्र विडं सौवर्च्चलं तथा। औद्भिदञ्चेति विज्ञेयं बुधैर्लवणपञ्चकमिति पञ्चलवणम् ॥ ) त्रिक्षार-यवक्षार, स्वर्जिक्षार, टङ्गणञ्च, ( स्वर्जिका यावशूकश्च क्षारद्वयमुदाहृतम्। सौभाग्येन समायुक्त त्रिक्षारमुच्यते बुधैः । ) फेनक-समुद्रफेन, चव्यचूर्ण, श्रेयसी-गजपिप्पलीचूर्णं, कृष्णजीरकचूर्णं, तालपुष्पोद्भव क्षारमिति-तालजटाक्षारं, कुष्माण्डकस्य नाड्या —कुष्माण्डलताया भस्मनिर्मितक्षारम्, अपामार्गपञ्चाङ्गक्षारम्, चिञ्चाया —पक्वचिञ्चाफलत्वच चिञ्चावृक्षत्वचो वा क्षार, चित्रकचूर्णम्, एतेषा प्रत्येकं सम सममादाय तथा सर्वचूर्णादिद्रव्यद्विगुण पुरातनगुडञ्च समादाय तथा गुडमितमेव पिप्पलीचूर्णं गृहीत्वा सर्वं विस्तृताकारखल्वे निक्षिप्य सम्यक् विमर्द्य च तोलकप्रमाणानि मोदकानि च प्रकल्पयेत्। भैषज्यरत्नावल्यान्तु सर्वचूर्णसम पिप्पलीचूर्णं तथा पिप्पलीचूर्णसहितपूर्वोक्तद्रव्यचूर्णात् ( सर्वमिलितचूर्णादित्यर्थ ) द्विगुण पुरातन गुड गृह्णीयादित्युपदेश कृत। इमा वृहद्गुडपिप्पलीं यथाग्निबल क्रमशो वर्द्धयन् भक्षयेत्। इय वृहद्गुडपिप्पली यथाव्याध्यनुपानपूर्वकं सेविता दु साध्य प्लीहान, प्रमेहं, पाण्डुरोग, कामला, वह्निमान्द्य, यकृद्वृद्धि, पञ्चविध गुल्मम्, उदररोग, जीर्णज्वर, शोथ, पञ्चविध कासञ्च निहन्ति। इय वृहद्गुडपिप्पली पूर्वमश्विभ्या निर्मिता। साधारणतया अनुपान दुग्ध, उष्णजलञ्च ॥ ६५-७० ॥

ताम्रकल्पम्—

अक्षपारदगन्धञ्च कर्षद्वयमितं पृथक्।
सर्वैः समं भवेत् ताम्रं जम्बीराम्लेन मर्दयेत् ॥ ७१ ॥
सूर्य्यावर्त्तरसैः पश्चात् कणामोचरसेन च।
योजयेत् तीव्रघर्मे तु यावत् सर्वन्तु जीर्य्यति ॥ ७२ ॥
जम्बीरस्य रसैर्भूयो रसं दण्डेन चालयेत्।
दृढे शिलामये पात्रे चूर्णयेदतिशोभनम् ॥ ७३ ॥
रक्तिद्वयक्रमेणैव योज्यं माषद्वयावधि।
ह्रासयेच्च क्रमेणैव तथा चैव विवर्द्धयेत् ॥ ७४ ॥
जीर्णे भुञ्जीत शाल्यन्नं क्षीरं घृतसमन्वितम्।
हन्त्यम्लपित्तं विविधां ग्रहणीं विषमज्वरम् ॥ ७५ ॥

चिरज्वरं प्लीहगदं यकृद्रोगं सुदुस्तरम्।
अग्रमांसं तथा शोथं कांस्यक्रोडं सुदुर्जयम्॥ ७६॥
कमठञ्च तथा शोथमौदरञ्च सुदारुणम्।
धातुवृद्धिकरं वृष्यं बलवर्णकरं शुभम्॥ ७७॥
सद्यो वह्निकरञ्चैव सर्वरोगहरं परम्।
मुखशुद्धिर्विधातव्या पर्णैश्चूर्णसमन्वितैः।
ताम्रकल्पमिदं नाम्ना सर्वरोगप्रशान्तये॥ ७८॥

अथ ताम्रकल्पनिर्माणमाह अक्षेत्यादि—अक्ष -विभीतकचूर्णं, सौवर्चललवणम्वा, शुद्धपारद, शुद्धगन्धक, प्रत्येकं द्विकर्षमित तथा सर्वसमं ताम्रभस्म (६ कर्ष), समादाय पूर्वं पारदगन्धकयो कज्जली कृत्वा शेषद्रव्याणि सम्मेल्य जम्बीरनिम्बुस्वरसेन सम्यगाप्लाव्य दृढं विमर्द्य च शोषयेत्। तत. सूर्य्यावर्त्तस्वरसेन (सूर्य्यमुखीरसेन) पिप्पलीक्वाथेन, मोचरसक्वाथेन च क्रमश पृथक् २ सम्यगाप्लाव्य दृढ विमर्द्य च तीव्रघर्मे बहुदिनपर्यन्त यावद् द्रवादिशोषण भवेत्तावत् स्थापयेत्। तदनु पुनर्जम्बीरीनिम्बुरसं वारम्वारं विनिक्षिपन् दृढ विमर्द्य तीव्रातपे शोषयेत्। तत संशोष्य सचूर्ण्य काचपात्रे स्थापयेत्। अथ ताम्रकल्प प्रथमदिने द्विरक्तित प्रारभ्य प्रत्यहमेकैका रक्तिं विवर्द्धयन मापद्वयपर्यन्त मधुना भक्षयितव्य। द्विमासानन्तरञ्च पुनरेकैका रक्ति ह्रासयेत्। इत्थं रोगनिवृत्तिपर्यन्त सेवितोऽयं ताम्रकल्प प्लीहयकृद्वृद्धिम्, अम्लपित्तं, विविधा ग्रहणीं, विषमज्वरम्, अग्रमांसं—हृदयाग्रमांसवृद्धिं, शोथं, कमठं, कांस्यक्रोडम्, उदररोगम्, विविधानुपाने सेवितं सर्वरोगञ्च निहन्ति। तथा देहस्य धातु, बलं, वर्णं, पाचकाग्निञ्च विवर्द्धयति। भेषजजीर्णानन्तरं घृतसंयुक्त शाल्योदनं, क्षीरञ्च दद्यात्। औषधसेवनानन्तर मुखशुद्ध्यर्थं चूर्णसमन्वितमिति—खदिरसारचूर्णपूगैलायुक्त ताम्बूलपत्रं भक्षयेत्॥ ७१—७८॥

दारुभस्म—

दारुसैन्धवगन्धञ्च भस्मीकृत्य प्रयत्नतः।
प्लीहानमग्रमांसं च यकृतञ्च विनाशयेत्॥ ७९॥

अथ दारुभस्मयोगनिर्माणमाह दार्वित्यादि—दारु-शुद्धदारूमूपविष (देवदारुचूर्णमिति केचित्), सैन्धवलवणं, शुद्धगन्धकञ्च प्रत्येकं समं सममादाय श्लक्ष्णं

सञ्चूर्ण्य च सम्पुटस्य कृत्वा लघुपुटे पचेत् । इद ताम्रभस्म प्लीहयकृदाम्रमासानां वृद्धिं विनाशयति ॥ ७९ ॥

वज्रक्षारम्—

सामुद्रं सैन्धवं काच यवक्षार सुवर्चलम् ।
टङ्कणं सर्जिकाक्षारं तुल्यं सर्वं विचूर्णयेत् ॥ ८० ॥
अर्कक्षीरैः स्नुहीक्षीरैरातपे भावयेत् त्र्यहम् ।
तेन लिप्त्वाऽर्कपत्रञ्च रुद्ध्वा चान्तःपुटे पचेत् ॥ ८१ ॥
तत्क्षारं चूर्णयेत् पश्चात् त्र्यूषणं त्रिफलारजः ।
जीरकं रजनी वह्निर्नवभागं समं समम् ॥ ८२ ॥
क्षारार्द्धमेव सर्वञ्च एकीकृत्य प्रयोजयेत् ।
वज्रक्षारमिदं सिद्ध स्वय प्रोक्तं पिनाकिना ॥ ८३ ॥
सर्वोदरेषु गुल्मेषु शूलदोषेषु योजयेत् ।
अग्निमांद्येऽप्यजीर्णेऽपि भक्ष्यं निष्कद्वयं द्वयम् ॥ ८४ ॥
वाताधिके जलं कोष्णं घृत वा पैत्तिके हितम् ।
कफे गोमूत्रसंयुक्तमारनालं त्रिदोषजे ॥ ८५ ॥

अथ वज्रक्षारनिर्माणमाह सामुद्रमित्यादि—सामुद्रलवण, सैन्धवलवण, काचलवण, यवक्षार, सुवर्चललवण, वह्निभृष्टटङ्कण, स्वर्जिक्षार, प्रत्येकं तोलचं समादाय श्लक्ष्णं विचूर्ण्य अर्कदुग्धेन त्रिदिन निदाघे भावयेत्, तथैव त्रिदिन स्नुहीदुग्धेन निदाघे भावयेत्, ततश्च तेन कल्केन शुद्धतनुताम्रपत्राणि विलिप्य शरावसम्पुट कृत्वा वालुकायन्त्रे पुटेत् । अथवा गजपुटे पचेत् । स्वाङ्गशीतमुद्धृत्य खल्वे सताम्र सञ्चूर्ण्य ततस्तस्मिन् त्र्यूषण—शुण्ठीचूर्णं, मरिचचूर्णं, पिप्पलीचूर्णं, त्रिफलारजो हरीतकीचूर्णं, विभीतकचूर्णम्, आमलकचूर्णं, जीरकचूर्णं, रजनीचूर्णं, वह्निश्चित्रकचूर्णं प्रत्येकं समभागेन मिलित पूर्वपुटितद्रव्यार्द्धप्रमाणेन गृहीत्वा निक्षिपेत् । तत श्लक्ष्ण सञ्चूर्ण्य च काचपात्रे स्थापयेत् । इद वज्रक्षार स्वय पिनाकिना-शिवेन प्रोक्तम् । तथेद सर्वविधोदररोगेषु, शूलेषु, गुल्मेषु, अग्निमान्द्ये, अजीर्णे च निष्कद्वयं भक्षयेत् । वाताधिक्यरोगे कोष्णोदकानुपानेन, पित्तजविकारे घृतानुपानेन, कफजरोगेषु च गोमूत्रानुपानेन तथा त्रिदोषोत्थविकारेषु च

आरनालानुपानेन भक्षयेत् । मात्राकल्पनं यथाग्निबलं वीक्ष्य द्विरक्तिंत प्रारभ्य निष्कद्वयपर्यन्तं कार्यम् ॥

आरनालस्वरूप यथा—

आरनालन्तु गोधूमैरामैः स्यान्निस्तुषीकृतैः। पक्वैर्वा सन्धितैस्तत्तु सौवीरसदृशं गुणैः ॥१८०—८५ ॥

उदरामयकुम्भिकेशरी रस

**रसगन्धकभस्मशुल्वकं कटुकक्षारयुगं सटङ्कणम् ।**
**कणमूलकचव्यचित्रकं लवणान्येव यमानिरामठम् ॥ ८६ ॥**
**समभागमिदं विभावयेत् खरतापे त्वथ जम्भवारिणा ।**
**उदरामयकुम्भिकेशरी रस एष प्रथितोऽस्य माषकः ॥ ८७ ॥**
**सुरयार्य्यनु दापयेद्भिषक् प्रसभं हन्ति च सव्रणं गदम् ।**
**यकृतं क्रिमिमग्रमांसकं कमठं प्लीहजलोदराह्वयम् ।**
**जठरामयपञ्चगुल्मकं पवनं साममथाम्लपित्तकम् ॥ ८८ ॥**

अथोदरामयकुम्भिकेशरीरसनिर्माणमाह रसेत्यादि-रस -शुद्धपारद , शुद्धगन्धक ,भस्मशुल्वकं-ताम्रभस्म, कटुक-कट्वीचूर्ण, क्षारयुगं-यवक्षार', स्वर्जिकाक्षारश्च, तथा वह्निभृष्टटङ्कणं, कणमूलक-पिप्पलीमूलचूर्ण , छान्दसत्वात् कणाशब्दे ह्रस्व , चव्यचूर्णं, चित्रकचूर्णं, लवणानि-सैन्धवं, सामुद्रं, सौवर्च्चलं, विड्म् , औद्भिदलवणञ्च, यमानीचूर्णं, रामठ—वह्निभृष्टहिङ्गुचूर्णम्, एतेषा प्रत्येकं समं सममादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य खरातपे—तीव्रनिदाघे जम्बीरनिम्बुनीरेण सम्यगाप्लाव्य दृढ विमर्द्दयेत् । इत्थ सप्तवारं भावयित्वा दृढं विमर्द्य संशोष्य च काचपात्रे स्थापयेत् । अयमुदरामयकुम्भिकेशरीरस प्रत्यहं द्विरक्तिंत प्रारभ्य यथाग्निबलं माषकैकमित सुरयार्य्यनुपानेन-सुराऽनुपानेन केवलवार्यनुपानेन सह वा सेवित सव्रण रोग, यकृत्प्लीहोदराग्रमासवृद्धिं, क्रिमिरोगं कमठरोगं—वातिकसूत्रविकारेण कूर्माकृतिविशेषरोगं, जठररोगं, पञ्चविधगुल्मानि, जलोदरं, सामं पवनमिति-आमवातरोगम् , अम्लपित्तञ्च यथानुपानैर्विनिहन्ति ॥ सुरास्वरूपं यथा-"परिपक्वान्नसन्धानसमुत्पन्नां-सुरां जगु" इति ॥ ८६—८८॥

वारिशोषणो रस —

**चतुर्विंशतिभागाः स्युर्गन्धाद्धङ्गं तदर्द्धकम् ।**

वङ्गभागाद्धवेदर्द्धः पारदः कृष्णमभ्रकम् ॥ ८६ ॥
चतुर्दशविभागं स्यान्मृतं तद्दीयते पुनः ।
मृतलोहमष्टभागं मृतताम्र नवात्र तत ॥ ६० ॥
मृतहेम द्वय तत्र मृतरूप्यञ्च सप्तकम् ।
अतिशुद्धमतिस्थूलं मृत हीर त्रयोदश ॥ ६१ ॥
भागा ग्राह्या माक्षिकस्य विशुद्धस्यात्र षोडश ।
अष्टादशमित ग्राह्य नवकाशीशक पुन. ॥ ६२ ॥
तुत्थकञ्च षडेवात्र नवीन ग्राह्यमेव च ।
तालकञ्च चतुर्भाग शिला योज्यास्त्रयो बुधै. ॥६३॥
शैलेय पञ्च दातव्य सवमेकत्र नूतनम् ।
मृतमौक्तिकभागैक सौभाग्य द्वयमेव च ॥ ६४ ॥
कुट्टयित्वा विचूर्ण्याथ जम्बीरस्य रसेन वै ।
भावयेत् सप्तधा गाढ गुडिकां तस्य कारयेत् ॥ ६५ ॥
पानकद्वितये कृत्वा मुद्रयेत् पानकद्वयम् ।
घटमध्ये निवेश्याथ दत्त्वा पूर्वञ्च वालुकाम् ॥ ६६ ॥
ऊर्द्ध्वञ्च तां पुनर्दत्त्वा वालुकां मुद्रयेन्मुखम् ।
अहोरात्र दहेदग्नौ स्वाङ्गशीत समुद्धरेत् ॥६७॥
वकुलस्य च वीजेन कण्टकारीद्वयेन च ।
गुडूचीत्रिफलावारा भावयेत् सप्तसप्ततः ॥ ६८ ॥
वृद्धदाररसेनापि तथा देयास्तु भावनाः ।
गिरिकर्ण्या रसेनापि मत्स्यरोहितपित्ततः ॥ ६६ ॥
एवं सिद्धो भवेत् सम्यक् रसोऽसौ वा.रशोषणः ।
देवान् गुरून् समभ्यर्च्य यतिनो ब्राह्मणांस्तथा ॥ १०० ॥
रक्तिकाद्वितय देयं सन्निपाते समुच्छ्रये ।
मरिचेन सम देय तेन जागर्त्ति मानव ॥ १०१ ॥
श्लैष्मिके च गदे देयं ग्रहण्यामग्निमान्द्यके ।
प्लीहि पाण्डौ प्रयोक्तव्य त्रिकटुत्रिफलाऽम्भसा ॥ १०२ ॥

शूलरोगे प्रयोक्तव्यमुदावर्त्ते विशेषतः ।
कुष्ठे सुदुष्टे देयोऽयं काकोडुम्बरिकाऽम्भसा ॥ १०३ ॥
अतिवह्निकरः श्रीदो बलवर्णाग्निवर्द्धनः ।
धन्वतरिकृतः सद्यो रसः परमदुर्लभः ।
सर्वरोगे प्रयोक्तव्यो निःसन्देहं भिषग्वरैः ॥ १०४ ॥

अथ वारिशोषणरसनिर्माणमाह चतुरिति—गन्धाच्छुद्धगन्धकाच्चतुर्विंशति भागा (२४तो०), तथा वङ्गभस्म तदर्द्धमिति गन्धकादर्द्धं (१२तो०), शुद्धपारदो वङ्गभागादर्द्ध (६तो०) मृतमिति कृष्णाभ्रकविशेषण तेन कृष्णाभ्रकभस्म चतुर्दशत्रिभागमित (१४तो०), मृतलौह–लौहभस्म अष्टभागमित (८तो०), मृतताम्र-ताम्रभस्म नवभागमित (९तो०), मृतहेम–स्वर्णभस्म द्वयभागमित (२तो०), मृतरूप्य–रजतभस्म सप्तभागमित (७तो०), अतिशुद्ध स्थूलहीरकभस्म त्रयोदश-भागमित (१३तो०), विशुद्धस्य स्वर्णमाक्षिकभस्मन पादशभागा (१६तो०), नव-कांशिक–शुद्धकांशीगमष्टादशभागमित (१८तो०), नवीन शुद्धनीलतुत्यकचूर्ण षड्भागमित (६तो०), शुद्धहरितालचूर्ण चतुर्भागमित (४तो०), शिला—शुद्धमन शिला त्रिभागमिता (३तो०), शैलेय–शुद्धशिलाजतु पञ्चभागमित (५तो०), नूतन मृतमौक्तिक–मुक्ताभस्म भागैकमित (१तो०), सौभाग्य–शुद्धटङ्कणं द्विभाग-मित (२तो०) एतत् सर्वं द्रव्यजात यथाशक्ति यथाप्रमाण समादाय पूर्वं पारदग-न्धकया कज्जला कृत्वा शेषद्रव्याणि युक्त्या सम्मेल्य श्लक्ष्ण सञ्चूर्ण्य च जम्बीरनि-म्बुस्वरसेन सम्यगालोड्य दृढं विमर्द्य शोषयेत्। इत्थं सप्तधा भावयित्वा गुडिका-गोलक कृत्वा तच्च पानकद्वितये कृत्वेति-त शरावे निक्षिप्य शरावान्तरेण सम्यगा-च्छाद्य अथवा मूषाया निक्षिप्य मूषान्तरेण सम्यगाच्छाद्य वस्त्रकुट्टितस्निग्धमृद पङ्केन द्वया सन्धि सम्यग् विलिप्य सर्वाङ्ग दृढ लिम्पेत्। सशुष्कञ्च सम्पुट वालुकायन्त्र-मध्ये संस्थाप्य वालुपूरितभाण्डस्यापि मुख शरावेणाच्छाद्य सन्धिबन्धनञ्च कृत्वा रात्रि-न्दिव पचेत्। स्वाङ्गशीतमौपव पुटादुद्धृत्य खल्वे श्लक्ष्ण सञ्चूर्ण्य बकुलबीजाना क्वाथेन (मौलसरीबीजक्काथ), कण्टकारीद्वयक्काथेन (कण्टकारीद्वयं–शुभ्रा कण्टकारिका बृहती च, गुडूच्या स्वरसेन क्वाथेन वा, त्रिफलाक्वाथेन च क्रमश पृथक् २ सप्त २ वार सम्यग् भावयित्वा दृढ सम्पेष्य च तदनन्तर वृद्धदारस्वरसेन (विधारास्वरस), गिरिकर्ण्या –अपराजिताया स्वरसेन, रोहितमत्स्यपित्तेन च क्रमश पृथक् २ सप्त-

धा भावयित्वा दृढ विमर्द्य संशोष्य च काचपात्रे स्थापयेत्। एवं यथाविधिसिद्धोऽय वारिशोषणरसो देवान्, गुरुन्, यतिनो ब्राह्मणाश्च सम्पूज्य (अथवा रोगिसम्बन्धिभिस्तेषां पूजनं कारयित्वा) प्रयोक्तव्य । अयं रसो द्विरक्तिमित समुच्छ्र्ये सन्निपाते-दारुणसन्निपातरोगे मरिचचूर्णेन मधुना च सह देय स्तेन मूर्च्छित पुरुष शीघ्र जागर्ति-मूर्च्छारहितो भवतीत्यर्थ । तथा श्लैष्मिकरोगे, ग्रहण्याम्, अग्निमान्द्ये, प्लीहवृद्धौ, पाण्डुरोगे च त्रिकटुत्रिफलाक्काथानुपानेन सह प्रयोक्तव्य । शूले, उदरविकारे, कुष्ठेषु च काकोडुम्बरपत्रस्वरसानुपानेन प्रयोक्तव्य । अयं श्रीधन्वन्तरिनिर्मितो वारिशोषणरस सर्वरोगेषु विविधानुपानैं प्रयुक्त सद्य फलं ददाति ॥ ८९-१०४ ॥

सर्वतोभद्रो रस —

सूतं गन्ध तपनगगनं कान्तलौहस्य चूर्णम्
कृत्वैकध्य द्रृषदि मथितं शृङ्गवेरस्य वारा ।
युञ्ज्याद्रागे यकृति गुदजे प्लीहि सर्वज्वरेषु
शोथे पाण्डौ क्रिमिकृतगदे सर्वतः कामलायाम् ॥ १०५ ॥
कासे श्वासे च मेहे जलजठरगदे सर्वदोषप्रसूते ।
ख्यातो योग सुरमणिकृत. सर्वतोभद्रनामा ॥ १०६ ॥

( इति प्लीहरो-चिकित्सा )

अथ सर्वतोभद्ररसनिर्माणमाह सूतमित्यादि—सूत-शुद्धपारद, शुद्धगन्धक, तपन -ताम्रभस्म, गगनमभ्रकभस्म, कान्तलौहस्य चूर्णमिति-कान्तलौहभस्म, एतेषा प्रत्येकं सम ममसादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य शृङ्गवेरस्य वारा-आर्द्रकस्वरसेन सम्यगाप्लाव्य दृढं विमर्दयेत् । इत्थ सप्तवारं भावयित्वा सशोष्य च काचपात्रे स्थापयेत् । अय रस प्रत्यहं द्विरक्तिमितो यथाव्याध्यनुपानैं सह यकृत्प्लीहवृद्धौ, सर्वज्वरेषु, कासे, श्वासे, गुदजेऽर्शसि, शोथे, पाण्डुरोगे, क्रिमिजन्यरोगेषु, प्रमेहेषु, जलजठरगदे-जलोदररोगे, अग्निमान्द्ये, सर्वदोषविकारेषु च प्रयोक्तव्य । अयं सुरमणिनिर्मित सर्वतोभद्रनामकरस सर्वरोगहरणार्थं ख्यात ॥ १०५-१०६ ॥

अथ पथ्यापथ्यम्—

यकृत्प्लीहगदे प्राज्ञ पथ्यश्चोदरदर्शितम् । निषेवेत तथाऽपथ्य तेनासौ सुखमश्नुते ॥ १ ॥

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृताया गूढार्थसन्दीपिकाव्याख्याया प्लीहाधिकार ।

## अथ शोथरोग-चिकित्सा ।

त्रिकट्वाद्यं लौहम्—

त्रिकटु त्रिफला दन्ती मार्गत्रिमदशुण्ठकैः ।
पुनर्नवासमायुक्तं शाथ हन्ति सुदुस्तरम् ।
लौहं शोथोदरस्थौल्यजलोदरनिवारणम् ॥ १ ॥

शोथस्योदररोगानुगुणत्वादुत्सेधसाधर्म्याच्च प्लीहरोगचिकित्सानन्तरं शोथचिकित्सा प्रारभ्यते, तत्र पूर्वं त्रिकट्वाद्यलौहनिर्माणमाह त्रिकट्वित्यादि—त्रिकटुचूर्णं, त्रिफलाचूर्णं, दन्तीमूलचूर्णं, मार्ग -अपामार्गचूर्णं, त्रिमद —विडङ्गचूर्णं, मुस्तकचूर्णं, चित्रकचूर्णं, शुण्ठीचूर्णं, पुनर्नवाचूर्णम्, एतेषा प्रत्येक चूर्णं समभाग तथा लौहभस्म सर्वचूर्णसम समादाय श्लक्ष्ण विचूर्ण्य च काचपात्रे स्थापयेत् । इदं लौह पथ्यरक्षित प्रारभ्य यथाग्निबलं सेवितं शाथम्, उदररोगं, स्थौल्यं, जलोदरञ्च विनिहन्ति ॥ १ ॥

कटुकाद्यं लौहम्—

कटुकी त्र्यूषण दन्ती विडङ्ग त्रिफला तथा ।
चित्रको देवकाष्ठञ्च त्रिवृद्वारणपिप्पली ॥ २ ॥
तुल्यान्येतानि चूर्णानि द्विगुणं स्यादयोरजः ।
क्षीरेण पीतमेतत्तु श्रेष्ठं श्वयथुनाशनम् ॥ ३ ॥

अथ कटुकाद्यलौहनिर्माणमाह कटुकीत्यादि—कटुकीचूर्णं, त्र्यूषण—शुण्ठीचूर्णं मरिचचूर्णं, पिप्पलीचूर्णं, दन्तीमूलचूर्णं, विडङ्गचूर्णं, त्रिफला—हरीतकीचूर्णं, विभीतकचूर्णम्, आमलकचूर्णं, चित्रकचूर्णं, देवकाष्ठ—देवदारुचूर्णं, त्रिवृन्मूलचूर्णं, वारणपिप्पली—गजपिप्पलीचूर्णम्, इमानि सर्वाणि पृथक २ तुल्यानि तथा सर्वचूर्णद्वि-

गुणमयोरजो-लौहभस्म समादाय श्लक्ष्ण विचूर्ण्य च काचपात्रे स्थापयेत् । इद कटुकाद्यलौह यथाग्निबल प्रत्यह क्षीरेण-दुग्धानुपानेन सह सेवित शोथ विनिहन्ति ॥ २-३ ॥

त्र्यूषणाद्य लौहम्—

**अयोरजस्त्र्यूषणयावशूक-चूर्णञ्च पीतं त्रिफलारसेन ।**
**शोथं निहन्यात् सहसा नरस्य यथाऽशनिर्वृक्षमुदीर्णवेग ॥ ४ ॥**

अथ त्र्यूषणाद्यलौहनिर्माणमाह अय इत्यादि—त्र्यूषण-शुण्ठीचूर्णं, मरिचचूर्णं, पिप्पलीचूर्णं, यावशूक-यवक्षार, एतेषा प्रत्येक तोलकैकमित तथा अयोरज-लौहभस्म च सर्वतुल्य समादाय खल्वे सञ्चूर्ण्य काचपात्रे स्थापयेत् । इद त्र्यूषणाद्य लौह प्रत्यह यथाग्निबल त्रिफलारसेन-त्रिफलाक्वाथेन सह सेवित शोथ निहन्ति, यथा समुदीर्णवेगोऽशनिर्वज्रो वृक्ष निहन्ति ॥ ४ ॥

सुवर्चलाद्यं लौहम्—

**सुवर्चला व्याघ्रनख दीप्यक लौहमेव च ।**
**चव्यञ्च देवकाष्ठञ्च दीप्यक लौहमेव च ।**
**शोथं पाण्डुं तथा कासमुदराणि निहन्ति च ॥ ५ ॥**

अथ सुवर्चलाद्यलौहनिर्माणमाह सुवर्चलेत्यादि—सुवर्चला-सूर्यभक्ताचूर्ण (हुलहुलचूर्ण), व्याघ्रनखचूर्ण, चित्रकचूर्ण, कटुरोहिणी-कटकीचूर्ण, चव्यचूर्ण, देवकाष्ठ-देवदारुचूर्ण, दीप्यक-यमानीचूर्णम्, एतेषा प्रत्येक चूर्ण सम समादाय तथा लौहभस्म च सर्वचूर्णसम गृहीत्वा खल्वे श्लक्ष्ण सञ्चूर्ण्य काचपात्रे स्थापयेत् । इद सुवर्चलाद्य लौह प्रत्यह यथाशक्ति प्रारभ्य माषकैकमित मधुना सेवित शोथ, पाण्डुरोग, कास, विविधोदररोगाश्च निहन्ति ॥ ५ ॥

क्षारगुडिका—

**क्षारद्वय स्यात् लवणानि पञ्च चत्वार्य्ययो व्योषफलत्रिकञ्च ।**
**सपिप्पलीमूलविडङ्गसारं मुस्ताऽजमोदाऽमरदारुबिल्वम् ॥ ६ ॥**
**कलिङ्गकश्चित्रकमूलपाठायष्टयाह्वयं सातिविषं पलाशम् ।**
**सहिङ्गुकर्षं त्वतिसुक्ष्मचूर्णं द्रोणं तथा मूलकशुण्ठकानाम् ॥ ७ ॥**
**स्याद्भस्मनस्तत् सलिलेन साध्यमालोड्य यावद् घनमप्यदग्धम् ॥**

स्त्यानं ततः कोलसमाञ्च मात्रां कृत्वा तु शुष्कां विधिना प्रयुञ्ज्यात् ॥८॥
प्लीहोदर श्वित्रहलीमकार्शः पाण्डवामयारोचकशोथशोषान् ।
विसूचिकागुल्मगराश्मरीश्च सश्वासकासान् प्रणुदेत् सकुष्ठान् ॥९॥
सौवर्चलं सैन्धवञ्च विडमौद्भिदमेव च ।
सामुद्रलवणञ्चात्र जलमष्टगुणं भवेत् ॥ १० ॥

( इति शोथरोगचिकित्सा )

अथ क्षारगुडिकानिर्माणमाह क्षारेत्यादि—क्षारद्वय-यवक्षार ,स्वर्जिक्षारश्च, पञ्च-लवणानि-सैन्धवलवणं, सामुद्रलवण, सौवर्चललवण, विड्लवणम् , औद्भिदलवणञ्चेति, चत्वार्य्यय इति-वज्रलौह भस्म, पाण्ड्यलौहभस्म, तीक्ष्णलौहभस्म, कान्तलोहभस्मच, व्योष-शुण्ठीचूर्ण, मरिचचूर्णं, पिप्पलीचूर्णं, फलत्रिक—त्रिफलाचूर्णं—हरीतकीचूर्णं, विभीतकचूर्णम् , आमलकचूर्णं, पिप्पलामूलचूर्णं, विडङ्गसार-विडङ्गतण्डुलचूर्णं, शुद्ध-मुस्तकचूर्णम् , अजमोदा-यमानीचूर्णम , अमरदारु-देवदारुचूर्णं, बिल्वत्वचश्चूर्णं, कलिङ्गकमिन्द्रयवचूर्णं,चित्रकमूलचूर्णं, पाठाचूर्णं, यष्ट्याह्वयं-मधुयष्टिचूर्णम् ,अतिविषा-चूर्णं, पालाशक्षार , घृतभृष्टहिङ्गुचूर्णम् , एतेषा प्रत्येकं कर्षमित तथा मूलकशुण्ठकाना-द्रोणमित मूलक समादाय भस्म कृत्वा अष्टगुणजले भस्मापेक्षयाऽष्टगुणे सलिले नतु मूलकापेक्षयाऽष्टगुण जल ग्राह्य, मूलकाना भाराधिक्य तज्जन्यभस्मनश्चाल्पभारं भवति, एवञ्च भस्मप्रमाण विहाय मूलकप्रमाणापेक्षयाऽष्टगुणसलिलस्य शोषणे वृथैव श्रम , भस्मापेक्षयैवाष्टगुण जलमादाय तस्मिंस्तद्भस्म घोलयित्वा सम्यक् विमर्द्य च त्रिगुणीकृतवस्त्रेण सलिल स्रावयित्वा स्रावितञ्च जलं कटाहे निक्षिप्य वह्नौ पचेत् , यावच्च जलस्य शोषणेन घनता ज्ञायते तावत्क्षणे तस्मिन्पूर्वोक्तयवक्षारादिकद्रव्याणि निक्षिप्य स्वल्पकालपर्यन्त मन्दाग्निना पक्त्वा चावतारयेत् , तत कोलप्रमाणा गुडिका कृत्वा सशोष्य च काचपात्रे स्थापयेत् । इय क्षारगुडिका प्रत्यहमुष्णोदकेन, मधुना, उष्णदुग्धेन सह वा सेविता प्लीहोदरयोर्वृद्धिं, श्वित्र, हलीमकम् , अर्श., पाण्डुरोगम् , अरोचक, शोथ, शोष, विसूचिका, गुल्म, गर-विषविकारम् , अश्मरीं, कुष्ठानि, कास, श्वासञ्च विनिहन्ति । सौवर्चलेत्यादिना पञ्चलवणनिर्देशस्तथा मूल-कभस्मापेक्षया चाष्टगुण जल ग्रहीतव्यम् । क्षारगुडिकाया निर्माणे चक्रदत्ते मतभेदो यथा "क्षारद्वयं स्याल्लवणानि चत्वार्ययोरजो व्योषफलत्रिके च" इति तत्र हि

सैन्धवसौवर्चलविडौद्भिदानि सामुद्रवर्जितानि चत्वारि लवणानि, तथा लौहभस्मतश्च पलार्द्धमेव गृहीतम् वृद्धाश्च प्रायस्तदेव व्यवहरन्ति । अत्र गुडिकाया मूलकरसद्रोणे पञ्चद्रोणे वा जलं दत्वा त्रिभागावशिष्टमर्द्धभागावशिष्टं वा कार्यम्, ततः परिस्राव्यम्, ततः क्षारद्वयादिचूर्णापेक्षया चतुर्गुणं क्षारजलं गृहीत्वा पक्तव्यम् । पाकाच्च घनीभावे जाते क्षारद्वयादिचूर्णप्रक्षेपः, इति केचिद्वदन्ति । अत्र मते क्षारोदकनिर्माणञ्च यथा—क्षारात् षड्गुणं जलं दत्वा वस्त्रेण दोलायन्त्रं विधाय तदधः पात्रं पातयित्वा क्षारजलं ग्राह्यम् । एवमेकविंशतिवारं पुनः पुनः स्रावयित्वा ग्राह्यम्, अथवा केचिदाहुः—क्षाराच्चतुर्गुणं जलं दत्वा पाककरणेन चतुर्थावशिष्टे स्रावयित्वा तज्जलं ग्राह्यम् । वस्तुतस्तु क्षारगुडिकाया या विधिः प्रदर्शिताऽत्र ग्रन्थकर्त्रा तयैव रीत्या निर्माणं कार्यम् ॥ ६—१० ॥

अथ शोथे पथ्यापथ्यविवेकः —

पुरातनाः शालियवाः कुलत्था मुद्गाश्च माषाऽपि च शल्लकोऽपि ।
भुजङ्गभुक् तित्तिरिताम्रचूडलावादयो जाङ्गलविष्किराश्च ॥ १ ॥
कूर्मोऽपि शृङ्गी प्रपुराणसर्पिस्तक्रं सुरा नारिकेलासवश्च ।
निष्पावकाठिल्लककारवेल्लशिग्रुरसोनकर्कोटकबालमूलम् ॥ २ ॥
पुनर्नवा गुञ्जनकं पटोलं वेत्राग्रधात्रीफलमूलकानि ।
यथानलं पथ्यमिदं प्रयुक्तं शोफामयं सत्वरमुच्छिनत्ति ॥ ३ ॥
पुराणयवशाल्यन्नं दशमूलोपसाधितम् । अल्पमल्पपटुस्नेहं भोजनं शोफिनां हितम् ॥ ४ ॥

इति पथ्यानि ।

ग्राम्यानूपं पिशितलवणं शुष्कशाकं नवान्नं, गौडं पिष्टं दधि सकृशरं निर्झरं मद्यमम्लम् । धानावल्लूरमासं बह्वशनमथवा गुर्वसात्म्यं विदाहि, स्वप्नं रात्रौ श्वयथुगदवान् वर्जयेत् मैथुनञ्च ॥ १ ॥

पिष्टान्नमम्लं लवणानि मद्यं मृदं दिवास्वप्नमजाङ्गलञ्च ।
पयो गुडं तैलमथो गुरूणि शोफं जिघांसुः परिवर्जयेच्च ॥२॥ इत्यपथ्यानि ।

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृतायां गूढार्थ-तत्त्वदीपिकाव्याख्यायां शोथचिकित्सा ॥

## अथार्बुदरोग-चिकित्सा।

रौद्ररस —

शुद्धसूत समं गन्धं मर्द्यं यामचतुष्टयम्।
नागवल्लीरसैर्युक्तं मेघनादपुनर्नवैः॥ १॥
गोमूत्रपिप्पलीयुक्तं मर्द्यं रुद्ध्वा पुटेल्लघु।
लिह्यात् क्षौद्रैः रसो रौद्रो गुञ्जामात्रोऽर्बुदं जयेत्॥ २॥

उत्सेधसाधर्म्याच्छोथचिकित्सानन्तरमर्बुदचिकित्सा प्रारभ्यते, तत्र पूर्वं रौद्ररसनिर्माणमाह शुद्धेत्यादि—शुद्धसूत—शुद्धपारद, शुद्धगन्धकञ्च द्वयं सममादाय यामचतुष्टयपर्यन्त विमर्द्य श्लक्ष्णा कज्जलीं कृत्वा नागवल्लीस्वरसेन, मेघनाद—सकण्टकवन्यतण्डुलीयकस्तस्य स्वरसेन, पुनर्नवाया स्वरसेन, गोमूत्रेण, पिप्पलीक्वाथेन च क्रमश पृथक् ? दिनैकं निरन्तरं विमर्द्य शरावसम्पुटं कृत्वा लघुपुटे पुटेत्, स्वाङ्गशीतमुद्धृत्य खल्वे सञ्चूर्ण्य च काचपात्रे स्थापयेत्। अय रौद्ररस प्रत्यह रक्तिमितो मधुना सह सेवितोऽर्बुद निहन्ति॥ १–२॥

योगवाहिरसान्तरप्रयोगोपदेश —

रामबाणादिकान् योगवाहिनोऽत्र प्रयोजयेत्॥ ३॥

( इति अर्बुदरोग चिकित्सा )

अथ योगवाहिरसान्तरप्रयोगोपदेशमाह रामेत्यादि—रामबाणादिकान् योगवाहिरसानपि विविच्यात्र प्रयोजयेत्॥ ३॥

अथार्बुदरोगे पथ्यापथ्यविवेक —

पुराणघृतपानञ्च जीर्णलोहितशालय। यवा मुद्गा पटोलञ्च रक्तशिग्रु कठिल्लकम्॥१॥
शालिञ्च–शाक वेत्राग्र रूक्षाणि च कटूनि च। दीपनानि च सर्वाणि गुग्गुलुश्च शिलाजतु॥२॥
गलगण्डे गण्डमालापचीग्रन्थ्यर्बुदान्तरे। यथादोषं यथावस्थ पथ्यमेतत् प्रकीर्तितम्॥३॥

इति पथ्यानि।

अथापथ्यानि—

दुग्धेक्षुविकृती सर्वा मास चानूपसम्भवम्। पिष्टान्नमम्ल मधुर गुर्वभिष्यन्दिकारि च॥
अर्बुदेऽपथ्यमेतद्धि वर्ज्यमर्बुदरोगिभि॥१॥ इत्यपथ्यानि।

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृताया
गूढार्थसन्दीपिकाव्याख्यायामर्बुदरोगचिकित्सा।

## अथ श्लीपदरोग-चिकित्सा ।

नित्यानन्दो रस —

हिङ्गुलात् सम्भवं सूतं गन्धको मृतताम्रकम् ।
वङ्गं तालञ्च तुत्थञ्च शङ्ख कांस्यं वराटकम् ॥ १ ॥
त्रिकटु त्रिफला लौह विडङ्ग पटुपञ्चकम् ।
चविका पिप्पलीमूल हवुषा च वचा तथा ॥ २ ॥
शटी पाठा देवदारु एला च वृद्धदारकम् ।
त्रिवृता चित्रक दन्ती गृहीत्वा तु पृथक् पृथक् ॥
एतानि समभागानि सञ्चूर्ण्य वटिकां कुरु ॥ ३ ॥
हरीतकीरस दत्त्वा पञ्चगुञ्जामिता शुभाम् ।
एकैका भक्षयेत् नित्य शीतं वारि पिबेदनु ॥ ४ ॥
श्लीपदं कफवातोत्थ रक्तमांसगतञ्च यत् ।
मेदोगत धातुगत हन्त्यवश्य न सशय ॥ ५ ॥
श्रीमद्गहननाथेन निर्मितो विश्वसम्पदे ।
नित्यानन्दरसश्चाय यत्नतः श्लीपदे गदे ॥ ६ ॥

उत्सेधसामान्यात्तथाऽर्बुदेन सह कफसम्बन्धाव्यभिचारसाम्याच्च अर्बुदरोगचिकित्सानन्तर श्लीपदरोगचिकित्सा प्रारभ्यते तत्र पूर्वं नित्यानन्दरसनिर्माणमाह हिङ्गुलादित्यादि—हिङ्गुलात् सम्भव सूत—शुद्धहिङ्गुलोत्थपारद (१तो०), शुद्धगन्धक (१तो०), मृतताम्रक—ताम्रभस्म (१तो०), वङ्गभस्म (१तो०), शुद्धहरितालचूर्णं (१तो०), तुत्थ—शुद्धनीलतुत्थकचूर्णं (१तो०), शङ्ख—शङ्खभस्म (१तो०), कांस्यभस्म (१तो०), वराटक—कपर्दिकाभस्म (१तो०), त्रिकटु—शुण्ठीचूर्णं (१तो०), मरिचचूर्णं (१तो०), पिप्पलीचूर्णं (१तो०), त्रिफला—हरीतकीचूर्णं (१तो०), विभीतकचूर्णम् (१तो०), आमलकचूर्णं (१तो०), लौहभस्म (१तो०), विडङ्गचूर्णं (१तो०), पटुपञ्चक—सैन्धवलवण (१तो०), सामुद्रलवण (१तो०), विड्लवण (१तो०), सौवर्चललवणम् (१तो०), औद्भिदलवण (१तो०), चविकाचूर्णं (१तो०), पिप्पलीमूलचूर्णं (१तो०), हवुषा—'हाऊबेर' इति प्रसिद्ध तस्य चूर्णं (१तो०), वचा—उग्रगन्धाचूर्णं (१तो०), शटी—कर्चूरचूर्णं (१तो०), पाठाचूर्णं (१तो०), देवदारुचूर्णं (१तो०),

एलाबीजचूर्ण (१तो०), वृद्धदारकस्य शुद्धबीजाना चूर्ण (१तो०), समादाय पूर्वं पारदगन्धकयो कज्जली कृत्वा शेषद्रव्याणि सम्मेल्य श्लक्ष्ण सञ्चूर्ण्य हरीतकीक्वाथेन सम्यगाप्लाव्य दृढ विमर्द्य च पञ्चरक्तिप्रमाणा वटीश्चरेत् । अस्य रसस्य प्रत्यहमेवैका वटी शीतलजलानुपानपूर्वक सेविता कफवातसमुत्पन्न, रक्तगत, मासगत, मेदोगत, वातुगतञ्च श्लीपद निहन्ति । अथ नित्यानन्दरस श्रीमद्गहननाथेन जगता सुखार्थ निर्मित , तथा श्लीपदरोगे च विशेषलाभप्रद । "हवुषा,, इति शुष्काम्रमुकुलमिति तदभावे च धान्यकचूर्ण ग्राह्यमिति प्राचीनटीका । "एला च वृद्धदारकम् ,, इत्यत्र "त्वगेलावृद्धदारकम् ,, इति पाठान्तरम् । अत्र "त्रिवृता चित्रक दन्ती गृहीत्वा तु पृथक् २ इत्यधिक पाठ क्वचित् । रसरत्नाकरे तु अत्र "त्रिवृच्चित्रकदन्तीना भावयित्वा रसैं पृथक्" इति पाठान्तर दृश्यते ॥ ‑‑६ ॥

कणादिवटी—

**कणा-वचा-दारु-पुनर्नवानां चूर्णं सबिल्वं समवृद्धदारम् ।**
**संमर्द्य चैतस्य निहन्ति वल्ल· सकाञ्जिकः श्लीपदमुग्रवेगम् ॥ ७ ॥**

( इति श्लीपदरोग-चिकित्सा ) ।

अथ कणादिवटीनिर्माणमाह कणेत्यादि—कणा–पिप्पलीचूर्ण, वचा–उग्रगन्धाचूर्ण, दारु–देवदारुचूर्ण ( दारुहरिद्राचूर्णमिति केचित् ), पुनर्नवाचूर्ण, बिल्वमूलत्वचश्चूर्ण, वृद्धदारककबीजचूर्णम्, एतेषा प्रत्येक सम सममादाय श्लक्ष्ण खल्वे सञ्चूर्ण्य काचपात्रे स्थापयेत् । अस्य वल्लमितं प्रत्यहं काञ्जिकेन सह सेवितमुग्रवेग श्लीपद निहन्ति । क्वचित् "चूर्णम्" इत्यत्र "सूतम्" इति पाठे सूतशब्देन रससिन्दूर गृहीतव्यम् ॥ ७ ॥

अथ श्लीपदरोगे पथ्यापथ्यविवेक —

पुरातना षष्टिकशालयश्च यवा कुलत्था लशुनं पटोलम् ।
वार्ताकुशोभाञ्जनकारवेल्ल कटूनि तिक्तानि च दीपनानि ॥ १ ॥
ऐरण्डतैल सुरभीजलञ्च पुनर्नवामूलकपोतिकाश्च ।
एतानि पथ्यानि भवन्ति पुसा रोगे सति श्लीपदनामधेये ॥२॥ इति पथ्यानि ।
पिष्टान्न दुग्धविकृतिं गुडमानूपमामिषम् ।

स्वाद्वम्ल पारियात्रश्च सिन्धुविन्ध्यनदीजलम् ।
पिच्छिलं गुर्वभिष्यन्दि श्लीपदी परिवर्जयेत् ॥ १ ॥ इत्यपथ्यानि

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृताया गूढार्थसन्दीपिकाव्याख्याया श्लीपदरोगचिकित्सा ।

## अथ भगन्दररोग-चिकित्सा ।

रवितांडवो रस —

शुद्धसूत द्विधा गन्ध कुमारीरसमर्दितम् ।
त्र्यहान्ते गोलक कृत्वा ततस्तेन प्रलेपयेत् ॥ १ ॥
तयो समं ताम्रपत्र हण्डिकान्तर्निवेशयेत् ।
तद्भाण्ड भस्मनाऽऽपूर्य्य चुल्ल्यां तीव्राग्निना पचेत् ॥ २ ॥
द्वियामान्ते समुद्धृत्य चूर्णयेत् स्वाङ्गशीतलम् ।
जम्बीरस्य रसै. पिष्ट्वा रुद्ध्वा सप्तपुटे पचेत् ॥ ३ ॥
गुञ्जैक मधुनाऽऽज्येन लिह्याद्धन्ति भगन्दरम् ।
मूषलीलवणञ्चानु ह्यारनालयुत पिबेत् ॥ ४ ॥
भुञ्जीत मधुराहार दिवास्वापञ्च मैथुनम् ।
वर्जयेच्छीतलाहार रसेऽस्मिन् रवितांडवे ॥ ५ ॥

उत्सेधसाधर्म्याच्छ्लीपदचिकित्सानन्तर भगन्दरचिकित्सा प्रारभ्यते, तत्र पूर्वं रवितांडवरसनिर्माणमाह शुद्धेत्यादि—शुद्धसूत–शुद्धपारद (१तो०,) शुद्धगन्धकं द्विधा (२तो०), समादाय पापाणखल्वे कज्जलीं कृत्वा घृतकुमारीस्वरसेन सम्यगाप्ला-व्य दृढ विमर्दयेत्, इत्थ त्रिदिनं भावयित्वा त्रिदिनानन्तरं गोलक विधाय तेन शुद्धानि पारदगन्धकतुल्यप्रमाणयुक्तानि तनुताम्रपत्राणि लेपयेत् (अथवा पारदग-न्धककल्केन सह ताम्रपत्राणि तावन्मर्दयेद्यावदेकरूप सर्वेपा भवेत्)। ततश्च शराव सम्पुटस्थ कृत्वा मृद्भाण्डस्यार्धभाग भस्मनाऽऽच्छाद्य तदुपरि सम्पुट निधाय सम्पु-टोपरिस्थ शेपभाण्डावकाश भस्मना प्रपूर्य भाण्डस्य मुखं शरावान्तरेणाच्छाद सन्धिबन्धन कुर्यात्। अथवा ताम्रपारदगन्धकजातगोलक हण्डिकाया आभ्यन्

रिकाध प्रदेशे निधाय त शरावेणाच्छाद्य शरावभाण्डाभ्यन्तरिकस्थानयो स्निग्ध-मृत्पङ्केन सन्धि विलेप्य भाण्डावकाशं भस्मना प्रपूरयेत । ततश्च शरावेण भाण्डमु-ग्नमाच्छाद्य चूल्या द्वियामपर्यन्तं तीव्राग्निना पचेत् । द्वियामान्ते स्वाङ्गशीतमौषध-मुद्धृत्य खल्वे विचूर्ण्य जम्बीरनिम्बुरसेन पिष्ट्वा पुट दद्यात्। एवं सप्तपुटानि दत्त्वा सिद्धमौषध काचपात्रे स्थापयेत् । अस्य रसस्य गुञ्जैकमिता मात्रा मधुना आज्येन वा लीढ्वा मुपलीलवणयो कर्षमितं चूर्णमारनालेन सह पिवेत् । पथ्यञ्च मधुरा-हारादिकं देयं । दिवाशयन, मैथुन, शीतलञ्चाहार रविताण्डवरससेवने वर्जयेत् ।

आरनालस्वरूप यथा—

ारनालन्तु गोधूमैरामैं स्यान्निष्तुषीकृतै ।पक्वैर्वा सन्धितैस्तत्तु सौवीरसदृश गुणं ॥१–५॥

भगन्दरहरो रस —

सूतस्य द्विगुणेन शुद्धवलिना कन्यापयोभिस्त्र्यह
शुद्धं ताम्रमयः समस्ततुलितं पात्रे निधायोपरि ।
स्वेद्यं यामयुगञ्च भस्म-पिठरे निम्बुजलैः सप्तधा ।
साकं तद् पुटयेद् भगन्दरहरो गुञ्जोन्मित· स्यादिति ॥ ६ ॥

( इति भगन्दररोग–चिकित्सा )

अथ भगन्दरहररसनिर्माणमाह सूतस्येत्यादि—शुद्धसूतस्य (१भा०) तस्य द्विगुण शुद्धगन्धकं (२भा०) समादाय तयो कज्जली कृत्वा त्रिदिन यावत् कन्या-पयोभि र्घृतकुमारीस्वरसैर्विमर्द्य पश्चात्ताम्रभस्म त्रिभागमितम्, अयो लौहभस्म च त्रिभागमित सम्मेल्य दृढ मर्दन कृत्वा गोलक कुर्यात्, तत्र भस्मपिठरे–इति हण्डिकाया आभ्यन्तरिकाध प्रदेशे निधाय शरावेण सन्धिबन्धनं कृत्वा भाण्डाव-काश भस्मना प्रपूर्य शरावेण मुख निरुध्य यामद्वयं स्वेद्यमिति पक्त्वा स्वाङ्गशीत-ञ्चोद्धृत्य खल्वे सञ्चूर्ण्य र्निम्बूजलै निम्बूस्वरसै र्भावयित्वा पुटेत्। इत्थ सप्तवार निम्बूजलैर्विभाव्य पुटानि च दत्वा सञ्चूर्ण्य सिद्ध रस काचपात्रे स्थापयेत् । अथ रस प्रत्यहं गुञ्जोन्मित सेवितो भगन्दर विनिहन्ति । "वलिना–गन्धकेन, इति॥६॥

अथ भगन्दरे पथ्यापथ्यविवेक —

आमे सशोधनं लेपो लङ्घन रक्तमोक्षणम्। पक्वे पुन शस्त्रविधिस्तथा क्षाराग्निकर्म च॥१॥
सर्वत्र शालयो मुद्गा विलेपी जाङ्गलो रस । पटोलं शिग्रुवेत्राग्रं धुस्तूरो वालमूलकम्॥२॥

निरन्तरंयोरन्तिल तिजवनो घृत नश्च । एतत् पथ्य नरे नेवं यथादोष भगन्दरे॥३॥
इति पथ्यानि ।

अथापथ्यानि—
व्यायाम मैथुन युद्ध पृष्ठयान गुरूणि च । संवत्सर परिहरेदावरूढव्रणोनर. ॥ १-॥
इत्यपथ्यानि ।

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृतायां सूत्रार्थतत्त्वदीपिकाव्याख्यायां भगन्दररोग-चिकित्सा ।

## अथोपदंशरोग -चिकित्सा ।

उपदंशे साधारणविधि —

स्निग्धस्विन्नशरीरस्य ध्वजमध्ये शिराव्यधः ।
जलौकःपातनं वा स्यादूर्ध्वाधः शोधनं तथा ॥ १ ॥
सद्यो निर्जितदोषस्य रुक्शोथावुपशाम्यतः ।
पाको रक्ष्यः प्रयत्नेन शिश्नक्षयकरो हि सः ॥ २ ॥

स्थानसामीप्यसादृश्याद्भगन्दररोगचिकित्सानन्तरमुपदंश-चिकित्सा आरभ्यते तत्र पूर्वमुपदंशे साधारणविधिमाह स्निग्धेत्यादि—उपदंशरोगिणं पूर्वं स्नेहस्वेदैः संस्नेह्य संशोध्य च तस्य ध्वजमध्ये—मेहनोपरिमध्यभागस्य शिराव्यधः कार्यः, स च शोणितविकारे प्रवृद्धे सति शुद्धयर्थं कार्यः, स्वल्पविकारे तु जलौकापातनमिति जलौकाभिः शोणितस्य मोक्षण कार्यम् । "शिराव्यधः बहुदोषेषु जलौकसा पातनं पित्तरक्तयो मृदुत्वाज्जलौकस इत्यन्ये । डल्हणाचार्यस्तु 'अनवगाढे जलौकस, अवगाढे शिराव्यध ,, इति । ऊर्ध्वाध शोधनमिति बलवतो विरेच्यस्य वमनार्हस्य च वमनविरेचनाभ्या देहस्योर्ध्वमधश्च संशोधनं दोषहरणम्,, इति, सद्यो निर्हृतं निर्जितदोषस्य वमनविरेचनाभ्या दोषनिर्हरणाद्रूक्शोफौ प्रशाम्यतः, व्रणश्च पाकं नैवाधिगच्छति, शिश्नक्षयकरत्वादुपदंशव्रणपाकोऽत्यन्त भयङ्कर., अतो यथा व्रण पाक न व्रजेत् तथा प्रयत्न विधेयम् ॥ १-२ ॥

धावनकषाय —

त्रिफलायाः कषायेण भृङ्गराजरसेन वा ।
व्रणप्रक्षालनं कुर्य्यादुपदंशप्रशान्तये ॥ ३ ॥

अथोपदंशव्रणस्य धावनार्थं कषायस्य निर्देशमाह त्रिफलाया इत्यादि—उपदंशव्रणस्य प्रशान्त्यर्थं षडङ्गपरिभाषया त्रिफलाया क्वाथं कृत्वा तेन व्रणस्य प्रत्यहं यामपर्यन्तं स्वल्पं २ क्वाथं क्षिपन् प्रक्षालनं कुर्यात्। अथवा भृङ्गराजस्वरसेन तथैव प्रत्यहं व्रणस्य प्रक्षालनं कुर्यात् ॥ ३ ॥

लेप —

दहेत् कटाहे त्रिफलां सा मसी मधुसंयुता ।
उपदंशे प्रलेपोऽयं सद्यो रोपयति व्रणम् ॥ ४ ॥

अथोपदंशव्रणे लेपमाह दहेदित्यादि—समांशां त्रिफलामिति-समानमात्रया हरीतकीविभीतकामलकानि समादाय कटाहे-चूल्या कज्जलरूपभवनपर्यन्तं दहेत्। ततश्च त्रिफलाभस्म समादाय तनुवस्त्रेण ससार्य च मधुना सह विलोड्य काचपात्रे स्थापयेत्। प्रत्यहमस्य लेपेन व्रणस्य सद्योरोपणं भवति ॥ ४ ॥

भैरवरस —

शुद्धसूतं ग्रहीतव्यं रक्तिकाशतमात्रकम् ।
त्रिगुणां शर्करां लौहे निम्बदण्डेन मर्दयेत् ॥ ५ ॥
याममात्रं ततो दद्याच्छ्वेतं खदिरचूर्णकम् ।
सूततुल्यं ततः कुर्य्यान्मर्दनात् कज्जलोपमम् ॥ ६ ॥
विंशतिर्वटिकाः कार्य्याः स्थाप्या गोधूमचूर्णके ।
निःशेषनिःसृता ज्ञात्वा पिडकास्ताः कलेवरे ॥ ७ ॥
भैरवं देवमभ्यर्च्य वलिं तस्मै प्रदाय च ।
विधाय योगिनीपूजां दुर्गामभ्यर्च्य यत्नतः ॥ ८ ॥
वटिकास्ताः प्रयोक्तव्या भिषजा जानता क्रियाम् ।
दिवसत्रितयं दद्यात् तिस्रस्तिस्रो विजानता ॥ ९ ॥
चतुर्थाच्च समारभ्य एकामेकां प्रयोजयेत् ।
एवं चतुर्दशदिने नीरोगो जायते नरः ॥ १० ॥

क्रम )। ततश्च यावत् सर्वं शरीरमुपदंशपिडिकाभिराचित स्यात्तावद्भैरवमभ्यर्च्य तस्मै वलिञ्च दत्वा तथा योगिनीपूजा विधाय भगवतीं दुर्गाञ्च विधिपूर्वक सम्पूज्य सर्वविधकर्मकुशलेन भिषजा वटिका प्रयोक्तव्या । वटीसेवनविधि —दिवसत्रितयमिति त्रिदिनपर्यन्त प्रातर्मध्याह्ने सायञ्च एकैका कृत्वा एकस्मिन्दिवसे तिस्रो वटिका देया । इत्थ त्रिदिनपर्यन्त नववटिकाना सेवनं कारयित्वा चतुर्थदिवसादारभ्य चतुर्द्दशदिनपर्यन्तमवशिष्टैकादशवटिकाभ्य प्रत्यहमेकैका वटीं प्रभाते प्रयोजयेत्। एव चतुर्दशदिवसेष्वस्य सेवन समाप्यते । इत्थमस्य रसस्य यथा, विधि सेवनेन उपदशविकाराभरो विमुक्तो भवति। अथास्य सेवने पथ्यादिविशेषविधिमाह—पथ्यं–घृतशर्कराभ्या सहितमुष्णमन्न तच्चापि दिवसे साकाङ्क्षमुत्थानमिति—स्वल्पभोजन येन पुनर्भोजनस्पृहासयुक्त चेतो भवेत् तद्योग्यमेकवारमेव भक्षयेत् । जलपान जलस्नानञ्च सर्वथा वर्जयेत्। तु महतृष्णाया जाताया केवलमिक्षुस्वरस, दाडिमस्वरसादिकम्वा तृषाप्रशामक रस च पिवेत् । शौचादौ च ष्णाम्वुना गुदादिकं प्रक्षाल्य तत्कालमेव शुद्धवस्त्रेण शीघ्र गुदादिकाना प्रोञ्छन कार्यम् । वातातपाग्निसेवनञ्च न कुर्यात् । अस्य रसस्य सेवनं मेघागमे–वर्षर्तौ शीतकाले च कर्तव्यमेतेन ग्रीष्मकाले सेवन निषिद्धम्। एव सेवमानस्य यदि मुखपाक स्यात्तदामुखरोगोक्त खदिरादिवटीमन्या वा तद्योग्या चिकित्सा कुर्यात् । श्रम–व्यायामादिकम् ,अध्वसेवन भ्रमण,भारस्योद्वहनम्, अध्ययनं, दिवाशयनम्, आलस्यञ्च वर्जयेत् । तथा लवणम्, अम्लद्रव्याणि, दिवास्वप्न, रात्रिजागरण, स्त्रीमुखालोकनमित्यष्टविधमैथुन च सर्वथा परित्यजेत् । औषधसेवनानन्तरं मुखशुद्ध्यर्थं नित्य कर्पूरैलाखदिरसारचूर्णादियुक्त तमालरहित सुवासित ताम्वूलं भक्षयेत्। तथा अन्यच्च वातपित्ताविरोधि श्लेष्महर द्रव्य सेवेत। द्विसप्ताहानन्तरमुष्णाम्वुना स्नात्वा जाङ्गलैर्मांसरसै स्मह हित पथ्यञ्च भोजन वा केवल जाङ्गलमासरसस्यैव हित पथ्यं कुर्यात् । व्यायामाद्यं पूर्वोक्त वर्ज्यं यदुपदिष्ट तस्य सेवनं पूर्णस्वास्थ्यप्राप्त्यनन्तरमेव कार्यम् । इत्थ पथ्यापथ्यादिविधिं विचार्यैतदोषधं य. करोति स एवं जितेन्द्रियपुरुषोऽस्मात्पापरोगाद्विमुच्यते । अस्य रसस्य सेवनेनोपदशभवा सर्व पिडिका विनश्यन्ति, तथा देहस्य वल तेजश्च वर्द्धते, विविधा व्रणरुजा स्तथा ग्रन्थिना शोथश्च सर्वे प्रशाम्यति, तथाऽस्थ्ना दार्ढ्यं भवति, आमवातश्च नश्यति। अय रसो भैरवनामकाचार्येण निर्मितस्तस्माद्भैरवाख्यया जगति ख्यात ॥

भैषज्यरत्नावल्यां रसस्यास्यनिर्माणे मात्राभेदो वर्तते यथा—
"शुद्धसूतं गृहीतव्यं दशगुञ्जकमात्रकम्। त्रिगुणा शर्करा लौहे निम्बदण्डेन मर्दयेत् ॥
याममात्रं तत्र दद्याच्छ्वेतं खदिरचूर्णकम्। सूततुल्यं तत्र कुर्यान्मर्दनं कज्जलोपमम् ॥
इति शेषं तुल्यमेव ॥ ,—२१ ॥

रसशेखर —

पारदश्चाहिफेनश्च द्विर्द्वादशकरक्तिकम् ।
अयःपात्रे निम्बकाष्ठे मर्दयेत् तुलसीद्रवैः ॥ २२ ॥
तस्मिन् सम्मूर्च्छिते दद्याद्दरदं रससम्मितम् ।
मर्दयेच्च तुलस्यैव ततश्चैतानि दापयेत् ॥ २३ ॥
जातीकोषफले चैव पारसीययमानिकाम् ।
आकारकरभञ्चैव द्वात्रिंशद्रक्तिकाम्प्रति ॥ २४ ॥
मर्दयेत् तुलसीतोयैरेतेषां द्विगुणं शुभम् ।
दद्यात खदिरसत्त्वञ्च वटिका चणकप्रभा ॥ २५ ॥
साय द्वे द्वे प्रयोज्ये च लवणाम्लञ्च वर्जयेत् ।
गलत्कुष्ठं तथा स्फोटान् दुष्टान् गर्दभिकामपि ॥ २६ ॥
ये स्युर्व्रणा नृणामन्ये उपदंशपुरःसराः ।
तान् सर्वान् नाशयत्याशु सिद्धोऽयं रसशेखरः ॥ २७ ॥

अथ रसशेखरनिर्माणमाह पारदमित्यादि—शुद्धपारदं द्विर्द्वादशरक्तिकं, द्वि — द्विरावृत्तं द्वादशरक्तिकमितिव्युत्पत्त्या चतुर्विंशतिरक्तिमितं पारदं तथा शुद्धाहिफेनकञ्च द्वादशरक्तिमितञ्च चतुर्विंशतिरक्तिमितं (शुद्धपारदं द्विरक्तिमितं, शुद्धाहिफेनकञ्च चतुर्विंशतिरक्तिमितं इति भैषज्यरत्नावलीटीकाकर्तुरभिप्रायः)। समादाय द्वयमेतल्लौहपात्रे निक्षिप्य तुलसी-पत्रस्वरसे सम्यगाप्लाव्य निम्बकाष्ठदण्डेन तावन्मर्दयेद्यावत्पारदं सम्मूर्च्छितं स्यात्, एवञ्च कज्जलवत्तयोर्मिश्रणं विज्ञाय रससम्मितं—चतुर्विंशतिरक्तिमितं शुद्धं दरद–हिङ्गुलं निक्षिप्य तुलसीपत्रस्वरसञ्च पुनः प्रक्षिप्य दृढं विमर्दयेत्। एवमपि दृढमर्दनेन सम्यक् त्रयाणां कज्जलवत् सम्मिश्रणं ज्ञात्वा जातिकोषचूर्णं (जावित्रीचूर्णं) द्वात्रिंशद्रक्तिमितं, जातीफलचूर्णं द्वात्रिंशद्रक्तिमितं, पारसीकयमानीचूर्णं द्वात्रिंशद्रक्तिमितं, तथाऽऽकारकरभचूर्णं च द्वात्रिंशद्रक्तिमितं निक्षिप्य सम्यक् विमर्द्य च पुनः पर्याप्तं तुलसीपत्रस्वरसं निक्षिप्य बहुकालं विमर्दयेत्। ततश्चैतेषां द्विगुणं शुभं

खदिरसत्वमिति मिलितचूर्णाद् द्विगुण शुद्ध खदिरसत्व "कत्थेति प्रसिद्धि" श्वेतखदिरसारं दत्वा सम्यक सम्मेल्य पर्याप्त तुलसीपत्रस्वरसञ्च निक्षिप्य यावच्चूर्णं वटिकानिर्माणयोग्य (द्रवांशशोषणेनेत्यर्थ) स्यात्तावन्निरन्तर विमर्द्य चणकप्रमाणा वटिका कृत्वा सशोष्य च काचपात्रे स्थापयेत् । अस्य रसस्य प्रत्यह वटीद्वय सायङ्काले सेवित गलत्कुष्ट, दुष्टान् स्फोटान्, गर्दभिका च हन्ति, तथोपदशपुर सरा येऽन्ये दुष्टव्रणा स्युस्तान् शीघ्र विधिपूर्वकसेवितोऽय रसशेखरो विनिहन्ति ।

गर्दभिकालक्षण यथा—

मण्डल वृत्तमुत्सन्न सरक्त पिडकाचितम् ।
रुजाकरी गर्दभिका ता विद्याद्वातपित्तजाम् ॥ इति ॥ २२-२७ ॥

प्रक्रियान्तरम्—

**योगवाहिरसान् सर्वान् सर्वरोगोदितानपि ।**
**उपदंशे प्रयुञ्जीत तथा शोणितशोधनम् ॥ २८ ॥**

( इति उपदशरोग-चिकित्सा )

अथोपदशे प्रक्रियान्तरमुपदिशति योगेत्यादि—मतिमान् भिषक् सर्वरोगोदितान् रामवाणवारिशोषणादिकान् योगवाहिरसान् विचार्यानुपानभेदेनोपदंशेऽपि प्रयुञ्जीत, तथा शोणितशोधनार्थं भेषज, शिरावेध, जलौकसामुपयोग वा बुद्धिपूर्वकं कुर्यात् ॥ २८ ॥

अथोपदशेऽपथ्यानि—

दिवानिद्रा मूत्रवेग गुर्वन्न मैथुनं गुडम् । आयाममम्लं तक्रञ्च वर्जयेदुपदशवान्॥१॥

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृताया
गूढार्थसन्दीपिकाव्याख्यायामुपदश-चिकित्सा ।

---

## अथ कुष्ठरोग-चिकित्सा ।

**कन्याकोटिप्रदानेन गङ्गायां पितृतर्पणे ।**
**विश्वेश्वरपुरीवासे तत्फलं कुष्ठनाशने ॥ १ ॥**
**गवां कटिप्रदानेन चाश्वमेधशतेन च ।**
**वृषोत्सर्गे च यत् पुण्यं तत्पुण्यं कुष्ठनाशने ॥ २ ॥**

एवमुपदंशचिकित्सानन्तरं कुष्ठरोगचिकित्सा लिख्यते, तत्र पूर्वं कुष्ठचिकित्साया फलनिर्देशमाह कन्येत्यादि—कोटिकन्यानां विवाहसम्पादनेन, मार्गस्था देवप्रतिष्ठापनकरणेन श्रीविश्वनाथाधिष्ठितकाशीपुरीनिवासकरणेन, अनेककोटिगोदानकरणेन, अनेकशताश्वमेधयज्ञकरणेन, वृषोत्सर्गकरणेन च यत्फलं प्राप्यते तदेव पुण्यं कुष्ठचिकित्साकरणेन समुत्पद्यते ॥ १-२ ॥

गलत्कुष्ठारिरसः —

रसो बलिस्ताम्रमयःपुरोऽग्निः शिलाजतु स्याद्विषतिन्दुकश्च ।
वरा च तुल्यं गगनञ्च सर्वैः करञ्जबीजं सचतुष्टयञ्च ॥ ३ ॥
संमर्द्य सर्वं मधुना घृतेन घृतस्य पात्रे निहितं प्रयत्नात् ।
कर्षं भजेत् प्रत्यहमस्य पथ्यं शाल्योदनं दुग्धमधुत्रयञ्च ॥ ४ ॥
विशीर्णकर्णाङ्गुलिनासिकोऽपि भवेदनेन स्मरतुल्यमूर्त्तिः ।
दारापरित्याग इह प्रदिष्टो जलौदनं तत्र निबद्धमूले ॥ ५ ॥

अथ गलत्कुष्ठारिरसमाह रस इत्यादि—रस—शुद्धपारद, बलि—शुद्धगन्धक, ताम्र—ताम्रभस्म, अयो लौहभस्म, पुर—शुद्धगुग्गुलु, अग्निश्चित्रकचूर्णं शुद्धं शिलाजतु, विषतिन्दुक—शुद्धकुचेलकचूर्णं, वरा—हरीतकीचूर्णं, विभीतकचूर्णम्, आमलकचूर्णञ्च, एतेषां प्रत्येकं तोलकमितं तथा सर्वसमं गगनम्—अभ्रकभस्म (१२ तो०) शुद्धकरञ्जबीजचूर्णं च चतुस्तोलकं समादाय पूर्वं पारदगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि तत्रैव विमर्दयेत्। ततश्च वटिकानिर्माणं यथा भवेत्तावन्मितं मधु गोघृतञ्च दत्त्वा दृढं विमर्द्य कर्षप्रमाणा वटीश्च कृत्वा घृतस्निग्धे पुरातने मृण्मयभाण्डे घृतलिप्तकाचपात्रे वा स्थापयेत्। अस्य रसस्य प्रत्यहं सेवनेन कुष्ठेन विशीर्णकर्णाङ्गुलिनासिकोऽपि पुरुषः कामदेवसमानः सर्वाङ्गसुन्दरो भवेत्। प्रायः मात्राया प्रमाणं यथाग्निबलं वीक्ष्य पञ्चरत्तिमारभ्य कर्षपर्यन्तं करणीयम्। पथ्ये च दुग्धयुक्तं घृतयुक्तं मधुयुक्तं वा यथारुचि शाल्योदनं देयं, दुग्धमपि पृथक् दातुं शक्यते, किन्तु चिरकालीनकुष्ठरोगिणे पथ्ये केवलं जलपक्वमोदनं देयम् मैथुनमपथ्यम् ॥ ३-५ ॥

उदयभास्कर —

गन्धकेन मृतं ताम्रं दशभागं समुद्धरेत् ।

ऊषणं पञ्चभागं स्यादमृतञ्च द्विभागिकम् ॥ ६ ॥
श्लक्ष्णचूर्णीकृतं सर्वं रक्तिकैकप्रमाणतः ।
दातव्यं कुष्ठिने सम्यगनुपानस्य योगतः ॥ ७ ॥
गलिते स्फुटिते चैव विपुले मण्डले तथा ।
विचर्चिका-दद्रु-पामा-कुष्ठरोगप्रशान्तये ॥ ८ ॥

अथोदयभास्कररसनिर्माणमाह केवल शुद्धगन्धकेन सह मृत ताम्र—ताम्रभस्म (१०तो०), ऊषण-मरिचचूर्णं पञ्चतोलकम् , अमृत-शुद्धवत्सनाभचूर्णं द्वितोलकम् , एतत् सर्वं खल्वे सम्मेल्य श्लक्ष्ण विचूर्ण्य च काचपात्रे स्थापयेत् । अय रस प्रत्यहं रक्तिमित कुष्ठहरानुपानेन सह कुष्ठिने प्रदेयस्तथा गलितकुष्ठे, स्फुटितकुष्ठे, विपुल-मण्डलकुष्ठे, तथा विचर्चिकापामादद्रूरोगाणा प्रशान्त्यर्थञ्च प्रयोक्तव्य ॥

गन्धकयोगेन मृत ताम्रं ग्राह्यमित्युक्तमतस्तेन तस्य मारणविधिर्यथा—
ताम्रं पत्रीकृत शुद्धं भिषग् दशपलोन्मितम् । ताम्रद्विगुणितञ्चैव गन्ध दत्वा विमर्दयेत् ॥ १ ॥
सम्पुटस्थं तत कृत्वा मृदा सन्धि विलेपयेत् । अहोरात्र पचेद्वह्नाद्वालुकायन्त्रग भिषक् ॥ २ ॥
स्वाङ्गशीतन्तु विज्ञाय सम्पुट त्ववतारयेत् । ताम्रोन्मित बलि दत्वा शुल्व खल्वेऽथ पेषयेत् ॥ ३ ॥
इत्थ त्रिवारं पुटयेत्तुल्यं गन्धं विनिक्षिपन् । एव मृतं ताम्रकं स्यात् सर्वयोगेषु योजयेत् ॥ ४ ॥
एव विधं मृतं ताम्र यत्र केवलं गन्धकयोगेन मृतताम्रस्योपदेश स्तत्र प्रयोजयेत् ॥ ६—८ ॥

तालकेश्वरो रस —

धात्रीटङ्कणतालानां दशभागं समुद्धरेत् ।
धात्र्या रसैर्मर्दयित्वा शिखरीमूलवारिणा ।
सर्वकुष्ठहरः सेव्यः सर्वदा भोजनप्रियः ॥ ९ ॥

अथ तालकेश्वररसनिर्माणमाह धात्रीत्यादि—धात्री-आमलकचूर्णं, शुद्धटङ्कणं, शुद्धहरितालञ्च, एतेषा प्रत्येकं दशभागमित (१०तो०) समादाय खल्वे श्लक्ष्ण चूर्ण्य आमलकीस्वरसेन, शिखरीमूलवारिणा-अपामार्गमूलक्वाथेन च पृथक् २ सप्तधा विमर्द्य सशोष्य च काचपात्रे स्थापयेत् । अय रस प्रत्यहं द्विरक्तित प्रारभ्य माषर्वकमित कुष्ठहरानुपाने सेवित सर्वकुष्ठानि निहन्ति, भोजने च रुचिं वर्द्धयति ॥ ९ ॥

ब्रह्मरसः—

भागैकं मूर्च्छितं सूतं गन्धकं त्वग्निवागुजी ।
चूर्णन्तु ब्रह्मबीजानां प्रति द्वादशभागिकम् ॥ १० ॥
त्रिशद्भागं गुडस्यापि आर्द्रेण गुडिका कृता ।
अथ ब्रह्मरसो नाम्ना ब्रह्महत्याविनाशनः ॥ ११ ॥
द्विनिष्कं भक्षणाद्धन्ति प्रसुप्तिकुष्ठमण्डलम् ।
पातालगरुडीमूलं जलैः पिष्ट्वा पिबेदनु ॥ १२ ॥

अथ ब्रह्मरसनिर्माणमाह भागैकमित्यादि—मूर्च्छित सूत—शुद्ध मूर्च्छनसंस्कारयुक्त सूत—पारद १भा० (१तो०), तथा शुद्धगन्धक (१२तो०), अग्निश्चित्रकचूर्ण (१२तो०), वागुजी—सोमराजीचूर्ण (बाकुचीचूर्ण) (१२तो०), ब्रह्मबीजानां—शुद्धपलाशबीजानां चूर्ण (१२तो०) पुरातनगुडस्य च त्रिंशत्तोलकानि समादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य आर्द्रेणाप्लाव्य दृढं विमर्द्य च द्विनिष्कप्रमाणां (अत्रो माषैकमिता कार्या) गुडिका कृत्वा काचपात्रे स्थापयेत्। अथ ब्रह्मरस प्रत्यहं माषैकमारभ्य द्विनिष्कमितोऽष्टमाषकमित (माषैश्चतुर्भिः शाणः स्यात् स निष्क टङ्क एव च), जलपिष्टपातालगरुडीमूलकल्कानुपानपूर्वकं सेवितः प्रसुप्ति—वातदूषितत्वग्जा सुप्तता, कुष्ठानां मण्डल—समूह मण्डलाख्यं वा कुष्ठं निहन्ति ॥

मण्डलकुष्ठलक्षण यथा—

श्वेतं रक्तं स्थिरं स्त्यानं स्निग्धमुत्सन्नमण्डलम् । कृच्छ्रमन्योऽन्यसंयुक्तं कुष्ठं मण्डलमुच्यते॥
॥ १०–१२ ॥

इति । पातालगरुडी—छिरहटा ।

चन्द्राननो रसः—

सूतव्योमायसस्तुल्यास्त्रिभागा गन्धकस्य च ।
काकोडुम्बरिकाद्रावैः सर्वमेकत्र मर्दयेत् ॥ १३ ॥
माषमात्रां गुटीं कृत्वा कुष्ठरोगे प्रयोजयेत् ।
देहशुद्धिं पुरा कृत्वा सर्वकुष्ठानि नाशयेत् ।
एष चन्द्राननो नाम साक्षात् श्रीभैरवोदितः ॥ १४ ॥

अथ चन्द्राननरसनिर्माणमाह सूतेत्यादि—सूत—शुद्धपारद (१तो०), व्यो

अभ्रकभस्म (१तो०), अग्निदचित्रकचूर्ण (१तो०), शुद्धगन्धकस्य च तोलकत्रयं समादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य श्लक्ष्ण विचूर्ण्य च काकोडुम्बरिकादुग्धे सम्यगाप्लाव्य माषप्रमाणा वटीश्चरेत्। एष श्रीभैरवाचार्यण प्रोक्तश्चन्द्राननाख्यो रस प्रत्यहं सेवितो देहशुद्धि कृत्वा ( विशेषेण रक्तशुद्धावयमद्भुत ) सर्वकुष्ठानि निहन्ति ॥ १३-१४ ॥

कुष्ठकालानलो रस —

**रसं वलिष्टङ्कणताम्रलौहं भस्मीकृतं मागधिकासमेतम्।**
**पञ्चाङ्गनिम्बेन फलत्रिकेण विभावित राजतरोस्तथैव।**
**नियोजयेद्वल्लकयुग्ममानं कुष्ठेषु सर्वेषु च रोगसङ्घे ॥ १५ ॥**

अथ कुष्ठकालानलरसनिर्माणमाह रसमित्यादि—रस-शुद्धपारदं, वलि -शुद्धगन्धक , शुद्धटङ्कणं, ताम्रभस्म, लौहभस्म, मागधिकासमेत-पिप्पलीचूर्णयुक्तं सर्वं पृथक् २ तोलकैकं समादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य पञ्चाङ्गनिम्बेन-निम्बस्य पत्रपुष्पफलवल्कलमूलाना क्वाथेन, फलत्रिकेण-त्रिफलाक्वाथेन, राजतरो -कर्णिकारस्य (अमलतास इति प्रसिद्ध ) फलक्वाथेन च पृथक् २ सप्त भावना दत्वा दृढं विमर्द्य संशोष्य च काचपात्रे स्थापयेत्। अयं रस प्रत्यहं द्विरक्तित प्रारभ्य द्विवल्लमितो यथाग्निबल सेवित सर्वकुष्ठेषु, तथाऽनुपानभेदेन सर्वरोगसमूहेषु च हितकर ॥ १५ ॥

वज्रवटी—

**शुद्धसूताग्निमरिचं सूताद् द्विगुणगन्धकम्।**
**काकोडुम्बरिकाक्षीरैर्दिनं मर्द्यं प्रयत्नतः ॥ १६ ॥**
**वराव्योषकषायेण वटीञ्चास्य समाचरेत्।**
**लिह्यात् वज्रवटी ह्येषा पामारोगविनाशिनी ॥ १७ ॥**

अथ वज्रवटीनिर्माणमाह शुद्धेत्यादि—शुद्धसूत -शुद्धपारद (१तो०), अग्नि चित्रकचूर्णं (१तो०), मरिचचूर्णं (१तो०), सूताच्च द्विगुण-द्वितोलकं शुद्धगन्धक समादाय पूर्वं पारदगन्धकयो. कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य काकोडुम्बरिकादुग्धे सम्यगाप्लाव्य दिनैक दृढं विमर्दयेत्। ततश्च वरा-त्रिफला तस्या क्वाथेन तथा व्योष-त्रिकटु तस्य क्वाथेन च पृथक् २ दिनैकं भावयित्वा दृढं विमर्द्य च द्विर-

क्रिमिता वटीश्चरेत् । इयं वटी प्रत्यहं सेविता कुष्ठरोगं, पामारोगञ्च निहन्ति ॥ पामालक्षणं यथा—सूक्ष्मा बह्वयः पीडकाः स्राववत्यः पामेत्युक्ताः कण्डूमत्यः सदाहा । इति ॥ १६-१७ ॥

चन्द्रकान्तिरस —

पलत्रयं मृतं ताम्रं सूतमेकं द्विगन्धकम् ।
त्रिकटुत्रिफलाचूर्णं प्रत्येकञ्च पलं पलम् ॥ १८ ॥
निर्गुण्ड्याश्चार्द्रकद्रावैर्वह्निद्रावैर्विमर्दयेत् ।
दिनैकं तद्विशोष्याथ तुषाग्नौ स्वेदयेद्दिनम् ॥ १९ ॥
समुद्धृत्य विचूर्ण्याथ वागुजीतैलमर्दितम् ।
त्रिदिनं भावयेत् तेन निष्कैकं भक्षयेत् सदा ॥ २० ॥
चन्द्रकान्तिरसो नाम्ना कुष्ठं हन्ति न संशयः ।
तैलं करञ्जबीजोत्थं वह्निगन्धकसैन्धवैः ।
अनुपानं प्रकर्तव्यं कल्कं वा वागुजीभवम् ॥ २१ ॥

अथ चन्द्रकान्तिरसनिर्माणमाह पलत्रयमित्यादि—मृतं ताम्रं-ताम्रभस्म पलत्रयं (३प०), सूतं-शुद्धपारद (१पल), शुद्धगन्धकं द्विपल, त्रिकटु-शुण्ठीचूर्ण (१प०), मरिचचूर्णं (१प०), पिप्पलीचूर्णं (१प०), त्रिफला-हरीतकीचूर्णं (१प०), विभीतकचूर्णम् (१प०), आमलकचूर्णं (१प०) समादाय पूर्वं पारदगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य श्लक्ष्णं विचूर्ण्य निर्गुण्डीपत्राणां स्वरसेन, आर्द्रकस्वरसेन, वह्निश्चित्रकस्तस्य स्वरसेन च पृथक् २ दिनैकं विमर्द्य संशोष्य च तुषाग्नौ (मन्दाग्निसंयोगे इत्यर्थः) दिनैकं स्वेदनविधिना सस्वेद्य (प्राय शरावसम्पुटं कृत्वा लघुपुटे पुटदानं सरलोपायः) स्वाङ्गशीतं समुद्धृत्य खल्वे विचूर्ण्य वाकुचीतैलेनाप्लाव्य विमर्दयेत्। इत्थं त्रिदिनं वागुजीतैलेन भावयित्वा निष्कप्रमाणां वटीं धरेत्। अयं चन्द्रकान्तिरसो द्विरक्तितः प्रारभ्य निष्कमितो यथाग्निबलं सेवितः सर्वविधं कुष्ठं निहन्ति । अनुपानं वह्निश्चित्रकचूर्णं, सैन्धवलवणं, शुद्धगन्धकञ्च त्रयाणां मिलित्वाऽर्द्धतोलकं समादाय तोलकमितेन करञ्जबीजतैलेन सह विलोड्य रससेवनान्ते लिह्यात्। अथवा केवलं दृषदि पिष्टं वागुजीकल्कमेवार्द्धतोलकमितं रससेवनान्ते गृह्णीयात् । १८-२१।

सङ्कोचरस —

मृतताम्राभ्रकं तुल्यं तयोः सूतं चतुर्गुणम् ।

शुद्धं तन्मर्दयेत् खल्ले गोलकं कारयेत् ततः ॥ २२ ॥
त्रिभिस्तुल्यं शुद्धगन्धं लौहपात्रे द्रुतं पचेत् ।
तन्मध्ये गोलकं पाच्यं यावज्जीर्णन्तु गन्धकम् ॥ २३ ॥
एतन्मृद्वग्निना तावत् समुद्धृत्य विचूर्णयेत् ।
गुग्गुलुः निम्बपञ्चाङ्गं त्रिफला चामृता विषम् ॥२४॥
पटोलं खादिरं सारं व्याधिघात समं समम् ।
चूर्णितं मधुना लेह्यं निष्कमौडुम्बरापहम् ।
रसः सङ्कोचनामाऽयं कुष्ठे परमदुर्लभः ॥ २५ ॥

अथ सङ्कोचरसनिर्माणमाह मृतेत्यादि—मृतताम्र-ताम्रभस्म (१तो०), अभ्रक-भस्म (१तो०), तयोश्चतुर्गुण (८तो०) सूत-शुद्धपारद समादाय खल्वे सर्वं निक्षिप्य दृढं विमर्द्य गोलकं कुर्यात् । ततश्च त्रिभिस्तुल्यं दशतोलकं शुद्धगन्धकं लौह-कटाहे निक्षिप्य चूल्यामारोप्य द्रावयेत् । द्रुते च तस्मिन् पूर्वोक्त गोलकं निक्षिप्य यावद्गन्धकं जीर्णतां याति तावत् पक्त्वा स्वाङ्गशीत कटाहादुद्धृत्य खल्वे श्लक्ष्णं सञ्चूर्ण्य शुद्धगुग्गुलु, निम्बपञ्चाङ्गचूर्ण, त्रिफलाचूर्णम्, अमृता-गुडूचीसत्व, विष-शुद्ध-वत्सनाभचूर्ण, पटोलपत्रचूर्ण, खादिर सार ("कत्था" इति प्रसिद्धम्), व्याधि-घातम्-आरग्वधफलमज्जाचूर्णं ( अमलतासगूदाचूर्ण ) प्रत्येक सम सममिति तोल-कैकमितं समादाय पूर्वोक्तौषधे सम्मेल्य सर्वं सम्यग् विचूर्ण्य काचपात्रे स्थापयेत् । अस्य रसस्य माषकैकादारभ्य निष्कमित—चतुर्माषकमित चूर्णं प्रत्यहं मधुना सह सेवितमौडुम्बरनामकं कुष्ठं निहन्ति ।

औदुम्बरकुष्ठलक्षणं यथा—

उदुम्बरफलाभासं कुष्ठमौदुम्बरं वदेत् ॥ इति ।

तथाऽयं सङ्कोचनामकरस सर्वकुष्ठेषु च हितकर ॥ २२-२५ ॥

अमृताङ्कुरलौहम्—

हुताशमुखसंशुद्ध पलमेकं रसस्य वै ।
पलं लौहस्य ताम्रस्य पलं भल्लातकस्य च ॥ २६ ॥
अभ्रकस्य पलञ्चैकं गन्धकस्य चतुःपलम् ।
हरितकीविभीतक्योश्चूर्णं कर्षद्वय द्वयोः ॥ २७ ॥

अष्टमाषाधिकं तत्र धात्र्याः पाणितलानि षट् ।
घृतञ्चाष्टगुणं लौहाद् द्वात्रिंशत् त्रिफलाजलम् ॥ २८ ॥
एकीकृत्य पचेत् पात्रे लौहे च विधिपूर्वकम् ।
पाकमेवास्य जानीयात् शास्त्रज्ञो लौहपाकवित् ॥ २९ ।
भक्षयेत् प्रातरुत्थाय गुरुदेवद्विजार्च्चकः ।
रक्तिकादिक्रमेणैव घृतभ्रामरमर्दितम् ॥ ३० ॥
लौहे च लौहदण्डेन कुर्य्यादेतद् रसायनम् ।
अनुपानञ्च कुर्वीत नारिकेलजलं पयः ॥ ३१ ॥
सर्वकुष्ठहरं श्रेष्ठं वलीपलितनाशनम् ।
अग्निदीप्तिकरं हृद्यं कान्त्यायुर्बलवर्द्धनम् ॥ ३२ ॥
सेव्यो रसो जाङ्गललावकानां वर्ज्यं हि शाकाम्लमपि स्त्रियश्च ।
शाल्योदनं षष्टिकमाज्यमुद्गं क्षौद्रं गुडं क्षीरमिह क्रियायाम् ॥३३॥

अथामृताङ्कुरलौहनिर्माणमाह हुताशेत्यादि—हुताशमुखसशुद्धं रसस्यैकं पलमिति हुताशोऽग्निस्तस्य मुखे तन्मध्ये सशुद्धं गन्धकेन सह जारणायोगेन शुद्धं रसमर्थात् रससिन्दूरमित्यर्थः (अपरे तु हिङ्गुलोद्भव पारदं पातनात्रययोगाच्छुद्धं गृह्णन्ति, प्राचीनानां व्यवहारतश्च रससिन्दूरमेव ग्राह्यम्) तस्यैकं पलं तथा लौहभस्मनः (१-पल), ताम्रभस्मनः (१पल), शुद्धभल्लातकचूर्णस्य (१पलम्), अभ्रकभस्मनश्चैकं पलं, शुद्धगन्धकस्य चतुः पलं, द्वयोरिति हरीतकीचूर्णस्य विभीतकचूर्णस्य च पृथक्² कर्षद्वयं तथा धात्र्या —आमलकचूर्णस्याष्टमाषकाधिकानि षट् पाणितलानि—अष्टमाषकाधिकषट्कर्षा इत्यर्थः (षोडशमाषकमितश्चैकः कर्षस्तस्मात् षट्कर्षा षण्णवति ९६ माषकैस्तुल्या स्तथा षण्णवतिमाषकेष्वष्टमाषकयोजनेन चतुराधिका शतमाषका १०४ जातास्तेषाञ्च वर्तमानद्वादशमाषकतोलकेन सह तुलनाया ८ अष्टतोलकानि, अष्टमाषकाश्च जाता, तथा च परिभाषा—

"माषैश्चतुर्भिः शाणः स्याद्धरणः तन्निगद्यते। टङ्कः स एव कथितस्तद्द्वयं कोल उच्यते॥१॥ कोलद्वयञ्च कर्षः स्यात् स प्रोक्तः पाणिमानिका। अक्षः पिचुः पाणितलं किञ्चित्पाणिश्च तिन्दुकम्

इति धात्रीचूर्णमष्टमाषकाधिकमष्टतोलकमितं ग्राह्यमिति निष्कर्षः) लौहभस्मनश्चापेक्षया गोघृतमष्टगुणं तेनाष्टपलं घृतं, द्वात्रिंशत्त्रिफलाजलमिति त्रिफलाक्वाथः ३२ पलमि-

त., एतत् सर्वं समादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा पृथक् स्थापयेत्। ततश्च लौहकटाहे त्रिफलाक्वाथे लौहभस्म गुग्गुलुश्चैकत्र यथाविधि पक्त्वा पाके सिद्धे शेषद्रव्याणां प्रक्षेपं दत्वा सम्यगालोडयावतारयेत्। (रसादि सर्वद्रव्यमेकीकृत्य लौहपात्रे त्रिफलाक्वाथेन पचनीयम्, पाकान्ते च त्रिफलाचूर्णं देयमित्यपि केषाञ्चिन्मतेन पाकविधि:)। त्रिफलाक्वाथार्थं—त्रिफला १६ पलमिता जलमष्टप्रस्थमितं शेषक्वाथो द्विप्रस्थमित: कार्य:।

सिद्धपाकलक्षणं यथा—

गुडवद्गुग्गुलो: पाको रसगन्धविशेषत:।

इति लौहपाकलक्षणं गुडपाकवज्ज्ञेयं गुडपाकलक्षणञ्च यथा—

यदा दर्वीप्रलेप: स्यात् यदा वा तन्तुलो भवेत्। तोयपूर्णे च पात्रे तु क्षिप्तो न प्लवते गुड:॥
क्षिप्तस्तु निश्चलन्तिष्ठेत् पतितस्तु न शीर्यति। एष पाको गुडादीनां सर्वेषां परिकीर्तित:॥

इति साधारणतया सर्वेषां पाकलक्षणं ज्ञेयम्। लौहपाकलक्षणन्तु यथा—वस्त्रे बद्ध: यन्मुद्राकारं भजते वस्त्रछिद्रैश्च बहिर्न नि:सरति वह्नौ क्षिप्त (चिडचिडेति) शब्दं न कुर्यात्। तथा चोक्तम्—

वस्त्रे निष्पीडितं सूक्ष्मे स्थूलतन्तौ घने दृढे। समुद्रा जायते व्यक्तं न नि:सरति सन्धिभि:॥
न च शब्दायते वह्नौ तदा सिद्धिं विनिर्दिशेत्॥ इति।

अथ हुताशमुखमर्द्देर्विशेषप्रकारमाह—

रसस्य पञ्चभागेन गन्धेन लौहपात्रके। लौहदण्डेन च तथा दत्त्वेषन्नवनीतकम्॥
मर्दनात्कज्जलीं कृत्वा पिष्टं शाल्मलिकाद्रवे। वृहद्धोन्मास्तु पिष्टेन वेष्टयित्वा निधापयेत्॥
हण्डिकाया मुखं लिप्त्वा शनै: मृद्वग्निना पचेत्।
गन्धगन्धवह यावत् स्यात् तद्धुताशमुखं विदु:॥ इति।

इत्थं यथाविधि सिद्धं पाकं घृतस्निग्धे मृण्मयभाण्डे काचपात्रे वा स्थापयेत्। तदनु रक्तिको मात्रामारभ्य यथाम्हं वर्द्धयन् घृतमधुभ्यां विषमभागया मिलिताभ्यां स्वल्पे लौहखल्वे लौहदण्डेनैव विमर्द्य प्रत्यहं भक्षयित्वा नारिकेलोदकं दुग्धं वा तदुपरि पिबेत्। इत्थं यथाविधि सेवितमिदं लौहं सर्वाणि कुष्ठानि, वलीपलितरोगांश्च निहन्ति। तथा देहस्य बलं, कान्तिं, वयश्च वर्द्धयति, पावकशक्तिमुद्दीपयति।

अस्य सेवनकाले पथ्यानि यथा—जाङ्गललावकानां मांसरस:, सघृतं मधुदुग्ध्वा शाल्योदनं, षष्टिकौदनञ्च, मुद्गयूषं, गुडं, दुग्धञ्चेति। अपथ्यानि यथा—

सर्वशाकानि, अम्लपदार्थोपयोग। स्त्रियमित्यष्टविध मैथुनञ्च ॥ २६-३३ ॥

माणिक्यो रस —

पल ताल पल गन्ध शिलायाश्च पलार्द्धकम्।
चपलः शुद्धसीसञ्च ताम्रमभ्रमयोरजः ॥ ३४ ॥
एतेषां कोलभागञ्च वटक्षीरेण मर्दयेत्।
ततो दिनत्रय घर्मे निम्बक्राथेन भावयेत ॥ ३५ ॥
गुडूचीवालहिन्ताल-वानरीनीलझिण्टिकाः।
शोभाञ्जनमुराऽजाजी-निर्गुण्डीहयमारकम् ॥ ३६ ॥
एषां शाणमित चूर्णमेकीकृत्य सरित्तटे।
मृत्पात्रे कठिने कृत्वा मृदम्बरयुते दृढे ॥ ३७ ॥
एकाकी पाकविद्वैद्यो नग्नः शिथिलकुन्तलः।
पचेदवहितो रात्रौ यत्नात् सयतमानसः ॥ ३८ ॥
शनैर्मध्यमवेगेन वह्निना प्रहरद्वयम्।
प्रातः सम्पूज्य मार्त्तण्ड स्वाङ्गशीत समुद्धरेत् ॥ ३९ ॥
यदि भाग्यवशात् एतत् माणिक्याभ शुभ भवेत्।
तद्धि जानीहि भैषज्यं सर्वकुष्ठविनाशनम्।
सर्पिषा मधुना लौह-पात्रे तद्दण्डमर्दितम् ॥ ४० ॥
द्विगुञ्ज सर्वकुष्ठानां नाशन वलवर्द्धनम्।
शीतलं सारसं तोय दुग्ध वा पाकशीतलम् ॥ ४१ ॥
आनीतं तत्क्षणादाजमनुपान सुखावहम्।
वातरक्त शीतपित्त हिक्काञ्च दारुणां जयेत् ॥ ४२ ॥
ज्वरान् सर्वान् वातरोगान् पाण्डु कण्डूञ्च कामलाम्।
श्रीमद्गहननाथेन निर्मितो वहुयत्नतः ॥ ४३ ॥

अथ माणिक्यरसनिर्माणमाह पलमित्यादि—शुद्धहरितालचूर्ण (१पल), 'शुद्ध-गन्धकं (१प०), शुद्धमन शिलाचूर्णमर्द्धपल, चपल –शुद्धपारद कोलमित (अर्द्ध-कर्षमित ), शुद्धसीसं—नागभस्म कोलमित, ताम्रभस्म कोलमितम्, अभ्रकभस्म कोलमितम्, अयो–लौहभस्म च कोलमित समादाय पूर्व पारदगन्धकयो कज्जलीं कृत्वा

शेषद्रव्याणि सम्मेल्य वटदुग्धेन सम्यगाप्लाव्य दृढ विमर्दयेत् । ततश्च निम्ब-त्वच निम्बपञ्चाङ्गस्य वा क्वाथेन सम्यगाप्लाव्य दिनत्रय निदाघे दृढ विमर्दयेत् । ततस्तत्र गुडूचीचूर्ण, वाल-ह्रीवेरचूर्ण, हिन्ताल -शुद्धमहाताल , वानरी-शुद्धकपिकच्छुचूर्ण, नीलझिण्टिका-कृष्णपुष्पीचूर्ण, शोभाञ्जन-शिग्रुबीजचूर्ण, मुरा-मूर्वा या मुरामासीचूर्णम्, अजाजी-जीरकचूर्ण, निर्गुण्डी-सिन्धुवारपत्रचूर्ण, हयमारक-करवीरकचूर्णम् , एषा प्रत्येक शाणमित-चतुर्माषकमित भाग पूर्वोक्तभावितद्रव्ये निक्षिप्य सम्यक् सम्मर्द्य वस्त्रकुट्टितस्निग्धमृत्पङ्कलिप्तहण्डिकाया सर्वद्रव्य निधाय मुखञ्च शरावेण निरूध्य रात्रावेकाकी निर्जने नद्यास्तटे नग्नोभूय केशाश्च विकीर्य यथाविधि समाहितचित्त पाकशास्त्रकुशलो वैद्य प्रहरद्वय मध्यमवेगेन वन्हिना शनै पचेत् । प्रभाते च स्नादिकं कृत्वा मार्त्तण्ड-सूर्य समभ्यर्च्य स्वाङ्गशीतं भेषजमुद्धृत्य गृह्णीयात् । भाग्यवशादौषध यदि माणिक्यसदृशसुद्भासि देदीप्यमानवर्णयुक्त भवेत्तदा तत् सर्वकुष्ठविनाशने परमं प्रशस्त जानीयात् । अस्य रसस्य प्रत्यह गुञ्जाद्वयं शुभे स्वल्पे च लौहखल्वे लौहदण्डेन विमर्द्य सर्पिषा मधुना चालोड्य भक्षयेत् । अनुपान-शीतल सारस तडागसम्बन्धि जलम्, अथवा पाकशीतलं श्रृतशीत गोदुग्धम्, अथवा तत्क्षणादानीतमाजं पय इति-धारोष्ण छागीदुग्धं सुखावह ज्ञेयम् । इत्थ विधिपूर्वक सेवितोऽय रस सर्वकुष्ठानि, वातरक्त, शीतपित्त, दारुणा हिक्का, सर्वविधज्वरान्, वातरोगान्, पाण्डुरोग, कण्डू , कामलाश्च निहन्ति । श्रीमद्गहननाथेन प्रयत्नपूर्वकमयं रस पुरा निर्मित ॥ ३४-४३ ॥

कुष्ठकुठारो रस —

**भस्मसूतसमो गन्धो मृतायस्ताम्रगुग्गुलु ।**
**त्रिफला च महानिम्बश्चित्रकश्च शिलाजतु ॥ ४४ ॥**
**इत्येतच्चूर्णितं कुर्यात् प्रत्येकं शाणषोडश ।**
**चतुःषष्टि करञ्जस्य वीजचूर्णं प्रकल्पयेत् ॥ ४५ ॥**
**चतुःषष्टि मृतश्चाभ्रं मध्वाज्याभ्यां विलोडयेत् ।**
**स्निग्धभाण्डे स्थितं खादेद् द्विनिष्क सर्वकुष्ठनुत् ।**
**रसः कुष्ठकुठारोऽय गलत्कुष्ठविनाशन. ॥ ४६ ॥**

अथ कुष्ठकुठाररसनिर्माणमाह भस्मेत्यादि-भस्मसूत -रससिन्दूरं, शुद्धगन्धक ,

मृताभ्र, लौहभस्म, ताम्रभस्म, शुद्धगुग्गुलु त्रिफलाचूर्णं, महानिम्बो ग्रेक "वकायन" इति ख्यातस्तस्य त्वक्चूर्णं पञ्चाङ्गचूर्णं वा चित्रकचूर्णं, शुद्धशिलाजतु, एतेषां प्रत्येकं भागषोडश षोडशमाषमितं (चतुःषष्टिमाषकं प्रत्येकमित्यर्थः)। शुद्धकरञ्जबीजानां चूर्णं चतुःषष्टिभागमितं (२५६ माषकाः), तथा मृताभ्रमभ्रकभस्म चतुःषष्टिभागमितं समादाय पूर्वं रससिन्दूरशुद्धगन्धकयोः श्लक्ष्णतरं पेषणं कृत्वा शेषद्रव्याणि सम्मिश्र्य घृतमधुभ्यां समाप्लाव्य दृढं विमर्द्य च घृतस्निग्धे मृण्मयभाण्डे काचपात्रे वा स्थापयेत्। अथ कुष्ठकुठाररसं प्रत्यहं माषकैकादारभ्य यथाबलं वृद्धिपर्यन्तं (अष्टमाषकपर्यन्तमित्यर्थः) दुग्धानुपानेन सेवितो गलत्कुष्ठं निहन्ति ॥ ४४-४६ ॥

तालेश्वररस —

गुञ्जाशङ्खकरञ्जचूर्णरजनीभल्लातकाग्निःशिखी-
कन्यासूर्य्यपयः पुनर्नवरजो गन्धस्तथा सूतकम् ।
गोमूत्रे पचितं विडङ्गमरिचैः क्षौद्रञ्च तत्तुल्यकं ।
हन्याद्दाशु विचर्चिकारुजमिदं कण्डूं तथा कैटिमम् ॥ ४७ ॥

अथ तालेश्वररसनिर्माणमाह गुञ्जेत्यादि—शुद्धगुञ्जाबीजचूर्णं, शङ्खभस्म, शुद्धकरञ्जबीजचूर्णं, रजनी-हरिद्राचूर्णं, शुद्धभल्लातकचूर्णम्, अग्निश्चित्रकचूर्णं, शिखी-अपामार्गबीजचूर्णं पञ्चाङ्गचूर्णं वा, कन्या-घृतकुमारीमज्जा, सूर्यपयः-शुद्धमर्कदुग्धं, पुनर्नवरजः-पुनर्नवाचूर्णं, शुद्धगन्धकं, शुद्धसूतकञ्च. एतेषां प्रत्येकं समं सममादाय पूर्वं पारदगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि सम्मिश्र्य गोमूत्रे पचितमिति सर्वद्रव्यापेक्षयाऽष्टगुणं गोमूत्रं कटाहे निक्षिप्य तस्मिन् सर्वद्रव्यं सम्मेल्य पाकं कुर्यात्। सम्यक्पाके च विडङ्गचूर्णं, मरिचचूर्णञ्च समं समं प्रक्षिप्यावतारयेत्। ततश्च सर्वतुल्यमधुना समालोड्य स्निग्धभाण्डे स्थापयेत्। अथ रसं प्रत्यहं यथाग्निबलं सेवितो विचर्चिकारुजं, कण्डूं, कैटिमञ्च निहन्ति। किटिभ एव कैटिमम्, तल्लक्षणं यथा भावप्रकाशे "श्याम किणखरस्पर्शं परुषं किटिभं स्मृतम्" इति। पचितमित्यत्र छन्दस्त्वादप्रस्तु।

विचर्चिकालक्षणं यथा—सकण्डूः पिटका श्यावा बहुस्रावा विचर्चिका ॥ इति ॥ ४७ ॥

राजतालेश्वर —

नागस्य भस्म शाणैकं तोलकं गन्धकस्य च ।

द्विनिष्कं शुद्धतालस्य सर्वमेतद् गवां जलैः ॥ ४८ ॥
विपचेत् षोडशगुणैः पात्रे ताम्रमये शनैः।
घर्मे द्विघस्रं जम्बीर-कुमारी वज्रकन्दजैः ॥ ४९ ॥
रसैर्भृङ्गस्य चाम्भोभिर्युतं वल्लद्वयं भजेत्।
कुष्ठे चास्थिगते चापि शाखानासाविमुञ्चके।
स्वरभङ्गे क्षतक्षीणे मण्डलेषु महत्स्वपि ॥ ५० ॥

औडुम्बरं हन्ति शिवामधुभ्यां कृच्छ्रञ्च कुष्ठं त्रिफलाजलेन।
गुडार्द्रकाभ्यां गजचर्मसिध्मविचर्चिकास्फोटविसर्पकण्डूम् ॥५१॥
निहन्ति पाण्डुं विविधां विपादीं सरक्तपित्तां कटुकासिताभ्याम्।
खादेद् द्विजीरं त्वमृतायुतञ्च समुद्गयूषं सघृतञ्च दद्यात् ॥ ५२ ॥

रोहीतकजटाक्वाथमनुपानं प्रयच्छति।
चतुर्दशदिनस्यान्ते कुष्ठ शुष्यति यत्नतः ॥ ५३ ॥
क्षुद्बोधो जायतेऽत्यर्थमत्यर्थं सुभगं वपुः।
अत्यर्थं पच्यते भुक्तमत्यर्थं सुखमाप्नुयात् ॥ ५४ ॥
अरुणौडुम्बर कुष्ठमृष्यजिह्वां कपालिकाम्।
पुण्डरीकं काकणञ्च दद्रुकुष्ठं सुदुस्तरम् ॥ ५५ ॥
स्फुटरूपं सर्वकुष्ठं महाकुष्ठं सुदारुणम्।
तथा चर्मदलं हन्याद् विसर्पं परिसर्पकम् ॥ ५६ ॥
सिध्मं विचर्चिकां गाढां किटिमञ्च विशेषतः।
पामाञ्चालसकञ्चैव किलासञ्च विनाशयेत्।
वर्जयेत् सततं कुष्ठी मत्स्यमांसादिभोजनम् ॥ ५७ ॥

अथ राजतालेश्वरनिर्माणमाह नागस्येत्यादि—नागस्य भस्म १ शाणमितं (४ मा०), शुद्धगन्धकस्य १ तोलकं, शुद्धतालस्य च निष्कद्वय (८मा०) समादाय सर्वनेकत्र श्लक्ष्ण विचूर्ण्य सर्वचूर्णापेक्षया षोडशगुणगोमूत्रे ( द्वात्रिंशत्तोलकमिते ) पूर्वोक्तरूपे सम्मेल्य ताम्रकटाहे शनै शनैः पचेत्। नष्टे द्रवांशे ह्यवतार्य खल्वे निधाय तीव्रातपे जम्बीररसेन, घृतकुमारीरसेन, वज्रकन्दस्वरसेन, भृङ्गराजस्वरसैश्च पृथक् २ क्रमशो द्विघस्रं द्विदिनं २ भावयेत्। तत संशुष्कं कृत्वा काचपात्रे स्थापयेत्।

अयं रस प्रत्यह द्विवल्लमितो मधुना महास्थिगते कुष्टे, शाखाश्रिते (हस्तपादकुष्ठे) कुष्ठे, नामागतकुष्ठे, नानाविभुग्नके—नामागतवातमूत्रविकृत्या नासावक्रे, स्वरभङ्गे, क्षतक्षीणे, महत्सु मण्डलकुष्ठेषु च प्रयोज्य । अयं रसो द्विरक्तिमित प्रत्यह शिग्रु- मधुभ्या–हरीतकीचूर्णमधुभ्या सेवित औदुम्बरमनककुष्ट तथा त्रिफलाक्वाथेन कृच्छ्र दारुण कुष्ट, गुडार्द्रकाभ्याञ्च सह सेवितो गजचर्म, सिध्म, विचर्चिका, स्फोट, विसर्प, कण्डू च निहन्ति । तथाऽय रस कुटकीचूर्णसिताभ्या सह सेवित पाण्डुरोग, विविधा विपादी, रक्तपित्तञ्च विनिहन्ति । तथा जीरकद्वयचूर्णेन, गुडचीसत्वेन, मुद्ग- यूषेन, घृतेन च सह यथादोष वीक्ष्य रसमेन रोगिणे दद्यात् । अय रसो रोहित- कजटाक्वाथानुपानेन सेवितश्चतुर्दशदिनेष्वेव कुष्ट शोषयति, क्षुधाया वृद्धिं च करोति, वपुश्च सुन्दर करोति, भुक्तञ्च शाघ्र पाचयति । तथाऽय रस प्रत्यह सेवि- त अरुणम्, औदुम्बरम्, ऋष्यजिह्वा, कपालिका, पुण्डरीक, काकण, भयङ्कर दद्रू, स्फोटयुक्त कुष्ठ, महाकुष्ट, चर्मदल, विसर्प, सिध्मकुष्ट, गाटा विचर्चिका, किटिभ, पामाम् , अलसक, किलासञ्च नाशयति । कुष्टरोगी मत्स्यमाषादिक सर्वथा वर्जयेत् ॥ ४८–५७ ॥

मण्डललक्षण यथा—श्वेत रक्त स्थिर स्त्यान स्निग्धमुत्सन्नमण्डलम् ।
कृच्छ्रमन्योन्यसयुक्त कुष्ट मण्डलमुच्यते ॥ इति ।

उदुम्बरलक्षण यथ—उदुम्बरफलाभास कुष्टमौदुम्बर वदेत् ॥ इति ।

सिध्मलक्षण यथा—परुषारुणविशीर्णवहिस्तनून्यन्त स्निग्धानि, शुक्लरक्ताव- भासानि बहून्यल्पवेदनान्यल्पकण्डूदाहपूयलसीकानि लघुसमुत्थानान्यल्पभेदक्रिमी- ण्यलाबुपुष्पसङ्काशानि सिध्मकुष्टानि विद्यात् ॥ इति चरक ।

विचर्चिकालक्षण—सकण्डू पिडका श्यावा बहुस्रावा विचर्चिका । इति । विस्फोटल- क्षणं—स्फोटा श्यावारुणाभासा विस्फोटा स्युस्तनुत्वच । इति । सर्वत परिसर्पणात् विसर्प । विपादीलक्षण—वैपादिक पाणिपादस्फुटन तीव्रवेदनम्, इत्युक्तलक्षणा- न्वितम् । अरुणकुष्टलक्षण यथा—वातेनारुणाभानि तनूनि विसर्पीणि तोदभेदास्वा पयुक्तान्यरुणानि कुष्टानि । इति । ऋष्यजिह्वकुष्ट यथा—ऋष्यजिह्वाप्रकाशानि रूक्ष- राणि ऋष्यजिह्वानि कुष्टानीति । कृष्णकपालिकाप्रकाशानि कपालकुष्ठानि । इति कपालकुष्टम् । पुण्डरीकलक्षण यथा—पुण्डरीकपत्रप्रकाशानि पौण्डरिकाणि श्लेष्मणा, अन्यच्च सश्वेत रक्तपर्यन्त पुण्डरीकदलोपमम् । सोत्सेधञ्च सरागञ्च पुण्डरीकं तद-

च्यते । इति पुण्डरीकल० । काकणलक्षण यथा—काकणन्तिकाफलसदृशानि, अतीव रक्तकृष्णानि काकणकानि, अन्यच्च "यत्काकणन्तिकावर्णं सपाकं तीव्रवेदनम् । त्रिदोषलिङ्ग तत्कुष्ट काकण ज्ञेयमिति काकणलक्षणम् । दद्रुकुष्ठलक्षणं यथा—अतसीपुष्पवर्णानि ताम्राणि वा, विसर्पीणि पिड़कावन्ति च दद्रुकुष्टानि (रिंगवर्म) ।

चर्मदललक्षणं यथा—स्युर्येन कण्ड्व्यथनौषचोषास्तलेपु—

तच्चर्मदल वदन्ति (ज्ञेरोडर्मा), अन्यच्च "रक्तं सशूलं कण्डूमत् सस्फोट यद्गलत्यपि । तच्चर्मदलमाख्यात संस्पर्शासहमुच्यते ॥ इति चर्मदललक्षणम् । किटिमलक्षणं यथा—यत् स्रावि वृत्त घनमुग्रकण्डु, तत् स्निग्धकृष्ण किटिम वदन्ति । (सोरायसिस) अन्यच्च—

श्याव किणखरस्पर्शं परूष किटिम स्मृतम् । इति किटिमम् ।

विसर्पकुष्ठलक्षण यथा—

विसर्पवत् सर्पति सर्वतो य स्त्वग्रक्तमासान्यभिभूय शीघ्रम् ।
मूर्च्छाविदाहारतितोदपाकान्कृत्वा विसर्प स भवेद्विकार ॥ १ ॥

परिसर्पकलक्षण यथा—

शनै शरीरे पिड़का स्रवन्त्य सर्पन्ति यास्त परिसर्पमाहु ॥ इति परिसर्पल० ।

सिध्मलक्षण यथा—

कण्ड्वन्वित श्वेतमपायि सिध्म विद्यादसु प्रायश ऊर्ध्वकाये । (क्लोआज्मा) इति ।

प्रकारान्तरेण विचर्चिकालक्षण यथा—

राज्योऽतिकण्ड्वर्निरूज सरूक्षा भवन्ति गात्रेषु विचर्चिकायाम् । (पेम्फिगस) इति ।

पामालक्षणं यथा—

सस्रावकण्डूपरिदाहवभि पामाणुकाभि पिडकाभिरूह्या । (एग्जिमा) ति पामा ल० ।

किलासलक्षण यथा—

कुष्टैकसम्भव श्वित्रं किलासं वारुणं भवेत् । निर्दिष्टमपरिस्रावि त्रिधातूद्भवसश्रयम् ॥

तत्त्रिविधं यथा वातेन मण्डलमरुणं परुषं परिध्वंसि च । पित्तेन पद्मपत्रप्रतिकाशं सपरिदाहञ्च, श्लेष्मणा श्वेत स्निग्धं वहलं कण्डूमच, तेषु सम्बद्धमण्डलमन्ते जातं रक्तरोमचासाध्यमग्निदग्धञ्च (ल्यूकोडर्मा) इति किलासम् ।

कुष्ठहरितालेश्वर —

**हरितालं भवेद्भागं द्वादशात्र विशुद्धिमत् ।**

गन्धकोऽपि तथा ग्राह्यो रस सप्तात्र दीयते ॥ ५८ ॥
कृष्णाभ्रकमपि श्लक्ष्णं खल्ले कृत्वा विमर्दयेत् ।
अङ्कोठमूलनीरेण सेहुण्डीपयसाऽथवा ॥ ५९ ॥
अर्कदुग्धेन सम्पिष्य करवीरजलेन च ।
काकोडुम्बरनीरेण पेषणीयो रसो भृशम् ॥ ६० ॥
शुद्धताम्रकटोराया क्षेपणीयो रसेश्वर ।
विधिवत् पच्यते याम षट्कञ्चाय रसेश्वरः ॥ ६१ ॥
पञ्चगुञ्जाप्रमाणेन काकोडुम्बरवारिणा ।
कुष्ठाष्टादशसख्येषु देय एष भिषग्वरै ॥ ६२ ॥
अचिरेणैव कालेन विनाशं यान्ति निश्चयः ।
पथ्यसेवा विधातव्या प्रणति. सूर्य्यपादयोः ॥ ६३ ॥
साधकेन तथा सेव्यो रसो रोगौघनाशनः ।
पिप्पलीभिः सम दद्यात् कुष्ठरोगे रसेश्वरम् ॥ ६४ ॥

अथ कुष्ठहरिताऽश्वरनिर्माणमाह हरितालमित्यादि—शुद्धहरितालचूर्णं द्वादशतोलक, शुद्धगन्धक १२ तोलकं शुद्धपारद (७तो०), श्लक्ष्णं वारितर कृष्णाभ्रकभस्म (७तो०) समादाय पूर्वं पारदगन्धकयोः कज्जली कृत्वा शेषद्रव्याणि सम्मिश्र्य अङ्कोलमूलक्वाथेन, सेहुण्डीपयसा—शुद्धस्नुहीदुग्धेन, मदारदुग्धेन, करवीरं "कणेर" इति ख्यात तस्य मूलक्वाथेन, काकोडुम्बरत्वच पत्राणा वा क्वाथेन, प्रत्येकेन पृथक् ७ सप्त २ दिन निरन्तर सम्यगाप्लाव्य विमर्दयेत् । तत सशुष्कं शुद्धताम्रकटोरिका द्वये निरुध्य कटोरिकासम्पुटञ्च वालुकायन्त्रे विधिवत् प्रहरषट्कं यावत्पचेत् । स्वाङ्गशीतश्चोद्धृत्य सञ्चूर्ण्य च काचपात्रे स्थापयेत् । अथ रस प्रत्यह द्विरक्तित प्रारभ्य यथाग्निबल पञ्चरक्तिपर्यन्तं काकोडुम्बरपत्रस्वरसानुपानेन सेवितो ध्रुवमष्टादशविध कुष्ठ निहन्ति। पथ्यपालनं कर्तव्य । सूर्य्यपादयो प्रणतिविधेया सूर्यभगवत उपासनं कर्तव्यमित्यर्थ ।कुष्ठरोगे पिप्पलीचूर्णमधुभ्या प्रयोज्योऽयं रस ॥५८–६४॥

राजराजेश्वरो रस —

आतपे मर्दयेत् सूत गन्धकं मृतताम्रकम् ।
स्नुहस्तमर्दितं ताल यावत् तत्र विलीयते ॥ ६५ ॥

भृङ्गराजद्रवं दत्त्वा दिनमात्रं विमर्दयेत्।
त्रिफला खादिर सारममृता वागुजीफलम् ॥ ६६ ॥
प्रत्येकं सूततुल्यं स्यात् चूर्णीकृत्य विमर्दयेत्।
मध्वाज्याभ्यां लौहपात्रे कर्षाभ्यां भक्षयेत् ततः ॥ ६७ ॥
दद्रुकिटिमकुष्ठानि मण्डलानि विनाशयेत्।
छिगुञ्जेन निहन्त्याशु राजराजेश्वरो रसः ॥ ६८ ॥

अथ राजराजेश्वररसनिर्माणमाह आतप इत्यादि—शुद्धपारद (१तो०), शुद्ध-गन्धकं (१तो०) समादाय निदाघे कज्जलीं कृत्वा तत्र मृतताम्रवं–ताम्रभस्म (१तो०), शुद्धहरितालचूर्णं (१तो०) दत्त्वा सम्यक् विमर्द्य च भृङ्गराजस्वरसेना-प्लाव्य दिनमेक विमर्दयेत्। ततश्च त्रिफलाचूर्णं पृथक् २ (१तो०), खादिर सार "कत्थेति" (१तो०), अमृता–गुडूचीसत्वं चूर्णम्वा (१तो०), वागुजीफलचूर्णं (१तो०) निक्षिप्य दृढं विमर्द्य च काचपात्रे स्थापयेत्। अथ रस प्रत्यहं द्विरक्ति-मितो मध्वाज्याभ्या सेवित सर्वकुष्ठानि निहन्ति ॥ ६५–६८ ॥

पारिभद्ररस.—

मूर्च्छितं सूतकं धात्री फल निम्बस्य चाहरेत्।
तुल्यांश खादिरैः क्वाथदिनं मर्द्यञ्च भक्षयेत्।
निष्कैकं दद्रुकुष्ठघ्नः पारिभद्राह्वयो रसः ॥ ६९ ॥

अथ पारिभद्ररसनिर्माणमाह मूर्च्छितमित्यादि—मूर्च्छनसस्कारसंस्कृतं पारद–रससिन्दूरं (१तो०), धात्रीफलचूर्णं (१तो०), शुद्ध निम्बफलास्थिमज्जाचूर्णं (१तो०) सर्वमेतत् खल्वे निक्षिप्य सञ्चूर्ण्य खादिरत्वच क्वाथै दिनमेकं विमर्द्य निष्कैकप्रमाण प्रत्यहं सेवितोऽय पारिभद्रनामकरसो दद्रुकुष्ठ निहन्ति ॥ ६९ ॥

प्रलेपा —

गन्धकं मूलकक्षारमार्द्रकस्य रसैर्दिनम्।
मर्दितं हन्ति लेपेन सिध्मन्तु दिनमेकतः ॥ ७० ॥
कृष्णधुस्तूरजं मूलं गन्धतुल्य विचूर्णयेत्।
मर्द्यं जम्बीरनीरेण लेपनं सिध्मनाशनम् ॥ ७१ ॥

निम्बमञ्जिष्ठावचापाटलमूलककटुकारजनीनां मिलितानां कर्षमितानां क्वाथं कृत्वा
नुपानेन सेवितं सर्वविधं कुष्ठं सिंहो गजमिव निहन्ति ॥ ७४-७६ ॥

भूतभैरवो रसः —

शुद्धाः पञ्चदशात्र तालकमिताः शुद्धाश्च षड्गन्धकाः
सप्ताष्टौ नव तिन्तडीयकफलात् काठिल्लकानां दश ।
सेहुण्ड्यर्कपयोभिरेव सततं सञ्चूर्ण्य तद्भाव्यते
रोहीतस्य जटारसेन मृदितं श्लक्ष्णं ततः खल्लितम् ॥ ७७ ॥
एकीकृत्य समस्तमेतदपि तत् टङ्कैकमेतज्जयेत्
पश्चाद्द्रासविशुद्धवारिसहितं किञ्चिच्च तत् पीयते ।
ताम्बूलं शशिखण्डमण्डितवटी-मिश्रं ततः स्वापयेत्
शय्यायां मृगलोचनापरिभूतौ कर्माणि सम्पादयेत् ॥ ७८ ॥
देहं वीक्ष्य सुखं मुखं न विरसं विज्ञाय सम्यक् सुधी
छागीदुग्धमिहापि तं ननु दिनं तक्रञ्च तत् पाययेत् ।
निन्द्यं शान्तमिदं करोति नियतं सर्वौषधैर्वर्जितम्
सामश्रामसमश्रमभ्रिमतरं नीलञ्च पीतारुणम् ॥ ७९ ॥
श्वेतं स्फीतमनल्पकं भृशमति प्रायः क्रिमिव्याकुलम्
गन्धालिप्रतिमं खटीकसदृशं कुष्ठं हि चोत्सादयेत् ।
कुष्ठाष्टादश भूतभैरव इति ख्यातः क्षितौ हन्ति च
वातव्याधिनिकृन्तनः कफकृतान् कुष्ठान् विशेषान्नियम् ॥ ८० ॥
हन्तीति ज्वरमुग्ररूपमधिकं दाहादिकञ्चामयम् ।
कुर्य्याद् रूपमनङ्गरङ्गगुणभृद्भृङ्गास्पदं विग्रहम् ॥ ८१ ॥
एवं समासात् कुरुते समासात् पथ्यञ्च तथ्यं सकलं करोति ।
भुञ्जीत भक्तं सततं प्रयुक्तं घृतं श्रृतं वा विकृतं तदेव ॥ ८२ ॥
स्वच्छन्ददुग्धेन सुखेन जग्धं पथ्यान्नमेतत् प्रवदन्ति सन्तः ।
कुष्ठस्य दुष्टस्य निराकरोति गात्रञ्च कुर्य्यात् शुभगन्धयुक्तम् ॥ ८३ ॥

अथ भूतभैरवरसनिर्माणमाह शुद्धा इत्यादि—शुद्धहरितालचूर्णं पञ्चदशतोलकं,
शुद्धगन्धकं षट्तोलकं, नवीनतिन्तिडीयकफलचूर्णात् सप्ताष्टाविति सप्ताधिका अष्ट-

दत्वा विवद्धभाण्डस्थं पूरयेद् भस्मना दृढम् ।
अग्निं प्रज्वालयेत् यामद्वयं शीतं विचूर्णयेत् ॥ ८५ ॥
पुटेद् द्वादशधा सूर्य्य-दुग्धेनालोडितं पुनः ।
वरापावकभृङ्गाणां त्रिभिर्द्रवैर्विभावयेत् ।
अयमर्केश्वरो नाम्ना रक्तमण्डलकुष्ठजित् ॥ ८६ ॥

अथार्केश्वररसनिर्माणमाह पलानीत्यादि—ईशस्य-शुद्धपारदस्य चत्वारि पलानि, बले-शुद्धगन्धकस्य द्वादशपलानि, ताम्रस्य-ताम्रभस्मन स्तावती द्वादशपलमिता मात्रा ग्राह्या। पूर्वं पारदगन्धकयो कज्जली कृत्वा तस्या द्वादशपलमितं ताम्रभस्म निक्षिप्य जलेन ( त्रिफलाक्वाथेन वर ) दृढ विमर्द्य चक्रिकाश्च कृत्वा संशोष्य च हण्डिकाया निधाय तदुपरि अधोमुख शराव दत्वा स्निग्धमृद- पङ्केन सन्धि निरोधयेत्। ततश्च हण्डिकाया शरावोपरि शेषं रिक्तभाग वस्त्रसारितभस्मना दृढ पूरयेत्। प्रहरद्वयं यावदग्निं दत्वा स्वाङ्गशीत चुल्लिकातोऽवतार्य लघुहस्ततया सावधानपूर्वक निष्कास्य खल्वे सञ्चूर्णयेत्। ततश्च सूर्यदुग्धेनेत्यर्कदुग्धेन सम्यगाप्लाव्य बहुशो विलोड्य चक्रिकाश्च कृत्वा शरावसम्पुट कृत्वा गजपुटे पचेत्। इत्थं द्वादशपुटानि दत्वा खल्वे पुन सञ्चूर्ण्य वरा-त्रिफला तस्या. क्वाथेन, पावकश्चित्रकस्तस्य स्वरसेन, भृङ्गो भृङ्गराजस्तस्य स्वरसेन च क्रमश पृथक् २ प्रत्येकेन वारत्रयं भावयित्वा दृढ विमर्द्य संशोष्य च काचपात्रे स्थापयेत्। अयमर्केश्वररस प्रत्यह रक्तेरर्द्धांशाद्रक्तिमितो मधुना सेवितो रक्तमण्डलकुष्ठ निहन्ति ॥ ८४-८६ ॥

महातालेश्वरो रस —

तालताप्यशिलासूतं शुद्धं टङ्कणसैन्धवम् ।
समं सञ्चूर्णयेत् खल्ले सूताद् द्विगुणगन्धकम् ॥ ८७ ॥
गन्धाद्द्विगुणलौहञ्च जम्बीराम्लेन मर्दयेत् ।
ततो लघुपुटे पाच्यं स्वाङ्गशीतं समुद्धरेत् ॥ ८८ ॥
त्रिंशदंशं विषञ्चात्र क्षिप्त्वा सर्वं विचूर्णयेत् ।
माहिषाज्येन संमिश्रं निष्कार्द्धं भक्षयेत् सदा ॥ ८९ ॥
मध्वाज्यैर्वागुजीचूर्ण-कर्षं लिह्यात् ततः परम् ।
सर्वान् कुष्ठान् निहन्त्याशु महातालेश्वरो रसः ॥ ९० ॥

अथ महातालेश्वररसनिर्माणमाह तालेत्यादि—शुद्धतालक, ताप्य—स्वर्णमाक्षिकभस्म, शिला—शुद्धमन शिला, सूत—शुद्धपारद, शुद्धटङ्कण, सैन्धवलवणञ्च, एतेषां प्रत्येकं तोलकैक तथा सूताद् द्विगुण (२तो०) शुद्धगन्धक, गन्धाच्च द्विगुणं (४तो०) लौहं—लौहभस्म, समादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मिश्र्य श्लक्ष्ण सञ्चूर्ण्य जम्वीराम्लेन—जम्वीरनिम्बूरसेन सम्यगाप्लाव्य दृढ विमर्द्य शरावसम्पुट कृत्वा लघुपुटे पचेत् । स्वाङ्गशीत सिद्धमौषध खल्वे सञ्चूर्ण्य चूर्णापेक्षया त्रिंशदंशं शुद्धवत्सनाभचूर्णं सम्मेल्य पुनर्विचूर्ण्य च काचपात्रे स्थापयेत्। अयं महातालेश्वररस प्रत्यह निष्कार्द्धं—द्विमापकमितो महिषीघृतेन सेवित स्तदुपरि च कर्षमितं वागुजीचूर्णं मधु घृताभ्यां लेहनेन सर्वान् कुष्ठान् विनिहन्ति ॥ ८७–९० ॥

विजयभैरवो रस —

सप्तकञ्चुकनिर्मुक्तमूर्द्ध्वशुद्धरसेन्द्रकम् ।
मृत्कटाहान्तरे तत्तु स्थापयेच्च समन्त्रकम् ॥ ९१ ॥
सूताद्द्विगुणित तालं कूष्माण्डद्रवशोधितम् ।
दोलायन्त्रेण तैलादौ सप्तधा परिशोधितम् ॥ ९२ ॥
दत्त्वाऽऽप्लाव्य द्रवैर्झिण्ट्या. किञ्चिदाप्लाव्य युक्तितः ।
तयोर्द्विगुणितं भस्म पलाशस्य परिक्षिपेत् ॥ ९३ ॥
पुनर्झिण्टीद्रवेणैव सर्वमाप्लाव्य यत्नतः ।
खाखसार्करसैर्भूय. परिप्लाव्य च पाकवित् ॥ ९४ ॥
पचेदवहितो वैद्य. शालाङ्गारेण यत्नतः ।
चतुर्विंशतियामन्तु पक्त्वा शीतलतां नयेत् ॥ ९५ ॥
अवतार्य्य काचपात्रे विधाय तदनन्तरम् ।
प्रयत्नेन कृतप्रायश्चित्तः शोधितदेहकः ॥ ९६ ॥
सिताहरीतकीयुक्त खादेद् रक्तिचतुष्टयम् ।
रक्तिकैकक्रमेणैव वर्द्धयेद् दिनसप्तकम् ॥ ९७ ॥
मधूदक पिवेच्चानु नारिकेलजलञ्च वा ।
जिङ्गिनीसम्भवं क्राथमथवा क्षौद्रनागरम् ॥ ९८ ॥
अभ्यङ्गं सुरभितैलैः कुर्य्यात् ताम्बूलचर्वणम् ।

पवनानलसूर्य्यांशुमत्स्यमांसदधीनि च ॥ ९९ ॥
शाकं ककारपूर्वञ्च वर्जयेत् मतिमान् नरः।
वातरक्तमाममिश्रमामञ्चापि सुदारुणम् ॥ १०० ॥
सर्वकुष्ठञ्चाम्लपित्त विस्फोटञ्च मसूरिकाम्।
विजयाख्यो रसो नाम्ना हन्ति दोषानसृग्दरान् ॥ १०१ ॥

अथ विजयभैरवरसनिर्माणमाह सप्तेत्यादि—सप्तकञ्चुकदोषरहितं तथोदूर्ध्वशुद्धमित्यूदूर्ध्वपातनयोगेनोदूर्ध्वपातनकृत रसेन्द्रक–पारद १ तोलकमितं ध्यानमन्त्रोच्चारणपूर्वक मृत्कटाहे–मृण्मयहण्डिकाया स्थापयेत्। तथा तैलादाविति "तैले तक्रे गवा मूत्रे काञ्जिकेऽथ कुलत्थजे, इति पञ्चद्रवेषु पृथक् २ सप्तवारं तथा कुष्माण्डस्वरसे च पृथक् सप्तवा दोलायन्त्रविधिना शोधित सूताद्द्विगुण (२तो०) हरिताल हण्डिकाया निक्षिप्य झिण्टया –नीलझिण्टया क्वाथेन युक्तिपूर्वक किञ्चिदार्द्रं कृत्वा रसतालकयोर्द्विगुणित (६तो०) पलाशस्य भस्म (क्षार देयम्) परितस्तयोरुपरि निक्षिप्य पुनर्झिण्टया क्वाथेन यत्नत सर्वं सम्यगाप्लाव्य खाखसा–खसतिला "पोस्ता" तेपा क्वाथैस्तथा अर्कपत्रस्वरसैश्च सर्वां हण्डिका प्रपूर्य पाकविद्वैद्या विधिपूर्वक शालाङ्गारेण–शालवृक्षकाष्ठै काष्ठैर्वा चतुर्विशतियामपर्यन्त पक्त्वा स्वाङ्गशी तञ्चावतार्य हण्डिकातलस्थमौषध समादाय काचपात्रे स्थापयेत्। ततश्च वैद्य सावधानतया अस्यौषधस्य प्रथमदिने रक्तिचतुष्टय तथा द्वितीयदिनान् सप्तदिनपर्यन्तञ्चैकैका रक्तिं वर्द्धयन् शर्करायुक्तहरीतकीचूर्णेन मधुना च सह मनुस्मृत्युक्तविधिकृतप्रायश्चित्ताय वमनविरेचनादिभिर्यथाशक्तिविहितपञ्चकर्मभि कृतशुद्धदेहाय रोगिणे दद्यात्। तदनु च मधुयुक्त जल, नारिकेलजलम्वा, जिङ्गिनीक्वाथम्, अथवा क्षौद्रमिश्रितमार्द्रकस्य चूर्णं स्वरम वा यथादोष विशुध्यानुपान कारयेत्। ततश्च सुवासिततताम्बूलचर्वण कारयेत्। प्रत्यहञ्च सुरभितैलेन देहाभ्यङ्ग कारयेत्। तथा पथ्ये च भेषजजीर्णानन्तर भोजनेच्छाया सदुग्ध तण्डुलौदन दद्यात्। तथा पवन–वातसेवनम्, अनल मग्निसेवन, सूर्यांशुरिति–प्रखरसूर्यकिरणसेवनं, मत्स्य, मास, दधि, ककारपूर्वक शाकञ्च विवर्जयेत्। इत्थ विधिपूर्वक सेवितोऽय रसो वातरक्तम्, आममिश्रं रोगम्, आमरोग, सर्वविधकुष्ठानि, अम्लपित्तं, विस्फोट, मसूरिकाम्, असृग्दरविकाराश्च स्वस्वानुपाने जयेत् ॥ ९१–१०१ ॥

अथ सप्तकञ्चुका स्तेषां नाशनविधिश्च—

"धातवो रससंश्लिष्टा यदा विष्णुपदामृतम्। गृह्णन्ति हि तदा तेषां कश्चिद्भागोऽवशीर्यते॥१॥
ततश्चूर्णत्वमापन्ना रसमाच्छादयन्ति ते। तेनावरणसाम्येन धातवः सूतसप्तता॥२॥

कञ्चुकाख्यां भजन्तीति प्राच्यपाश्चात्यसम्मतिः।
कैश्चिदेते कञ्चुकाख्या दोषा औपाधिकाः स्मृताः॥३॥

इति सप्तकञ्चुकस्वरूपम्।

अथ पारदस्य सप्तकञ्चुकदोषनिराकरणविधिः—

कुमारिकाचित्रकरक्तसर्षपं कृतं कषायं बृहतीविमिश्रितं।
फलत्रिकेणापि विमर्दितो रसो दिनत्रयं सप्तमलैर्विमुच्यते॥१॥

अथवा

गृहकन्या यामिनी लवणपञ्चकं पावकः। फलत्रिकयवाग्रजौ खलु सुवर्चिकष्टङ्कणः॥१॥
तथा सितवर्णसर्षपौ खलु समैस्तु विंशांशकैः। विशुद्ध्यति विमर्दितो रसवरोऽम्लवर्गैर्दिनैः॥२॥

अथवा

"नागवल्लीदलरसैः स्तथा चार्द्रकजै रसैः। क्षारत्रययुतैश्चापि रसराजं विमर्दयेत्॥१॥
ततस्तेभ्यः पृथक् कृत्वा सप्तदोषविवर्जितम्। मुक्ताफलसमाकारं रसराजं प्रयोजयेत्॥२॥

अथवा

विमर्द्य सुधया सप्तदिनं धूमसितेष्टकैः। त्रिदिनं मर्दयेत् सूतं काञ्जिके क्षालयेत्ततः॥१॥
वस्त्रं चतुर्गुणं कृत्वा सूतं निःसारयेत्ततः। सप्तकञ्चुकनिर्मुक्तो जायते निर्मलो रसः॥२॥

अथवा

रसेश्वरं सप्तसुधारजना मर्दयेत् त्र्यहम्। ततो द्विगुणवस्त्रान्तर्गालितं खल्वके न्यसेत्॥१॥
रसोनं निस्तुषं तुल्यं तदर्धं लवणं तथा। तत्खल्के मर्दयेत् सूतं यावदायाति कृष्णताम्॥२॥
कृष्णकल्कं परित्यज्य तथा प्रक्षाल्य युक्तितः। कञ्चुकैः सप्तभिर्मुक्तो रसः शुद्धिमवाप्नुयात्॥३॥

इति पारदस्य सप्तकञ्चुकदोषनिराकरणविधिः।

अथ पारदस्योर्ध्वपातनविधिना शुद्धिप्रकारो यथा—

स्वर्जिका खलु यवाग्रजं तथा रामठं लवणपञ्चकान्वितम्।
अम्लवर्गगदितैस्तु भेषजैः संयुतं रसवरं विमर्दयेत्॥१॥
स्थापयेदिह सुयुक्तितो भिषक् पारदं विहितकल्कसंयुतम्।
ऊर्ध्वपातनकयन्त्रमार्गतः पातयेदिह रसेश्वरं भिषक्॥२॥

इत्यूर्ध्वपातनविधिः।

समन्त्रकं स्थापयेदिति "अघोरेभ्योऽथघोरेभ्यो घोराघोरतरेभ्यश्च ।
सर्वत सर्व्वसर्व्वेभ्यो नमस्ते रुद्ररूपिभ्य ॥ १ ॥
अस्य मन्त्रस्य ध्यानपूर्वकं जप कुर्वन् पारद हण्डिकाया निक्षिपेत् ॥

कुष्ठारिरस —

**काकोडुम्बरिकाचूर्णं ब्रह्मदण्डी बलात्रयम् ।**
**प्रत्यहं मधुना लीढं वातरक्तापहं नृणाम् ॥ १०२ ॥**
**क्षरद्रक्तं चलन्मांसं मासमात्रेण सर्वथा ।**
**गलत्पूयं पतत्कीटं त्रिटङ्कं सेव्यमीरितम् ॥ १०३ ॥**

अथ कुष्ठारिरसनिर्माणमाह काकेत्यादि—काकोडुम्बरिकाचूर्णं, ब्रह्मदण्डी—पलाशक्षार. ( भार्ङ्गीचूर्णम्वा ), बलात्रयमिति—पीतपुष्पाचूर्णं ( खरेटीचूर्णं ), अतिबलाचूर्णं (कंघीचूर्णं), नागबलाचूर्णं (गंगेरनचूर्णं), एतत् सर्वं खल्वे निक्षिप्य श्लक्ष्णं सम्पेष्य काचपात्रे स्थापयेत् । अस्य चूर्णस्य चतुर्माषकमित भागं प्रत्यहं मधुना सह सेवितं नृणा वातरक्तं, क्षरद्रक्त—प्रस्रवद्रक्तं, चलन्मांसं पतन्मांस कुष्ठं, गलत्पूय—पूयनि सरणपूर्वकं च कुष्ठ, पतत्कीटं—कुष्ठकीटकव्याप्तं कुष्ठ मासमात्रेणैव विनिहन्ति ॥ १०२—१०३ ॥

षडाननगुडिका—

**विषोषणं टङ्कणपारदञ्च सुगन्धचूर्णञ्च समांशयुक्तम् ।**
**जैपालचूर्णं द्विगुणं गुडाक्तं सम्मर्द्य सर्वं गुडिका विधेया ॥ १०४ ॥**
**विरेचनी सर्वविकारहन्त्री लघ्वी हिता दीपनपाचनीयम् ।**
**कुष्ठे हिता तीव्रतरे हि शूले चामाशये चाश्मगते विकारे ।**
**संशोधनी शीतजलेन सम्यक् संग्राहिणी चोष्णजलेन युक्ता ॥ १०५ ॥**

अथ षडाननगुडिकानिर्माणमाह विषोषणमित्यादि—विषं—शुद्धवत्सनाभचूर्णं (१तो०), ऊषणं—मरिचचूर्णं (१तो०), शुद्धटङ्कणं (१तो०), शुद्धपारदं (१तो०), शुद्धगन्धक (१तो०), शुद्धजयपालबीजचूर्णं (१तो०), समादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य सर्वद्रव्यद्विगुण गुडं च सम्मेल्य दृढ म्मर्द्य च द्विरक्तिप्रमाणा गुडिकाश्चरेत् । इयं गुडिका विरेचनकारिणी, सर्वविकारनाशिनी, लघ्वी, वन्हे दीपनी, भुक्तस्य पाचिनी, तथा कुष्ठे, तीव्रतरे शूले, अमाशयविकारेषु, अश्मरीरोगेषु च विशेषेण हितकरी वर्तते । इय गुडिका शीतलजलेन सेविता

विरेचयन्ति, तथा उष्णजलेन सेविता विरेचनौषधं न गृह्णाति ॥ १०४-१०५ ॥

कुष्ठनाशन —

चिरबिल्वपत्रं पथ्या शिरीषञ्च विभीतकम् ।
काकोडुम्बरिकामूलं मूत्रैरालोड्य फेनितम् ॥ १०६ ॥
कर्षमात्रं पिबेद्रोगी गोस्तन्या सह टङ्कणम् ।
सप्तसप्तकपर्यन्तं सर्वकुष्ठविनाशनम् ॥ १०७ ॥

अथ कुष्ठनाशनयोगमाह चिरेत्यादि—चिरबिल्व—करञ्जस्तस्य पत्रचूर्णं, पथ्या-हरीतकीचूर्णं शिरीषत्वक्चूर्णं, विभीतकफलचूर्णं, काकोडुम्बरिकामूलत्वक्चूर्णम्, एतद्-सर्वं श्लक्ष्णं विचूर्ण्य काचपात्रे स्थापयेत् । प्रत्यहमस्य चूर्णस्य कर्षमेकं मात्रां गोमूत्रेणालोड्य फेनीभूतं कृत्वा पिबेत् । तदनु च भावकालेन शुद्धटङ्कणं ( वह्नि-भृष्टमिति ) गोस्तन्या-द्राक्षया सह लिह्य भक्षयेत् । इत्थं सप्तसप्ताहपर्यन्तं सेवनात् पुरुषः सर्वविधकुष्ठरहितो भवति ॥ १०६-१०७ ॥

## अथ श्वित्र-चिकित्सा ।

अथ श्वित्रस्य वक्ष्यामि नाशनोपायमुत्तमम् ॥ १०८ ॥

कुष्ठविशेषत्वात् कुष्ठप्रकारे एव श्वित्रस्य चिकित्सामाह अथेत्यादि—अथेति कुष्ठचिकित्सानन्तरं श्वित्रस्य श्रेष्ठं नाशोपायमहं वक्ष्यामि ॥ १०८ ॥

श्वित्रघ्नो रसः —

शुद्धसूतस्य भागैकं द्विभागं शुद्धतालकम् ।
मृत्कटाहान्तरे पूर्वं स्थापयेच्च समन्वकम् ॥ १०९ ॥
द्वयोः समं पलाशस्य भस्म तस्योपरि क्षिपेत् ।
वक्त्रं मृत्कर्पटैर्लिप्त्वा शोषयेच्च खरातपे ॥ ११० ॥
चतुर्विंशतियामन्तु पक्त्वा शीतलतां नयेत् ।
सत्वताद्यं काचपात्रे स्थापयेदतियत्नतः ॥ १११ ॥
विधिवत् सेवितश्चासौ हन्ति श्वित्रं चिरन्तनम् ।
सर्वकुष्ठं निहन्त्याशु भास्करस्तिमिरं यथा ॥ ११२ ॥
रसोऽयं श्वित्रनाशाय ब्रह्मणा निर्मितः पुरा ।

**विजयानन्दनामाऽयं प्रसिद्धः क्षितिमण्डले ॥ ११३ ॥**

अथ विजयानन्दरसनिर्माणमाह शुद्धसूतस्येत्यादि—शुद्धपारदस्यैकं तोलकं, शुद्धतालकं च द्वितोलकमितं समादायाघोरादिमन्त्रोच्चारणपूर्वकं मृण्मयहण्डिकायां निक्षिपेत्। ततश्च द्वयोस्तुल्यं (३तो०) पलाशस्य भस्म (क्षारम्वा) तयोरुपरि सर्वतो निक्षिप्य हण्डिकामुखञ्च शरावेणाच्छाद्य स्निग्धमृत्पङ्केन तदाप्लुतवस्त्रेण च सन्धिबन्धनं कृत्वा हण्डिकायाः सर्वं भागं विलिप्य निदाघे शोषयेत्। ततश्च चुल्लिकायां हण्डिकामारोप्य चतुर्विंशतियामपर्यन्तं पक्त्वा स्वाङ्गशीतमौषधं निष्कास्य खल्वे सञ्चूर्ण्य च काचपात्रे स्थापयेत्। अथ रसः प्रत्यहं रक्तिमितः कुष्ठहरौषधचूर्णमधुभ्यां सेवितः श्चिरन्तनं श्वित्रकुष्ठं तथा विविधकुष्ठभेदांश्च भास्करस्तिमिरमिव निहन्ति। अयं रसः पुरा श्वित्रनाशाय ब्रह्मणा निर्मितः स्तथा पृथिव्यां विजयानन्दरस इति नाम्ना प्रसिद्धोऽभवत् ॥ १०९–११३ ॥

श्वित्रदद्रुपाटलालेपः—

**अश्वहा रजनी हेम प्रत्यक्पुष्पी प्रदाह्य च ।**
**चूर्णञ्च स्वर्जिकाक्षारं नीरं दत्त्वा प्रपेषयेत् ॥ ११४ ॥**
**प्रच्छयित्वा ततः स्थानं मण्डलाग्रेण लिम्पति ।**
**पाटलानि पतन्त्यङ्गे विस्फोटाश्चातिदारुणाः ॥ ११५ ॥**
**सम्भवन्ति तिला रक्ताः कृष्णवर्णा भवन्ति ते ।**
**मीलन्ति स्वशरीरे च दिव्यरूपो भवेन्नरः ॥ ११६ ॥**

अथ श्वित्रदद्रुपाटलालेपमाह—अश्वहेत्यादि—अश्वहा—करवीर, रजनी—हरिद्राचूर्णं, हेम—धुस्तूर, प्रत्यक्पुष्पी—अपामार्ग, एतान् समभागगृहीतान् पृथक् २ प्रदाह्य क्षारनिर्माणविधिना क्षारं कृत्वा क्षारं गृह्णीयात्। तथा स्वर्जिकाक्षारं सर्वमेतत् समं सममादाय सम्मेल्य च काचपात्रे स्थापयेत्। अस्य चूर्णस्य प्रत्यहं जलेन पेषणं कृत्वा कुष्ठस्थानञ्च मण्डलस्याग्रभागेन सघर्षयित्वा प्रत्यहं लेपनं कुर्यात्, तेनाङ्गतः पाटलानि—कुष्ठपटलानि पतन्ति। तथा दारुणा विस्फोटाः शाम्यन्ति, रक्ततिलाश्च कृष्णवर्णा भवन्ति। ततश्च ते शरीरवर्णेन सह मिलन्ति। इत्थमस्य लेपेन कुष्ठी पुरुषोऽपि दिव्यरूपो भवति ॥ ११४–११६ ॥

श्वित्रहरो लेप —

सैन्धवं रविदुग्धेन पेषयित्वाऽथ मण्डलम् ।
प्रच्छयित्वा प्रलेपोऽयं श्वित्रकुष्ठविनाशनः ॥ ११७ ॥

अथ श्वित्रहरलेपमाह सैन्धवमित्यादि—सैन्धवलवण प्रत्यह रविदुग्धेन शिलायां सम्पेष्य मण्डलञ्च विघर्ष्य लेपं कुर्यात्, तेन श्वित्रकुष्ठं विनश्यति ॥ ११७ ॥

मुखश्वित्रहरो लेप —

मुखे श्वेते च सञ्जाते कुर्य्याच्चेमां प्रतिक्रियाम ।
गन्धकं चित्रकाशीश हरितालं फलत्रयम् ।
मुखे लिम्पेद्दिनैकेन वर्णनाशो भविष्यति ॥ ११८ ॥

अथ मुखश्वित्रहरलेपमाह मुखे-इत्यादि—मुखे श्वेते जाते वक्ष्यमाणां प्रतिक्रिया कुर्यात्। यथा-शुद्धगन्धक चित्रकचूर्ण, पुष्पकाशीश, शुद्धहरितालं, फलत्रयं-त्रिफला चूर्णं, प्रत्येक समभागेनादाय जले पिष्ट्वा तेन प्रत्यह मुख लेपयेत्। इत्थ प्रत्यहमस्य लेपस्य प्रयोगकरणेन मुखस्य विवर्णं नश्यति ॥ ११८ ॥

श्वित्रनाशनलेपद्वयम्—

गुञ्जाफलाग्निचूर्णस्य लेपन श्वेतकुष्ठजित् ।
शिलाऽपामार्गभस्मापि लिप्त्वा श्वित्रं विनाशयेत् ॥ ११९ ॥

अथ श्वित्रनाशनलेपद्वयमाह गुञ्जेत्यादि—गुञ्जाफलचूर्णम्, अग्निश्चित्रकचूर्णञ्च प्रत्येकं समं सममादाय जलेन पिष्ट्वा तेन कृतं लेपनं श्वेतकुष्ठं नाशयति। इत्येको योग। शुद्धमन शिला, अपामार्गपञ्चाङ्गभस्म च (क्षारम्वा) प्रत्येक सम सममादाय जलेन सह पिष्ट्वा प्रत्यहं लेपितं श्वित्रं विनाशयति। इति द्वितीयो योग ॥११९॥

रसमाणिक्यम्—

तालकं वशपत्राख्यं कूष्माण्डसलिले क्षिपेत् ।
सप्तधा वा त्रिधा वाऽपि दध्नाऽम्लेन तथैव च ॥ १२० ॥
शोधयित्वा पुनः शुष्कं चूर्णयेत् तण्डुलाकृति ।
ततः शरावके पात्रे स्थापयेत् कुशलो भिषक् ॥ १२१ ॥
बदरीपत्रकल्केन सन्धिलेपञ्च कारयेत ।

अरुणाभं ह्यधः पात्रं तावज्ज्वाला प्रदीयते ॥ १२२ ॥
स्वाङ्गशीतं समुद्धृत्य माणिक्याभं हरेद्रसम् ।
तद्रक्तिद्वितयं खादेत् घृतभ्रामरमर्दितम् ॥ १२३ ॥
संपूज्य देवदेवेशं कुष्ठरोगाद्विमुच्यते ।
स्फुटितं गलितं कुष्ठं वातरक्तं भगन्दरम् ॥ १२४ ॥
नाडीव्रणं व्रणं दुष्टमुपदंशं विचर्चिकाम् ।
नासाऽऽस्यसम्भवान् रोगान् क्षतान् हन्ति सुदारुणान् ।
पुण्डरीकं चर्मदलं विस्फोटं मण्डलं तथा ॥ १२५ ॥

( इति कुष्टरोग–चिकित्सा )

अथ रसमाणिक्यनिर्माणमाह तालकमित्यादि—वशपत्राख्य हरितालं वस्त्रे बद्ध्वा दोलायन्त्रविधिना हण्डिकाया कुष्माण्डस्वरसेन, दधिजलेन, अम्लेन–काञ्जिकेन च प्रत्येकं त्रिधा सप्तधा वा द्वियाम सस्वेद्य शोषयेत्। तत खल्वे तण्डुलवत्कणश कृत्वा शरावद्वये निक्षिप्य बदरीपत्रनिर्मितकल्केन च शरावयो सन्धिबन्धन कृत्वा वह्नौ तावत् पचेद्यावदध पात्र वह्नितापेनारुणाभ–रक्तवर्णं भवेत्। तत स्वाङ्गशीतमुद्धृत्य माणिक्यसदृशं हरितालरसं निष्कास्य काचपात्रे स्थापयेत्। अस्य रसस्य प्रत्यह रक्तित प्रारभ्य यथाग्निबल द्विरक्तिमितं भाग घृतेन, भ्रामरेण–मधुना च सह खल्वे विलोड्य देवदेवेश परमात्मान सम्पूज्य भक्षयेत्। इत्थ विधिपूर्वकं सेवितोऽयं रस स्फुटितं गलितञ्च कुष्ठ, वातरक्त, भगन्दर, नाडीव्रण, दुष्टं व्रणम्, उपदंशं, विचर्चिकां, नासामुखसम्भवरोगान्, सुदारुणान् क्षतान्, पुण्डरीककुष्ठ, चर्मदल, मण्डलं, विस्फोटञ्च निहन्ति। अत्रेदं परमावश्यकं यथा–पूर्वं शरावे श्वेताभ्रपत्रमास्तीर्य तदुपरि यथाविधिशोधितं तण्डुलवत्कणश कृतं हरिताल निक्षिप्योपरि अन्येनाभ्रकपत्रेणाच्छादनं कृत्वा ततो द्वितीयशरावमध मुखं कृत्वा हरितालान्तर्गतशरावोपरि निधायो भयोर्बदरीपत्रकल्केन सन्धिबन्धन कृत्वा शेषकर्म समाचरेत्। द्विविध हरितालं पत्र-पिण्डभेदात्, तयोराद्यं श्रेष्ठम्, उक्तञ्च "तयोराद्यं गुणै श्रेष्ठं ततो हीनगुणं परम्। स्वर्णवर्णं गुरुस्निग्धं सपत्रं चाभ्रपत्रवत्। पत्राख्य तालकं विद्यात् गुणाढ्यं तद्रसायनम्" ॥ १२०–१२५ ॥

अथ कुष्ठे पथ्यापथ्यविवेकः —

पुराणधान्यानि च जाङ्गलानि मांसानि मुद्गाश्च पटोलयुक्ताः ।
यवाढ्यश्चात्र हिता पुराणा घृतानि शाकानि च तिक्तकानि ॥ १ ॥

पुराणा शालिगोधूमयवमुद्गास्तथा कुष्ठिने हिताः । तिक्तशाकं जाङ्गलञ्च पानादौ खदिरोदकम् ॥ २ ॥
अन्नपानं हितं कुष्ठे न त्वम्ललवणोषणम् । दधिदुग्धगुडानूपतिलमाषांस्त्यजेत्तराम् ॥ ३ ॥

इति पथ्यापथ्यविवेकः ।

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृतायां
गूढार्थसन्दीपिकाव्याख्यायां कुष्ठरोगचिकित्सा ।

---

## अथ शीतपित्तोदर्द-कोठरोग-चिकित्सा ।

अथ योगाः —

यमानीगुडसंमिश्रं सूतभस्मद्विवल्लकम् ।
शीतपित्तं निहन्त्याशु कटुतैलविलेपनम् ॥ १ ॥
सिद्धार्थरजनीकल्कैः प्रपुन्नाडतिलैः सह ।
कटुतैलेन संमिश्रमेतदुद्वर्त्तनं हितम् ॥ २ ॥
दूर्वानिशायुतो लेपः कण्डूपामाविनाशनः ।
क्रिमिदद्रुहरश्चैव शीतपित्तहरः परः ॥ ३ ॥
कुष्ठोक्ताञ्च क्रियां कुर्य्यात् सर्वां युक्त्या चिकित्सकः ।
शीतपित्ते तथोदर्दे कोठे चैव समासतः ॥ ४ ॥

( इति शीतपित्तोदर्द-कोठरोग-चिकित्सा ) ।

कुष्ठसाधर्म्यात् रक्तादिगतविकारसाधर्म्याच्च कुष्ठरोगचिकित्सानन्तरं शीतपित्तादिकानां चिकित्सा लिख्यते । तत्र अथ योगानाह यमानीत्यादि—यमानीचूर्णं शाणमितं, पुराणगुडं तोलकमितं ताभ्यां सहितं सूतभस्म—रससिन्दूरं द्विवल्लमितं समादाय खल्वे रससिन्दूरं सम्पेष्य तदन्ते यमानीगुडौ सम्मेल्य प्रत्यहं भक्षयेत् । तथा प्रत्यहमङ्गं कटुतैलेन विमर्दयेत् । इत्थं प्रत्यहं सेवितोऽयं योगः शीतपित्तं शाम्यतीति कति-

पथ्यैरहोभिर्नाशयति, इत्येको योग. । सिद्धार्थ सर्षपबीजानि, रजनी–हरिद्राचूर्णं, प्रपुन्नाडश्चक्रमर्द ( पनवाड ), तिलचूर्णञ्च एतेषा दृषदि कल्क विधाय कटुतैलेन सह सम्मिश्र्य प्रत्यहमुद्वर्त्तन कुर्यात्, अयं योग शीतपित्त निहन्ति । इति द्वितीयोयोग । दूर्वा, निशा–हरिद्रा, एतद्द्वय दृषदि सम्पेष्य प्रत्यह शरीरं तेन मर्दयेत् । अय योग प्रत्यहमाचरित कण्डू, पामा, क्रिमिं, दद्रुकुष्ठ , शीतपित्तञ्च नाशयति ॥ इति तृतीययोग ॥ चिकित्सक कुष्ठोक्ता सर्वां रसादिक्रिया युक्तिपूर्वकं शीतपित्ते, उदर्दे, कोठरोगे च कुर्यात् ॥ १–४ ॥

अथोदर्दे क्रियानिर्देशो यथा—

"अभ्यङ्ग कटुतैलेन सेकश्चोष्णाम्बुभिस्तथा । उदर्दे वमन कार्यं पटोलारिष्टवारिणा ।
त्रिफलापुरकृष्णाभिर्विरेकश्चात्र शस्यते ॥ १ ॥

अथ दीप्यकादिचूर्णम्—

सगुड दीप्यक यस्तु खादेत् पथ्याशभुङ्नर । तस्य नश्यति सप्ताहादुदर्द सर्वदेहज ॥२॥

अथ शीतपित्तादिषु पथ्यापथ्यव्यवस्थाविवेक —

शालिमुद्गकुलत्थाश्च कारवेल्लमुपोदिकाम् । वेत्राग्रं तप्तनीरञ्च श्लेष्मपित्तहराणि च ॥१॥
कटुतिक्तकषायाणि सर्वाणीति गण सखा । शीतपित्तोदर्दकोठ–रोगिणा स्याद्यथामलम् ॥२॥

इति पथ्यानि ।

अथापथ्यानि—

क्षीरेक्षुजाता विविधा विकारा मत्स्योदकानूपभवामिषाणि ।
नवीनमद्य वमिवेगरोध प्राग्दक्षिणाशापवनोऽह्नि निद्रा ॥ १ ॥
स्नानं विरुद्धाशनमातपञ्च स्निग्धं तथाम्लं मधुरं व्यवाय. ।
गुर्वन्नपानानि च शितपित्तकोठामयोदर्दवता विषाणि ॥ २ ॥

इत्यपथ्यानि ।

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृतायां
गूढार्थसन्दीपिकाव्याख्याया शीतपित्तोदर्दकोठचिकित्सा ।

---

## अथाम्लपित्तरोग-चिकित्सा ।

अम्लपित्तान्तको रस —

मृतसूताभ्रलौहानां तुल्या पथ्यां विमर्दयेत् ।
माषमात्रं लिहेत् क्षौद्रैरम्लपित्तप्रशान्तये ॥ १ ॥

शीतपित्तादिसाधर्म्यात्तदनन्तरमम्लपित्तचिकित्सा प्रारभ्यते। तत्र पूर्वं—अम्लपित्तान्तकरसनिर्माणमाह मृतेत्यादि–मृतसूत–रससिन्दूरम्, अभ्रकभस्म, लौहभस्म च एतेषां प्रत्येकं तोलकैकमितं तथा सर्वतुल्यां पथ्यामिति तोलकत्रयं हरीतकीचूर्णं समादाय सर्वं खल्वे निक्षिप्य सम्यक् पिष्ट्वा च काचपात्रे स्थापयेत्। अस्य रसस्य प्रत्यहं द्विरक्तिं प्रारभ्य माषकैकमितं भागं यथाग्निबलं क्षौद्रैरिति मधुना सह सेवितमम्लपित्तं निहन्ति ॥ १ ॥

लीलाविलासो रस —

रसो बलिर्व्योम रविश्च लौहं धात्र्यक्षनीरैस्त्रिदिनं विमर्द्य ।
तदल्पघृष्टं मृदुमार्कवेण संमर्दयेदस्य च वल्लयुग्मम् ॥ २ ॥
हन्त्यम्लपित्तं मधुनाऽवलीढं लीलाविलासो रसराज एषः ।
छर्दिं सशूलं हृदयस्य दाहं निवारयेदेष न संशयोऽस्ति ॥ ३ ॥

अथ लीलाविलासरसनिर्माणमाह रस इत्यादि—रस –शुद्धपारदं, बलि –शुद्धगन्धकं, व्योम–अभ्रकभस्म, रवि स्ताम्रभस्म, लौहं–लोहभस्म, एतेषां प्रत्येकं समं सममादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मिश्र्य धात्र्यक्षनीरैरिति—आमलकस्वरसेन, विभीतकक्काथेन च त्रिदिनं दृढं विमर्द्य मृदुमार्कवेण–भृङ्गराजस्वरसेन वारमेकं भावयित्वा सम्पेष्य च काचपात्रे स्थापयेत्। एषो लीलाविलासरसः प्रत्यहं द्विरक्तिं प्रारभ्य द्विवल्लपर्यन्तं यथाग्निबलं मधुना सह सेवितो निश्चयेन अम्लपित्तं, छर्दिं, सशूलं हृदयदाहञ्च निवारयेत् ॥ २–३ ॥

पानीयभक्तवटिका—

त्रिवृता मुस्तकञ्चैव त्रिफला त्र्यूषणं तथा ।
प्रत्येकन्तु पलं भागं तदर्द्धौ रसगन्धकौ ॥ ४ ॥
लौहाभ्रकविडङ्गानां प्रत्येकञ्च पलद्वयम् ।
एतत् सकलमादाय चूर्णयित्वा विचक्षणः ॥ ५ ॥

त्रिफलायाः कषायेण वटिकां कारयेत् भिषक् ।
एकैकां भक्षयेत् प्रातस्तक्रञ्चापि पिबेदनु ॥ ६ ॥
हन्ति शूलं पार्श्वशूलं कुक्षिबस्तिगुदे रुजम् ।
श्वास कासं तथा कुष्ठ ग्रहणीदोषनाशिनी ॥ ७ ॥

अथ पानीयभक्तवटिकानिर्माणमाह त्रि वृतेत्यादि—त्रिवृन्मूलचूर्णं, शुद्धमुस्तकचूर्णं, त्रिफलाचूर्णं,त्र्यूषण—त्रिकटुचूर्णञ्च, एतेषा प्रत्येक पलमित तथा शुद्धपारद , शुद्धगन्धकञ्च पृथक् २ अर्द्धपलमित , लौहभस्म द्विपलमितम् , अभ्रकभस्म द्विपलमित, विडङ्गचूर्णं द्विपलमितम् ,समादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मिश्र्य त्रिफलाक्काथेन सप्तवार भावयित्वा दृढ सम्मर्द्य च शाणमिता वटीश्चरेत् । प्रत्यहमेकैका वटी तक्रानुपानेन भक्षयेत् । इयं वटी प्रत्यह सेविता पार्श्वशूल, कुक्षिशूलं, वस्तिशूलं, गुदशूल, श्वास, कास, कुष्ट, ग्रहणीविकारञ्च निहन्ति ॥ ४–७ ॥

अथ क्षुधावती गुडिका

तत्र अभ्रशुद्धि —

आशुभक्तोदकैः पिष्टमभ्रकं तत्र संस्थितम् ।
कन्दमाणास्थिसंहार-खण्डकर्णरसैरथ ॥ ८ ॥
तण्डुलीयकशालिञ्च-कालमारिषजेन च ।
वृश्चीरबृहतीभृङ्ग-लक्ष्मणाकेशराजकैः ॥ ९ ॥
पेषण भावनं कुर्य्यात् पुटश्चानेकशो भिषक् ।
यावन्निश्चन्द्रकं तत् स्याच्छुद्धिरेवं विहायस. ॥ १० ॥

अथ क्षुधावतीगुडिकानिर्माणं तत्र पूर्वमभ्रकसंशोधनविधिमाह—आशुभक्तेत्यादि—कृष्णाभ्रकं खल्वे सञ्चूर्ण्य आशुभक्तोदके—नवीनधान्यनिर्मितकाञ्जिके सम्यगाप्लाव्य दृढं सम्पेष्य रात्रिपर्यन्त स्थापयेत् । ततश्च शूरणकन्दरसेन, माणकन्दस्वरसेन, अस्थिसहार "हडजोड" इति प्रसिद्धस्तस्य स्वरसेन, खण्डकर्णस्वरसेन, सकण्टकतण्डुलीयकस्वरसेन, शालिञ्चशाकरसेन, कालमारिष —बृहत्पत्रतण्डुलीयकस्तस्य स्वरसेन, वृश्चीर.—पुनर्नवा तस्या स्वरसेन, बृहती—कण्टकारिका तस्या' क्काथेन, भृङ्गराजस्वरसेन च लक्ष्मणाक्काथेन, केशराजस्वरसेन च पृथक् २ यथालाभं भावयित्वा पुटेत् । इत्थमेतेषा व्यस्तानां समस्ताना वा रसेन वारम्वारं भावयित्वा ताव-

इति प्रसिद्ध , श्वेतवाट्याल–श्वेतवला, मधुपर्णी–गुडूची, मयूरकम्–अपामार्ग , तण्डुलीय–सकण्टकं वन्यतण्डुलीयकं, वर्षाभ्व–पुनर्नवा, एतेषा पञ्चाङ्गानि हण्डिकाया अर्द्धभागे समास्तीर्य तदुपरि पुराण मण्डूर दत्वा पुनर्वंशिरादीना पञ्चाङ्गैराच्छाद्य गोमूत्रेण च हण्डिका प्रपूर्य शरावेणाच्छाद्य सन्धिबन्धन कृत्वा चूल्या दिनत्रयं निरन्तर मन्दमध्यमतीव्राग्निप्रयोगेण अन्तर्वाष्प पचेत् । इत्थ दिनत्रयं पाचित मण्डूरं श्लक्ष्णं खल्वे सम्पेष्य क्षुधावतोगुडिकानिर्माणविधौ प्रयोजयेत ॥ १४–१५ ॥

तत्र रसशुद्धि —

जयन्त्या वर्द्धमानस्य आर्द्रकस्य रसेन तु ।
वायस्याश्चानुपूर्व्यैवं मर्दनं रसशोधनम् ॥ १६ ॥

अथात्र रसस्य विशेषशुद्धिमाह जयन्त्या इत्यादि—पारद पाषाणखल्वे निक्षिप्य जयन्तीपत्रस्वरसेन, वर्द्धमानस्यैरण्डस्य पत्रस्वरसेन, आर्द्रकस्वरसेन, वायस्या –काकमाच्या स्वरसेन चानुपूर्व्या क्रमश सम्यगाप्लाव्य विमर्दयेत् । एवं शुद्धं रस क्षुधावतीगुडिकाया प्रयोजयेत् ॥ १६ ॥

तत्र गन्धकशुद्धि —

गन्धकं नवनीताख्यं क्षुद्रितं लौहभाजने ।
त्रिधा चण्डातपे शुष्कं भृङ्गराजरसाप्लुतम् ॥ १७ ॥
ततो वह्नौ द्रवीभूतं त्वरितं वस्त्रगालितम् ।
यत्नाद् भृङ्गरसे क्षिप्तं पुनः शुष्कं विशुध्यति ॥ १८ ॥

अथात्र गन्धकस्य विशेषशुद्धिमाह गन्धकमित्यादि—नवनीतसञ्ज्ञक गन्धकं खल्वे कणशो विभज्य भृङ्गराजरसेनाप्लाव्य तीव्रातपे सशोषयेत्। एवं वारत्रयमाप्लाव्य सशुष्कम् कृत्वा कटाहस्थं चूल्या प्रद्राव्य भृङ्गराजरसपरिपूर्णाया घृताक्तसूक्ष्मवस्त्रपिहितास्यहण्डिकाया मुखे त्वरित द्रुत गन्धक निक्षिपेत् । इत्थं वस्त्रेण संसृत्य भृङ्गराजरसनिमग्नं शुद्ध गन्धकं कोष्णोदकेन प्रक्षाल्य संशोष्य च गृह्णीयात् ॥ १७–१८ ॥

अथ क्षुधावतीप्रस्तुतीकरणम्—

गगनाद् द्विपलं चूर्णं लौहस्य पलमात्रकम् ।

लोहकिट्टपलार्द्धञ्च सर्वमेकत्र संस्थितम् ॥ १९ ॥
मण्डूकपर्णीवशिर-तालमूलीरसैः पुनः ।
वरीभृङ्गकेशराज कालमारिषजैरथ ॥ २० ॥
त्रिफलाभद्रमुस्ताभिः स्थालीपाकाद्विचूर्णितम् ।
रसगन्धकयोः कर्षं प्रत्येकं ग्राह्यमेकत ।
तन्मसृणे शिलाखल्ले यत्नत कज्जलीकृतम् ॥ २१ ॥
वचा चव्यं यमानी च जीरके शतपुष्पिका ।
व्योष मुस्तं विडङ्गञ्च ग्रन्थिकं खरमञ्जरी ॥ २२ ॥
त्रिवृता चित्रको दन्ती सूर्य्यावर्त्तः सितस्तथा ।
भृङ्गमाणककन्दाश्च खण्डकर्णक एव च ॥ २३ ॥
दण्डोत्पला केशराज-काला कर्कटकोऽपि च ।
एषामर्द्धपल ग्राह्य पटघृष्टं सचूर्णितम् ॥ २४ ॥
प्रत्येकं त्रिफलायाश्च पलार्द्धं पलमेव च ।
एतत्सर्वं समालोड्य लौहपात्रे तु भावयेत् ॥ २५ ॥
आतपे दण्डसङ्घृष्टमार्द्रकस्य रसैस्त्रिधा ।
तद्रसेन शिलापिष्ट गुडिकां कारयेद्भिषक् ॥ २६ ॥
बदरास्थिनिभा शुष्कां सुगुप्ताञ्च निधापयेत् ।
तत् प्रातर्भोजनादौ तु सेवितं गुडिकात्रयम् ॥ २७ ॥
अम्लोदकानुपानञ्च हितं मधुरवर्जितम् ।
दुग्धञ्च नारिकेलञ्च वर्जनीयं विशेषतः ॥ २८ ॥
भोज्यं यथेष्टमिष्टञ्च वारिभक्ताम्लकाञ्जिकम् ।
हन्त्यम्लपित्तं विविध शूलञ्च परिणामजम् ॥ २९ ॥
पाण्डुरोगञ्च गुल्मञ्च शोथोदरगुदामयान् ।
यक्ष्माणं पञ्च कासांश्च मन्दाग्नित्वमरोचकम् ॥ ३० ॥
प्लीहानं श्वासमानाहमामवातं सुदारुणम् ।
गुडी क्षुधावती सेयं विख्याता रोगनाशिनी ॥ ३१ ॥

अथ क्षुधावतीप्रस्तुतीकरणमाह गगनादित्यादि—उपर्युक्तविधिसशोधिताद् भस्मीभूताच्च गगनादभ्रकभस्मनो द्विपल तथा पूर्वोक्तरीतिनिर्मितस्य लौहभस्मन

(१पलं), शुद्धमण्डूरभस्म चार्द्धपलं समादाय सर्वमेकत्र खल्वे श्लक्ष्णं पिष्ट्वा लौहकटाहे निक्षिप्य मण्डूकपर्णीवशिरतालमूलीस्वरसै कटाह प्रपूर्य एकं स्थालीपाकं कुर्यात्। मण्डूकपर्णी–ब्राह्मी, वशिर –सूर्य्यावर्त्त पुष्पविशेष, तालमूली–मूसली, ततश्च वरी–शतावरी, भृङ्गराज, केशराज, कालमारिषो बृहत्पत्रो वन्यतण्डुलीयक, एषा स्वरसैर्द्वितीयं स्थालीपाकं कुर्यात् । ततश्च त्रिफलाभद्रमुस्तकक्काथै स्तृतीय स्थालीपाकं कुर्यात् ।

स्थालीपाकलक्षणं यथा—

स्थाल्या क्काथादिकं दत्वा यथा विधिविनिर्मितम् ।
पाकेन क्षीयते यस्मात् स्थालीपाक इति स्मृत ॥ इति ॥

इत्थं स्थालीपाकसंसिद्ध द्रव्य खल्वे श्लक्ष्ण विचूर्णयेत्। ततश्च शुभे मसृणे स्निग्धे पाषाणनिर्मिते खल्लान्तरे पूर्वोक्तविधिसंशुद्धं पारद कर्षमित, तथा गन्धकञ्च कर्षमित निक्षिप्य श्लक्ष्णा कज्जलीं कृत्वा वचाचूर्ण, चव्यचूर्ण, यमानीचूर्ण, श्वेतजीरकचूर्ण, कृष्णजीरकचूर्ण, शतपुष्पिकाचूर्ण "सौंफचूर्णमित्यर्थ" व्योष–शुण्ठीचूर्ण, मरिचचूर्ण, पिप्पलीचूर्ण, शुद्धमुस्तकचूर्ण, विडङ्गचूर्ण, ग्रन्थिकं–पिप्पलीमूलचूर्ण, खरमञ्जरी–अपामार्गचूर्ण, त्रिवृन्मूलचूर्ण, चित्रकचूर्ण, दन्तीमूलचूर्ण, श्वेतसूर्यावर्त्त "हुलहुल" इति प्रसिद्धस्तस्य चूर्ण, भृङ्गराजचूर्ण, माणकन्दचूर्ण, शूरणचूर्ण, खण्डकर्णचूर्ण, दण्डोत्पला–पीतपुष्पक्षुपविशेषस्तस्य मूलचूर्णमथवा सनालं कमलपुष्पचूर्ण, केशराजचूर्ण, काला "कालाकाकड़ा" तन्मूलचूर्ण, कर्कटक –कर्कटशृङ्गीचूर्णम्, एतेषा प्रत्येक पटघृष्ट–वस्त्रसारितं चूर्ण पृथक् २ अर्द्धपलमित तथा त्रिफलायाश्च पृथक् २ वस्त्रपूतमर्द्धपलचूर्ण तेन मिलित्वा त्रिफलाचूर्ण पलार्द्ध पलमिति सार्द्धकपल ग्राह्यम् । एव पूर्वोक्त स्थालीपाकसिद्धं द्रव्यं, कज्जली, सर्वचूर्णञ्च बृहल्लौहखल्वे निक्षिप्य श्लक्ष्ण सम्पेष्य च आर्द्रकस्वरसेन सम्यगाप्लाव्य दृढं विमर्द्य च निदाघे सशोषयेत्। एवं वारत्रय कृत्वा तदनु पाषाणखल्वेऽपि आद्रकस्वरसैस्त्रिधा भावयित्वा बदरास्थिप्रमाणा गुडिका कृत्वा सशोष्य च काचपात्रे स्थापयेत् । प्रत्यहं भोजनादौ प्रभातसमये गुडिकात्रय काञ्जिकाद्यम्लोदकानुपाने सेवित विविधमम्ल पित्तं, शूलं, विशेषत परिणामशूलं, पाण्डुरोगं, गुल्मं, शोथम्, उदररोगं, गुदरोगान्, यक्ष्माण, पञ्चविधकासान्, वह्निमान्द्यम्, अरुचिं, प्लीहवृद्धिं, श्वासम्, आनाहं, दारुणमामवातञ्च विनिहन्ति । अस्या सेवनसमये नारिकेलजलं क्षीरादिकं तथा

मलावरोधं, मूत्रावरोधम्, अग्निमान्द्यजन्यरोगान्, विंशतिप्रमेहान्, मूत्राघातान्, अश्मरीञ्च विनाशयति । इदमविपत्तिकरं चूर्णमगस्त्यमुनिना प्रोक्तम् ॥ ३२-३८ ॥

अथाम्लपित्तरोगे पथ्यापथ्यविवेक —

तिक्तभूयिष्ठमाहार पानञ्चापि प्रकल्पयेत् । यवगोधूमविकृती स्तीक्ष्णसंस्कारवर्जिता ॥१॥
यथास्वं लाजसक्तून्वा सितामधुयुतान् पिबेत् । ऊर्ध्वगे वमनं पूर्वमधोगे तु विरेचनम् ॥२॥
सर्वत्र शस्यते पश्चान्निरुहश्चापि शालय । यवगोधूममुद्गाश्च पुराणा जाङ्गला रसा ॥३॥
जलानि तप्तशीतानि शर्करा मधुशक्तव । कर्कोटकं कारवेल्लं पटोल हिलमोचिका ॥४॥
वेत्राग्रं वृद्धकूष्माण्डं रम्भापुष्पञ्च वास्तुकम् । कपित्थं दाडिमं धात्री तिक्तानि सकलानि च ॥५॥
पानान्नानि समस्तानि कफपित्तहराणि च । अम्लपित्तामये नित्यं सेवितव्यानि मानवैः ॥६॥

इति पथ्यानि ।

अथापथ्यानि —

नवान्नानि विरुद्धानि पित्तकोपकराणि च । वमिवेगं तिलान् माषं कुलत्थांस्तैलभक्षणम् ॥१॥
अविदुग्धञ्च धान्याम्लं लवणाम्लकटूनि च । गुर्वन्नं दधि मद्यञ्च वर्जयेदम्लपित्तवान् ॥२॥

इत्यपथ्यानि ।

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृताया गूढार्थसन्दीपिकाव्याख्यायामम्लपित्तरोगचिकित्सा ।

---

## अथ विसर्प-विस्फोट-तन्तुकरोग-चिकित्सा ।

कालाग्निरुद्रो रस —

सूताभ्रकान्तलौहानां भस्म गन्धकमाक्षिकम् ।
वन्यकर्कोटकद्रावैस्तुल्यं मर्द्यं दिनावधि ॥ १ ॥
वन्यकर्कोटिकाकन्दे क्षिप्त्वा लिप्त्वा मृदा बहिः ।
भूधराख्ये पुटे पश्चाद्दिनैकं तद्विपाचयेत् ॥ २ ॥
दशमांशं विषं योज्यं माषमात्रन्तु भक्षयेत् ।
रसः कालाग्निरुद्रोऽयं दशाहेन विसर्पनुत् ।
पिप्पलीमधुसंयुक्तमनुपानं प्रकल्पयेत् ॥ ३ ॥

अम्लपित्तजन्यच्छर्दिवेगविचारानन्तरं सत्या विसर्पोत्पत्ते हेतुसाम्यात्तदनन्तरं विसर्पादिकरोगचिकित्सा आरभ्यते तत्र पूर्वं कालाग्निरुद्ररसनिर्माणमाह सूतेत्यादि- सूतं-शुद्धपारदम्, अभ्रकभस्म, कान्तलोहभस्म, शुद्धगन्धकं, स्वर्णमाक्षिकभस्म, एतेषां प्रत्येकं समं समसमादाय पूर्वं पारदगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि सम्मिश्र्य वन्यकर्कोटककाथेन ( वाझककोडारस ) सम्यगाप्लाव्य दिनैकं दृढं विमर्द्य वन्यकर्कोटिकाकन्दे गर्तं कृत्वा तस्मिन्निक्षिप्य मुखं रुद्ध्वा स्निग्धमृद्पङ्केन चालिप्य दिनैकं भूधरयन्त्रे पचेत्। स्वाङ्गशीतश्चोद्धृत्य मिलितद्रव्यतो दशमांशं शुद्धं वत्सनाभविषचूर्णं सम्मेल्य श्लक्ष्णं खल्वे पिष्ट्वा च काचपात्रे स्थापयेत्। अयं कालाग्निरुद्रो रसः प्रत्यहं द्विरक्तित आरभ्य मापकैकमितो यथाग्निबलं मापकमितेन पिप्पलीचूर्णेन मधुना च सह सेवितो दशदिवसैं विसर्पं विनिहन्ति ॥ १-३ ॥

प्रक्रियान्तरम्—

**पित्तनाशकभैषज्यं योगवाहिरसं सुधीः ।**
**कुष्ठोद्दिष्टक्रियां सर्वामपि कुर्याद्भिषग्वरः ॥ ४ ॥**

अथ विसर्पे प्रक्रियान्तरमाह पित्तेत्यादि—विसर्परोगे पित्तनाशकं भैषज्यं; तथाऽन्ययोगवाहिरसं, कुष्ठोद्दिष्टां चिकित्सां च यथादोषानुपानभेदैः कुर्यात् ॥ ४ ॥

अथान्यदुपायमाह यथा—

विरेकवमनालेपसेचनासृग्विमोक्षणैः । उपाचरेद्यथादोषं विसर्पमविदाहिभिः ॥
लङ्घनोल्लेखने शस्ते तिक्तकानां च सेवनम् । कफस्थानगते सामे रूक्षशीतैः प्रलेपयेत्॥
पित्तस्थानगतेऽप्येतत् सामे कुर्याच्चिकित्सितम् । शोणितस्यावसेकश्च विरेकश्च विशेषतः ॥

अथ वातविसर्पहरो लेपः—

रास्ना नीलोत्पलं दारु चन्दनं मधुकं बला । घृतक्षीरयुतो लेपो वातवीसर्पनाशनः ॥

अथ पित्तविसर्पहरो लेपः—

पौण्डरीकमञ्जिष्ठापद्मकोशीरचन्दनैः । सयष्ट्येन्दीवरैः पित्ते क्षीरपिष्टैः प्रलेपयेत् ॥
कशेरुशृङ्गाटकपद्मगुन्द्राः सशैवलाः सोत्पलकर्दमाश्च ।
वस्त्रान्तराः पित्तकृते विसर्पे लेपा विधेयाः सघृताः सुशीताः ॥

अथ श्लेष्मविसर्पहरो लेपः—

त्रिफलापद्मकोशीरसमङ्गाकरवीरकम् । नलमूलमनन्ता च लेपः श्लेष्मविसर्पहा ।

आरग्वधस्य पत्राणि त्वच श्लेष्मविसर्पहा ।शिरीषपुष्पकामाची हिता लेपावचूर्णनै ॥

अथ सर्वविधविसर्पहरो दशाङ्गलेप —

शिरीषयष्टीनतचन्दनैलामासीहरिद्राद्वयकुष्ठवालै ।
लेपो दशाङ्ग सघृत प्रयोज्यो विसर्पकुष्ठज्वरशोथहारी ॥

अथ विसर्पादिहरो कषाय —

भूनिम्बवासाकटुकापटोलीफलत्रयैश्चन्दननिम्बकैश्च ।
विसर्पदाहज्वरशोथकण्डूविस्फोटतृष्णावमिनुत् कषाय ॥

अथ विसर्पादिहरोऽमृतादिकषाय —

अमृतवृषपटोल मुस्तक सप्तपर्णं खदिरमसितवेत्रं निम्बपत्र हरिद्रे ।
विविधविषविसर्पान् कुष्टविस्फोटकण्डूरपनयति मसूरीं शीतपत्त ज्वरश्च ॥

अथविसर्परोगे पथ्यापथ्यविवेक —

मुद्गा मसूराश्चणका स्तुवर्यो जाङ्गलारसा । नवनीतं घृत द्राक्षा दाडिमं कारवेल्लकम् ॥ १ ॥
वेत्राग्रं कुलक धात्री खदिरो नागकेशरम् । लाक्षा गिरीष कर्पूर चन्दन तिललेपनम ॥ २ ॥
रक्तशुद्धिकरं तिक्तपानान्नमविदाहि च । अनुद्वेगकर यत्स्यात्तच्च सेव्य विसर्पिभि ॥ ३ ॥

इति पथ्यानि ।

अथापथ्यानि—

व्यायाममन्हिशयन सुरतं प्रवात क्रोध शुच वमनवेगमसूयनञ्च ।
शाकं विरुद्धमशन दधिकूर्च्चिकाञ्च सौवीरमासुतमनेकविध किलाटम् ॥ १ ॥
गुर्वन्नपानमखिल लशुन कुलत्थान्माषास्तिलान् सकलमासमजाङ्गलञ्च ।
स्वेदं विदाहिलवणाम्लकटूनि मद्य नार्कप्रभामपि विसर्पगदी भजेत ॥ २ ॥

अथ दधिकूर्चिकास्वरूपम्—

दध्ना सह पय पक्व सा भवेद्दधिकूर्चिका ।

अथ किलाटस्वरूपम्—

नष्टदुग्धस्य पक्वस्य पिण्ड प्रोक्त किलाटक ॥ ३ ॥

विस्फोटकारिरस.—

**गुडूचीनिम्बजैः क्वाथैः खदिरेन्द्रयवाम्बुना ।**

कर्पूरत्रिसुगन्धिभ्यां युक्तं सूतं द्विवल्लकम् ।
विस्फोटं त्वरितं हन्याद्वायुर्जलधरानिव ॥ ५ ॥

अथ विस्फोटचिकित्सायां विस्फोटकारिरसनिर्माणमाह गुडूचीत्यादि— द्विवल्लमितं ( प्रायो द्विरक्तिमितं ) सूत-रससिन्दूरं प्रत्यहं स्वल्पे शुभे पाषाणखल्वे सूक्ष्मं पिष्ट्वा कर्पूरबृहदेलानेजपत्रदालसितानां मिलित्वा माषकमितेन चूर्णेन मधुना च सह सलिह्य गुडूचीनिम्बपञ्चाङ्गकृतक्वाथं, खदिरेन्द्रयवकृतक्वाथम्वा पिवेत् । इत्थं प्रत्यहं सेवितोऽयं योगः त्वरितं वायुः मेघानिव विस्फोटं विनिहन्ति ॥ ५ ॥

अथान्यविस्फोटहरयोगाः —

द्राक्षाकाश्मर्यखर्जूरपटोलारिष्टवासकैः । कटुकालाजदुःस्पर्शैः सितायुक्तं तु पैत्तिके॥ १॥
भूनिम्बं सवचा वासा त्रिफलेन्द्रजवत्सकैः ।पिचुमर्दपटोलाभ्यां कफजे मधुयुक् शृतम्॥ २ ॥
किराततिक्तकारिष्टयष्ट्याह्वाम्बुदवासकैः । पटोलपर्पटोशीरत्रिफलाकौटजान्वितैः ॥३॥
क्वथितं द्वादशाङ्गन्तु सर्वविस्फोटनाशनम् ॥
छिन्नापटोलभूनिम्बवासकारिष्टपर्पटैः । खदिराब्दयुतैः क्वाथो हन्ति विस्फोटकज्वरम् ॥४॥
विस्फोटव्याधिनाशाय तण्डुलाम्बुप्रयोजितैः ।बीजैः कुटजवृक्षस्य लेपः कार्यो विजानता॥५॥
चन्दनं नागपुष्पञ्च सारिवा तण्डुलीयकः। शिरीषवल्कलं जाती-लेपः स्याद्दाहनाशनः ॥६॥
उत्पलं चन्दनं लोध्रमुशीरं सारिवाद्वयम् । एतेषां लेपनादाशु स्फोटदाहः प्रशाम्यति ॥७॥

अथ विस्फोटरोगे पथ्यापथ्यविवेकः —

विरेचनं छर्दनलेपलङ्घनं पुरातनाः षष्टिकशालयो यवाः ।
मुद्गा मसूराश्चणका मुकुष्टका वन्यामिषं गव्यघृतं कठिल्लकम् ॥ १ ॥
वेत्राग्रमाषाढफलं पटोलकं ज्योतिष्मती निम्बदलानि चन्दनम् ।
तैलं सिताभ्रं तिललेपनं घनं चालञ्च विस्फोटगदं विनाशयेत् ॥ २ ॥

आषाढफलं-कर्कटी पलाशबीजम्वा, सिताभ्रं-कर्पूरं, घन-मुस्तकम् ॥

इति पथ्यानि ।

अथापथ्यानि—

स्वेदं व्यवायं व्यायामं क्रोधं गुर्वन्नमातपम् । वमिवेगं पत्रशाकं प्रवातं स्वपनं दिवा ॥१॥
ग्राम्योदकानूपमांसं विरुद्धान्यशनानि च।तिलान् माषान् कुलत्थांश्च लवणाम्लकटूनि च॥२॥
विदाहि रूक्षमुष्णञ्च विस्फोटी परिवर्जयेत् ॥ ३ ॥ इत्यपथ्यानि ॥

स्नायुकारियोग —

**गव्यं सर्पिस्त्र्यहं पीत्वा निर्गुण्डीस्वरसं त्र्यहम् ।**
**विविधं स्नायुकञ्चोग्रं हन्त्यवश्यं न संशयः ॥ ६ ॥**

अथ स्नायुरोगे स्नायुकारियोगमाह गव्यमित्यादि—गव्यं घृतं तोलकादारभ्य यथारुचि त्रिदिनं पित्वा ततस्त्रिदिन निर्गुण्डीस्वरसं पिबेत् । अथ योगो विविधमुग्रञ्च स्नायुरोग विनिहन्ति ॥ ६ ॥

अथ स्नायुरोगपरिचय कतिपययोगाश्च—

शाखासु कुपितो दोष शोथं कृत्वा विसर्पवत् ।
भिनत्ति तत्क्षते तत्र सोष्मा स्नायुं विशोष्य च ॥ १ ॥
कुर्यात्तन्तुनिभ जीवं वृत्त श्वेतद्युतिं बहि ।
शनै शनै क्षताद्याति छेदात् कोपमुपैति स ॥ २ ॥
तत्पाताच्छोफशान्ति स्यात् पुन स्थानान्तरे भवेत् ।
स स्नायुकेतिविख्यात क्रियोक्तास्तु विसर्पवत् ॥ ३ ॥

अथ शमनोपाया —

वब्बूलवीज गोमूत्रपिष्ट हन्ति प्रलेपनात् । स्नायुकानि समस्तानि सशोथानि सरुञ्जि च ॥ १ ॥
शिग्रुमूलदलै पिष्टै काञ्जिकेन ससैन्धवै । लेप स्नायुकरोगाणा शमन परम स्मृत ॥ २ ॥
सुधया सह लोणारं जलेनालोड्य लेपयेत् । अनेन तु प्रयोगेण त्रिदिनादेव नश्यति ॥ ३ ॥
रामठं टङ्कणं क्षार प्रत्येक शाणसम्मितम् । चूर्णयित्वा सप्तदिन खादेत् सन्ध्याद्वये नर ॥ ४ ॥
अनेन योगराजेन स्नायुको नश्यति ध्रुवम् ॥ ५ ॥
निम्बशम्याकजात्यर्कसप्तपर्णाश्वमारका । क्रिमिघ्ना मूत्रसयुक्ता सेकलेपनधावनै ॥ ६ ॥

वृन्तार्कं भर्जित भाण्डे कृत्वा दध्ना सहोपरि ।
बन्धयेत् स्नायुको शीघ्र बहि पतति तत्क्षणात् ॥
एव सप्तदिन कार्यम् ॥ ७ ॥

शणवीजचूर्णं भागमेक, गोधूमपिष्टं भागमेकं, द्वयमेकीकृत्य घृतेन पक्तव्यं ततश्च गुडेन भक्षयेत् । एव त्रिदिन कार्यं स्नायुको नश्यति ध्रुवम् ।

तन्तुकारियोग —

**सप्तपर्णशिफाकल्क-पानाद्वा लेपनात् तथा ।**

रुद्राक्षफलचूर्णं च (१तो०) समादाय पूर्वं पाषाणखल्वे रससिन्दूरं श्लक्ष्णं पिष्ट्वा सर्वं चूर्णं सम्मेल्य सूक्ष्मं विमर्द्य च काचपात्रे स्थापयेत् । अथ रस प्रत्यह रक्तिमितो घृतेन मधुना च सह सेवितः पापरोगं (मसूरिकामिति) विनिहन्ति । "छिन्ना" इत्यत्र "चपला" इति पाठान्तरं ज्ञेयम् । छिन्नाग्रहणमेव साधु ॥ १ ॥

अथ मसूरिकाशमनोपायाः —

सर्वासां वमनं पूर्वं पटोलारिष्टवासकैः । कषायैश्च वचावत्सयष्ट्याह्वफलकल्कितैः ॥१॥
सक्षौद्रं, पाययेद् ब्राह्मीरसं वा हिलमोचिकम् । वान्तस्य रेचनं देयं शमनं त्वबले नरे ॥२॥
उभाभ्यां हृतदोषस्य विशुष्यन्ति मसूरिकाः । शोधनं पित्तजायां न कार्यं वैद्येन जानता ॥३॥
तत्रादौ तर्पणं कार्यं लाजचूर्णं सशर्करैः । आदावेव मसूर्यान्तु पित्तजायां प्रयोजयेत् ॥४॥
निम्बादिक्कथितं तेन प्रशाम्यति मसूरिका ॥ ५ ॥
निम्बः पर्पटकः पाठा पटोलं चन्दनद्वयम् । वासा दुरालभा धात्री सेव्यं कटुकरोहिणी ॥६॥
एतेषां क्वथितं शीतं सितया मधुरीकृतम् । मसूरिकां पित्तकृतां हन्ति रक्तोत्तरामपि ॥७॥
खदिरारिष्टपत्रैश्च शिरीषोदुम्बरत्वचाम् । कुर्याल्लेपं कषोतथाया मसूर्यां भिषगुत्तमः ॥८॥
गुडूचीपर्पटानन्ताकटुकाक्वथितं पिबेत् । वातपित्तमसूर्यान्तु घोरोपद्रवभाजि च ॥९॥
धात्रीफलं समधुकं क्वथितं मधुसंयुतम् । मुखे कण्ठे व्रणे जाते गण्डूषार्थं प्रशस्यते ॥१०॥
शृतशीतं प्रयोक्तव्यं मसूरीव्रणधावने । रालहिङ्गुरसोनैश्च धूपयेत्ता मसूरिकाः ॥११॥
कृमयो न पतन्त्यत्र जाताः शाम्यन्ति ते लघु ॥ १२ ॥

अथ मसूरिकाभेद एव शीतला यथोक्तं भावप्रकाशे "देव्या शीतलयाऽऽक्रान्ता मसूर्येव हि शीतला" इति तस्याः शमनोपायं यथा—

शीतलासु क्रिया कार्या शीतला रक्षया सह । बध्नीयान्निम्बपत्राणि परितो भवनान्तरे ॥१॥
कदाचिदपि नो कार्यमस्पृश्यस्य प्रवेशनम् । स्फोटेष्वधिकदाहेषु रक्षा रेणूकरी हित ॥२॥
चन्दनं वासको मुस्तं गुडूची द्राक्षया सह । एषा शीतकषायस्तु शीतलाज्वरनाशन ॥३॥
जपहोमोपहारैश्च दानस्वस्त्ययनार्चनैः । विप्रगोशम्भुगौरीणां पूजनैस्तां शमं नयेत् ॥४॥
स्तोत्रं च शीतलादेव्याः पठेच्छीतलिनोऽन्तिके ।
ब्राह्मणः श्रद्धया युक्तस्तेन शाम्यन्ति शीतलाः ॥ ५ ॥

अथ शीतलास्तोत्रम्—

स्कन्द उवाच ।

भगवन्देवदेवेश शीतलायाः स्तवं शुभम् । वक्तुमर्हस्यशेषेण विस्फोटकभयापहम् ॥

ईश्वर उवाच ।

वन्देऽहं शीतलां देवीं रासभस्थां दिगम्बरीम् । यामासाद्य निवर्तेत विस्फोटकभयं महत् ॥
शीतले शीतले चेति यो ब्रूयाद्दाहपीडितः । विस्फोटकभयं घोरं क्षिप्रं तस्य प्रणश्यति ॥
यस्त्वामुदकमध्ये तु धृत्वा सम्पूजयेन्नरः । विस्फोटकभयं घोरं कुले तस्य न जायते ॥
शीतले ज्वरदग्धस्य पूतिगन्धगतस्य च । प्रणष्टचक्षुषः पुंसस्त्वामाहुर्जीवितौषधम् ॥
नमामि शीतलां देवीं रासभस्थां दिगम्बरीम् । मार्जनीकलसोपेतां सूर्पालङ्कृतमस्तकाम् ॥
शीतले तनुजान् रोगान्नृणां हरसि दुस्तरान् । विस्फोटकविशीर्णानां त्वमेकामृतवर्षिणी ॥
गलगण्डग्रहा रोगा ये चान्ये दारुणा नृणाम् । त्वदनुध्यानमात्रेण शीतले यान्ति ते क्षयम् ॥
न मन्त्रं नौषधं किञ्चित् पापरोगस्य विद्यते । त्वमेका शीतले धात्री नान्यां पश्यामि देवताम् ॥
मृणालतन्तुसदृशीं नाभिहृन्मध्यसंस्थिताम् । यस्त्वां सञ्चिन्तयेद्देवि तस्य मृत्युर्न जायते ॥
अष्टकं शीतलादेव्या यः पठेन् मानवः सदा । विस्फोटकभयं घोरं कुले तस्य न जायते ॥
श्रोतव्यं पठितव्यञ्च नरैर्भक्तिसमन्वितैः । उपसर्गविनाशाय परं स्वस्त्ययनं महत् ॥
शीतलाष्टकमेतद्धि न देयं यस्य कस्यचित् । किन्तु तस्मै प्रदातव्यं भक्तिश्रद्धायुतो हि यः ॥

इति शीतलाष्टकस्तोत्रम् ।

अथ मसूरिकायां पथ्यापथ्यविवेकः —

उच्चैस्तमे प्रशस्ते च मसूरीरोगपीडितः । शुष्के गृहे वसेन्नित्यं गुरूष्णवसनावृतः ॥१॥
शीतं वातं जलं शीतं वह्नितापं तथातपम् । त्यजेत् कान्तां दिवास्वापं यात्रां रात्रौ च जागरम् ॥२॥

किञ्चिदुष्णाम्बुना स्वेदः रोमान्तीज्वरनाशनः ॥ ३ ॥
पूर्वं लङ्घनवान्तिरेचनसिरावेधाः शशाङ्को(१)ज्ज्वलाः ।
जीर्णाः षष्टिकशालयोऽपि चणका मुद्गा मसूरा यवाः ॥ ४ ॥
सर्वेऽपि प्रतुदाः कपोतचटका दा(२)त्यूहकौ(३)ञ्चादयो ।
जीव(४)ञ्जीवशुकादयोऽपि कुलकं काठि(५)ल्लमाषाढ(६)कम् ॥ ५ ॥
इत्थं सर्वदशाविभागविहितं पथ्यं यथादोषतः ।
संयुक्तं मुदमातनोति नितरां नृणां मसूरी-गदे ॥ ६ ॥

---

१ शशाङ्कश्चन्द्रस्तद्वदुज्ज्वलाः शालयः । २ दात्यूहश्चातकः ।
३ क्रौञ्चोऽत्र मयूरः । ४ जीवञ्जीवश्चकोरः ।
५ काठिल्लकं कारवेल्लम् । ६ आढकं-मसूरकम् ।

र्तं खेद श्रमं तैल गुर्वन्न क्रोधमातपम् । दुष्टाम्बु दुष्टपवनं विरुद्धान्यशनानि च ॥७॥
ने(१)ष्पावमालुकं शार्कं लवणं विषमाशनम् । कट्वम्लं वेगरोधञ्च मसूरीगदवास्त्यजेत् ॥८॥

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृतायां
गूढार्थसन्दीपिकाव्याख्याया मसूरीरोगचिकित्सा ।

## क्षुद्ररोग-चिकित्सा ।

**क्षुद्ररोगेषु मतिमांस्तत्तदौषधयोगतः ।**
**भस्तसुतं प्रयुञ्जीत तथाऽत्र योगवाहिकम् ॥ १ ॥**

( इति क्षुद्ररोग-चिकित्सा )

विसर्पादोनामक्षुद्रहेतुलक्षणचिकित्सितानामभिधानेन क्षु-हेतुलक्षणचिकित्सिताना क्षुद्ररोगाणा पारिशेष्याच्चिकित्सा प्रारभ्यते क्षुद्ररोगेष्वित्यादि—प्राय सर्वेषु क्षुद्ररोगेषु भस्मसूत-रससिन्दूर तथान्यद्वा योगवाहिकं रस यथाग्निवलं यथाव्याध्यनुपानपूर्वकञ्च तत्तदौषधचूर्णं स्सह प्रयोजयेत् ॥ १ ॥

अथ समासेन क्षुद्ररोगाणा नामानि लक्षणानि चिकित्सा च ग्रन्थव्याख्याप्रसङ्गेन प्रदर्श्यते ।

समासेन चतुश्चत्वारिंशत् क्षुद्ररोगा भवन्ति । तद्यथा, अजगल्लिका, यवप्रख्या, अन्धालजी, विवृता, कच्छपिका, वल्मीकम्, इन्द्रवृद्धा, पनसिका, पाषाणगर्दभ , जालगर्दभ , कक्षा, विस्फोटक , अग्निरोहिणी, चिप्प, कुनख , अनुशयी, विदारिका, शर्करार्वुद, पामा, विचर्चिका, रकसा, पाददारिका, कदरम्, अलसेन्द्रलुप्तौ, दारुणक , अंरूषिका, पलितं, मसूरिका, योवनपिडका, पद्मिनीकण्टक , जतुमणि , मशक , चर्मकील , तिलकालक , न्यच्छं, व्यङ्ग , परिवर्तिका, अवपाटिका, निरुद्धप्रकश , संनिरुद्धगद , अहिपूतन, वृषणकच्छू, गुदभ्रशश्चेति ।

अथाजगल्लिकाया लक्षण चिकित्सा च—

स्निग्धा सवर्णा ग्रथिता ( ग्रन्थिसन्निभा ) नीरुजा मुद्गसन्निभा ।
कफवातोत्थिता ज्ञेया बालानामजगल्लिका ॥ १ ॥

---

१ निष्पावं कलाय ।

चिकित्सा—

तत्राजगल्लिकामामां जलौकाभिरुपाचरेत्। शुक्तिसौराष्ट्रिकाक्षारकल्कैश्चाऽऽलेपयेन्मुहुः ॥१॥
कठिनां क्षारयोगैश्च द्रावयेदजगल्लिकाम्। नवनीतकण्टकार्याश्च कण्टकैर्वे यमाश्रित
किमाश्रयं विपच्याशु प्रशाम्यन्त्यजगल्लिका ॥ २ ॥
वृषमूलविशालाभ्यां लेपो हन्त्यजगल्लिकाम् ॥ ३ ॥
श्यामालाङ्गलिकामूर्वाकल्कैरपि विलेपयेत्। पक्वां व्रणविधानेन यथोक्तेन प्रसाधयेत् ॥४॥
अथ यवप्रख्याया लक्षणं चिकित्सा च—
यवाकारा सुकठिना ग्रन्थिता मांसमाश्रिता। पिडका श्लेष्मवाताभ्यां यवप्रख्येति प्रोच्यते १॥
चिकित्सा—
पूर्वं पिडकास्थाने स्वेदनं कृत्वा मनःशिलादेवदारुकुष्ठकल्कैः प्रलेपयेत्।
परिपाकगतां भित्त्वा व्रणवत् समुपाचरेत् ॥ १ ॥
अथान्धालज्या लक्षणं चिकित्सा च—
घनामवक्त्रां पिडकामुन्नतां परिमण्डलाम्। अन्धालजीमल्पपूयां तां विद्यात्कफवातजाम्॥१॥
चिकित्सा—
पूर्वं स्वेदकर्म ततोऽवशेषं कर्म यवप्रख्येव कुर्यात्।
विवृताया लक्षणम्—
विवृतास्यां महादाहां पक्वोदुम्बरसन्निभाम्। विवृतामिति तां विद्यात् पित्तोत्थां परिमण्डलाम् १
चिकित्सा—
पूर्वं स्वेदनकर्म कृत्वा पाके सति पूयं निष्कास्य व्रणं काकोलीक्षीरकाकोलीजीवकर्षभकमाषपर्णीमुद्गपर्णीमेदामहामेदाछिन्नरुहाकर्कटशृङ्गीतुगाक्षीरीपद्मकप्रपौण्डरीकर्द्धिवृद्धिमृद्वीकाजीवन्त्यो मधुकञ्चेति मधुरौषधसिद्धघृतेन रोपयेत्।
अथ कच्छप्या लक्षणम्—
ग्रन्थयः पञ्च वा षड् वा दारुणाः कच्छपोन्नताः। कफानिलाभ्यामुद्भूता विद्यात्तां कच्छपीमिति १
चिकित्सा—
मनःशिलादिकल्केन पाकं कृत्वा विभिद्य च व्रणवदुपाचरेत् ॥
अथ वल्मीकस्य लक्षणम्—
पाणिपादतले सन्धौ ग्रीवायामूर्ध्वजत्रुणि। ग्रन्थिर्वल्मीकवद्यस्तु शनैः समुपचीयते॥१॥
तोदक्लेदपरीदाहकण्डूमद्भिर्व्रणैर्वृतः। व्याधिर्वल्मीक इत्येषः कफपित्तानिलोद्भवः ॥२॥

चिकित्सा—

शस्त्रेणोत्कृत्य वल्मीकं क्षाराग्निभ्यां प्रसाधयेत्। मनःशिलालभल्लातसूक्ष्मैलागुरुचन्दनैः ॥१॥
जातीपल्लवकल्कैश्च निम्बतैलं विपाचयेत् । वल्मीकं नाशयेत्तद्धि बहुच्छिद्रं बहुव्रणम्॥२॥

पूर्वं शस्त्रेण वल्मीकमुत्पाट्य क्षाराग्निकर्मणा व्रणरथं पूर्वं प्रसाधयेत् । ततश्च मनःशिलादीनां कल्कैर्निम्बबीजभवं तैलं यथाविधि भावयित्वा व्रणं रोपयेत् । अथ तैलसाधनविधिर्यथा—द्विप्रस्थमितं निम्बबीजतैलं, मनःशिलादीनां दृषदि पिष्टं कल्कं प्रस्थार्द्धमितं, पाकार्थं जलञ्चाष्टप्रस्थमितं सर्वं कटाहे निक्षिप्य यथाविधि पचेत् । अथ विधिः पक्ववल्मीके कर्तव्यो यथोक्तं हि—

पक्वं वा तद्धि विज्ञाय गतीः सर्वा यथाक्रमम्। अभिज्ञाय ततश्छित्वा प्रदहेन्मतिमान् भिषक्॥

इत्यादि ।

अपक्वस्य तु पूर्वं शोधनरक्तमोक्षणलेपैरुपचारः प्रकर्तव्यः ।

यथा प्रोक्तं च—

वल्मीकन्तु भवेद्यस्य नातिवृद्धं न मर्मजम् । तत्र संशोधनं कृत्वा शोणितं मोक्षयेद्भिषक् ॥१॥
कुलत्थिकाया मूलैश्च दन्तीमूलैस्तथैव च । आरेवतस्य मूलैश्च गुडूच्या लवणेन च ॥२॥
श्यामामूलैः सपललैः सक्तुमिश्रैः प्रलेपयेत्। सुस्निग्धैश्च सुखोष्णैश्च भिषक् तमुपनाहयेत्॥३॥

अथेन्द्रवृद्धालक्षणम्—

पद्मपुष्करवन्मध्ये पिडकाभिः समाचिताम्।इन्द्रवृद्धा तु तां विद्याद्वातपित्तोत्थितां भिषक्॥१॥

अथेन्द्रवृद्धायाश्चिकित्सा—

अत्र हि पक्वपिडकानां शोधनं कृत्वा क्षारकाकोल्यादिगणसिद्धसर्पिषा रोपणं कार्यम् ॥

अथ पनसिकालक्षणम्—

कर्णे परिसमन्ताद्वा पृष्ठे वा पिडकोग्ररुक्।शालूकवत् पनसिकां तां विद्याच्छ्लेष्मवातजाम्१

अथ पनसिकायाश्चिकित्सा—

पूर्वं स्वेदनकर्म पश्चान्मनःशिलादिकल्कलेपं, पक्वञ्च व्रणवदुपाचरेत् ॥

अथ पाषाणगर्दभलक्षणम्—

हनुसन्धौ समुद्भूतं शोफमल्परुजं स्थिरम् । पाषाणगर्दभं विद्याद्बलासपवनात्मकम् ॥१॥

चिकित्सा—

सुरदारुशिलाकुष्ठैः स्वेदयित्वा प्रलेपयेत् । कफमारुतशोथघ्नो लेपः पाषाणगर्दभे ॥१॥

अथ जालगर्दभलक्षणमाह—

विसर्पवत् सर्पति यो दाहज्वरकरस्तनु । अपाक श्वयथु पित्तात् स ज्ञेयो जालगर्दभ ॥१॥

चिकित्सा—

नीलीपटोलमूलाभ्या साज्याभ्या लेपन हितम। जालगर्दभरोगे तु सद्यो हन्ति च वेदनाम् १॥

अथेरिवेल्लिकालक्षणम्—

पिटिकामुत्तमाङ्गस्था वृत्तामुग्ररुजाज्वराम् । सर्वात्मिका सर्वलिङ्गा जानीयादिरिवेल्लिकाम् १॥

अस्याश्चिकित्सा जालगर्दभवत् ।

अथ कक्षालक्षणम्—

बाहुपार्श्वांसकक्षासु कृष्णस्फोटा सवेदनाम्। पित्तप्रकोपसम्भूता कक्षामिति विनिर्दिशेत् ॥१॥

एकामेवं विधा दृष्ट्वा पिटिका स्फोटमग्निभाम्। त्वग्गतां पित्तकोपेन गन्धनाम्नीं प्रचक्षते॥२॥

चिकित्सा—

कक्षा च गन्धना ना च चिकित्सेत चिकित्सक ।पैत्तिकस्य विसर्पस्य क्रियया पूर्वमुक्तया॥ १॥

अथ विस्फोटकलक्षणम्—

अग्निदग्धनिभा स्फोटा सज्वरा रक्तपित्तत ।

क्वचित् सर्वत्र वा देहे स्मृता विस्फोटका इति ॥ चिकित्सा तु कक्षोक्ता तथा पूर्वोक्ताश्च कुर्यात् ।

अग्निरोहिणीलक्षणमाह—

कक्षाभागेषु ये स्फोटा जायन्ते मांसदारुणा । अन्तर्दाहज्वरकरा दीप्तपावकसन्निभा ॥१॥

सप्ताहाद्वा दशाहाद्वा पक्षाद्वा घ्नन्ति मानवम्।तामग्निरोहिणीं विद्यादसाध्या सन्निपातजाम् २

चिकित्सा—

पित्तविसर्पविधिना साधयेदग्निरोहिणीम् । रोहिण्या लङ्घनं कुर्याद्रक्तमोक्षणरूक्षणम् ॥

शरीरस्य च संशुद्धिं तान्तु वृद्धा परित्यजेत् ॥ १ ॥

अथ चिप्यकुनखयोर्लक्षण चिकित्सा च—

नखमांसमधिष्ठाय पित्त वातश्च वेदनाम्। करोति दाहपाकौ च त व्याधि चिप्यमादिशेत्॥१॥

तदेव क्षतरोगाख्यं तथोपनखमित्यपि । अभिघातात्प्रदुष्टो यो नखो रूक्षोऽसित खर ॥

भवेत्त कुनखं विद्यात् कुलीरमितिसंज्ञितम् ॥२॥

अथैतयोश्चिकित्सा—

चिप्यं रुधिरमोक्षेण शोधनेनाप्युपाचरेत् । गतोष्माणमथैनन्तु सेचयेदुष्णवारिणा ॥१॥

शस्त्रेणापि यथायोग्यमुच्छिद्य स्रावयेत्तत । व्रणोक्तेन विधानेन रोपयेत्तु विचक्षण ॥२॥
स्वरसेन हरिद्राया पात्रे कृत्वाऽऽयसेऽभयाम्। घृष्ट्वा तज्जेन कल्केन लिम्पेच्चिप्यं पुन पुन ३॥
काश्मर्या सप्तभि पत्रै कोमलै परिवेष्टित । अङ्गुलीवेष्टक पुसा ध्रुवमाशु प्रशाम्यति॥४॥
श्लेष्मविद्रधिकल्पेन कुनख समुपाचरेत् । नखकोटिप्रविष्टेन टङ्कणेन न शाम्यति ॥५॥

कुनखश्चेत्तदा शैल सलिले प्लवतेऽपिच ॥

दाडिमकुसुमयवासैरभया सुश्लक्ष्णचूर्णिता लेपात् ।

नखकोटिपूतीभाव शमयति शूलञ्च तत्क्षणादेव ॥ ६ ॥

अथानुशयीलक्षण चिकित्सा च—

गम्भीरामल्पसरम्भा सवर्णामुपरिस्थिताम्। कफादन्त प्रपाका ता विद्यादनुशयीं भिषक् ॥

उपाचरेदनुशयीं श्लेष्मविद्रधिवद्भिषक् ॥ १ ॥

अथ विदारिकाया लक्षण चिकित्सा च—

विदारीकन्दवद्वृत्ता कक्षावक्षणसन्धिषु। रक्ता विदारिका विद्यात् सर्वजा सर्वलक्षणाम् ॥१॥

चिकित्सा—

विदारिकाया प्रथमं जलौकायोजन हितम् । पाटनञ्च विपक्काया ततो व्रणविधि स्मृत ॥१॥

जयेद्विदारिका लेपै शिग्रुदेवद्रुमोद्भवै ॥ २ ॥

अथ शर्करार्बुदलक्षण यथा—

प्राप्य मास सिरास्नायू श्लेष्मा मेदस्तथाऽनिल ।

ग्रन्थि कुर्वन्ति भिन्नोऽसौ मधुसर्पि र्वसानिभम ॥ १ ॥

स्रवत्यास्रावमत्यर्थं तत्र वृद्धिं गतोऽनिल । मास विशोष्य ग्रन्थिता शर्करा जनयेत्पुन ॥२॥
दुर्गन्धं क्लिन्नमत्यर्थं नानावर्णं तत सिरा । स्रवन्ति सहसा रक्तं तद्विद्याच्छर्करार्बुदम्॥३॥

अथास्य चिकित्सा—

मेदोऽर्बुदविधानेन साधयेच्छर्करार्बुदम् ।

पामाविचर्चिकारकसाना कुष्ठाधिकारचिकित्साव्याख्याया व्याख्यानं कृतमतस्ततो ज्ञेयम् ।

अथ पाददारिकाया लक्षण चिकित्सा च—

परिक्रमणशीलस्य वायुरत्यर्थरूक्षयो । पादयो कुरुते दारीं पाददारीं तमादिशेत्॥१॥

अथ चिकित्सा—

पाददा र्यां शिरा प्राज्ञो वेधयेत्तलशोधिनीम्। स्नेहस्वेदोपपन्नौ तु पादौ चालेपयेन्मुहु.॥१॥
मधूच्छिष्टवसामज्जाघृतै क्षारविमिश्रितै । सर्जोत्थसिन्धूद्भवयोश्चूर्णं मधुघृतप्लुतम् ।

निर्मथ्य कटुतैलाक्तं हितं पादप्रमार्जने ॥ २ ॥

उपोदिकाद्यं तैलम्—

उपोदिकासर्षपनिम्बमोचकर्काम्रकैर्वारुकभस्मतोयैः ।
तैलं विपक्वं लवणेन युक्तं तत्पाददारीं विनिहन्ति लेपात् ॥

इत्युपोदिकाद्यं तैलम् । सैन्धवं चन्दनं रालं मधु सर्पिः पुरो गुडः ।
गैरिका स्फुटितौ पादौ लिप्तौ स्तः पङ्कजोपमौ ॥

गुडलवणघृतं चैत्तिन्तिडीयुक्तमेतत् द्विगुणमिह विदध्यात् मूत्रमेकत्र कृत्वा ।
कतिचिदथ दिनानि किञ्चिदाशोष्य लेपात् । स्फुटितपदतलं स्यात्पद्मपत्राभमाशु ॥

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृताया गूढार्थसन्दीपिकाव्याख्यायां पाददारिकाया लक्षणं चिकित्सा च ।

अथ कदरस्य लक्षणं चिकित्सा च

शर्करोन्मथिते पादे क्षते वा कण्टकादिभिः ।
ग्रन्थिः कोलवदुत्सन्नो जायते कदरन्तु तत् ॥१॥
मेदोरक्तानुगैश्चैव दोषैर्वा जायते नृणाम् ॥

सर्वालकठिनो ग्रन्थिर्निम्नमध्योन्नतोऽपिवा। कोलमात्रः सरुक् स्रावी जायते कदरस्तु सः २॥

अथ कदरचिकित्सा—

दहेत् कदरमुद्धृत्य तैलेन दहनेन वा ।

अर्थात् शस्त्रादिना कीलकमुत्पाटय तप्ततैलेन वह्निना वा मोरसेध स्थानं दहेत् ।

अथालसस्य लक्षणं चिकित्सा च—

क्लिन्नाङ्गुल्यन्तरौ पादौ कण्डूदाहरुजान्वितौ । दुष्टकर्दमसंस्पर्शादलसं तु विनिर्दिशेत्॥१॥

चिकित्सा—

पादौ सिक्त्वाऽऽरनालेन लेपनं त्वलसे हितम् । पटोलकुनटीनिम्बरोचनामरिचैस्तिलैः ॥१॥
शुद्रस्वरससिद्धेन कटुतैलेन लेपयेत् । ततः कासीसकुनटीतिलचूर्णैर्विचूर्णयेत् ॥२॥
करञ्जबीजं रजनी कासीसं मधुकं मधु । रोचना हरितालश्च लेपोऽयमलसे हितः ॥३॥
एतत् सर्वं समं सञ्चूर्ण्य मधुना संमिश्र्यालसे लेपनं हितम् ।

अथेन्द्रलुप्तस्य लक्षणं यथा—

रोमकूपानुगं पित्तं वातेन सह मूर्च्छितम् । प्रच्यावयति रोमाणि ततः श्लेष्मा सशोणितः ॥१॥

रुणद्धि रोमकूपांस्तु ततोऽन्येषामसम्भव । तदिन्द्रलुप्तं खालित्यं रूज्येति च विभाव्यते॥२॥

अथास्य चिकित्सा—

इन्द्रलुप्ते सिरा मूर्ध्नि स्निग्धस्विन्नस्य मोक्षयेत्। कल्कै समरिचैर्दिंह्याच्छिलाकासीसतुत्थकै ॥१॥
कुष्ठदारूकल्कै र्लेपनं वा प्रशस्यते । प्रच्छयित्वाऽवगाढं वा गुञ्जाकल्कै र्मुहुर्मुहु ॥२॥
लेपयेदुपशान्त्यर्थं कुर्याद्वापि रसायनम् । मालतीकरवीराग्निनक्तमालविपाचितम् ।
तैलमभ्यञ्जने शस्तमिन्द्रलुप्तापहं परम् ॥ ३ ॥
क्षीरात् समार्कवरसात् द्विप्रस्थे मधुकोत्पले। तैलस्य कुडवं पक्वं तन्नस्यं पलितापहम्॥४॥

अथ दारुणकस्य लक्षणम्—

दारुणा कण्डरा रूक्षा केशभूमिं प्रजायते। कफवातप्रकोपेण विद्याद्दारुणकन्तु तम्॥१॥

अथास्य चिकित्सा—

दुग्धेन खाखस बीज प्रलेपाद्दारुणं हरेत्। कण्टकारी फलरसै स्तुल्यं तैलं विपाचयेत् ॥
जपापुष्पद्रवैर्वाथ तल्लेपो दारुणप्रणुत् ॥ १ ॥
आम्रबीजस्य चूर्णन्तु शिवाचूर्णं समद्वयम्। दुग्धपिष्टप्रलेपोऽयं दारुणं हन्ति दारुणम्॥२॥

अथारुंषिकाया लक्षणम्—

अरूंषि बहुवक्त्राणि बहुक्लेदीनि मूर्ध्नि तु। कफासृक्क्रिमिकोपेन नृणां विद्यादरुंषिकाम्॥१॥

अथास्याश्चिकित्सा—

अरूंषिका हृते रक्ते सेचयेन्निम्बवारिणा । दिह्यात् सैन्धवयुक्तेन वाजिविष्ठारसेन तु॥१॥
हरितालनिशानिम्बकल्कै र्वा सपटोलजै । यष्टीनीलोत्पलैरण्डमार्कवै र्वा प्रलेपयेत्॥२॥
नीलोत्पलस्य किञ्जल्कौ धात्रीफलसमन्वितं ।यष्टीमधुकयु कश्च लेपाद्धन्यादरूंषिकाम् ॥३॥

अथ हरिद्राद्यं तैलम्—

हरिद्राद्वयभूनिम्बत्रिफलारिष्टचन्दनै । एतत्तैलमरूंषीणां सिद्धमभ्यञ्जने हितम् ॥१॥
खदिरारिष्टजम्बूनां त्वग्भिर्वा मूत्रसंयुतै ।कुटजत्वक् सैन्धवं वा लेपाद्धन्यादरंषिकाम्॥२॥

अथ पलितस्य लक्षणं यथा—

क्रोधशोकश्रमकृत शरीरोष्मा शिरोगत । पित्तञ्च केशान् पचति पलितं तेन जायते ॥१॥

अथास्य चिकित्सा—

अयो रजो भृङ्गराजस्त्रिफला कृष्णमृत्तिका। स्थितमिक्षुरसे मासं लेपनात् पलितं जयेत्॥१॥
धात्रीफलद्वयं पथ्ये द्वे तथैकं विभीतकम् । पञ्चाम्रमज्जो लौहस्य कर्षैकं च प्रदीयते ॥२॥
पिष्ट्वा लोहमये भाण्डे स्थापयेदुषितं निशि । लेपोऽयं हन्ति नचिरादकालपलितं महत्॥३॥

अथ मसूरिकाया लक्षणम्—

दाहज्वररुजावन्तस्ताम्रास्फोटाः सपीतकाः । गात्रेषु वदने चान्तर्विज्ञेयास्ता मसूरिकाः ॥१॥

मसूरिका चिकित्सा पूर्वमुक्ता । ५८

अथ यौवनपिडकाया लक्षणम्—

शाल्मलीकण्टकप्रख्याः कफमारुतरक्तजाः । यूवानपिडका यूनां विज्ञेया मुखदूषिकाः ॥१॥

अथास्याश्चिकित्सा—

प्रथमं शिरावेधं कृत्वा ततश्च लेपादिकर्म कुर्यात् ।

जातीफलं चन्दनञ्च मरिचं सह पेषितम् । मुखलेपेन हन्त्याशु पिटिका यौवनोद्भवाम् ॥१॥

अथ पद्मिनीकण्टकलक्षणमाह—

कण्टकैराचितं वृत्तं कण्डुमत्पाण्डुमण्डलम् । पद्मिनीकण्टकप्रख्यं स्तदाख्यं कफवातजम् ॥१॥

अथास्य चिकित्सा—

पद्मिनीकण्टके रोगे छर्दयेन्निम्बवारिणा । तेनैव सिद्धं समधु सर्पिः पातुं प्रदापयेत् ॥१॥

अथ जतुमणिलक्षणम्—

नीरुजं सममुत्सन्नं मण्डलं कफरक्तजम् । सहजं रक्तमीषच्च श्लक्ष्णं जतुमणिं विदुः ॥१॥

चिकित्सा—

शस्त्रेणोत्कृत्य क्षाराग्निभ्यां दहेत् ।

अथ मशकलक्षणम्—

अवेदनं स्थिरं चैव यस्य गात्रेषु दृश्यते । माषवत् कृष्णमुत्सन्नमनिलान्मशकं वदेत् ॥१॥

अथास्य चिकित्सा—

शस्त्रेणोत्कृत्य क्षाराग्निभ्यां दहेत् ।

अथ तिलकालकलक्षणम्—

कृष्णानि तिलमात्राणि नीरुजानि समानि च । वातपित्तकफोद्रेकात्तान् विद्यात्तिलकालकान् ॥१॥

चिकित्सा—

शस्त्रेणोत्कृत्य मतिमान् क्षाराग्निभ्यां दहेत्ततः ।

अथ न्यच्छस्य लक्षणम्—

मण्डलं महदल्पं वा श्यावं वा यदि वा सितम् । सहजं नीरुजं गात्रे न्यच्छमित्यभिधीयते ॥१॥

अथ व्यङ्गस्य लक्षणम्—

क्रोधायासप्रकुपितो वायुः पित्तेन संयुतः । सहसा मुखमागत्य मण्डलं विसृजत्यतः ॥

नीरुजं तनुकं श्यावं मुखे व्यङ्गं तमादिशेत् ॥ १ ॥

अथ तयोश्चिकित्सा—

त्रिभुवनविजयापत्रं मूल स्थविरस्य शिंशपा चैभि ।उद्वर्तन विरचितं न्यच्छव्यङ्गापहं सिद्धम्१
व्य मञ्जिष्ठया लेप प्रशस्तो मधुयुक्तया। वटाङ्कुरा मसूराश्च प्रलेपाद्व्यङ्गनाशना ॥२॥

अथ परिवर्तिकालक्षणम्—

मर्दनात् पीडनाद्वापि तथैवाप्यभिघातत । मेढ्रचर्म यदा वायुर्भजते सर्वतश्चरन् ॥१॥
तदा वातोपसृष्टत्वाच्चर्म प्रतिनिवर्तते । मणेरधस्तात् कोशश्च ग्रन्थिरूपेण लम्बते ॥२॥
सवेदन. सदाहश्च पाकं च व्रजति क्वचित् । मारुतागन्तुसम्भूतां विद्यात्ता परिवर्तिकाम् ॥
सकण्डू कठिना चापि सैव श्लेष्मसमुत्थिता ॥ ३ ॥

अथास्या श्चिकित्सा—

स्वेदोपनाहौ परिवर्तिकाया कृत्वा समभ्यज्य घृतेन पश्चात् ।
प्रवेशयेच्चर्मशनै. प्रविष्टे माषै सुपिष्टै रुपनाहयेत्तम् ॥ १ ॥

अथवा—

परिवर्ति घृताभ्यक्ता सुस्विन्नामुपनाहयेत् ।
त्रिरात्र पञ्चरात्रं वा वातघ्नै. शाल्वणादिभि. ॥ १ ॥
ततोऽभ्यज्य शनैश्चर्म वेशयेत् पीडयेन्मणीम् ।
प्रविष्टे चर्मणि मणौ स्वेदयेदुपनाहयेत् ॥
दद्याद्वातहरान् वस्तीन् स्निग्धान्यन्नानि भोजयेत् ॥ २ ॥

अथावपाटिकालक्षणम्—

अल्पीयःखां ( अल्पायस्या ) यदा हर्षाद्बाला गच्छेत् स्त्रियं नर ।
हस्ताभिघातादपि वा चर्मण्युद्वर्तिते बलात् ॥ १ ॥
मर्दनात् पीडनाद्वापि शुक्रवेगविघातत ।
यस्यावपाट्यते चर्म ता विद्यादवपाटिकाम् ॥ २ ॥

अथास्याश्चिकित्सा—

स्नेहस्वेदैरिमा वैद्यश्चिकित्सेदवपाटिकाम ॥ १ ॥

अथ निरुद्धप्रकशस्य लक्षणम्—

वातोपसृष्टमेवन्तु चर्म संश्रयते मणिम् । मणिश्चर्मोपनद्धस्तु मूत्रस्रोतो रुणद्धि च ॥१॥
निरुद्धप्रकशे तस्मिन् मन्दधारमवेदनम् । मूत्रं प्रवर्तते जन्तो र्मणि र्न च विदीर्यते॥
निरुद्धप्रकशं विद्यात् सरुजं वातसम्भवम् ॥ २ ॥

अथास्य चिकित्सा—

निरुद्धप्रकशे नाडीं लौहीमुभयतो मुखीम्। दारवीं वा जतुकृतां घृताक्तां सम्प्रवेशयेत् ॥१॥
परिषिञ्चेदुमा मज्जा शिशुमारवराहयोः। चुक्रतैलं तथा योज्यं वातघ्नद्रव्यसंयुतम्॥२॥
त्र्यहात् त्र्यहात् स्थूलतरां सम्यङ् नाडीं प्रवेशयेत्।
स्रोतो विवर्द्धयेदेव स्निग्धमन्नञ्च भोजयेत् ॥
भित्वा वा सीवनीं मुक्त्वा मद्य क्षतवदाचरेत् ॥३॥

अथ सन्निरुद्धगुदलक्षणम्—

वेगसन्धारणाद्वायु र्विहतो गुदमाश्रितः। निरुणद्धि महत् स्रोतः सूक्ष्मद्वारं करोति च॥१॥
मार्गस्य सौक्ष्म्यात् कृच्छ्रेण पुरीषं तस्य गच्छति। सन्निरुद्धगुदं व्याधिमेनं विद्यात् सुदुस्तरम्॥२

अथास्य चिकित्सा—

सन्निरुद्धगुदे तैलं सेको वातहरं हितं। तथा निरुद्धप्रकशक्रिया कार्या सदा हिता ॥१॥

अथाहिपूतनलक्षणम्—

शकृन्मूत्रसमायुक्तेऽधौतेऽपाने शिशोर्भवेत्। स्विन्नस्यास्नाप्यमानस्य कण्डू रक्तकफोद्भवा ।१
कण्डूयनात्ततः क्षिप्रं स्फोटाः स्रावश्च जायते। एकीभूतं व्रणं घोरं तं विद्यादहिपूतनम्॥२॥

अथास्य चिकित्सा—

तत्र संशोधनं पूर्वं धात्रीस्तन्यं विशोधयेत्। त्रिफलाखदिरक्वाथै र्व्रणानां क्षालनं हितम्॥ ॥
शङ्खसौवीरयष्ट्याह्वैर्लेपः कार्योऽहिपूतने। पटोलपत्रत्रिफलारसाञ्जनविपाचितम् ॥
पीतं घृतं नाशयति कृच्छ्रमप्यहिपूतनम् ॥ २ ॥

अथ वृषणकच्छ्रलक्षणम्—

स्नानोत्सादनहीनस्य मलो वृषणसंश्रितः। यदा प्रक्लिद्यते स्वेदात् कण्डूं जनयते तदा॥१॥
कण्डूयनात्ततः क्षिप्रं स्फोटः स्रावश्च जायते। प्राहुर्वृषणकच्छ्रूं तां श्लेष्मरक्तप्रकोपजाम् ॥२॥

चिकित्सा—

सर्जाम्बुकुष्ठसैन्धवसितसिद्धार्थैः प्रकल्पितो योगः। उद्वर्तनेन नियतं शमयति वृषणस्य कण्डूतिम्
भिषग् वृषणकच्छ्रूं तु चिकित्सेत् पामरोगवत्। अहिपूतननिर्दिष्टक्रियया पि च तां हरेत्॥२॥
कासीसरोचनातुत्थहरितालरसाञ्जनैः। अम्लपिष्टैः प्रलेपोऽयं मुष्ककण्ड्वहिपूतने ॥३

अथ गुदभ्रंशस्य लक्षणमाह—

प्रवाहणातिसाराभ्यां निर्गच्छति गुदं बहिः। रूक्षदुर्बलदेहस्य तं गुदभ्रंशमादिशेत् ॥१॥

अथास्य चिकित्सा—

गुदभ्रंशे गुदं स्विन्नं स्नेहेनाक्तं प्रवेशयेत् । प्रविष्टं रोधयेद्यत्नाद्गव्यसच्छिद्रचर्मणा ॥१॥
पद्मिन्या कोमलपत्रं य खादेच्छर्करान्वितम्। एतन्निश्चित्य निर्दिष्टं न तस्य गुदनिर्गमः ॥२॥
मूषिकाणां वसाभिर्वा गुदभ्रंशे प्रलेपयेत् । स्विन्नमूषकमांसेन अथवा स्वेदयेद्गुदम् ॥३॥
चाङ्गेरीकोलदध्यम्लनागरक्षारसंयुतम् । घृतमुत्क्वथितं पेयं गुदभ्रंशरुजापहम् ॥४॥
वृक्षाम्लानलचाङ्गेरीबिल्वपाठायवाग्रजम्।तक्रेण शीलयेत् पायुभ्रंशार्तोऽनलदीपनम् ॥५॥

अथ मूषकतैलम्—

मूषकान् दशमूलानि गृह्णीयादुभय समम्। तयोः क्वाथेन कल्केन पचेत्तैलं यथोदितम्॥१॥
अभ्यङ्गात्तस्य तैलस्य गुदभ्रंशो विनश्यति । विनश्यन्ति तथा तेन गुदशूलभगन्दराः ॥२॥
गुदं च गव्यपयसा वेशयेदविशङ्कितः ।दुष्प्रवेशो गुदभ्रंशो विशत्याशु न संशयः ॥३॥
रसाञ्जनं विशेषेण पानालेपनयोर्हितम् ॥ ४ ॥

अथ क्षुद्ररोगेषु पथ्यापथ्यविधिः—

क्षुद्ररोगेषु सर्वेषु नानारोगानुकारिषु।दोषान् दूष्यानवस्थाश्च निरीक्ष्य मतिमान् भिषक्॥१॥
तस्य तस्य च रोगस्य पथ्यापथ्यानि सर्वशः ।यथादोषं यथादूष्यं यथावस्थं प्रकल्पयेत्॥२॥

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृतायां
गूढार्थसन्दीपिकाव्याख्यायां क्षुद्ररोग–चिकित्सा ।

---

## अथ मुखरोग-चिकित्सा ।

चतुर्मुखो रसः —

**मृतं सूतं मृतं स्वर्णं द्वाभ्यान्तुल्यां मनःशिलाम् ।**
**विमर्दयेच्च तैलेन चातसीसम्भवेन च ॥ १ ॥**
**तद्गोलं वस्त्रतो बद्ध्वा लेपयेच्च समन्ततः ।**
**अतसीफलकल्केन दोलायन्त्रे त्र्यहं पचेत् ।**
**उद्धृत्य धारयेद्वक्त्रे जिह्वादन्तास्य-रोगनुत्॥ २ ॥**

रोगगणनत्वसाधर्म्यात् क्षुद्ररोगानन्तरं मुखरोगचिकित्सा प्रारभ्यते तत्र मुख-

रोगाधिष्ठानानि यथा—

ओष्ठौ च दन्तमूलानि दन्ता जिह्वा च तालु च ।
गलो गलादिसकलं सप्ताङ्गमुखमुच्यते ॥ १ ॥

मुखरोगकारणं यथा—

आनूपपिशितक्षीरदधिमाषादिसेवनात्। मुखमध्ये गदान् कुर्युः क्रुद्धा दोषाः कफोत्तराः ॥१

अथ चतुर्मुखरसनिर्माणमाह--मृत सूत-रससिन्दूर (१तो०),मृतं स्वर्णं-स्वर्णभस्म (१तो०), द्वाभ्यां तुल्यां (२तो०) शुद्धमनःशिलां च समादाय सर्वं खल्वे निक्षिप्य श्लक्ष्णं पिष्ट्वा अतसीतैलेनाप्लाव्य दृढं विमर्दयेत्। ततश्च गोलकं कृत्वा तं च वस्त्रेणावेष्ट्यातसीफलकल्केन वस्त्रावेष्टितगोलकस्य सर्वभागं विलिप्य दोलायन्त्रे अतसीफलकषायेण त्रिदिनं सस्वेद्य तदूर्ध्वं स्वाङ्गशीतश्चोद्धृत्य काचपात्रे स्थापयेत्। अयं चतुर्मुखरसो रक्तिमितो जिह्वारोगेषु दन्तरोगेषु मुखपाकादिषु च मुखे धारयितव्यः ॥ १-२ ॥

पार्वतीरसः—

**पार्वतीकाशिसम्भूतौ दरदो मधुपुष्पकम् ।**
**गुडूची शाल्मली द्राक्षा धान्यभूनिम्बमार्कवम् ॥ ३ ॥**
**तिलमुद्गपटोलञ्च कूष्माण्डं लवणद्वयम् ।**
**यष्टिका धान्यकं भस्म चान्तर्दग्धं समं समम् ॥ ४ ॥**
**मुखरोगं निहन्त्याशु पार्वतीरस उत्तमः ।**
**पित्तज्वरं चिरं हन्ति तिमिरञ्च तृषामपि ॥ ५ ॥**

अथ पार्वतीरसनिर्माणमाह पार्वतीत्यादि--पार्वतीसम्भूत-शुद्धगन्धक, काशीसम्भूत इति शिवसम्भूतं शुद्धपारद, दरद-शुद्धहिङ्गुलम्, मधूकपुष्पाणि गुडूची, शाल्मलीमूलत्वक्, द्राक्षा, धान्यकं, भूनिम्ब-किरात, मार्कवो-भृङ्गराज, तिलमुद्गपटोलानि, कूष्माण्ड श्वेतकूष्माण्ड, लवणद्वय-सैन्धव सौवर्चलञ्च, यष्टिका मधुयष्टी, धान्यकम्, एतेषां प्रत्येकं समं सममादाय पूर्वं पारदगन्धकयोः कज्जलीं कुर्यात्। शेषद्रव्याणि च हण्डिकायां निरुध्यान्तर्धूमं दहेत्। स्वाङ्गशीतं तेषां भस्म पारदगन्धककज्जल्या सह खल्वे सम्मेल्य श्लक्ष्णं विमर्द्य च काचपात्रे स्थापयेत्। अयं पार्वतीरसो गुञ्जामितः प्रत्यहं मधुना सेवितो मुखे धारितश्च मुखरोगं, चिरजं पित्तज्वरं, तिमिरं, तृषाधिक्यञ्च निहन्ति ॥ ३-५ ॥

मुखरोगहरी—

रसगन्धौ समौ ताभ्यां द्विगुणञ्च शिलाजतु ।
गोमूत्रेण विमर्द्याथ सप्तधाऽऽर्द्रद्रवेण च ॥ ६ ॥
जातीनिम्बमहाराष्ट्री-रसैः सिध्यति पाकहा ।
कणामधुयुता हन्ति मुखरोगं सुदारुणम् ।
गुञ्जाष्टकमिता तालु-गलौष्ठदन्तरोगनुत् ॥ ७ ॥

अथ मुखरोगहरीवटिकानिर्माणमाह रसेत्यादि—रस-शुद्धपारद (१तो०), शुद्धगन्धक (१तो०), ताभ्यां द्विगुण च शुद्धशिलाजतु (४तो०) समादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शिलाजतु सम्मिश्र्य गोमूत्रेण, आर्द्रकस्वरसेन जात्या. पत्रस्वरसेन, निम्बपत्रस्वरसेन, महाराष्ट्री-जलपिप्पली तस्या स्वरसेन च पृथक् २ क्रमश सप्तवारं भावयित्वा दृढ विमर्द्य अष्टगुञ्जप्रमाणा वटीश्चरेत्। इय वटी यथाग्निवल चतुर्गुञ्जाप्रमाणादारभ्याष्टगुञ्जाप्रमाणा कणा-पिप्पली तस्याश्चूर्णेन मधुना च सह सेविता आशु दारुणमपि मुखरोगं, तालुविकारं, गलरोग, ओष्ठविकारं, दन्तविकारञ्च निहन्ति ॥ ६-७ ॥

महाराष्ट्र्यादिप्रतिसारणम्

महाराष्ट्र्यश्वगन्धाभ्यां मुखञ्च प्रतिसारयेत्
धारणात् सेवनाच्चैव हन्ति सर्वान् मुखामयान् ॥ ८ ॥

अथ महाराष्ट्र्यादिप्रतिसारणमाह महेत्यादि—महाराष्ट्री-जलपिप्पली, अश्वगन्धा ताभ्या कृतक्वाथेन मुखे गण्डूष धारयेत्। अथवा तयोश्चूर्णं। भक्षयेत्। इत्थमयं योगः सर्वान् मुखरोगान्निहन्ति ॥ ८ ॥

पर्पटीरसप्रयोगोपदेश —

सर्वास्यामयजित् सेव्यो मधुना पर्पटीरस ॥ ९ ॥

अथ पर्पटीरसप्रयोगोपदेशमाह सर्वेत्यादि—पर्पटस्य तोलकमित· स्वरमो मधुना सह प्रत्यहं सेवितः सर्वान् मुखरोगान्निहन्ति ॥ ९ ॥

पथ्यावटी—

पथ्यावालककुष्ठञ्च गोमूत्रेण प्रसाधयेत् ।
एषा च वटिका हन्ति मुखदौर्गन्ध्यसन्ततिम् ॥ १० ॥

( इति मुखरोग-चिकित्सा )

उपजिह्वां तु संलिख्य क्षारेण प्रतिसारयेत्। शिरोविरेकगण्डूषधूमैश्चैनामुपाचरेत् ॥२॥

इति जिह्वारोगचिकित्सा ।

अथ तालुरोगचिकित्सा—

छित्त्वा घर्षेद् गलशुण्डीं व्योषोग्राक्षौद्रसिन्धुजैः ।कुष्ठोषणवचासिन्धुकणापाठाप्लवैरपि॥१॥

सक्षौद्रैर्भेषजैः कार्यं गलशुण्ड्या विघर्षणम् ॥ २ ॥

अथ गलशुण्डिकाछेदनप्रकारो यथा—

अङ्गुष्ठाङ्गुलिसंदंशेनाकृष्य गलशुण्डिकाम् । छेदयेन्मण्डलाग्रेण जिह्वोपरि तु संस्थिताम्॥१॥

अतिच्छेदात् स्रवेद्रक्तं ततो हेतोर्म्रियेत च। हीनच्छेदाद्भवेच्छोथो लालास्रावो भ्रमस्तथा॥२॥

तस्माद्वैद्यः प्रयत्नेन दृष्टकर्मा विशारदः ।गलशुण्डिन्तु संच्छिद्य कुर्यात् प्राप्तमिमं क्रमम् ॥३॥

पिप्पल्यतिविषा कुष्टवचामरिचनागरैः । क्षौद्रयुक्तैः सलवणैस्ततस्तां प्रतिसारयेत् ॥४॥

अथ गलरोगचिकित्सा—

यवाग्रजं तेजवतीं सपाठां रसाञ्जनं दारुनिशां सकृष्णाम् ।

क्षौद्रेण कुर्याद् गुटिकां मुखेन तां धारयेत् सर्वगलामयेषु ॥ १ ॥

इति गलरोगचिकित्सा ।

अथ समस्तमुखरोगनाशार्थं स्वल्पखादरादिगुटिकानिर्माणं यथा—

खदिरस्य तुलां सम्यक् जलद्रोणे विपाचयेत् । शेषेऽष्टभागे तत्रैव प्रतिवापं प्रदापयेत्॥१॥

जातीकर्पूरपूगानि कक्कोलकफलानि च । एत्यैषा गुटिका कार्या मुखसौभाग्यवर्द्धिनी॥

दन्तौष्ठमुखरोगेषु जिह्वाताल्वामयेषु च ॥ २ ॥ इति ।

अथ मुखरोगे पथ्यापथ्यविवेकः ।

स्वेदो विरेको वमनं गण्डूषः प्रतिसारणम्। कवलोऽसृक्स्रुतिर्नस्यं धूमः शस्त्राग्निकर्म च ॥१॥

तृणधान्यं यवा मुद्गाः कुलत्था जाङ्गलो रसः । बहुपत्री कारवेल्लं पटोलं बालमूलकम्॥२॥

कर्पूरनीरं ताम्बूलं तप्ताम्बु खादिरो घृतम्। कटुतिक्तौ च वर्गोऽयं मित्रं स्यान्मुखरोगिणाम्॥३॥

इतिपथ्यानि ।

अथापथ्यानि—

दन्तकाष्ठं स्नानमम्लं मत्स्यमानूपमामिषम् । दधिक्षीरं गुडं माषं रुक्षान्नं कठिनाशनम्॥१॥

अधोमुखेन शयनं गुर्वभिष्यन्दिकारि च । मुखरोगेषु सर्वेषु दिवानिद्रां विवर्जयेत् ॥२॥

इत्यपथ्यानि ।

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृताया

गूढार्थसन्दीपिकाव्याख्यायां मुखरोग-चिकित्सा ।

## अथ कर्णरोग-चिकित्सा।

कफकेतुरस —

**व्योषमिज्जलवीजञ्च शङ्खभस्म विषान्वितम्।**
**मरीचसदृशं खादेत कफकेतुं महारसम्॥ १॥**

मुखरोगेषु प्रायेण जिह्वाश्रयरोगचिकित्सा प्रोक्ता, जिह्वा च रसनेन्द्रियाधिष्ठानमत इन्द्रियाधिष्ठानगतरोगचिकित्साप्रसङ्गात् कर्णरोगचिकित्सा प्रारभ्यते। अथात्र कफकेतुरसनिर्माणमाह व्योष इत्यादि—व्योष–त्रिकटु, इज्जलवीज–समुद्रफलचूर्ण, शङ्खभस्म, शुद्धवत्सनाभचूर्ण प्रत्येक सम सममादाय खल्वे श्लक्ष्ण सञ्चूर्ण्य जलेन सह पिष्ट्वा मरिचप्रमाणा वटी धरेत्। अय रस प्रत्यह सेवित सर्वविधकर्णरोगप्रकोपकदोषान्निहन्ति॥ १॥

भैरवो रस —

**सूतं गन्धो विषश्चैव टङ्कणं सकपर्दकम्।**
**मरिचेन समायुक्तश्चार्द्रतोयेन भावितम्॥ २॥**
**वह्निमान्द्यञ्चामरोग श्लेष्माणं ग्रहणीगदम्।**
**सन्निपातं तथा शोथ हन्ति श्रोत्रोद्भव गदम्॥ ३॥**

अथ भैरवरसनिर्माणमाह सूतमित्यादि—सूत–शुद्धपारद, शुद्धगन्धक, शुद्धवत्सनाभचूर्ण, शुद्धटङ्कण, कपर्दिकाभस्म, मरिचचूर्णञ्च प्रत्येक सम सममादाय पूर्व रसगन्धकयो कज्जली कृत्वा शेषद्रव्याणि सम्मिश्र्य चार्द्रकस्वरसेन सप्तधा भावयित्वा द्विरक्तिप्रमाणा वटी धरेत्। अय रस प्रत्यह द्विरक्तिमितो मधुना सह सेवितो वह्निमान्द्यम्, आमरोग, श्लेष्मरोग, ग्रहणीविकार, सन्निपात, शोथ, तथा श्रोत्रोद्भव रोगञ्च विनिहन्ति॥ २–३॥

विधानान्तरम्—

**योगवाहिरसाः सर्वे प्रयोक्तव्या भिषग्वरै.।**
**कर्णरोगेषु सर्वेषु पीनसादिषु नित्यश.॥ ४॥**

( इति कर्णरोग-चिकित्सा )

अथ कर्णरोगे विधानान्तरमाह योगेत्यादि—सर्वेषु कर्णरोगेषु पीनसादिकना-

मिकारोगेषु च दोषप्रकोप ज्ञात्वा यथादोषानुसारेण योगवाहिरसान् मतिमान् भिषक् प्रयोजयेत् ॥ ४ ॥

अथान्ययोगा —

कपित्थमातुलुङ्गाम्लशृङ्गवेररसै शुभै । सुखोष्णै पूरयेत् कर्णं कर्णशूलोपशान्तये ॥१
लशुनार्द्रकशिग्रूणा स्वरसो मूलकस्य च । कदल्या स्वरस श्रेष्ठ कदुष्ण कर्णपूरणे ॥२
अष्टानामपि मूत्राणा मूत्रेणान्यतमेन वै । कोष्णेन पूरयेत् कर्णं कर्णशूलोपशान्तये ॥३
अर्कपत्रपुटे दग्ध स्नुहीपत्रोद्भवो रस । कदुष्ण पूरणादेव कर्णशूलनिवारण ॥४
विल्वगर्भं पचेत्तैलं गोमूत्राजपयोन्वितम् । वाधिर्ये पूरयेत्तेन कर्णौ सकफवातजित् ॥५
हरिताल सगोमूत्र पूरण पूतिकर्णजित् । पञ्चवल्कलचूर्णञ्च कपित्थस्वरसान्वितम् ॥
मधुना योजितं हन्यात् कर्णस्राव प्रपूरयेत् ॥ ६ ॥
कुष्ठहिङ्गुवचादारुशताह्वाविश्वसैन्धवै । पूतिकर्णापह तैल वस्तमूत्रेण साधितम् ॥७

अथ कर्णरोगे पथ्यापथ्यविवेक —

स्वेदो विरेको वमन नस्य धूम शिराव्यध । गोधूम शालयो मुद्गा यवाश्च प्रतनं हवि ॥१
लावो मयूरो हरिणस्तित्तिरो वनकुक्कुट । पटोल शिग्रु वार्ताकुं सुनिषण्ण कठिल्लकम् ॥२
रसायनानि सर्वाणि ब्रह्मचर्यमभाषणम् । उपयुक्तं यथादोषमिद कर्णामये हितम् ॥३

इति पथ्यानि—

अथापथ्यानि—

दन्तकाष्ठ शिर स्नानं व्यायाम श्लेष्मल गुरु । कण्डूयनं तुषारञ्च कर्णरोगी परित्यजेत् ॥१

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृताया
गूढार्थसन्दीपिकाव्याख्याया कर्णरोगचिकित्सा ।

---

## अथ नासारोग-चिकित्सा ।

पञ्चामृतो रस —

**शुद्धसूत समादय गन्धभागद्वयं ततः ।**
**त्रिभागं टङ्कणञ्चापि विषं भागचतुष्टयम् ॥ १ ॥**
**पञ्चभागं तथा देयं मरिचस्य प्रयत्नतः ।**
**शृङ्गवेररसैः पिष्ट्वा गुडिका पञ्चरक्तिका ॥ २ ॥**

अनुपानं हितं योज्यं सर्वरोगप्रशान्तये ।
जलदोषोद्भवे रोगे महत्युग्रे जलोदरे ॥ ३ ॥
सन्निपातेषु रोगेषु नासाव्याधौ सपीनसे ।
व्रणशोथे व्रणे चैव उपदंशे भगन्दरे ॥ ४ ॥
नाडीव्रणे ज्वरे चैव नखदन्तविषातुरे ।
पञ्चामृतरसो योज्यः सर्वरोगप्रशान्तये ॥ ५ ॥

( इति नासारोग-चिकित्सा )

अथेन्द्रियाधिष्ठानसाधर्म्यात् कर्णरोगचिकित्सानन्तरं नासारोगचिकित्सा प्रारभ्यते।

तत्र पूर्वं पञ्चामृतरसनिर्माणमाह शुद्धेत्यादि—शुद्धसूतं-शुद्धपारदं (१तोलकं), शुद्धगन्धकं च द्वितोलकमितं समादाय शुभे पाषाणखल्वे श्लक्ष्णां कज्जलीं कृत्वा वह्निमृष्टं टङ्कणं (३तो०), विष-शुद्धवत्सनाभचूर्णं (४तो०), मरिचचूर्णस्य च (५तोलकं) निक्षिप्य सर्वं श्लक्ष्णमेकत्र विमर्द्य शृङ्गबेरमार्द्रकं तस्य स्वरसेन सम्यगाप्लाव्य दृढं विमर्द्य च पञ्चरक्तिमिता गुडिकाश्चरेत् । अयं रसो यथाव्याध्यनुपानैः सर्वरोगान्निहन्ति । तथाऽयं रसो दूषितजलजरोगे, दारुणोदररोगे, सन्निपातरोगेषु, पीनसे, नासाव्याधौ, व्रणशोथे, व्रणे, भगन्दरे च हितकरः । तथा नाडीव्रणे, ज्वरे, नखदन्तविषजन्यरोगेषु चायं पञ्चामृतरसो योज्यः ॥ १–५ ॥

उपर्युक्तपञ्चामृतरसो सर्वनासाविकाराणां दोषव्याकोपं प्रशाम्यति । अथ च भिन्न २ नासारोगाणां नामोल्लेखनं स्वल्पप्रतीकारश्च लिख्यते यथा—

आदौ च पीनसः प्रोक्तः पूतिनासस्ततः परम्।नासापाकोऽस्रगणितं पूयशोणितमेव च ॥ १॥
क्षवथुर्भ्रंशथुर्दीप्तः प्रतिनाहः परिस्रवः ।नासाशोषः प्रतिश्यायाः पञ्च सप्तार्बुदानि च॥२॥
चत्वारोऽर्शांसि चत्वारः शोथाश्चत्वारि तानि च ।
रक्तपित्तानि नासायां चतुस्त्रिंशतगदाः स्मृताः ॥ ३ ॥

अथैतेषां चिकित्सा—

तत्र पूर्वं पीनसलक्षणं यथा—

आनह्यते शुष्यति यस्य नासा प्रक्लेदमायाति च धूप्यते च ।
न वेत्ति यो गन्धरसांश्च जन्तुर्जुष्टं व्यवस्येत् स तु पीनसेन ॥

पीनसचिकित्सा—

सर्वेषु पीनसेष्वादौ निर्वातागारगो भवेत् । स्नेहस्वेदप्रधमनं धूमगण्डूषधारणम् ॥१॥

पञ्चमूलीयुतं क्षीरं किं वा स्याच्चित्रकामया। सर्पिर्गुडो विडङ्गश्च यूष पीनसशान्तये॥२॥
कट्फल पौष्करं शृङ्गी व्योषं यासश्च कारवी। एषा चूर्णकषाय वा दद्यादार्द्रकजै रसै ॥३॥

अथ षड्विन्दुघृतम् ।

मृङ्गं लवङ्गं मधुक च कुष्टं सनागर गोघृतमिश्रितञ्च ।
षड्विन्दुनासास्थिगतं च पीनस शिरोगतं रोगशतञ्च हन्ति ॥ १ ॥

वासो गुरूष्णं शिरस सुघन परिवेष्टनम्। लघूष्ण लवणस्निग्धमुष्ण भोजनमद्रवम्॥२॥

इति पीनसचिकित्सा ।

अथ पूतिनासालक्षण चिकित्सा च—

दोषै र्विदग्धै र्गलतालुमूलात् सदूषितो यस्य समीरणस्तु ।
निरेति पूति र्मुखनासिकाभ्या तं पूतिनास प्रवदन्ति रोगम् ॥ १ ॥

चिकित्सा—

अथ व्याघ्रीतैलम्—

व्याघ्रीदन्तीवचाशिग्रुसुरसाव्योषसैन्धवै । पाचित नावनं तैल पूतिनासागदापहम्॥१॥

अथ त्रिकट्वादितैलम्—

त्रिकटुविडङ्गसैन्धवबृहतीफलाशिग्रुसुरसदन्तीभि ।
तैल गोजलसिद्धं नस्यं स्यात् पूतिनस्यस्य ॥ १ ॥

अथ कलिङ्गाद्यवपीड —

कलिङ्गहिङ्गुमरिचलाक्षासुरसकट्फलै । व्योषोग्राशिग्रुजन्तुघ्नैरवपीडः प्रशस्यते ॥१॥
तैरेव मूत्रसंयुक्तै कटुतैल विपाचयेत्। अपीनसे पूतिनस्ये शमन परिकीर्त्तितम् ॥२॥

इति पूतिनासाचिकित्सा।

अथ नासापाकलक्षणम्—

घ्राणाश्रितं पित्तमरूंषि कुर्यात् यस्मिन् विकारे बलवांश्च पाक ।
त नासिकापाक इति व्यवस्येद्विक्लेदकोथावथवाऽपि यत्र ॥ १ ॥

चिकित्सा—

नासापाके पित्तहरं विधानं कार्यं सर्वं बाह्यमाभ्यन्तरञ्च ।
हृत्वा रक्तं क्षीरिवृक्षत्वचश्च योज्या सेके सर्पिषश्च प्रदेहा ॥ १ ॥

अथ पूयास्रलक्षणम्—

दोषैर्विदग्धैरथवापि जन्तो र्ललाटदेशेऽभिहतस्य तैस्तै ।
नासा स्रवेत् पूयमसृग्विमिश्रं तं पूयरक्त प्रवदन्ति रोगम् ॥ १ ॥

चिकित्सा—

पूर्वोक्ते रक्तपित्ते ना कषाया भावनानि च ॥ ३ ॥

अथ क्षवथुलक्षणम्—

घ्राणाश्रिते मर्मणि सम्प्रदुष्टो यस्यानिलो नासिकया निरेति ।
कफानुगतो बहुशोऽथ शब्दस्तं रोगमाहुः क्षवथुं विधिज्ञा ॥ १ ॥
तीक्ष्णोपयोगादति जिघ्रतो वा भावान् कटूनर्कनिरीक्षणाद्वा ।
सूत्रादिभिर्वा तरुणास्थिमर्मण्युद्घाटितेऽन्यः क्षवथुर्निरेति ॥ २ ॥

अथ चिकित्सा—

शोण्ठ्यकुष्ठा पिप्पली शाकस्तकषायवत् । साधितं तैलमाज्यं वा नस्यं क्षवथुरुक्प्रणुत् ॥ १ ॥

अथ भ्रंशथुरोगलक्षणम्—

प्रभ्रस्यते नासिकया हि यस्य सान्द्रो विदग्धो लवणः कफस्तु ।
प्राक्सञ्चितो मूर्धनि पित्ततप्तस्तं भ्रंशथुं रोगमुदाहरन्ति ॥ १ ॥

चिकित्सा—

गुग्गुलुनिश्वस्य निकथकस्य प्रयत्नतः । धूमं क्षवथुरोगघ्नं भ्रंशथुघ्नं च निर्दिशेत् ॥ १ ॥

अथ दीप्तमाह—

घ्राणे भृशं दाहसमन्विते तु विनिःसरेद् धूम इवेह वायुः ।
नासाप्रदीप्तेव च यस्य जन्तोर्व्याधिं तु तं दीप्तमुदाहरन्ति ॥ १ ॥

चिकित्सा—

नस्यं हितं निम्बरसाञ्जनाभ्यां दीप्ते शिरःस्वेदनमल्पशस्तु ।
नस्ये कृते क्षीरजलावसेकान् शंसन्ति भुञ्जीत च मुद्गयूषैः ॥ १ ॥

अथ प्रतीनाहलक्षणम्—

उच्छ्वासमार्गन्तु कफः सवातो रुन्ध्यात् प्रतीनाहमुदाहरेत्तम् ॥ १ ॥

चिकित्सा—

नासावनाहे कर्तव्यं पानं गव्यस्य सर्पिषः ॥ १ ॥

अथ नासाशोषलक्षणम्—

घ्राणाश्रिते श्लेष्मणि मारुतेन पित्तेन गाढं परिशोषिते च ।
कृच्छ्रादुच्छ्वसेदूर्ध्वमधश्च जन्तुर्यस्मिन् स नासापरिशोष उक्तः ॥ १ ॥

--

चिकित्सा—

नासाशोषे क्षीरपान ससितं च प्रशस्यते ॥ १ ॥

अथ प्रतिश्याय-चिकित्सा—

वा॰॰के तु प्रयिश्याये पिबेत् सर्पिर्यथाबलम् । पञ्चभिर्लवणै सिद्ध प्रथमेन गणेन च ॥१॥
नस्यादिषु विधिं कृत्स्नमवेक्षेतार्दितेरिम् । पित्तरक्तोत्थयो पेयं सर्पिर्मधुरकै शृतम् ॥२॥
परिषेकान् प्रदेहाश्च कुर्य्यादपि च शीतलान् ॥
कफजे सर्पिषा स्निग्ध तिलमाषविपक्कया।यवाग्वा वामयित्वा च कफघ्नं क्रममाचरेत्॥३॥
सोषण गुडसंयुक्त स्निग्धदध्यम्लभोजनम् । नवप्रतिश्यायहर विशेषात् कफपाचनम्॥४॥
प्रतिश्याये नवे शस्तो यूपश्चिञ्चाच्छदोद्भव ॥ ५ ॥
तत पक्क कफ ज्ञात्वा हरेच्छीर्षविरेचनै । शिरसोऽभ्यञ्जनस्वेदनस्य कट्वम्लभोजनै ॥
वमनै र्घृतपानैश्च तान् यथास्वमुपाचरेत् ॥ ६ ॥

अथात्रावपीड —

पिप्पल्य शिग्रुबीजानि विडङ्ग मरिचानि च । अवपीड प्रशस्तोऽय प्रतिश्यायनिवारण ॥१॥

अथ प्रतिश्याये क्रियान्तरम्—

प्रातश्यायेषु सर्वेषु गृह वातविवर्जितम् । वस्त्रेण गुरुणोष्णेन शिरसो वेष्टनं हितम् ॥१॥

इति प्रतिश्यायचिकित्सा ।

अथ नासार्शसा चिकित्सा—

रक्तकरवीरपुष्पं जात्यशनमल्लिकायाश्च । एतै समन्तु तैलं नासार्शोनाशन हितम् ॥१॥
गृहधूमकणादारूक्षारनक्ताह्वसैन्धवै । सिद्ध शिखरिबीजैश्च तैलं नासार्शसा हितम् ॥२॥
चित्रकचविकादीप्यकनिदिग्धिकाकरञ्जलवणार्कैः।गोमुत्रयुतै सिद्धं तैल नासार्शसां हितम्॥३॥
नासाशोफे क्षीरसर्पि प्रधानं तैल सिद्ध चाणुकल्केन नस्यम् ।
सर्पिष्पानं भोजनं लाङ्गलैश्च स्नेहस्वेदै. स्नैहिकश्चात्र धूम ॥ ४ ॥
श्रोत्रेऽर्वदेऽर्शमासे च क्रियाशेषेऽप्यवेक्ष्य च । स्थितिर्निर्वातनिलये प्रगाढोष्णीषधारणम् ॥
गण्डूषो लङ्घन नस्य धूमश्छर्दि शिराव्यध ॥ ५ ॥

अथ नासारोगे पथ्यापथ्यम्—

स्नेह स्वेद शिरोऽभ्यङ्गपुराणयवशालय ।कुलित्थमुद्गयोर्यूष. ग्राम्याजाङ्गलजा रसा ॥१॥

ार्तोर्कं कुलक शिग्रु कर्कोट वालमूलकम्। लशुन दधि तप्ताम्बु वारुणी च कटुकत्रयम् ॥२॥
कट्वम्ललवणं स्निग्धमुष्णञ्च लघुभोजनम्। नासारोगे पिनसादौ सेव्यमेतद्यथाबलम् ॥३॥

इति पथ्यानि ।

अथापथ्यानि—

स्नानं क्रोधं शकृन्मूत्रवातवेगान् शुचं द्रवम्। भूमिशय्यां च यत्नेन नासारोगी परित्यजेत् ॥१॥

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृतायां
गूढार्थसन्दीपिकाव्याख्यायां नासारोगचिकित्सा ।

---

## अथ नेत्ररोग-चिकित्सा ।

नेत्राशनिरस —

अभ्रं ताम्रं तथा लौहं माक्षिकञ्च रसाञ्जनम् ।
पातनायन्त्रसंशुद्धं गन्धकं नवनीतकम् ॥ १ ॥
पलप्रमाणं प्रत्येकं गृह्णीयाच्च विधानवित् ।
सर्वमेकीकृतं चूर्णं वैद्यः कुशलकर्मभिः ॥ २ ॥
ततस्तु भावना कार्या त्रिफलाभृङ्गराजकैः ।
ततः प्रक्षिप्य चूर्णञ्च पिप्पलीमूलयष्टिका ॥ ३ ॥
एला पुनर्नवा दारु पाठा भृङ्ग शटी वचा ।
उत्पलं चन्दनञ्चैषां श्लक्ष्णचूर्णं प्रदापयेत् ॥ ४ ॥
माषमेकं प्रदातव्यं घृतश्रीमधुमर्दितम् ।
मर्दनं लौहदण्डेन पात्रे लौहमये दृढे ॥ ५ ॥
उष्णोदकञ्चानुपानं प्रयोक्तव्यं सुखावहम् ।
यावन्तो नेत्ररोगांश्च पानादेव विनाशयेत् ॥ ६ ॥
सरक्ते रक्तपित्ते च रक्ते चक्षुःस्रुतेऽपि च ।
नक्तान्ध्ये तिमिरे काचे नीलिकापटलार्बुदे ॥ ७ ॥
अभिष्यन्देऽधिमन्थे च पिष्टे चैव चिरन्तने ।
नेत्ररोगेषु सर्वेषु वातपित्तकफेषु च ।

**युञ्जीत तान् निहन्त्येव वृत्रमिन्द्राशनिर्यथा ॥ ८ ॥**

नासारोगचिकित्सानन्तर नेत्ररोगचिकित्सा प्रारभ्यते तत्र पूर्वं नेत्राशनिरसनिर्माणमाह--अभ्रमित्यादि--अभ्रमभ्रकभस्म, ताम्रभस्म, लौहभस्म, स्वर्णमाक्षिकभस्म, रसाञ्जन—दार्वीक्वाथकृत ग्राह्य तद्यथा—

"दार्वीक्वाथसमं क्षीरं पादं पक्त्वा यदा घनम् ।
तदा रसाञ्जन ख्यात नेत्रयो परमं हितम् ॥"

पातनायन्त्रशुद्ध नवनीतगन्धकञ्चेति प्रत्येक पलप्रमाण समादाय सर्वमेकत्र खल्वे श्लक्ष्ण पिष्ट्वा त्रिफलाक्वाथेन, भृङ्गराजस्वरसेन च पृथक् २ सप्तधा भावयेत् । ततश्च पिप्पलीमूलचूर्णं, मधुयष्टिकाचूर्णं, बृहदेलाबीजचूर्णं, पुनर्नवाचूर्णं, दारुहरिद्राचूर्णं, पाठाचूर्णं भृङ्गराजचूर्णं, शठी-कर्चूरचूर्णं, वचाचूर्णम्, उत्पल-नीलोत्पलचूर्णं, चन्दन-रक्तचन्दनचूर्णम्, एतेषां प्रत्येक वस्त्रसारित चूर्णं माषकैकमित निक्षिप्य सर्वं लौहखल्वे निक्षिप्य लौहदण्डेन मर्दन कृत्वा संशोष्य च काचपात्रे स्थापयेत् । अथ नेत्राशनिरस प्रत्यहं द्विरक्तित प्रारभ्य यथाग्निबल माषकैकमितो घृतेन मधुना च सह विलोड्य सुखोष्णोदकानुपानेन सेवित समस्तनेत्ररोगान् विनिहन्ति । तथाऽय रस सरक्ते नेत्रे ( लालिमायुक्ते ), रक्तपित्ते, रक्तस्रुतौ, चक्षुष प्रत्यहं जलादिकस्रावे, नक्तान्ध्ये, तिमिरे, काचरोगे, नीलिकारोगे, पटले, नेत्रार्बुदे, नेत्राभिष्यन्दे, अधिमन्थे, चिरन्तनपिष्टरोगे, वातपित्तकफोत्थेषु सर्वेषु नेत्ररोगेषु च हितकर ।

गन्धकस्य पातनायन्त्रशोधनविधि र्यथा—

स्थाल्या दुग्धं विनिक्षिप्य मुखे वस्त्रं निबध्य च। गन्धकं तत्र निक्षिप्य चूर्णित सिकताकृतिम् ॥१॥
छादयेत् पृथुदीर्घेण खर्परेणैव गन्धकम्। ज्वालयेत् खर्परस्योद्र्ध्वं वनच्छाणैस्तथोत्पलै ॥२
दुग्धे निपतितो गन्धो गलित परिशुध्यति। शतवार कृतश्चैव निर्गन्धो जायते ध्रुवम् ॥३॥

अथाधिमन्थलक्षणम्—

उत्पाट्यत इवात्यर्थं नेत्रं निर्मथ्यते तथा। शिरसोऽर्धश्च त विद्यादधिमन्थं स्व लक्षणे ॥१-८॥

नयनामृतलौहम्—

**त्रिकटु त्रिफला भृङ्गी शटी रास्ना महौषधम् ।**
**द्राक्षा नीलोत्पलश्चैव काकोली मधुयष्टिकम् ॥ ९ ॥**
**वाट्यालं केशराजञ्च कण्टकारीद्वयं पलम् ।**

यावन्ति च पलान्यस्य ... ॥ १० ॥

लौहाभ्रयोः पलं दत्त्वा वक्ष्यमाणेन भावयेत् ॥ १० ॥
त्रिफलायाश्च तोयेन भृङ्गराजरसेन वा ।
भावयित्वा वटी कार्य्या वदरास्थिनिभा शुभा ।
यावतो नेत्ररोगांश्च निहन्यान्नात्र संशयः ॥ ११ ॥

अथ नयनामृतलौहनिर्माणमाह त्रिकटु-इत्यादि—त्रिकटु-शुण्ठीचूर्ण, मरिच चूर्णं, पिप्पलीचूर्ण, त्रिफला-हरीतकीचूर्ण, विभीतकचूर्णम्, आमलकचूर्ण, शृङ्गी-कर्कटशृङ्गीचूर्ण, शटी-कर्चूरचूर्ण, रास्नाचूर्ण, महौषध-शुण्ठीचूर्ण, द्राक्षा, नीलोत्पलचूर्ण, (नीलोफरचूर्ण वा), काकोलीचूर्ण, मधुयष्टिकाचूर्ण, वाप्याल-श्वेतवलाचूर्ण, केशराजचूर्ण, कण्टकारीद्वयमिति-लघुकण्टकारीचूर्ण, बृहतीचूर्णञ्च, एतेषां प्रत्येकपलमितं तथा लौहभस्म (१पलम्), अभ्रकभस्म (१पल) समादाय सर्वं खल्वे निक्षिप्य श्लक्ष्णं सञ्चूर्ण्य च त्रिफलाक्वाथेन, भृङ्गराजरसेन च पृथक् २ सप्तधा भावयित्वा वदरास्थिप्रमाणाः (चतूरक्तिमिता) वटीश्चरेत् । इदं नयनामृतलौहं सर्वविधनेत्ररोगान्निहन्ति ॥९-११॥

क्षतशुक्लहरो गुग्गुलु —

अय सयष्टीत्रिफलाकणानां चूर्णानि तुल्यानि पुरेण नित्यम् ।
सर्पिर्मधुभ्यां सह भक्षितानि शुक्रानि काचानि निहन्ति शीघ्रम् ॥१२॥

अथ क्षतशुक्रहरगुग्गुलो र्निर्माणमाह-अय इत्यादि—अयो लोहभस्म, यष्टिकाचूर्णं, त्रिफला-हरीतकीचूर्ण, विभीतकचूर्णम्, आमलकचूर्णं, कणा पिप्पलीचूर्णम्, एतेषां प्रत्येकं तोलकमितं तथा शुद्धगुग्गुलुश्च सर्वचूर्णसमं (६तो०) समादाय सर्वमेकत्र खल्वे पिष्ट्वा काचपात्रे स्थापयेत् । अयं गुग्गुलु प्रत्यहं माषकमितं सर्पिर्मधुभ्यां सह सेवितं शुक्रानि, काचरोगाणि च शीघ्रं निहन्ति ॥ १२ ॥

तिमिरहरलौहम्—

त्रिफलापद्मयष्ट्याह्व-युक्तं सायं निषेवितम् ।
लौहं तिमिरकं हन्ति सुधांशुस्तिमिरं यथा ॥ १३ ॥

( इति नेत्ररोग-चिकित्सा । )

अथ तिमिरहरलौहनिर्माणमाह त्रिफलेत्यादि—त्रिफला-हरीतकीचूर्ण, विभीतकचूर्णम्, आमलकचूर्णं, पद्म-नीलोत्पलचूर्णं, मधुयष्टिकाचूर्णम्, एतेषां प्रत्येकं तोल-

कैकमितं तथा लोहभस्म च सर्वसम (५तो०) समादाय सर्वं खल्वे विमर्द्य यथाग्निबल पञ्चरक्तित प्रारभ्य माषकमितं प्रत्यह गोघृतेन मधुना च सह सेवितं तिमिरक हन्ति ॥ १२ ॥

अथ नेत्ररोगे पथ्यापथ्यविमर्श --

वार्ताककर्कोटककारवेल्ल नवीनमोचं नवमूलकञ्च ।
पुनर्नवा मार्कवकाकमाची पत्तूरशाकानि कुमारिका च ॥ १ ॥
सेको मनोवृत्तिरथाग्निपूजा मुद्गा यवा लोहितशालयश्च ।
लावो मयूरो वनकुक्कुटश्च कूर्म कुलिङ्गोऽथ कपिञ्जलश्च ॥ २ ॥
विजानता पथ्यमिदं प्रयुक्तं यथामलं दोषचय निहन्ति ।
आश्चोतन लङ्घनमञ्जनञ्च स्वेदो विरेक प्रतिसारणञ्च ॥
प्रपूरण नस्यमसृग्विमोक्ष शस्त्रक्रिया लेपनमाज्यपानम् ॥ ३ ॥
द्राक्षा च कुस्तुम्बुरु माणिमन्थो लोध्र वरा क्षौद्रमुपानहञ्च ।
नारीपयश्चन्दनमिन्दुखण्ड तिक्तानि सर्वाणि लघूनि चापि ॥ ४ ॥
शालितण्डुलगोधूममुद्गसैन्धवगोघृतम् । गोपयश्च सिता क्षौद्र पथ्य नेत्रगदे स्मृतम् ॥५॥

इति पथ्यानि ।

अथापथ्यानि--

क्रोध शुच मैथुनमश्रुवायुविण्मूत्रनिद्रावमिवेगरोधान् ।
सूक्ष्मेक्षण दन्तविघर्षणञ्च स्नान निशाभोजनमातपञ्च ॥ १ ॥
प्रजल्पन छर्दनमम्बुपान मधूकपुष्प दधि पत्रशाकम् ।
कालिङ्गपिण्याकविरुढकानि मत्स्यं सुरा मासमजाङ्गलञ्च ॥ २ ॥
ताम्बूलमम्ल लवणं विदाहि तीक्ष्णं कटूष्ण गुरु चान्नपानम् ।
नरो न सेवेत हिताभिलाषी सर्वेषु रोगेषु दृगाश्रयेषु ॥ ३ ॥
सर्वं शाकमचक्षुष्य चक्षुष्य शाकपञ्चकम्।जीवन्ती वास्तुमत्स्याक्षी मेघनाद पुनर्नवा॥४॥
माषारनालकटुतैलजलावगाहक्षुद्राक्षुरैश्च सुरतै र्निशि जागरैश्च ।
शाकाम्लमत्स्यदधिफाणितवेसवारैश्चक्षु क्षय व्रजति सूर्यविलोकनाच्च॥५॥

इत्यपथ्यानि ।

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृताया गूढार्थसन्दीपिकाव्याख्याया नेत्ररोगचिकित्सा ।

## अथ शिरोरोग-चिकित्सा ।

रसचन्द्रिका वटी—

त्रैलोक्यविजयाबीजं बीजमुन्मत्तकस्य च ।
कण्टकारीबीजकञ्च इज्जलं बीजमेव च ॥ १ ॥
बीजञ्च वृद्धदारस्य समौ गन्धकपारदौ ।
आर्द्रकैर्वटिका कार्य्या कलायपरिमाणतः ॥ २ ॥
एषा तोयानुपानेन प्रात खाद्या हिताशिना ।
चिरज सर्वजञ्चैव शिरोरोग सुदारुणम् ॥३॥
आमवात श्लेष्मरोग मन्यास्तम्भं गलग्रहम् ।
ग्रहणीं श्लीपद हन्ति ह्यन्त्रवृद्धिं भगन्दरम् ॥ ४ ॥
कामला शोथपाण्डुत्व पीनसार्शोगुदामयान् ।
वासुदेवेन कथिता वटिका रसचन्द्रिका ॥ ५ ॥

शिर सश्रितकर्णनासानेत्ररोगाणा चिकित्सामभिधाय सम्प्रति तेषामाश्रयभूतशिरोरोगाणा चिकित्सा प्रारभ्यते तत्र पूर्वं रसचन्द्रिकावटीनिर्माणमाह त्रैलोक्येत्यादि— शुद्ध त्रैलोक्यविजयाबीजचूर्णं, ( भाङ्गचूर्णमित्यर्थ ), उन्मत्तकस्य-धुस्तूरस्य शुद्धबीजचूर्णं, कण्टकार्या बीजचूर्णम्, इज्जल बीज-समुद्रफलचूर्णं, वृद्धदारस्य शुद्धबीजचूर्णं, शुद्धगन्धक , शुद्धपारदञ्च, एतेषा प्रत्येक सम ममादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य श्लक्ष्ण विचूर्ण्यार्द्रकस्वरसेन सप्तधा भावयित्वा कलायपरिमाणा (५ रक्तिमिता ) वटीश्चरेत् । इय वटी प्रत्यह जलानुपानेन प्रात सेविता चिरकालीन सर्वदोषोत्थ च शिरोरोगम्, आमवात, श्लेष्मविकार, मन्यास्तम्भ, गलग्रह, ग्रहणीं, श्लीपदम्, अन्त्रवृद्धिं, भगन्दर, कामला, शोथ, पाण्डुरोग, पीनसम्, अर्शोरोग, गुदजरोग, यथायथानुपानैर्जयेत् । इय रसचन्द्रिका वटिका श्रीवासुदेवेन कथिता ॥ १-५ ॥

शिरोवज्ररस —

पलं सूत पलं गन्ध पलं लौह पलं रवेः ।
गुग्गुलो. पलचत्वारि तदर्द्धं त्रिफलारजः ॥ ६ ॥
यष्टीमधु कणा शुण्ठी गोक्षुरं क्रिमिनाशनम् ।

तोलक दशमूलञ्च प्रत्येकं परिकल्पयेत् ॥ ७ ॥
क्वाथेन दशमूल्याश्च यथास्वं परिभावयेत् ।
घृतयोगेन कर्त्तव्या माषैकप्रमिता वटी ॥ ८ ॥
छागीदुग्धेन वा सेव्या मधुना पयसाऽथवा ।
वातिकीं पैत्तिकीञ्चैव श्लैष्मिकीं सान्निपातिकीम् ॥ ९ ॥
शिरोऽर्त्ति नाशयत्याशु वज्रं मुक्तमिवासुरम् ।
शिरोवज्ररसो नाम चन्द्रनाथेन भाषितः ॥ १० ॥

अथ शिरोवज्ररसनिर्माणमाह पलमित्यादि—सूतं-शुद्धपारदं १पल, शुद्धगन्धकं १पल, लौहभस्म १पल, रवेस्ताम्रभस्मनर्धेक पल, शुद्धगुग्गुलोश्चत्वारि पलानि, मिलित त्रिफलाचूर्णं गुग्गुलोरर्द्धभागमित (२प०), यष्टीमधु-मधुयष्टिकाचूर्णं १तो०, कणाचूर्णं १तो०, शुण्ठीचूर्णं १तो०, गोक्षुरचूर्णं १तो०, क्रिमिनाशन-विडङ्गचूर्णं १तो०, दशमूलद्रव्याणां च पृथक्२ तोलकैकमितं चूर्णं समादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य श्लक्ष्ण पिष्ट्वा च दशमूलद्रव्याणा क्वाथेन सप्तधा भावयित्वा दृढ विमर्द्य च स्वल्प गोघृतं निक्षिप्य विमर्द्य माषकैकप्रमिता वटीश्चरेत् । इयं वटी प्रत्यहं छागीदुग्धानुपानेन, मधुना, पयसा सह वा सेविता वातिकीं, पैत्तिकीं, श्लैष्मिकीं, सान्निपातिकीम्वा शिरोऽर्ति शीघ्र विनिहन्ति । अथ शिरोवज्रनामकरसश्चन्द्रनाथेन प्रोक्त ॥ ९-१० ॥

चन्द्रकान्तरस —

मृतसूताभ्रकं तीक्ष्णं ताम्रं गन्धं समं समम् ।
स्नुहीक्षीरैर्दिनं मर्द्यं ततस्तु माषमात्रकम् ॥ ११ ॥
मधुना मर्दितं सेव्यं लौहपात्रे दिने दिने ।
सूर्य्यावर्त्तादिकान् तूर्णं शिरोरोगान् विनाशयेत् ॥ १२ ॥

अथ चन्द्रकान्तरसनिर्माणमाह मृतेत्यादि—मृतसूतं-रससिन्दूरम् , अभ्रकभस्म, तीक्ष्णलौहभस्म, ताम्रभस्म, शुद्धगन्धकं च प्रत्येकं समं सममादाय खल्वे श्लक्ष्णं विमर्द्य शुद्धस्नुहीदुग्धेनाप्लाव्य दिनैकं दृढं निरन्तरं विमर्द्य संशोष्य च काचपात्रे स्थापयेत् । अथ रस प्रत्यह द्विरक्तित प्रारभ्य यथाग्निबलं माषकमितो लौहखल्वे मधुना सह विमर्द्य सेवित सूर्यावर्त्तादिकान् शिरोरोगान्निहन्ति ॥ ११-१२ ॥

महालक्ष्मीविलास —

लौहमभ्रं विषं मुस्तं फलत्रयकटुत्रयम् ।
धुस्तूरं वृद्धदारञ्च बीजमिन्द्राशनस्य च ॥ १३ ॥
द्वयं गोक्षुरकञ्चैव पिप्पलीमूलमेव च ।
एतत् सर्वं समं ग्राह्यं रसे धुस्तूरकस्य च ॥ १४ ॥
भावयित्वा वटी कार्य्या द्विगुञ्जाफलमानतः ।
महालक्ष्मीविलासोऽयं सन्निपातनिवारकः ॥ १५ ॥

( इति शिरोरोग-चिकित्सा )

अथ महालक्ष्मीविलासरसनिर्माणमाह लौहमित्यादि—लौहभस्म, अभ्रकभस्म, विषं-शुद्धवत्सनाभचूर्णं, शुद्धमुस्तकचूर्णं, फलत्रय-हरीतकीचूर्णं, विभीतकचूर्णम्, आमलकचूर्णं, कटुत्रय-शुण्ठीचूर्णं, मरिचचूर्णं, पिप्पलीचूर्णं, शुद्धधुस्तूरबीजचूर्णं, शुद्धवृद्धदारकबीजचूर्णम्, इन्द्राशनस्य-भङ्गाया शुद्धबीजचूर्णं, द्वयं गोक्षुरकमिति स्वल्पवृहत्पत्रभेदात् पृथक्२ द्विविधं गोक्षुरबीजचूर्णं ग्राह्यम्, पिप्पलीमूलचूर्णञ्च एतेषां प्रत्येकं समं सममादाय खल्वे श्लक्ष्णं सञ्चूर्ण्य धुस्तूरकस्य स्वरसेन क्वाथेन वा सप्तधा भावयित्वा द्विगुञ्जापरिमिता वटीश्चरेत् । अयं महालक्ष्मीविलासो रसः प्रत्यहं मधुना सह सेवितः साम्निपातिकादिशिरोरोगान्निहन्ति ॥ १३–१५ ॥

अथ शिरोरोगे पथ्यापथ्यविवेक —

आमिषं जाङ्गलं पथ्यं तत्र शाल्यादयोऽपि च ।
मुद्गान् माषान् कुलत्थांश्च खादेद्वा निशि केवलान् ॥ १ ॥
कटुकोष्णान् ससर्पिष्कानुष्णं क्षीरं पिबेत्तथा ।
स्वेदो नस्यं धूमपानं विरेको लेपः सेको लङ्घनं शीर्षबस्तिः ॥ २ ॥
रक्तोन्मुक्तिर्वन्हिकर्मोपनाहो जीर्णं सर्पिः शालयः षष्टिकाश्च ।
यूषो दुग्धं धन्वमासं पटोलं शिग्रुर्द्राक्षावास्तुकं कारवेल्लम् ॥ ३ ॥
आम्रं धात्री दाडिमं मातुलुङ्गं तैलं तक्रं काञ्जिकं नारिकेलम् ।
पथ्या कुष्ठं भृङ्गराजः कुमारी मुस्तोशीरं चन्द्रिकागन्धसारः ॥ ४ ॥
कर्पूरश्च ख्यातिमानेषवर्गः सेव्यो मर्त्यैः शीर्षरोगे यथास्वम् ॥ ५ ॥

इति पथ्यानि ।

अथापथ्यानि ।

क्षवजम्भामूत्रवाष्पनिद्राविड्वेगभञ्जनम् । दुग्धनीरं विरुद्धान्नं विरुद्धजलमज्जनम् ।
दन्तकाष्ठं दिवानिद्रां शिरोरोगी परित्यजेत् । इत्यपथ्यानि ।

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृताया
गूढार्थसन्दीपिकाव्याख्याया शिरोरोगचिकित्सा ।

---

## अथ प्रदररोग-चिकित्सा ।

प्रदरान्तकलौहम्—

हरितालं लौहताम्रे वङ्गमभ्रं वराटिका ।
त्रिकटु त्रिफला चित्रं विडङ्गं पटुपञ्चकम् ॥ १ ॥
चविका पिप्पली शङ्खं वचा हवुषपाकलम् ।
शटी पाठा देवदारु एला च वृद्धदारकम् ॥ २ ॥
एतानि समभागानि सञ्चूर्ण्य वटिकां कुरु ।
शर्करामधुसंयुक्तां घृतेन भक्षयेत् पुनः ॥ ३ ॥
रक्तं श्वेतं हन्ति पीतं नीलं प्रदरदुस्तरम् ।
कुक्षिशूलं कटीशूलं योनिशूलञ्च सर्वजम् ॥ ४ ॥
मन्दाग्निमरुचिं पाण्डुं कृच्छ्रश्वासञ्च कासनुत् ।
आयुःपुष्टिकरं बल्यं रजोवर्णप्रसादनम् ॥ ५ ॥

स्त्रीपुंसां साधारणविकाराणां तथा पुम्प्रतिनियतस्योपदंशादेश्चिकित्सा प्रोक्ता, सम्प्रति स्त्रीनियतरोगाणां चिकित्सा प्रारभ्यते, तत्र च योनिव्यापद्विशेषेऽप्यार्त्तवप्रवृत्तिसम्भवात् प्रथमं दुष्टार्त्तवप्रवृत्तिस्वरूपस्य प्रदरस्य चिकित्सा प्रोच्यते, तत्रादौ प्रदरान्तकलौहनिर्माणमाह हरितालमित्यादि—शुद्धहरितालकं, लौहभस्म, ताम्रभस्म, वङ्गभस्म, अभ्रकभस्म, वराटिकाभस्म, त्रिकटुचूर्णं, त्रिफलाचूर्णं, चित्रकचूर्णं, विडङ्गचूर्णं, पटुपञ्चकं—सैन्धवं, सौवर्च्चलं, सामुद्रं, विडम्, औद्भिदलवणञ्च, चविकाचूर्णं, पिप्पलीचूर्णं, शङ्खभस्म, वचाचूर्णं, हवुषाचूर्णं, पाकल—कुष्ठचूर्णं, शटी-कर्च्चूरचूर्णं, पाठाचूर्णं, देवदारूचूर्णं, सूक्ष्मैलाबीजचूर्णं, वृद्धदारकचूर्णञ्च एतेषां प्रत्येकं समं समं

दाय खल्वे सर्वमेकीकृत्य श्लक्ष्णं पिष्ट्वा जलेन सह विमर्द्य द्विरक्तिमिता वटीश्चरेत्। इद प्रदरान्तकलौह प्रत्यह द्विरक्तितो यथाग्निवलं माषकमित शर्करामधुभ्या, शर्करा-घृताभ्या सह वा सेवित रक्त, श्वेत, पीत, नीलञ्च प्रदर, तथा कुक्षिशूल, कटिशूल, योनिशूल, मन्दाग्निम्, अरुचि, पाण्डुरोगं, कृच्छ्र श्वास, कासञ्च यथानुपानैर्विनाशय-ति। इद लौह प्रत्यहं सेवनेन आयुर्वर्द्धयति, देहस्य पुष्टिं करोति, बल वर्द्धयति, रजोवर्णं यथारूप करोति।

शुद्धार्त्तवस्य लक्षण यथा—

शशास्रृक्प्रतिमं यत्तु यद्वा लाक्षारसोपमम्।
तदार्त्तवं प्रशसन्ति यद्वासो न विरञ्जयेत्॥ इति॥ १–५॥

प्रदरान्तको रस —

**शुद्धसूत तथा गन्धः गन्धतुल्यञ्च रूप्यकम्।**
**खर्परञ्च वराटञ्च शाणमानं पृथक् पृथक्॥ ६॥**
**तोलकत्रितयञ्चैव लौहचूर्णं क्षिपेत् सुधीः।**
**दिनैक कन्यकानीरः मर्दयेच्च भिषग्वरः।**
**असाध्य प्रदर हन्ति भक्षणात् नात्र संशयः॥ ७॥**

अथ प्रदरान्तकरसनिर्माणमाह शुद्धेत्यादि—शुद्धसूतं, शुद्धगन्धकं, रूप्यकं–रजतभस्म, खर्परभस्म, वराटभस्म च एतेषा प्रत्येकं शाणमितं भाग "चतुर्भिर्माषकैः शाण" तथा लौहचूर्ण–लौहभस्म ३तोलकमितञ्च समादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मिश्र्य घृतकुमारीस्वरसेन सम्यगाप्लाव्य दिनैक निरन्तरं दृढं विमर्द्य संशोष्य च काचपात्रे स्थापयेत्। अथ रस प्रत्यहं द्विरक्तिमितो यथादोषानुपानै सेवित सकलं दारुणमपि प्रदर विनिहन्ति॥ ६–७॥

मधुकादिचूर्णम्—

**यष्टीमधुनिशाचूर्णं तोलकेन समन्वितम्।**
**वङ्गभस्मार्कपत्रस्य रसेनाप्लाव्य पीयते।**
**प्रातः प्रातः प्रतिदिन प्रदरं हन्ति दुस्तरम्॥ ८॥**

अथ मधुकादिचूर्णनिर्माणमाह यष्टीत्यादि—यष्टिमधुहरिद्रयोर्मिलितेन तोलकमितचूर्णेन समन्वितं रक्तिमितं द्विरक्तिमितम्वा वङ्गभस्म प्रत्यहमर्कपत्रस्वरसेन सह

प्रभाते नियतकालपर्यन्त सेवित दुस्तरमपि प्रदर विनिहन्ति ॥ ८ ॥

पुष्करलेह —

रसाञ्जनं शुभा शृङ्गी चित्रकं मधुयष्टिकम् ।
धान्य-तालीशगायत्री द्विजीरं त्रिवृता बला ॥ ९ ॥
दन्तीत्र्यूषणकञ्चापि पलार्द्धञ्च शिलाजतु ।
चतुःपलं माक्षिकस्यामलस्य च क्षिपेत् ततः ॥ १० ॥
जातीकोषलवङ्गञ्च कक्कोलं मृद्वीकाऽपि च ।
चातुर्जातकखर्जुरं कर्षमेकं पृथक् पृथक् ॥ ११ ॥
प्रक्षिप्य मर्दयित्वा च स्निग्धभाण्डे निधापयेत् ।
एष लेहवरः श्रीदः सर्वरोगकुलान्तकः ।
यत्र यत्र प्रयोज्यः स्यात् तत्तदामयनाशनः ॥ १२ ॥
अनुपानं प्रयोक्तव्यं देशकालानुसारतः ।
सर्वोपद्रवसंयुक्तं प्रदरं सर्वसम्भवम् ॥ १३ ॥
द्वन्द्वजं चिरजञ्चैव रक्तपित्तं विनाशयेत् ।
कासश्वासाम्लपित्तञ्च क्षयरोगमथापि वा ॥ १४ ॥
सर्वरोगप्रशमनो बलवर्णाग्निवर्द्धनः ।
पुष्कराख्यो लेहवरः सर्वत्रैवोपयुज्यते ॥ १५ ॥

अथ पुष्करलेहनिर्माणमाह रसाञ्जनमित्यादि—रसाञ्जन-दार्व्यादिपरिभाषयोक्त रसगर्भं रसाञ्जनम्वा, शुभा-वंशलोचनचूर्णं, शृङ्गी-कर्कटशृङ्गीचूर्णं, चित्रकचूर्णं, मधुयष्टिकाचूर्णं, धान्यचूर्णं, तालीशपत्रचूर्णं, गायत्री-खदिरत्वचश्चूर्णं खदिरसत्वम्वा, द्विजीर-श्वेतजीरकचूर्णं, कृष्णजीरकचूर्णं, त्रिवृन्मूलचूर्णं, बलाचूर्णं, दन्तीमूलचूर्णं, त्र्यूषणक-त्रिकटुचूर्णं, शुद्धशिलाजतु च, एतेषां प्रत्येकमर्द्धपलमितं, तथा माक्षिकस्य-मधुनश्चत्वारि पलानि, आमलकचूर्णस्य च चत्वारि पलानि, तथा जातीकोषचूर्णं, ( जावित्रीचूर्णं ), लवङ्गचूर्णं, 'कक्कोलं-शीतलचीनीति प्रसिद्धं मृद्वीका-द्राक्षा, चतुर्जातकं—सूक्ष्मैलावीजचूर्णं, दारुसिताचूर्णं, तेजपत्रचूर्णं, नागकेशरचूर्णं, खर्जूर-फलमज्जाचूर्णञ्च, एतेषां पृथक् २ कर्षमितं भागं समादाय सर्वं खल्वे सम्मेल्य दृढं विमर्द्य च घृतेन स्निग्धे मृण्मये भाण्डे काचपात्रे वा स्थापयेत् । अयं सर्व-लेहेषु श्रेष्ठ पुष्करलेह' प्रत्यहं यथाग्निबल तोलकमितो यथादोषव्याध्यनुपान-

पूर्वकं सेवित सर्वोपद्रवसंयुक्तप्रदरं, द्वन्द्वज सर्वदोजम्वा प्रदर, चिरकालीनं रक्तपित्त, कासं, श्वासम्, अम्लपित्तं, क्षयरोग च विनिहन्ति । तथाऽय लेहो देहस्य शोभा, वलं, वर्णं, पाचकशक्तिं च वर्द्धयति । "पलार्द्धञ्च शिलाजतु" इत्यत्र "पलार्द्धम् पृथक् २" इति पाठान्तरम् ॥९–१५॥

धात्र्यादिचूर्णम्—

धात्री च पथ्या च रसाञ्जनञ्च विचूर्ण्य सर्वं सजलं निपीतम् ।
अनन्तरक्तस्रवमुग्रवेगं निवारयेत् सेतुरिवाम्बुवेगम् ॥ १६ ॥
रक्तपित्तहर सर्वं प्रदरे नूतने तथा ।
रक्तातीसारकथित सर्वमत्र प्रयोजयेत् ॥१७॥

( इति प्रदररोग चिकित्सा । )

अथ धात्र्यादिचूर्णनिर्माणमाह धात्रीत्यादि—धात्रीचूर्णं, पथ्या–हरीतकीचूर्णं रसाञ्जनञ्च, एतेषा प्रत्येकं सम समं खल्वे निक्षिप्य श्लक्ष्णं विमर्द्य च काचपात्रे स्थापयेत् । इदं चूर्णमर्द्धतोलकमित प्रत्यह मधुना सह विलोडय शीतलजलानुपानेन सह सेवितं मात्रयाधिक स्रवद्रक्त तथा ऋतुदिनाधिकदिनपर्यन्त स्रवदुग्रं रक्तमम्बुवेगं सेतुरिव निवारयेत् । प्रारम्भिकरक्तप्रदरप्रशान्त्यर्थं रक्तपित्तहरं सर्वं चिकित्सादिकं कर्म विधेयम्, तथा रक्तातिसारोक्तं चिकित्सादिकमपि रक्तप्रदरे कर्तव्यम् ॥१६–१७॥

अथ प्रदरे पथ्यापथ्यम्—

यत्पथ्यं यदपथ्यञ्च रक्तपित्तेषु कीर्तितम् । प्रदरेऽपि यथादोष तत्तु नारी रुजि त्यजेत् ॥१॥

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृताया गूढार्थसन्दीपिकाव्याख्याया प्रदररोगचिकित्सा ।

## अथ योनिव्यापच्चिकित्सा ।

वातहरचिकित्साऽतिदेश क्षालनादौ त्रिफला च—

समस्तं वातजित् कर्म योनिव्यापत्सु शस्यते ।
क्षालनस्वेदलेपांश्च वरानीरेण कारयेत् ॥ १ ॥

स्वाधिकारानुवृत्ते प्रदुष्टार्तवकार्य्यत्वाच्च प्रदरचिकित्सानन्तरं योनिव्यापच्चि-

कित्सा प्रारभ्यते तत्र साधारणचिकित्सार्थं वातहरचिकित्सातिदेश क्षालनादौ त्रिफला च—योनिव्यापत्सु समस्तं वातप्रशामकं कर्म कर्तव्यम् । तथा त्रिफलाक्वाथेन योन्या प्रक्षालन, योन्या स्वेदनं तथा त्रिफलाकल्केन योन्या प्रलेपश्च कर्तव्य ॥१॥

पथ्यादिक्षालनम्—

**प्रक्षालयेद्भगं नित्यं पथ्यामलकवल्कलैः ।**
**वृद्धाऽपि कामिनी नित्य बालावत् कुरुते रतिम् ॥ २ ॥**

( इति योनिव्यापच्चिकित्सा )

अथ पथ्यादिक्षालनमाह प्रक्षालयेदित्यादि—

सर्वदा भगस्यार्म हरीतक्यामलकाना क्वाथैः प्रक्षालनेन वृद्धापि बालावत् रतिं कर्तुं शक्नोति २

अथ सक्षेपेण योनिव्याद्रोगाणां निदानपूर्वकनामानि चिकित्सा च लिख्यये यथा—

विंशति व्यापदो योनौ निर्दिष्टा रोगसग्रहे । मिथ्याचारेण ता स्त्रीणा प्रदुष्टेनार्तवेन च ॥१॥
जायन्ते बीजदोषाच्च दैवाच्च शृणु ता पृथक् । सा फेनिलमुदावर्ता रज कृच्छ्रेण मुञ्चति॥२॥
वन्ध्या नष्टार्तवां विद्याद्विप्लुता नित्यवेदनाम्।परिप्लुतायां भवति ग्राम्य धर्मेण रुग्भृशम्॥३॥
वातला कर्कशा स्तब्धा शूलनिस्तोदपीडिता । चतसृष्वपि चाद्यासु भवन्त्यनिलवेदना ॥४॥
सदाह क्षीयते रक्त यस्या सा लोहितक्षया । सवातमुद्गिरेद्बीज वामिनी रजसा युतम् ॥५॥
प्रस्रंसिनी स्रंसते च क्षोभिता दुष्प्रजायिनी। स्थित स्थित हन्ति गर्भं पुत्रघ्नी रक्तसक्षयात्॥६॥
अत्यर्थं पित्तला योनि र्दाहपाकज्वरान्विता । चतसृष्वपि चाद्यासु पित्तलिङ्गोच्छ्रयो भवेत्॥७॥
अत्यानन्दा न सन्तोष ग्राम्यधर्मेण गच्छति। कर्णिन्या कर्णिका योनौ श्लेष्मासृग्भ्यां च जायते८
मैथुनेऽचरणात् पूर्वं पुरुषादतिरिच्यते । बहुशश्चातिचरणा तयो र्बीज न विन्दति ॥ ९ ॥

श्लेष्मजा पिच्छिला योनि कण्डूग्रस्तातिशीतला ।
चतसृष्वपि चाद्यासु श्लेष्मलिङ्गोच्छ्रयो भवेत् ॥ १० ॥
अनार्तवास्तनी षण्डी खरस्पर्शा च मैथुने ।
अतिकामगृहीतायास्तरुण्यास्त्वण्डली भवेत् ॥ ११ ॥

विवृता च महायोनि सूचिवक्त्रेति संवृता । सर्वलिङ्गसमुत्थाना सर्वदोषप्रकोपजा ॥१२॥
चतसृष्वपि चाद्यासु सर्वलिङ्गोच्छ्रयो भवेत्। पञ्चासाध्या भवन्तीह योनयःसर्वदोषजा.॥१॥

अथ योनिव्यापच्चिकित्सा—

योनिव्यापत्सु भूयिष्ठं शस्यते कर्म वातजित्।वस्त्यभ्यङ्गपरीषेकप्रलेपा पिचुधारणम् ॥१॥

वचोपकुञ्चिकाजाजीकृष्णावृषकसैन्धवम् । अजमोदायवक्षारचित्रकं शर्करान्वितम् ॥२

पिष्ट्वा प्रसन्नयाऽऽलोड्य खादेत्तत् घृतभर्जितम्।योनिव्यापत्तिहृद्रोगगुल्मार्शो विनिवृत्तये ॥ ३

गुडूचीत्रिफलादन्तीक्वाथैश्च परिषेचनम् ॥४॥

नतवार्त्ताकिनीकुष्ठसैन्धवामरदारुभिः । तैलात् प्रसाधिताद्धार्यः पिचुर्योनौ रुजापहः ॥१॥

पित्तलयोने क्रियोपदेश —

पित्तलानान्तु योनीनां सेकाभ्यङ्गपिचुक्रिया ।शीता पित्तहरा कार्या स्नेहनार्थं घृतानि च ॥

कफदुष्टयोने क्रियोपदेश —

योन्या बलासदुष्टाया सर्वं रूक्षोष्णमौषधम् ।

तद्यथा—

पिप्पल्या मरिचैर्माषैः शताह्वाकुष्ठसैन्धवैः ।

वर्त्तिस्तुल्या प्रदेशिन्या धार्या योनिविशोधिनी ॥ १ ॥

अथ वामिन्यादे क्रियोपदेश —

वामिन्या पूतियोन्याश्च कर्त्तव्य स्वेदनोऽपि वा।क्रम कार्यस्तत स्नेहपिचुभिस्तर्पणं भवेत् १॥

अथ विप्लुतापह शल्लक्यादिस्नेह —

शल्लकीजिङ्गिनीजम्बूधवत्वक् पञ्चपल्लवैः ।कषायैः साधित स्नेह पिचु स्याद्विप्लुतापह ॥१॥

अथ कर्णिनी–चिकित्सा—

कर्णिन्या वर्त्तिका कुष्ठपिप्पल्यर्काग्रसैन्धवैः ।वस्तमूत्रे कृता धार्या सर्वञ्च कफनुद्धितम्॥१॥

अथोदावृत्तादिचिकित्सा—

त्रैवृतं स्नेहन स्वेद उदावृत्तानिलार्त्तिषु । तदेव च महायोन्या स्रस्तायाञ्च विधीयते ॥१॥

अथ भिन्नयोनि–चिकित्सा—

शतपुष्पातैललेपात्तुवरीदलजात्तथा । पेटिका मूललेपेन योनिर्भिन्ना प्रशाम्यति ॥१॥

अथ प्रस्रंसिन्या योनेश्चिकित्सा—

मुषवीमूललेपेन प्रविष्टा तु बहिर्भवेत् । योनिर्मूषावसाभ्यक्ताग्नि स्रुता प्रविशेदपि ॥१॥

अथ योनेर्दृढीकरणोपाय —

वचा नीलोत्पलं कुष्ठं मरिचानि तथैव च ।अश्वगन्धा हरिद्रा च गाढीकरणमुत्तमम् ॥१॥

अथ योनेर्दुर्गन्धनाशनोपाय —

पञ्चपल्लवयष्ट्याह्वमालतीकुसुमैर्घृतम् ।रविपक्वमन्यथा वा योनिगन्धनिवारणम् ॥ १ ॥

नष्टार्तवप्रवृत्तिकरा योगा.—

आर्तवादर्शने नारी मत्स्यान् सेवेत नित्यश ।
काञ्जिकञ्च तिलान् माषानुदश्विञ्च तथा दधि ॥ १ ॥
पीत ज्योतिष्मतीपत्रराजिकोग्रासनं त्र्यहम् ।
शीतेन पयसा पिष्टं कुसुम जनयेद् ध्रुवम् ॥ २ ॥
सगुड श्यामतिलाना क्काथ प्रात सुशीलितो नार्या ।
जनयति कुसुमं सहसा गतमपि सुचिर निरातङ्कम् ॥ ३ ॥
तिलशेलुकारवीणा क्काथ पीत्वा च गतरजा महिला ।
सगुडं शिशिरं त्रिदिनाज्जनयति कुसुम न सन्देह ॥ ४ ॥
इक्ष्वाकुवीजदन्ती च पलागुड़मदनफलकिण्वयष्टयाह्वै ।
सस्नुक्क्षीरै र्वर्ति र्योनिगता कुसुमसञ्जननी ॥ ५ ॥
सकाञ्जिकं जवापुष्पं भृष्टं ज्योतिष्मती दलम् । कन्यापिष्टञ्च सम्प्राश्य वनिता त्वार्त्तवं लभेत् ६

अथ रज प्रवर्त्तिनीवटी—

कन्यासारञ्च काशीस रामठ टङ्कणं तथा । समादाय सम सर्वं पेषयेत् कन्यकाद्रवै. ॥१॥
निर्मापयेद्भिषग्वर्यो रक्तिद्वयमिता वटी । शीलितेयन्तु वटिका विनिहन्ति सुदारुणाम्॥२॥
रजोरोधव्यथा कष्टरज.स्रावव्यथा तथा । रज प्रवर्तिनी ह्येषा नीलकण्ठेन भाषिता ॥३॥ इति

अथ कुमारिका वटी—

एलीयकञ्च काशीस फणिफेनञ्च वङ्गकम् ।
सुरप्रियश्चेति ( शीतलचीनी ) सम जलेन परिपेषयेत् ॥ १ ॥
वटिका कारयेद्वैद्यो रक्तिद्वितयसम्मिता । अनुपाने च दातव्य सलिलं त्वतिनिर्मलम् ॥ २
निषेवितेयं हन्त्याशु योनिशूलञ्च बाधकम् । जरायुशूल मक्कलशूलं चैवातिदारुणम् ॥
योनेश्च व्यापद सर्वा सर्वथा नेह 'शय ॥ ३ ॥

अथ गर्भधारणोपाया —

वला सिता सातिवला मधूकं वटस्य शृङ्गं गजकेशरञ्च ।
एतन् मधुक्षीरघृतैर्निपीय वन्ध्या सुपुत्रं नियत प्रसूते ॥ १ ॥
अश्वगन्धाकषायेण सिद्ध दुग्ध घृतान्वितम् । ऋतुस्नाताऽङ्गना प्रात पीत्वा गर्भं दधाति हि २

पुष्योद्धृत लक्ष्मणाया मूलं दुग्धेन कन्यया । पिष्ट पीत्वा ऋतु स्नाता गर्भं धत्ते न संशय ॥
कुरण्टमूल धातक्या कुसुमानि वटाङ्कुरा । नीलोत्पल पयोयुक्तमेतद्गर्भप्रद ध्रुवम् ॥४।
एकस्य मातुलुङ्गस्य बीजानि सकलान्यपि। ऋत्वन्ते दुग्धपिष्टानि पीत्वाऽऽप्नोत्यवला सुतम्॥५

अथ फलघृतम्—

मञ्जिष्ठा मधुक कुष्ठ त्रिफला शर्करा बला । मेदे पयस्या काकोली मूलञ्चैवाश्वगन्धजम् ॥१॥
अजमोदा हरिद्रे द्वे प्रियङ्गु कटुरोहिणी ।
उत्पल कुमुद द्राक्षा ( लाक्षेतिवा) काकोल्यौ चन्दनद्वयम् ॥ २ ॥
एतेषा कार्षिकैर्भागै घृतप्रस्थं विपाचयेत् । शतावरीरस क्षीर घृताद्देय चतुर्गुणम् ॥३॥
सर्पिरेतन्नर पीत्वा स्त्रीषु नित्य वृषायते। पुत्रान् सञ्जनयेन्नारी मेधाढ्यान् प्रियदर्शनान्॥४॥
या चैवास्थिरगर्भा स्याद्या च वा जनयेन्मृतम्। अल्पायुष वा जनयेद् या च कन्या प्रसूयते॥५॥
योनिदोषे रजोदोषे परिस्रावे च शस्यते । प्रजावर्द्धनमायुष्य सर्वग्रहनिवारणम् ॥६॥
नाम्ना फलघृत ह्येतदश्विभ्या परिकीर्तितम् । अनुक्त लक्ष्मणामूल क्षिपन्त्यत्र चिकित्सका ७॥
जीवद्वत्सैकवर्णाया घृतमत्र तु गृह्यते । आरण्यगोमयेनापि वह्निज्वाला प्रदीयते ॥ ८॥

अथ पुष्यानुगचूर्णम्—

पाठाजम्ब्वाम्रयोर्मध्य शिलाभेदं रसाञ्जनम्। अम्बष्ठकी मोचरस समङ्गा पद्मकेशरम्॥१॥
वाह्लीकातिविषामुस्तं विल्व लोध्र सगैरिकम्। कट्फल मरिच शुण्ठी मृद्वीका रक्तचन्दनम्॥२॥
कट्वङ्गवत्सकानन्ता धातकीमधुकार्जुनम्। पुष्येणोद्धृत्य तुल्यानि श्लक्ष्णचूर्णानि कारयेत्३॥
तानि क्षौद्रेण संयोज्य पाययेत्तण्डुलाम्बुना । असृग्दरातिसारेषु रक्त यच्चोपवेश्यते ॥४॥
दोषागन्तुकृता ये च वालाना ताश्च नाशयेत् । योनिदोष रजोदोष श्वेतं नीलं सपीतकम् ॥५॥
स्त्रीणा श्यावारुण यच्च तत्प्रसह्य निवर्त्तयेत् । चूर्णं पुष्यानुग नाम हितमात्रेयपूजितम् ।
अम्बष्ठा दक्षिणे ख्याता गृह्णन्त्यन्ये तु लक्ष्मणाम् ॥ ६ ॥

योनिगतविशेषदोषकारणादेव गर्भिणीना गर्भस्रावोऽत प्रसङ्गान्मासानुमासिकान् गर्भस्रावहरान्योगानाह यथा—

प्रथमे मासि गर्भे तु यदा भवति वेदना । चन्दनं शतपुत्री च शर्करा मदयन्तिका॥१॥
एतानि समभागानि पिष्ट्वा तण्डुलवारिणा। पाययेत् पयसाऽऽलोड्य गर्भिणीं मात्रया भिषक्॥२॥
तथा तिलान् पद्मकञ्च शालूकं शालितण्डुलान्। क्षीरेण पिष्ट्वा क्षीरेण सिताक्षौद्रान्वितेनच॥३॥
आलोड्य पाययेन्नारी तत सम्पद्यते शुभम्। तस्मिन् सुजीर्णे दातव्य भोजनं क्षीरसंयुतम् ४॥

अथ द्वितीयमासोपदेश —

द्वितीये मासि गर्भे तु यदा भवति वेदना । तदोत्पलस्य कत्कन्तु शृङ्गाटककशेरुकम् ॥५॥
तण्डुलोदकपिष्टन्तु पाययेत्तण्डुलाम्बुना । निवार्य गर्भशूलञ्च स्थिरं गर्भं करोति च॥६॥

अथ तृतीयमासोपदेश —

तृतीये क्षीरकाकोली काकोल्यामलकीफलम्।पिष्टमुष्णोदकेनतत् पाययेद्गर्भिणीं भिषक्॥७॥
शाल्यन्न पयसा जीर्णे भोजयेदनुगर्भिणीम् ।तथा पद्मोत्पल कुष्ठ शालूकञ्च समाशिकम्॥८॥
सितोदकेन पिष्ट्वा तु क्षीरेणालोड्य पाययेत् । तेन शूल निवर्त्तेत न गर्भो व्यथते ध्रुवम्॥९॥

अथ चतुर्थमासोपदेश —

चतुर्थे तु विधानज्ञ पाययेदिदमौषधम् । पिष्टोत्पलञ्च शालूक कण्टकारी त्रिकण्टकम्
यथाग्निमात्रया काले गर्भिणी पयसा सह ॥ १० ॥

अथ पञ्चममासोपदेश —

पञ्चमे मासि गर्भे तु यदा भवति वेदना।तत्र नीलोत्पल वीरा पिष्ट्वा क्षीरेण पाचनम् ॥
घृतक्षौद्रान्वित पीत्वा गर्भस्य च रुज हरेत् ॥ ११ ॥
तथा नीलोत्पल नारी काकोलीं समभागिकाम्।शीततोयेन पिष्ट्वा च क्षीरेणालोड्य पाययेत् ॥
अनेन विधिना गर्भ स्थिर स्याद्रुक्प्रशाम्यति ॥ १२ ॥

अथ षष्ठमासोपदेश —

षष्ठे मासि यदा गर्भे वेदना जायते तदा । मातुलुङ्गस्य बीजानि प्रियङ्गुचन्दनोत्पलम् ॥
क्षीरेणालोड्य पातव्यं गर्भशूलनिवारणम् ॥ १३ ॥
तथा पियालबीजानि (चिरौञ्जी) मृद्वीका लाजशक्तव ।
एतत् सुशीतल काले पीत्वा च सुखमश्नुते ॥ १४ ॥

अथ सप्तममासोपदेश —

सप्तमे शतपुत्रीञ्च मृणालसहिता पिवेत्।पिष्ट्वा क्षीरेण शूलार्त्ता गर्भिणी या सुखार्थिनी॥१५॥
कपित्थक्रमुकामूलं सलाज शर्करायुतम्।शीततोयेन सम्पिष्ट क्षीरेणालोड्य पाययेत् ॥
पीत्वा हन्त्यवला शीघ्र शूल गर्भसमुद्भवम् ॥ १६ ॥

अथाष्टममासोपदेश —

अष्टमे तु यदा मासि गर्भे भवति वेदना । तदा पिष्ट्वा तु धन्याकं पाययेत्तण्डुलाम्बुना ॥
शूल निवर्त्तते तेन गर्भ सन्धार्यते स्त्रिया ॥ १७ ॥
एवं पलाशस्य दलं सुपिष्टं सम्पीय तोयेन सुशीतलेन ।

अत्यन्तगौराष्टममासगर्भव्यथातुरा यान्ति सुखं तरुण्यः ॥ १८ ॥

अथ नवममासोपदेशः —

गर्भिण्या नवमे मासि यदा भवति वेदना । एरण्डमूलं काकोल्या पिष्ट्वा शीतोदकेन च ।

पीत्वा शूलाद्विमुच्येत तदा नारी न संशयः ॥ १९ ॥

तथा पलाशबीजञ्च सकाकोला कुरण्टकम् (झिण्टीमूलम्) ।

मद्येन वारिणा पिष्ट्वा गर्भशूलं व्यपोहति ॥ २० ॥

दशममासोपदेशः —

अथवा दशमे मासि वेदना जायते यदा । तदा नीलोत्पलं यष्टिमधुकं मुद्गसंयुतम् ॥ २१ ॥

समितं चाम्भसा पिष्ट्वा क्षीरेणालोड्य पाययेत् । दोषघ्नं नाशयेदेष शूलं गर्भसमुद्भवम् ॥ २२ ॥

एकादशमासोपदेशः —

तथा चैकादशे मासि गर्भे भवति वेदना । मधुकं पद्मकञ्चैव मृणालं नीलमुत्पलम् ॥ २३ ॥

शीततोयेन पिष्ट्वा तु क्षीरेणालोड्य पाययेत् । तेनैव वेदनार्ताव नाशमायाति सत्वरम् ॥ २४ ॥

क्षीरिकामुत्पलं कुष्ठं समङ्गामूलकं सिता । पिबेदेकादशे मासि गर्भिणी शूलशान्तये ॥ २५ ॥

द्वादशमासोपदेशः —

सिता विदारी काकोली तथा क्षीरविदारिका । गर्भिणी द्वादशे मासि पिबेच्छूलघ्नमौषधम् ॥ २६ ॥

यद्यपि "नवमे मासि सूतिकागारमेनां प्रवेशयेत् प्रशस्ततिथ्यादौ" इति सुश्रुतवचनात् प्रत्यक्षावलोकनाच्च प्रायो गर्भः प्राप्ते नवमे मासि दशमे मासि वा समुत्पद्यते तथापि दैवयोगाद् गर्भपुष्टिकरपदार्थप्राप्त्यभावाच्च द्वादशमासपर्यन्तमपि गर्भस्य जन्मोत्पत्तेः सम्भवोऽतस्तत्पुष्ट्यर्थं शोषणावस्थया जातशूलादिकप्रशान्त्यर्थञ्च एकादशद्वादशमासानुमासिका योगाः सन्त्यन्ते तथा चोक्तं सुश्रुतेऽपि "नवमदशमद्वादशानामन्यतमस्मिन्मासि जायतेऽतोऽन्यथा विकारी भवति" इति । चरकेऽपि "पयस्तु दशमे शुण्ठ्या शृतशीतं प्रशस्यते" इत्यादिदशममासप्रतिकारमुक्त्वाऽत्रे गर्भाप्यायनयोगोपदेशः । यथा—

सक्षीरा वा हिता शुण्ठी मधुकं देवदारु च । एवमाप्यायते गर्भस्तीव्रा रुक् च प्रशाम्यति ॥ इति ॥

अथ मासानुमासिकान् क्षुद्रयोगानाह—

मधुकं शाकबीजञ्च पयस्या सुरदारु च । अश्मन्तकं कृष्णतिलास्ताम्रवल्ली शतावरी ॥ १ ॥

वृक्षादनी पयस्या च तथैवोत्पलसारिवा । अनन्ता सारिवा रास्ना पद्मा मधुकमेव च ॥ २ ॥

हृतीद्वयकाश्मर्यक्षीरिशुङ्गास्त्वचो घृतम् । पृथक्पर्णी बला शिग्रु श्वदंष्ट्रा मधुयष्टिका ॥ ३ ॥

शृङ्गाटकं विस द्राक्षा कशेरु मधुक सिता । मासेषु सप्तयोगा स्युरर्द्धश्लोकसमापना ॥४॥
यथाक्रमं प्रयोक्तव्या रक्तस्रावे पयोयुता ॥ ५ ॥
कपित्थबिल्वबृहतीपटोलेक्षुनिदिग्धका । मूलानि क्षीरपिष्टानि दापयेत् भिषगष्टमे ॥६॥
नवमे मधुकाऽनन्तापयस्याशारिवा पिबेत्। पयस्तु दशमे शुण्ठ्या शृतशीत प्रशस्यते॥७॥
सक्षीरा वा हिता शुण्ठी मधुकं देवदारु च । एवमापूर्यते गर्भस्तीव्रा रुक् च प्रशाम्यति॥८॥

गर्भिण्या ज्वरातीसारावपि गर्भं पातयतस्तस्मात्तयोर्विशेषचिकित्सामाह—

अथ चन्दनादिक्काथ —

चन्दन शारिवा लोध्र मृद्वीका शर्करान्वितम्। क्काथ कृत्वा प्रदातव्य गर्भिण्या ज्वरनाशनम्१॥

एरण्डादिक्काथ —

एरण्डमूलममृता मञ्जिष्ठा रक्तचन्दनम् । दारुपद्मयुत क्काथो गर्भिण्या ज्वरनाशन ॥२॥

अथ लवङ्गादचूर्णम्—

लवङ्ग टङ्कण मुस्तं धातकी बिल्वधान्यकम् । जातीफलं सर्जकञ्च शताह्वा दाडिम तथा ॥१॥
जीरक सैन्धव मोच नीलोत्पलरसाञ्जनम् । अभ्रक वङ्गकञ्चैव समङ्गा रक्तचन्दनम् ॥ २ ॥
न्यग्रोध चातिविषा शृङ्गी खदिर वालकं समम् ।भृङ्गराजरसै प्लाव्य भावयित्वा दिनत्रयम्॥३॥
छागीदुग्धेन मतिमान् गर्भिणीमनुपानत । एतच्चूर्णं प्रदातव्य सग्रहग्रहणीहरम् ॥४॥
नानावर्णमतीसार ज्वरञ्चैव नियच्छति । आमरक्तातिसारघ्न शूलशोथनिसूदनम् ॥५॥इति

अथ योनिव्यापद्रोगस्य गर्भिण्याश्च पथ्यापथ्यविवेक —

वातव्याधिमता पथ्यापथ्यं च यदुदीरितम्। योनिव्यापत्सु सर्वासु तद्विद्यात्तु यथामलम्॥१॥
शालय षष्टिका मुद्गा गोधूमा लाजशक्तव । नवनीत घृत क्षीर रसाला मधु शर्करा ॥२॥
पनसं कदली धात्री द्राक्षाम्ल स्वादु शीतलम् । कस्तूरी चन्दन माला कर्पूरमनुलेपनम् ॥३॥
चन्द्रिका स्नानमभ्यङ्गो मृदुशय्या हिमानिल ।सन्तर्पण प्रियाश्लेषो विहाराश्च मनोरमा ॥४॥
प्रियङ्कर चान्नपान गर्भिणीना हित सदा ॥ ५ ॥ इति पथ्यानि ।

अथापथ्यानि—

स्वेदन वमन क्षारं कदन्न विषमाशनम् । अपथ्यमिदमुद्दिष्टं गर्भिणीना महर्षिभि ॥१॥

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृतायां
गूढार्थसन्दीपिकाव्याख्यायां योनिव्यापदादिचिकित्सा ।

## अथ सूतिकारोग-चिकित्सा।

सूतिकारिरसः —

रसगन्धककृष्णाभ्रं तदर्द्धं मृतताम्रकम्।
चूर्णितं मर्दयेत् यत्नाद्भेकपर्णीरसेन च ॥ १ ॥
छायाशुष्का वटी कार्या द्विगुञ्जाफलमानतः।
क्षीरत्रिकटुना युक्ता सूतिकाऽऽतङ्कनाशिनी।
ज्वरं तृष्णाऽरुचिश्वासं शोथं हन्ति न संशयः ॥ २ ॥

क्रमप्राप्तत्वाद्योनिव्यापच्चिकित्सानन्तरं सूतिकारोगचिकित्सा प्रारभ्यते तत्र पूर्वं सूतिकारि-रसनिर्माणमाह रसेत्यादि—रसं शुद्धपारदं (१तो०), शुद्धगन्धकं (१तो०), कृष्णाभ्रकभस्म (१तो०), मृतताम्र-ताम्रभस्म च अर्द्धतोलकमितं समादाय पूर्वं पारदगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि सम्मिश्र्य खल्वे सूक्ष्मं पिष्ट्वा मण्डूकपर्णी-स्वरसेन सप्तधा भावयित्वा द्विगुञ्जाप्रमाणा वटीः कृत्वा छायायां संशोष्य काचपात्रे स्थापयेत्। अयं सूतिकारिरसः प्रत्यहं मापकमितेन त्रिकटुचूर्णेन सह दुग्धानुपानपूर्वकं सेवितः सूतिकारोगं, ज्वरं, तृष्णाम्, अरुचिं, श्वासं, शोथञ्च निहन्ति ॥१-२॥

सूतिकाविनोदरसः —

रसगन्धकतुल्थञ्च त्र्यहं जम्बीरमर्दितम्।
त्रिर्भावितं त्रिकटुना देयं गुञ्जाचतुष्टयम्।
गर्भिण्याः शूलविष्टम्भ-ज्वराजीर्णेषु योजयेत् ॥ ३ ॥

अथ सूतिकाविनोदरसनिर्माणमाह रसेत्यादि—रसं-शुद्धपारदं, शुद्धगन्धकं, शुद्धतुत्थकचूर्णं, प्रत्येकं समं ससमादाय पूर्वं पारदगन्धकयोः कज्जलीं कृत्वा तुत्थकं सम्मिश्र्य श्लक्ष्णं पिष्ट्वा जम्बीरनिम्बुस्वरसैस्त्रिवारं भावयित्वा दृढं विमर्द्य संशोष्य च काचपात्रे स्थापयेत्। अयं रसः प्रत्यहं गुञ्जाप्रमाणादारभ्य चतुर्गुञ्जामितो मधुना सह गर्भिण्याः शूले, विष्टम्भे, ज्वरे, अजीर्णे च प्रयोक्तव्यः ॥ ३ ॥

चिन्तामणिरसः —

चिन्तामणिरसे देयं तुत्थस्थाने सुवर्णकम् ॥ ४ ॥

अथ चिन्तामणिरसनिर्माणमाह चिन्तेत्यादि—चिन्तामणिरसनिर्माणार्थं सूति-

काविनोदरसान्तर्गततुत्थकस्थाने स्वर्णभस्म दत्वा शेषकर्म समाचरणेन चिन्तामणिरसो निर्मितो भवति। अयं रस प्रत्यहं रक्तिमित सेवितो गर्भिण्या ज्वरादिकनाशार्थं श्रेष्ठ। अयं चिन्तामणिरसो ग्रन्थान्तरेषु गर्भचिन्तामणिनाम्ना ख्यात ॥४॥

बृहत्सूतिकाविनोदरस —

**शुण्ठ्या भागो भवेदेको द्वौ भागौ मरिचस्य च।**
**पिप्पल्याश्च त्रिभागं स्यादर्द्धभागश्च व्योमकम् ॥ ५ ॥**
**जातीकोषस्य भागौ द्वौ द्वौ भागौ तुत्थकस्य च।**
**सिन्धुवारजलेनैव मर्दयेदेकयामतः।**
**मधुना सह भोक्तव्यः सूतिकाऽऽतङ्कनाशनः ॥ ६ ॥**

अथ बृहत्सूतिकाविनोदरसनिर्माणमाह शुण्ठ्या इत्यादि—शुण्ठ्याश्चूर्णं तोलकमित, मरिचस्य चूर्णं द्वितोलक, पिप्पल्याश्चूर्णं तोलकत्रयम्, व्योमकमभ्रकभस्मचार्द्धं तोलकमित, जातीकोषचूर्णस्य द्वितोलक, शुद्धतुत्थकस्य च द्वितोलकं समादाय सर्वमेकीकृत्य खल्वे श्लक्ष्ण पिष्ट्वा निर्गुण्डीपत्रस्वरसेनाप्लाव्य यामैकं निरन्तर दृढं विमर्द्य सशोष्य च काचपात्रे स्थापयेत्। अथ रस प्रत्यह द्विरक्तित प्रारभ्य माषकैकमितो मधुना सह सूतिकारोगेषु प्रयोक्तव्य ॥ ५–६ ॥

अपरसूतिकारिरस —

**टङ्कणं मूर्च्छित सूत गन्धकः हेम तारकम्।**
**जातीफल तथा कोषं लवङ्गैले च धातकी ॥ ७ ॥**
**वत्सकेन्द्रयव पाठा शृङ्गी विश्वाऽजमोदिकाः।**
**गुडी प्रसारणीनीरैश्चतुर्गुञ्जाप्रमाणतः ॥ ८ ॥**
**भक्षयेत् तद्रसैः प्रातः सूतिकाऽऽतङ्कशान्तये।**
**जीर्णज्वरं हन्ति शोथं ग्रहणीप्लीहकासनुत् ॥ ९ ॥**

अथ प्रकारान्तरेण सूतिकारिरसनिर्माणमाह टङ्कणमित्यादि—शुद्ध टङ्कणं, मूर्च्छितं सूत–रससिन्दूर, (निर्गन्धमूर्च्छनासंस्कारसस्कृतम्वा पारद गृह्णीयात्) शुद्धगन्धक, हेम–स्वर्णभस्म, तारक–रजतभस्म, जातीफलचूर्णं, जातीकोष–जावित्रीचूर्णं, लवङ्गचूर्णं, सूक्ष्मैलाबीजचूर्णं, धातकीपुष्पचूर्णं, वत्सक–कुटजस्तस्य त्वचश्चूर्णम्, इन्द्रयवचूर्णं, पाठाचूर्णं, शृङ्गी–कर्कटशृङ्गीचूर्णं, विश्वा–शुण्ठीचूर्णम्, अजमोदिकाचूर्णञ्च, एतेषा

प्रत्येकं सम सममादाय पूर्वं रसगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मिश्र्य श्लक्ष्ण पिष्ट्वा गन्धप्रसारणी-स्वरसेन सम्यगाप्लाव्य दृढ विमर्द्य चतुर्गुञ्जाप्रमाणा वटीश्चरेत् । अयं रस प्रत्यह यथाग्निवल रक्तिप्रमाणात्तूर्यरक्तिमित प्रसारणीस्वरसेन मधुना च सह सेवित सूतिकारोगे विशेषेण हितकर । तथाय रसो यथाव्याध्यनुपानैर्जीर्णज्वरं, शोथ, ग्रहणी, प्लीहवृद्धिं, कासश्च विनिहन्ति ॥ ७–९ ॥

सूतिकाघ्नो रस —

रसगन्धकलौहाभ्रं जातीकोप सुवर्णकम् ।
समांश मर्दयेत् खल्ले छागीदुग्धेन पेषयेत् ॥ १० ॥
गुञ्जाद्वयप्रमाणेन वटिकां कुरु यत्नतः ।
ज्वरातीसाररोगघ्नः सूतिकाऽऽतङ्कनाशन ।
सूतिकाघ्नो रसो नाम ब्रह्मणा परिकीर्त्तितः ॥ ११ ॥

अथ सूतिका ( रोग ) घ्नरसनिर्माणमाह रसेत्यादि—शुद्धरस , शुद्धगन्धक लौहभस्म, अभ्रकभस्म, जातीकोप-जावित्रीचूर्णं, सुवर्णभस्म च एतेषा प्रत्येक सम सममादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि,सम्मिश्र्य छागीदुग्धेन , सम्यगाप्लाव्य दृढ दिनैक विमर्द्य द्विगुञ्जाप्रमाणा वटीश्चरेत् । अय ब्रह्मणा निर्मित सूतिकारोगघ्नो रस प्रत्यहं द्विगुञ्जामिता मधुना सहसेवित सूतिकाऽऽतङ्क, ज्वरम , अतीसार, ज्वरातीसारञ्च विनिहन्ति ॥ १०–११ ॥

सूतिकान्तको रस —

रसाभ्रगन्धकव्योष सुवर्णमाक्षिकं विषम् ।
सर्वमेकीकृतं चूर्णं खादेद्रक्तिचतुष्टयम् ॥ १२ ॥
सूतिकाग्रहणीरोग वह्निमान्द्यञ्च नाशयेत् ।
अतिसारञ्च शमयेदपि वैद्यविवर्जितम् ।
कासश्वासातिसारघ्नो वाजीकरण उत्तम ॥ १३ ॥

अथ सूतिका ( रोगा ) न्तकरसनिर्माणमाह रसेत्यादि—शुद्धरस , अभ्रकभस्म, शुद्धगन्धक , व्योषं-शुण्ठीचूर्णं, मरिचचूर्णं, पिप्पलीचूर्णं, सुवर्णमाक्षिकभस्म , विषं-शुद्धवत्सनाभचूर्णञ्च, एतेषा प्रत्येकं समं सममादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मिश्र्य श्लक्ष्णं पिष्ट्वा च काचपात्रे स्थापयेत् । अय

रस प्रत्यहं रक्तित प्रारभ्य यथाग्निवल रक्तिचतुष्टयमितो मधुना सह सेवित सूतिकारोग, ग्रहणीरोगं, वन्हिमाद्यम्, अतीसार, कासश्वासौ च नाशयेत्। अय रसो वाजिकरण स्तथातीसारे श्रेष्ठतर ॥ १२–१३ ॥

गर्भचिन्तामणिर —

जातीफलं टङ्कणञ्च व्योषं दैत्येन्द्ररक्तकम्।
तच्चूर्णं समभागेन मर्दितं प्रहरद्वयम् ॥ १४ ॥
जम्बीररसयोगेन वटीं कुर्याद्विचक्षणः।
गुञ्जाद्वयप्रमाणान्तु खलु वैद्यः प्रयत्नत. ॥ १५ ॥
आर्द्रकस्य रसेनैव भक्षयेदुष्णवारिणा।
निहन्ति सर्वरोगश्च भास्करस्तिमिरं यथा ॥ १६ ॥

अथ गर्भचिन्तामणिरसनिर्माणमाह जातीफलमित्यादि—जातीफलचूर्णं, शुद्ध-टङ्कण, व्योष-शुण्ठीचूर्णं, मरिचचूर्णं, पिप्पलीचूर्णं, दैत्येन्द्ररक्तकं-शुद्धं हिङ्गुल च एतेषा प्रत्येकं समं सममादाय खल्वे श्लक्ष्ण विचूर्ण्य जम्वीरनिम्वूरसेनाप्लाव्य प्रहरद्वयं निन्तरं दृढं विमर्द्य द्विगुञ्जाप्रमाणा वटीश्चरेत्। अय रस' प्रत्यह द्विरक्तिभि शृङ्गवेरस्वरसेन सह भक्षयितव्य। अनुपान कोष्णोदकम्। अय रस सर्वान सूतिकामयान् भास्करस्तिमिरमिव निहन्ति ॥ १४–१६ ॥

अपरगर्भचिन्तामणिरस —

रसं तार तथा लौहं प्रत्येकं कर्षमानतः।
कर्षत्रयं तथा चाभ्र कर्पूरं वङ्गताम्रकम् ॥ १७ ॥
जातीफलं तथा कोषं गोक्षुरश्च शतावरी।
वलाऽतिवलयोर्मूलं प्रत्येक तोलक शुभम् ॥ १८ ॥
वारिणा वटिका कार्या द्विगुञ्जाफलमानतः।
सन्निपातं निहन्त्याशु स्त्रीणाञ्चैव विशेषतः।
गर्भिण्या ज्वरदाहञ्च प्रदरं सूतिकाऽऽमयम् ॥ १९ ॥

अथ प्रकारान्तरेण गर्भचिन्तामणिरसनिर्माणमाह रसमित्यादि—रसं—शुद्धपारदभस्म, तारं—रजतभस्म, लौह-लौहभस्म च एषा प्रत्येक कर्षमित तथा अभ्रकभस्मन कर्षत्रयं, कर्पूरं, वङ्गभस्म, ताम्रभस्म, जातीफलचूर्णं, कोषं—जावित्रीचूर्णं,

गोक्षुरचूर्णं, शतावरीचूर्णं, बलामूलचूर्णम्, अतिबलामूलचूर्णम्, एतेषां च प्रत्येकं तोलकैकमितं समादाय सर्वमेकीकृत्य खल्वे श्लक्ष्णं पिष्ट्वा जलेन सह विमर्द्य द्विगुञ्जाफलप्रमाणां वटीश्चरेत्। अस्य रसस्य प्रत्यहमेकैका वटी मधुना सह सेविता सन्निपातं, विशेषेण स्त्रीणां सन्निपातं, गर्भिण्या ज्वरं, शरीरदाहं, प्रदरं, सूतिकारोगाश्च निहन्ति ॥ १७–१९ ॥

बृहद्गर्भचिन्तामणिरसः —

सूतं गन्धः तथा स्वर्णं लौहं रजतमाक्षिकं ।
हरितालं वङ्गभस्माप्यभ्रकं समभागिकम् ॥ २० ॥
भावना खलु दातव्या रसैरेषां पृथक् पृथक् ।
ब्राह्मीवासाभृङ्गराज-पर्पटीदशमूलकैः ॥ २१ ॥
सप्तधा भावयेद्वैद्यो गुञ्जामानां वटीं चरेत् ।
गर्भचिन्तामणिरयं पूर्ववद्गुणकारकः ॥ २२ ॥

अथ बृहद्गर्भचिन्तामणिरसनिर्माणमाह सूतमित्यादि—सूतं-शुद्धपारदं, शुद्धगन्धकं, स्वर्णभस्म, लौहभस्म, रजतभस्म स्वर्णमाक्षिकभस्म, शुद्धहरितालं, वङ्गभस्म, अभ्रकभस्म च एतेषां प्रत्येकं सम समभागं पूर्वं पारदगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि सम्मिश्र्य श्लक्ष्णं विचूर्ण्य ब्राह्मीस्वरसेन, वासकस्वरसेन, भृङ्गराजस्वरसेन, पर्पटस्वरसेन, दशमूलक्वाथेन च क्रमशः पृथक् ७ सप्तधा भावयित्वा गुञ्जाप्रमाणां वटीश्चरेत्। अयं रसः पूर्वगर्भचिन्तामणिरसवद्गुणकारकः ॥ २०–२२ ॥

गर्भविनोदरसः —

देयं त्रिभागं त्रिकटु चतुर्भागञ्च हिङ्गुलम् ।
जातीकोषं लवङ्गञ्च प्रत्येकञ्च त्रिकार्षिकम् ॥ २३ ॥
सुवर्णमाक्षिकस्यापि पलार्द्धं प्रक्षिपेद् बुधः ।
जलेन मर्दयित्वाऽथ चणमात्रा वटी कृता ।
निहन्ति गर्भिणीरोगं भास्करस्तिमिरं यथा ॥ २४ ॥

अथ गर्भविनोदरसनिर्माणमाह देयमित्यादि—त्रिकटु-शुण्ठीचूर्णं, मरिचचूर्णं, पिप्पलीचूर्णं प्रत्येकं कर्षत्रयं तथा शुद्धहिङ्गुलं ४ क०, जातीकोष-जावित्रीचूर्णं ३ क०, लवङ्गचूर्णं ३ क०, सुवर्णमाक्षिकभस्मनोऽर्द्धपलं, सर्वमेतत् खल्वे श्लक्ष्णं

पिष्ट्वा जलेन सह विमर्द्य चणकप्रमाणा (चतुर्गुञ्जामिता) वटीश्चरेत्। अस्य रसस्य प्रत्यहमेकैका वटी मधुना सह सेविता सर्वं गर्भिणीरोगं विनिहन्ति ॥ २३-२४ ॥

सूतिकाहररस —

लवङ्गं रसगन्धौ च यवक्षारं तथाऽभ्रकम्।
लौहं ताम्रं सीसकञ्च पलमानं समाहरेत्॥ २५ ॥
जातीफलं केशराजं भृङ्गैलामुस्तकं वरा।
धातकीन्द्रयवं पाठा शृङ्गी विल्वञ्च बालकम्॥ २६ ॥
कर्षमानञ्च सञ्चूर्ण्य सर्वमेकत्र कारयेत्।
वदरास्थिप्रमाणेन वटिकां कारयेद्भिषक्॥ २७ ॥
गन्धालिकापत्ररसैरनुपानं प्रदापयेत्।
सर्वातीसारशमनः सर्वशूलनिवारणः ॥ २८ ॥
सूतिकाशोथपाण्डुत्व-सर्वज्वरविनाशनः।
सूतिकाहरनामाऽयं रसः परमदुर्लभः ॥ २९ ॥

अथ सूतिकाहररसनिर्माणमाह लवङ्गमित्यादि—लवङ्गचूर्णं, शुद्धपारदं, शुद्धगन्धकं, यवक्षारं, अभ्रकभस्म, लौहभस्म, ताम्रभस्म, सीसकभस्म च प्रत्येकं पलमितं तथा जातीफलचूर्णं, केशराजचूर्णं, भृङ्गराजचूर्णम्, एलाबीजचूर्णं, शुद्धमुस्तकचूर्णं, वरा—हरीतकीचूर्णं, विभीतकचूर्णम्, आमलकचूर्णं, धातकीपुष्पचूर्णम्, इन्द्रयवचूर्णं, पाठाचूर्णं, शृङ्गी—कर्कटशृङ्गीचूर्णं, विल्वत्वचश्चूर्णं, बालकं सुगन्धवालाचूर्णं, एतेषां च प्रत्येकं कर्षमितं भागमादाय पूर्वं पारदगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि सम्मिश्र्य श्लक्ष्णं पिष्ट्वा जलेन सह विमर्द्य च बदरास्थिप्रमाणा (चतुर्गुञ्जाप्रमाणा) वटीश्चरेत्। अथ रसः प्रत्यहं द्विगुञ्जतः प्रारभ्य माषकैकमितो यथाग्निबलं गन्धप्रसारणीस्वरसेन सह सेवितः सूतिकारोगं, सर्वविधमतीसारं, सर्वविधञ्च शूलं, शोथं, पाण्डुरोगं, सर्वविधज्वरञ्च यथास्वानुपानैर्जयेत् ॥ २५-२९ ॥

महाऽभ्रवटी—

अभ्रकं पुटितं ताम्रं लौहं गन्धकपारदम्।
कुनटी टङ्कणं तारं त्रिफला च पलं पलम्॥ ३० ॥
गरलञ्च तथा माषचतुष्कञ्चैव चूर्णितम्।

तत् सर्वं भावयेदेषां रसैः प्रत्येकशः पलैः ॥ ३१ ॥
ग्रीष्मसुन्दरकस्याटरूषकस्य क्रमेण तु ।
रसैस्ताम्बूलवल्ल्याश्च दलोत्थैर्भावितं पृथक् ॥ ३२ ॥
द्रवे किञ्चित् स्थिते चूर्णं मरिचस्य पलं क्षिपेत् ।
सर्वातीसारशमनं सर्वशूलनिवारणम् ॥ ३३ ॥
सूतिकाशोथपाण्डुघ्न-सर्वज्वरविनाशनम् ।
नाशयेत् सूतिकाऽऽतङ्कं वृक्षमिन्द्राशनिर्यथा ॥ ३४ ॥

अथ महाऽभ्रवटीनिर्माणमाह—अभ्रकमित्यादि-पुटितमभ्रकभस्म, पुटितशब्दस्य प्रत्येकमन्वयात् पुटितं ताम्रमिति ताम्रभस्म, लौहभस्म, तथा शुद्धगन्धकं, शुद्धपारदं, कुनटी-शुद्धमनःशिलाचूर्णं, शुद्धटङ्कणं, क्षार-यवक्षारं, त्रिफला-हरीतक्यादिचूर्णं, विभीतकचूर्णं, आमलकचूर्णञ्च, एतेषां प्रत्येकं पलमितं, तथा गरल-शुद्धकृष्णसर्पविषं चतुर्माषकमितं समादाय पूर्वं पारदगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि तस्मिन् क्षिप्त्वा श्लक्ष्णं विमर्द्य ग्रीष्मसुन्दरकस्वरसेन, आटरूषकस्य-वासकस्य पत्राणां स्वरसेन, ताम्बूलवल्लीपत्रस्वरसेन, क्रमशः प्रत्येकेन पलमितस्वरसेन (भाव्यद्रव्याप्लावनपरिमितेनेत्यर्थः) क्रमशः पृथक् २ भावयित्वा पेषणेनावशिष्टे किञ्चिद्द्रवांशे मरिचानां वस्त्रगालितं पलमितं चूर्णं निक्षिप्य सम्यग्विमर्द्य संशोष्य च काचपात्रे स्थापयेत् । अथ रसं प्रत्यहं रक्तिकं प्रारभ्य यथाग्निबलं त्रिरक्तिमितं यथाव्याध्यनुपानेन सह सेवितं सर्वविधं शूलं सर्वविधमतीसारं, सूतिकारोगं, शोथं, पाण्डुरोगं, सर्वविधज्वरञ्च विनिहन्ति । अयं रसो विशेषेण सूतिकाव्याधिं वृक्षमिन्द्राशनिरिव नाशयेत् ।

अस्मिन् रसे प्रोक्तस्य गरलस्याहरणविधिः शोधनविधिश्च यथा—

शुक्तिकां तालपत्रेण खर्जूरस्य दलेन वा ।
आच्छाद्य सर्वतो दार्घ्ययष्टिकायान्तु बन्धयेत् ॥ १ ॥
कृष्णसर्पो यथा रोषात्तालपत्रे दशेत्तथा ।
निदध्यात् कृष्णसर्पस्य सम्मुखं यष्टिकामिमाम् ॥ २ ॥

निदध्यात्तावदेवन्तु बहुवारं दशेयदा । शुक्तिकासञ्चितं सर्पविषं त्वथ समाहरेत् ॥ ३ ॥ पुनः पुनः कृष्णसर्पं रोषयन् भिषजां वरः । समाहरेद्विषं त्वेवं सावधानतया सदा ॥ ४ ॥ इति

तस्य शोधनं यथा—

तैलाक्तशुक्तिकामध्यसञ्चिते जङ्गमे विषे । पादांशं सार्षपं तैलं न्यस्य घर्मे विशोषयेत् ॥ १ ॥

ायते पीतवर्णं तन्निदाघे परिशोषितम्। कृष्णसर्पविषं त्वेवं शुद्धिमायान्त्यनुत्तमाम्॥२॥
॥ ३०-३४॥

अपरमहाऽभ्रवटी—

मृतमभ्रञ्च लौहञ्च कुनटी ताम्रकं तथा।
रसगन्धकटङ्कञ्च यवक्षारफलत्रिकम॥ ३५॥
प्रत्येकं तोलकं ग्राह्यमूषणं पञ्चतोलकम्।
सर्वमेकीकृतं चूर्णं प्रत्येकेन विभावयेत्॥ ३६॥
ग्रीष्मसुन्दरसिंहास्य-नागवल्ल्या रसेन च।
चतुर्गुञ्जाप्रमाणेन वटिकां कारयेद्भिषक्।
योजयेत सर्वथा वैद्यः सूतिकारोगशान्तये॥ ३७॥

अथ प्रकारान्तरेण महाऽभ्रवटीनिर्माणमाह मृतमित्यादि—मृतमभ्रमभ्रकभस्म, मृतं लौह—लौहभस्म, कुनटी—शुद्धमनःशिला, मृत ताम्रकं—ताम्रभस्म, शुद्धपारद, शुद्धगन्धक, शुद्धटङ्कण, यवक्षार, फलत्रिक—हरीतकीचूर्णं, विभीतकचूर्णम्, आमलकचूर्णञ्च, एतेषां प्रत्येकं तोलकमित तथा ऊषण—मरिचचूर्णं पञ्चतोलकमित समादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मिश्र्य ग्रीष्मसुन्दरस्य स्वरसेन, सिंहास्यो वासकस्तस्य स्वरसेन तथा नागवल्या पत्राणां स्वरसेन च पृथक् २ क्रमशो भावयित्वा चतुर्गुञ्जाप्रमाणा वटी श्चरेत्। अयं रस सूतिकारोगप्रशान्तये प्रयोक्तव्य ॥ ३५-३७॥

रसशार्दूल —

अभ्रं ताम्रं तथा लौह राजपट्टं रसं तथा।
गन्धटङ्कमरीचञ्च यवक्षारं समांशकम्॥ ३८॥
तथाऽत्र तालकञ्चैव त्रिफलायाश्च तोलकम्।
तोलकञ्चामृतञ्चैव षड्गुञ्जाप्रमिता वटी॥ ३९॥
ग्रीष्मसुन्दरकस्यापि नागवल्लीरसेन च।
भावयेत् सप्तधा हन्ति ज्वरं कासाङ्गसंग्रहम्।
सूतिकाऽऽतङ्कशोथादि-स्त्रीरोगञ्च विनाशयेत्॥ ४०॥

अथ रसशार्दूलनिर्माणमाह—अभ्रमित्यादि—अभ्रमभ्रकभस्म, ताम्रं—ताम्रभस्म, लौहं—लौहभस्म, राजपट्टं—कान्तपाषाणभस्म, रस—शुद्धपारद, शुद्धगन्धकं, शुद्ध-

न्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मिश्र्य श्लक्ष्णं पिष्ट्वा च पूर्वोक्ते ग्रीष्मसुन्द रकस्य नागवल्लीपत्राणा च स्वरसे पृथक् २ सप्तधा भावयित्वा मर्दनेन किञ्चिद्द्रवाशे शेषे सति मरिचाना वस्त्रसारित पलमित चूर्णं प्रक्षिप्य सम्यग्विमर्द्य द्विरक्तिमिता वटीश्चरेत् । अस्य रसस्यैकैका वटी प्रत्यह यथायोग्यानुपाने सेविता विविधान ज्वरादिकरोगान्, दाह, वमिम्, भ्रमिम्, अतीसारं, वन्हिमान्द्यम्, अरुचिं विशेषेण गर्भिणीरोगश्च विनिहन्ति ॥ ४१–४५ ॥

बृहद्रसशार्दूल —

**रसस्य द्विगुणं गन्धं शुद्धं सम्मर्दयेद् दिनम् ।**
**प्रतिलौहं सूततुल्यमष्टलौहं मृतं क्षिपेत् ॥ ८ ॥**
**ब्राह्मी जयन्ती निर्गुण्डी यष्टीमधु पुनर्नवा ।**
**नलिका गिरिकर्ण्यर्क-कृष्णधूर्त्तदुरालसाः ॥ ४७ ॥**
**आटरूषः काकमाची द्रवैरेषां विमर्दयेत् ।**
**गुञ्जात्रयं चतुर्गुञ्जं सर्वरोगेषु योजयेत् ।**
**रोगोक्तमनुपानं वा कवोष्णं वा जलं पिबेत् ॥ ४८ ॥**

अथ बृहद्रसशार्दूलनिर्माणमाह रसस्येत्यादि—शुद्धपारद (१तो०), शुद्धग न्धक द्विगुण (२तो०) अष्टविधलौहेषु प्रतिलोहमर्थात् स्वर्णभस्म, रजतभस्म, ताम्रभस्म, कांस्यभस्म, पित्तलभस्म, नागभस्म, वङ्गभस्म, लोहभस्म च प्रत्येकं सूततुल्यमिति तोलकैकमित समादाय पूर्वं पारदगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि सम्मिश्र्य, ब्राह्मीस्वरसेन, जयन्तीपत्रस्वरसेन, निर्गुण्डीपत्रस्वरसेन, यष्टीमधुक्वाथेन, पुनर्नवास्वरसेन, नलिका—नारीशाकपत्रस्वरसेन, गिरिकर्ण्यपराजिता तस्या पत्राणा स्वरसेन, अर्कपत्रस्वरसेन, कृष्णधुस्तूरस्वरसेन, दुरालभाया यासस्य वा स्वरसेन, आटरुषो वासकस्तस्य पत्राणा स्वरसेन, काकमाचीस्वरसेन च क्रमश पृथक् २ भाव यित्वा दृढ सम्मर्द्य सशोष्य च काचपात्रे स्थापयेत् । अयं रस प्रत्यहमर्धरक्तित-प्रारभ्य यथारोगानुपानै सह यथाग्निबल गुञ्जात्रयपर्यन्त चतुर्गुञ्जापर्यन्त वा सेवित सर्वरोगेषु हितकर । अनुपान यथारोगोक्तमथवा कवोष्णमुदकं देयम् ॥४६–४८॥

तत्र अष्टलौहानि—

**सुवर्णं रजतं ताम्रं कांस्यं पित्तलमेव च ।**

नागं वङ्गं तथा लोहं धातवोऽष्टौ प्रकीर्त्तिताः ॥ ४६ ॥

( इति सूतिकारोग-चिकित्सा )

उपर्युक्तरसनिर्माणोक्ताष्टलोहानि यथा—सुवर्ण, रजतं, ताम्र, कांस्य, पित्तल, नाग, वङ्ग, लोहञ्च, एतेऽष्टौ धातवः प्रकीर्तिताः, एषां धातूनां प्रत्येकं प्रथमाध्यायोक्तविशिष्टलक्षणयुक्तं श्रेष्ठं धातुं समादाय तैलतक्रादिषु साधारणशोधनं तथा विशिष्टशोधनञ्च विधाय वारितरं भस्म च कृत्वा वृहद्रसशार्दूलादिकयोगेषु प्रयोजयेत्॥ ४९ ॥

अथ पथ्यापथ्यार्थं निर्देशो यथा—

सूतिकाख्येषु रोगेषु वातश्लेष्मोद्भवेषु च। तत्र रोगानुकूलेन पथ्यापथ्यानि निर्दिशेत्॥ १ ॥

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृतायां गूढार्थसन्दीपिकाव्याख्यायां सूतिकारोगचिकित्सा।

# अथ तृतीयोऽध्यायः ।

## अथ बालरोग-चिकित्सा ।

बालरस —

पलं शुद्धस्य सूतस्य गन्धकस्य पलं तथा ।
सुवर्णमाक्षिकस्यापि भागार्द्धं संप्रकल्पयेत् ॥ १ ॥
ततः कज्जलिकां कृत्वा पात्रे लौहमये दृढे ।
केशराजस्य भृङ्गस्य निर्गुण्ड्याः स्वरसेन च ॥ २ ॥
शुभे शिलामये पात्रे लौहदण्डेन मर्दयेत् ।
राजिकासदृशीश्चैव वटिकां कारयेद्भिषक् ॥ ३ ॥
एकैकां वटिकां खादेन्नागवल्लीदलद्रवैः ।
हन्ति त्रिदोषसम्भूतं ज्वरञ्चैव सुदारुणम् ॥ ४ ॥
चिरज्वरञ्च कासञ्च शूलं सर्वभवं तथा ।
शिशूनां रोगनाशाय शिवेन परिकीर्त्तितः ॥ ५ ॥

सूतिकारोगपीडितस्त्रीदुग्धानुपानाद्बाला अपि रोगपीडिता भवन्त्यतस्तदनन्तरं बालरोगचिकित्सा प्रारभ्यते । तत्र पूर्वं बालरसनिर्माणमाह पलमित्यादि—शुद्धपारदस्यैकं पलं, शुद्धगन्धकस्यैकं पलं, सुवर्णमाक्षिकभस्मनश्चार्द्धपल समादाय पूर्वं पारदगन्धकयो पाषाणखल्वे कज्जलीं कृत्वा शेषद्रव्याणि सम्मिश्र्य लौहखल्वे सर्वं निक्षिप्य श्लक्ष्णं विचूर्ण्य केशराजस्य स्वरसेन, भृङ्गराजस्य स्वरसेन, निर्गुण्ड्या पत्राणा स्वरसेन च पृथक् २ क्रमश सप्तवार भावयित्वा लौहदण्डेन दृढ विमर्द्य राजिकासदृशी वटीश्चरेत् । अस्य रसस्य प्रत्यहमेकैका वटी नागवल्लीपत्रस्वरसानुपानै मधुना च सह सेविता त्रिदोषसम्भूतं दारुण ज्वर, चिरकालीन ज्वरं, कास, शूलं, शिशूना सर्वरोगाणि च विनिहन्ति । अयं रस शिशूना रोगनाशार्थं श्रीशिवेन प्रोक्त । "कज्जलिकाम्" इत्यत्र "पर्पटिकाम्" इति पाठान्तरम् ॥ १–५ ॥

बालरोगान्तकरस —

पलं शुद्धस्य सूतस्य गन्धकस्य च तत्समम् ।
सुवर्णमाक्षिकस्यापि चार्द्धभागं नियोजयेत् ॥ ६ ॥

ततः कज्जलिकां कृत्वा पात्रे लौहमये दृढे ।
केशराजस्य भृङ्गस्य निर्गुण्ड्याः पर्णसम्भवम् ॥ ७ ॥
स्वरसं काकमाच्याश्च ग्रीष्मसुन्दरकस्य च ।
सूर्यावर्त्तकवर्षाभू-भेकपर्णीरसैस्तथा ॥ ८ ॥
श्वेतापराजितायाश्च रसं दद्याद्विचक्षणः ।
देयं रसार्द्धभागेन चूर्णं मरिचसम्भवम् ॥ ९ ॥
शुभे शिलामये पात्रे यामं दण्डेन मर्दयेत् ।
शुष्कमातपसंयोगाद् गुड़िकां कारयेद्भिषक् ॥ १० ॥
प्रमाणं सर्षपाकारं बालानाञ्च प्रयोजयेत ।
हन्ति त्रिदोषसम्भूतं ज्वरञ्चैव सुदारुणम् ॥ ११ ॥
कासं पञ्चविधञ्चापि सर्वरोगं निहन्ति च ।
शिशूनां रोगनाशाय निर्मितोऽयं महारसः ॥ १२ ॥

( इति बालरोग-चिकित्सा )

अथ बालरोगान्तकरसनिर्माणमाह पलमित्यादि—शुद्धस्य पारदस्यैकं पलं, शुद्धगन्धकस्य चैकं पलं, सुवर्णमाक्षिकभस्मनश्चाप्यर्द्धं पलं समादाय पूर्वं पारदगन्धकयोः कज्जलीं कृत्वा शेषद्रव्यं सम्मिश्र्य लौहखल्वे च सर्वं द्रव्यं निधाय केशराजस्य, भृङ्गराजस्य, निर्गुण्ड्याः पत्राणां, काकमाच्या, ग्रीष्मसुन्दरकस्य, सूर्य्यावर्त्तकस्य, वर्षाभू—पुनर्नवा तस्याः स्तथा भेकपर्ण्या—मण्डूकपर्ण्याः, श्वेतापराजितायाश्च स्वरसेन क्वाथेन वा पृथक् २ सम्यग् वारैकं भावयित्वा मरिचानां वस्त्रसारितं रसभागापेक्षयाऽर्द्धभागमितं ( अर्द्धपलमितं ) चूर्णं निक्षिप्य यामैकं पुनर्दृढं विमर्द्य सर्षपाकारा गुटिकाश्चरेत् । अस्य रसस्य प्रत्यहमेकैका गुटिका नागवल्लीपत्रस्वरसेन मधुना च सह सेविता बालानां दारुणं त्रिदोषोत्थं ज्वरं, पञ्चविधं कासं, तथा सर्वरोगञ्च निहन्ति । अयं महारसः शिशूनां सर्वरोगनाशार्थं भगवता श्रीशङ्करेण प्रोक्तः ॥ ६-१२ ॥

अथ बालरोगचिकित्सायां बालानां विशेषरोगाणां चिकित्सा—

अथ पूर्वं बालस्य भेदाः—

त्रिविधो हि बालः क्षीरपः, अन्नभुक्, उभयसेवी च यथोक्तं—
त्रिविधः कथितो बालः क्षीरान्नोभयवर्त्तकः ।

स्वास्थ्य ताभ्यामदुष्टाभ्या दुष्टाभ्या रोगसम्भव ॥ १ ॥ इति ।

अथ तेषां हि चिकित्साक्षेत्रनिर्देशो यथा—

"क्षीरपस्यौषध धात्र्या क्षीरान्नादस्य चोभयो । अन्नेन वा शिशौ देयं भेषज भिषजा सदा॥

बालाना लङ्घनोपदेशं यथा—

मात्रया लङ्घयेद्धात्रा शिशोर्नेष्ट विशोषणम् । सर्वं निवार्यते बाले स्तन्यन्तु न निवार्यते॥

सद्योजातबालस्य दुग्धपराङ्मुखत्वे चिकित्सा—

यो बालोऽचिरजात स्तन्यं न गृह्णाति तस्य सहसैव ।

धात्रीमधुघृतपथ्याकल्केनाघर्षयेज्जिह्वाम् ॥ १ ॥

अथ बालाना भेषजस्य तन्मात्रायाश्च निर्देश —

भैषज्यं पूर्वमुद्दिष्ट महता यज्ज्वरादिषु । तदेव कार्यं बालाना किन्तु दाहादिक विना॥१॥

दाहादिक विनेति—अग्निदाहक्षारवमनविरेचनशिराव्यधादिक विना चिकित्सा कर्तव्या । किन्तु महाकष्टे चोत्पन्ने वमनविरेचनादिकमपि दद्यात्, यत आह सुश्रुत — विरेकवस्तिवमनान्यृते कुर्याच्च नात्ययात्। त एव दोषा दूष्याश्च ज्वराद्या व्याधयश्च ते अतस्तदेव भैषज्यं मात्रा त्वस्य कनीयसी ।

बालाना भेषज्यमात्राविषये विश्वामित्र —

विडङ्गफलमात्रन्तु जातमात्रस्य भेषजम् । अनेनैव प्रमाणेन मासि मासि प्रवर्द्धयेत्॥१॥

कोलास्थिमात्र क्षीरादे दद्याद्भैषज्यकोविद । क्षीरान्नादे कोलमात्र कुमारे भेषज हितम्॥

अन्नादे मधुसर्पिभ्या हस्त्रोदुम्बरसम्मितम् ॥ २ ॥

अथान्यमतम्—

प्रथमे मासि बालाय देया भैषज्यरक्तिका । अवलेह्या तु कर्तव्या मधुक्षीरसिताघृतै ॥१॥

एकैका वर्धयेत्तावद्यावत्संवत्सरो भवेत् । तदूर्ध्वं माषवृद्धि स्याद्यावत्षोडशवत्सरा ॥२॥

तत स्थिरा भवेत्तावद्यावद्वर्षाणि सप्तति । ततो बालवन्मात्रा ह्रासनीया शनै शनै ॥३॥

चूर्णकल्कावलेहानामिय मात्रा प्रकीर्तिता। कषायस्य पुन सैव विज्ञातव्या चतुर्गुणा ॥४॥

क्षीरपस्य शिशोर्देयमौषध क्षीरसर्पिषा । धात्र्यास्तु केवल देय न क्षीरेणापि सर्पिषा॥५॥

अथ बालस्य नाभिशोथ-चिकित्सा—

मृत्पिण्डेनाग्नितप्तेन क्षीरसिक्तेन सोष्मणा । स्वेदयेदुत्थिता नाभि शोथस्तेनोपशाम्यति॥१॥

नाभिपाकचिकित्सा—

नाभिपाके निशालोध्रप्रियङ्गुमधुकै श्रृतम् । तैलमभ्यञ्जने शस्तमेभिर्वाप्यवचूर्णनम् ॥१॥

अथ गुदपाकचिकित्सा—

गुदपाके तु बालानां पित्तघ्नीं कारयेत् क्रियाम् । रसाञ्जनं विशेषेण पानालेपनयोर्हितम् ॥ १ ॥

शङ्खयष्ट्यञ्जनैश्चूर्णं बालानां गुदपाकनुत् ॥ २ ॥

अथ तालुपाकचिकित्सा—

हरीतकीवचाकुष्ठकल्कं माक्षिकसंयुतम् । पीत्वा कुमारस्तन्येन मुच्यते तालुपातनात् ॥ १ ॥

अथ मुखपाकचिकित्सा—

मुखपाके तु बालानामाम्रसारसयोरजः । गैरिकक्षौद्रसंयुक्तं भेषजं नरसाञ्जनम् ॥ १ ॥

अश्वत्थत्वग्दलक्षौद्रैर्मुखपाके प्रलेपनम् । दार्वीयष्ट्यभयाजातीपत्रक्षौद्रैस्तथापरम् ॥ २ ॥

सह जम्बीररसेन स्नुग्दलरसघर्षणं सद्यः । कृतमुद्धन्ति हि पाकं मुखजं बालस्य चाश्वेव ॥ ३ ॥

बालानां दन्तोद्भेदे विशेषमाह—

दन्तोद्भेदोत्थरोगेषु न बालमतियन्त्रयेत् । स्वयमेवोपशाम्यन्ति जातदन्तस्य ते गदाः ॥ १ ॥

दन्तोद्भेदश्च रोगाणां सर्वेषामपि कारणम् । विशेषाज्ज्वरविड्भेदकासच्छर्दिशिरोरुजाम् ॥ २ ॥

अथ दन्तोद्भेदातिरिक्तजातज्वरादीनां चिकित्सा—

भद्रमुस्ताभयानिम्बपटोलमधुकैः कृतः । क्वाथः कोष्णस्तु बालानामशेषज्वरनाशनः ॥ १ ॥

निमन्त्र्य पूर्वन्तु हरिप्रियायाः (तुलस्याः) मूलं समुद्धृत्य दिने रवेश्च ॥

बद्धं शिखायामनुरक्तमेन ज्वरञ्च हन्यादभिमन्त्रितेन ॥ २ ॥

इति ज्वरचिकित्सा ।

अथ ज्वरातीसारचिकित्सा—

हरिद्राद्वययष्ट्याह्वसिंहीशक्रयवैः कृतः । शिशोर्ज्वरातिसारघ्नः कषायः स्तन्यदोषनुत् ॥ १ ॥

घनकृष्णारुणाशृङ्गीचूर्णं क्षौद्रेण संयुतम् । शिशोर्ज्वरातिसारघ्नं श्वासकासवमीहरम् ॥ २ ॥

धातकीबिल्वधन्याकलोध्रेन्द्रयववालकैः । लेहः क्षौद्रेण बालानां ज्वरातीसारवान्तिजित् ॥ ३ ॥

अथ छर्द्यादिचिकित्सा—

सिंधुकृष्णाञ्जनं लाजा शृङ्गी मरिचमाक्षिकम् । लेहः शिशोर्विधातव्यश्छर्दिकासज्वरापहः ॥ १ ॥

पीतं पीतं वमेद्यस्तु स्तन्यं तन्मधुसर्पिषा । द्विवार्त्ताकीफलरसं पञ्चकोलञ्च लेहयेत् ॥ २ ॥

आम्रास्थिलाजसिन्धूत्थैर्लेहः क्षौद्रेण छर्दिनुत् ॥ ३ ॥

पिप्पलीमरिचानाञ्च चूर्णं समधुशर्करम् । रसेन मातुलुङ्गस्य हिक्काच्छर्दिनिवारणम् ।

अथातीसारचिकित्सा—

पद्मैर्दरचाङ्गेरीकासमाचीकपित्थजैः । शिरोरुजमम्यतीसारनाशनं मूर्ध्नि लेपनम् ॥ १ ॥

मुस्तकातीविषाशुण्ठीबालकेन्द्रयवै कृतम्।क्वाथं शिशुः पिबेत् प्रातः सर्वातीसारनाशनम् २॥

बिल्वञ्च पुष्पाणि च धातकीनां जलं सलोध्रं गजपिप्पली च ।
क्वाथावलेहौ मधुना विमिश्रौ बालेषु योज्यावतिसारितेषु ॥ ३ ॥

आम्रातकाम्रजम्बूनां त्वचमादाय चूर्णयेत् । मधुना लेहयेद्बालमतीसारविनाशनम् ॥४॥
मोचरसं समङ्गा च धातकी पद्मकेशरम् । पिष्टैरेतैर्यवागूः स्याद्रक्तातीसारनाशिनी ॥५॥
सितजीरसर्जचूर्णं बिल्वदलोत्थाम्बुमिश्रितं पीतम्।हन्त्यामरक्तशूलं गुडसहितं श्वेतसर्जो वा ६

अथ प्रवाहिकाचिकित्सा--

लाजा सयष्टीमधुकं शर्करा क्षौद्रमेव च । तण्डुलोदकसंयुक्तं क्षिप्रं हन्ति प्रवाहिकाम् ॥१॥
लेहस्तैलसिताक्षौद्रतिलयष्टयाह्वकल्पितः ।बालस्य रुन्ध्यान्नियतं रक्तस्रावं प्रवाहिकाम्॥२॥

अथ ग्रहणीचिकित्सा--

अङ्कोठमूलमथवा तण्डुलसलिलेन कुटजमूलम्वा।पीतं हन्त्यतीसारं ग्रहणीरोगञ्च दुर्वारम् १॥
मरिचमहौषधकुटजं द्विगुणीकृतमुत्तरोत्तरं क्रमशः ।गुडतक्रयुक्तमेतद् ग्रहणीरोगं निहन्त्याशु २
बिल्वशक्राम्बुमोचाब्दसिद्धमाजं पयः शिशोः ।सामां सरक्तां ग्रहणीं पीतं हन्यात् त्रिरात्रतः ३ ॥

अथ मूत्रग्रहे कणादिलेपः —

कणोषणसिताक्षौद्रसूक्ष्मैलासैन्धवैः कृतः । मूत्रग्रहे प्रयोक्तव्यः शिशूनां लेह उत्तमः ॥१॥

अथानाह-शूल०चिकित्सा—

घृतेन सिन्धुविश्वैलाहिङ्गुभार्गीरजो लिहन्। आनाहं वातिकं शूलं जयेत्तोयेन वा शिशुः ॥१॥

पूतिकर्णचिकित्सा--

विभीतकफलं कुष्ठं हरितालं मनःशिला । एभिस्तैलं विपक्तव्यं बालानां पूतिकर्णके ॥१॥

अथ कासश्वासयोश्चिकित्सा--

द्राक्षायासाभयाकृष्णाचूर्णं सक्षौद्रसर्पिषा । लीढं श्वासं निहन्त्याशु कासञ्च तमकं तथा॥१॥
पुष्करातिविषाशृङ्गीमागधीधन्वयासकैः । तच्चूर्णं मधुना लीढं शिशूनां पञ्चकासनुत् ॥२॥

अतितृष्णाचिकित्सा—

दाडिमस्य च बीजानि जीरकं नागकेशरम् । चूर्णितं शर्कराक्षौद्रलीढं तृष्णानिवारणम्॥१॥

नेत्ररोगचिकित्सा—

पिष्टैश्छागेन पयसा दार्वीमुस्तकगैरिकैः । बहिरालेपनं शस्तं शिशोर्नेत्रामयार्तिजित् ॥१॥
मनःशिला शङ्खनाभिः पिप्पल्योऽथ रसाञ्जनम्।वर्त्तिः क्षौद्रेण संयुक्ता बाले सर्वाक्षिरोगनुत्॥२॥
कृमिघ्नालशिखादावीलाक्षाचन्दनगैरिकैः । चूर्णाञ्जनं कुकूणे स्याच्छिशूनां पोथकीषु च ॥३॥

पामादिचिकित्सा—

गृहधूमनिशाकुष्ठराजिकेन्द्रयवैः शिशोः । लेपस्तक्रेण हन्त्याशु सिध्मपामाविचर्चिकाः ॥५॥

अथ सामान्यग्रहजुष्टानां चिकित्सा—

सहामुण्डीनिशोदीच्यक्वाथस्नानं ग्रहापहम् । सप्तच्छदामयनिशाचन्दनैश्चानुलेपनम् ॥५॥

अथाष्टमङ्गलघृतम्—

वचा कुष्ठं तथा ब्राह्मी सिद्धार्थकमथापि च । सारिवा सैन्धवं चैव पिप्पली घृतमष्टकम् ॥१॥
सिद्धं घृतमिदं मेध्यं पिबेत् प्रातर्दिने दिने । दृढस्मृतिः क्षिप्रमेधाः कुमारो बुद्धिमान् भवेत् ॥२॥
न पिशाचा न रक्षांसि न भूता न च मातरः । प्रभवन्ति कुमाराणां पिबतामष्टमङ्गलम् ॥३॥ इति

स्कन्दादिविशिष्टग्रहजुष्टानां बालानां सान्निध्ये विधेयमाह यथा—

बालग्रहविनाशाय विदधात बुधः सदा । कुमारतन्त्रनिर्दिष्टं बलिपूजादिकृत्यकम् ॥ १ ॥
बलिशान्त्यादिकर्माणि कार्याणि ग्रहशान्तये ॥ २ ॥

अथ बालरोगे पथ्यापथ्यविवेकः —

यत्पथ्यं यदपथ्यं च नृणामुक्तं ज्वरादिषु । तत्तद्धेयमौचित्याद्बालानां नैव जानता ॥१॥
पूर्वं पथ्यमपथ्यञ्च स्कन्दादीनां यदीरितम् । औचित्याद्योजयेज्जाते बालानां पारिगर्भिके ॥२॥
आगन्तुमादिबालानां पथ्यापथ्यं यदीरितम् । औचित्याद्योजयेत्तत्र बालेषु ग्रहरोगिषु ॥३॥

इति पथ्यापथ्यविवेकः ।

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृतायां
गूढार्थदीपिकाव्याख्यायां बालरोगचिकित्सा ।

---

# अथ चतुर्थोऽध्यायः ।

## अथ विष-चिकित्सा ।

विषवज्रपातो रस —

निशां सटङ्कञ्च सजातिकोषं तुल्यं समांशं कुरु देवदाल्याः ।
रसेन पिष्ट्वा विषवज्रपातो रसो भवेत् सर्वविषापहन्ता ॥ १ ॥
निष्कोऽस्य संजीवयति प्रयुक्तो नृमूत्रयोगेन च कालदष्टम् ।
जटाविषेणाकुलितं तथाऽन्यैर्विषैर्नरञ्चाशु तथाऽतुरञ्च ॥ २ ॥

सम्प्रति पारिशेष्याद्विषजुष्टस्य चिकित्सामाह तत्र प्रथम विषवज्रपातरसनिर्माणमुच्यते निशामित्यादि-निशामिति हरिद्राचूर्ण, शुद्धटङ्कण, जातीकोष-जावित्रीचूर्ण, शुद्धनीलतुत्थकचूर्णञ्च, एतेषा प्रत्येकं सम सममादाय खल्वे श्लक्ष्णं पेषण कृत्वा देवदाल्या स्वरसेन सम्यगाप्लाव्य दृढं विमर्द्य सशुष्कञ्च कृत्वा काचपात्रे स्थापयेत्। अथ विषवज्रपातो रसा निष्कमितो नृमूत्रयोगेन सह सेवित सर्वविषाणिहन्ति तथा कालेन मृत्युना कृष्णसर्पेण वा दष्ट नरं तथा मूलविषेण, अन्यैर्वा स्थावरजङ्गमविषैराकुलित नर शीघ्र सञ्जीवयति ॥ १-२ ॥

भीमरुद्रो रस —

सूतराजस्य तोलैकं गन्धकस्य तथैव च ।
अभ्रात् कर्षं ततो देयं तोलैकं कान्तलौहकम् ॥ ३ ॥
परोक्तेनौषधेनैव भावयेच्च पृथक् पृथक् ।
विशालावृहती ब्राह्मी-सौगन्धिकसुदाडिमैः ॥ ४ ॥
मर्कट्याश्चात्मगुप्ताया स्वरसेन पृथक् पृथक् ।
एकरक्तिकमानेन वटिकां कारयेद् भिषक् ॥ ५ ॥
वटीमेकां भक्षयित्वा पिबेच्छीतजलं ततः ।
भीमरुद्रो रसो नाम चासाध्यमपि साधयेत् ।
कुक्कुरस्य शृगालस्य विषं हन्ति सुदुस्तरम् ॥ ६ ॥

( इति विष-चिकित्सा )

अथ भीमरुद्ररसनिर्माणमाह सूतेत्यादि—सूतराजराज-शुद्धपारदस्यैकं तोलकं, शुद्धगन्धकस्य चैकं तोलकम्, अभ्रादभ्रकभस्मनः १ कर्षं, कान्तलौहभस्मनश्चैकं तोलकं समादाय पूर्वं पारदगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि सम्मिश्र्य श्लक्ष्णं खल्वे पिष्ट्वा विशालादीनां स्वरसेन पृथक् २ भावयित्वा रक्तिकैकप्रमाणां वटीं चरेत्। विशाला-इन्द्रवारुणी, बृहती-शुद्रभण्टाकी, ब्राह्मी प्रसिद्धा, सौगन्धिक-नीलकमल, दाडिमत्वक्, मर्कटी-अपामार्ग, आत्मगुप्ता-कपिकच्छु, एषां स्वरस क्वाथो वा ग्राह्य। अस्य रसस्यैकैका वटी शीतलजलानुपानेन सह सेविता कुक्कुरस्य विषं, शृगालस्य विषं, तथान्यदपि सुदुस्तरं विषवेगमपाकरोति ॥ ३-६ ॥

अथान्ये विषविघातकरा योगाः—तत्रादौ स्थावरविषहरा योगाः—

स्थावरेण विषेणार्त्तं नरं यत्नेन वामयेत्। वमनेन समं नास्ति यतस्तस्य चिकित्सितम्॥१॥

वमनहरद्रव्याणि—

तिक्तकोशातकीक्वाथं पिबेन्मध्वाज्यसंयुतम्। कटुकालाबुमूलम्वा तत्पत्रं वा पिबेज्जले ॥१॥

अथ सर्वविषोपचारः—

विषमत्यर्थमुष्णञ्च कथितं मुनिभिर्यतः। अतः सर्वविषे प्रोक्तः परिषेकस्तु शीतलः ॥२॥
औष्ण्यात्तैक्ष्ण्याद्विशेषेण विषं पित्तं प्रकोपयेत्। वामितं सेचयेत्तस्माच्छीतलेन जलेन च॥३॥
पाययेन्मधुसर्पिर्भ्यां विषघ्नं भेषजं द्रुतम् ॥ ३ ॥
भोक्तुमम्लरसं दद्याच्चर्वयेन्मरिचानि च। यस्य यस्य च दोषस्य पश्येल्लिङ्गानि भूरिशः।
तस्य तस्यौषधं कुर्याद्विपरीतगुणं क्रियाम् ॥ ४ ॥

अथ विषहरा लेपः—

मूलत्वक्पुष्पपत्राणि बीजञ्चेति शिरीषतः। गवां मूत्रेण संपिष्टं लेपाद्विषहरं परम्॥१

इति स्थावरविषचिकित्सा।

अथ जङ्गमविषचिकित्सायां पूर्वं सर्पविषचिकित्सा—

कार्या सद्यः सर्पदष्टे मणिमन्त्रौषधक्रिया।
अचिन्त्यो हि प्रभावोऽस्ति मणिमन्त्रौषधस्य यत् ॥ १ ॥

तण्डुलीयकमूलन्तु पीतं तण्डुलवारिणा। तक्षकेणापि दष्टं हि निर्विषं कुरुते नरम्॥२
घृतमधुनवनीतं पिप्पलीशृङ्गवेरं मरिचमपि च दद्यात् सप्तमं सैन्धवञ्च।
यदि भवति सरोषः तक्षकेणापि दष्टोऽगदमिह खलु पीत्वा निर्विषस्तत्क्षणेन ॥ ३ ॥
शिरीषपुष्पस्वरसे सप्ताहं मरिचं सितम्। भावितं सर्पदष्टानां पाने नस्याञ्जने हितम् ॥४

जलेन लाङ्गलीकन्दं नस्यं सर्पविषापहम् ।वारिणा टङ्कणं पीतमथवाऽर्कस्य मूलकम् ॥५॥

अथ धूप —

कपोतविण्मूत्रशिरोरूहाणि सगोविषाण शिखिपिच्छकाग्रम् ।
यवस्य धान्यस्य तुषाश्च वीजं कार्पासज वाऽप्युषिताश्च माला ॥१॥
इत्यौषधीभि परिक्लिपितोत्तमो धूपोऽगद स्याद्भुजगैरमुक्ते ।
गृहे विधेय कुशलैरनेन नश्यन्ति सर्पाश्च तथाऽऽखवश्च ॥ २ ॥

अथ दूषीविषचिकित्सा—

दूषीविषार्त्तं सुस्निग्धमूर्द्ध्वं चाधश्च शोधितम्।पाययेदगद मुख्यमिदं दूषीविषापहम्॥१॥
पिप्पली धान्यक मासी लोध्रमेला सुवर्चिका । मरिच बालकं चैला तथा कनकगैरिकम् ।
क्षौद्रयुक्त कषायोऽय दूषीविषमपोहति ॥२॥

इति दूषीविषचिकित्सा ।

अथ नखदन्तविषचिकित्सा—

पिचुमन्दशमीवटकल्कयुत क्वथित जलमाशु विलोडनत ।
नखदन्तविषाणि निहन्ति नृणा विपमाण्यखिलान्यपि सत्यमिदम् ॥१॥

अथाखुविषचिकित्सा—

कुष्ट वचामदनकोशवतीफलेन सयोजित तदिति चूर्णमिदं चतुर्णाम् ।
गोमूत्रपीतमखिलाखुविष निहन्ति कोशातकीक्वथनमापिवतोऽथवापि ॥ १ ॥

आखुविषान्तको रस —

रसं गन्धं विषञ्चैव त्र्यूषणं टङ्करोहिणी । पुनर्नवारसैर्मर्द्यं गोमूत्रे च द्विगुञ्जकम् ॥१॥
पिवेदाखुविषार्त्तोना सर्वं हरति तद्विषम्।विषदष्टोद्भवानन्यान्हन्यादाखुविषान्तक ॥२॥

अथ वृश्चिकविपचिकित्सा—

मन शिलाकुष्टकरञ्जवीजशिरीषकादमीरभवै समाशै ।
विनिर्मिताऽऽस्ये विवृता च लिप्ता संहारिणी वृश्चिकवक्त्रतस्य ॥ १ ॥
तुलुङ्गस्य मूलन्तु रविवारे समुद्धरेत्। उत्तराभिमुखेनैव ह्रीमन्त्रोच्चारणात् स्पृशेत् ॥२॥
वामाङ्गे दक्षिणे दष्टे वामदष्टे च दक्षिणे । सप्तधा मार्जनेनैव विष वृश्चिकज हरेत् ॥३॥
श्वेतं पुनर्नवामूलं रविवारे समुद्धरेत् । .कार्पासमूलं चर्वित्वा विष वृश्चिकज हरेत् ॥४॥
"ॐ क्ष फट् स्वाहा" अनेन मन्त्रेणापो मार्जयेत् ।

अथ मन्त्र —

ादित्यरथवेगेन विष्णुवाणवलेन च । गरुडपक्षनिपातेन भूम्यागच्छ महाविप ॥१॥

इति मन्त्र ।

ीयपिष्टजैपालरल्कलेपेन सर्वथा । विष वृश्चिकविद्धस्य भस्मीभवति तत्क्षणात् ॥१॥

सादरहरिताले पिष्टे तोयेन लेपनाद्दंशे।तत्क्षणमेव हि जायते वृश्चिकविद्धस्य दुर्धर्स्तेकम्॥२॥

इति वृश्चिकविपचिकित्सा ।

अथ क्षुद्रजन्तुविपचिकित्सा ।

अथ वरटीविपहरो लेप —

च नागरोपेन सिन्धुसौवर्च्चलान्वितम् । फणिवल्लारसैर्लेपाद्धन्ति तद्वरटीविषम् ॥१॥

अथ लताविपहरो लेपो—

चनोद्वयमञ्जिष्ठापतङ्गगजकेशरै । शीताम्बुपिष्टैरालेप सद्यो लूताविपापह ॥१॥

ारिकर्णाद्वयं शेलु पाटला द्वे पुनर्नवे । कपित्थश्च शिरीषश्च लेपो लूताविपापह ॥२॥

अथ मण्डूकदशविषहरो लेप —

शिरीषबीजै कुलिशद्रुमस्य क्षीरेण पिष्टै कृतलेपनानाम् ।
विष विनाश व्रजति क्षणेन मण्डूकदशप्रभव नराणाम् ॥ १ ॥

भृङ्गीमत्स्यविपघ्नोपाय —

गवेधस्य निष्क्राथे कल्को घृतविमिश्रित-।भृङ्गीमत्स्यविप हन्ति धूमो वा बर्हिपक्षज ॥१॥

अथान्यविपहरोपाया —

ाप प्रदीपतैलस्य खर्जूरविपनाशन । हरिद्राद्वयलेपो व सगैरिकमन शिल ॥ १ ॥

नागरं गृहकपोतपुरीष बीजपूरकरसो हरितालम् ।
सैन्धवं च विनिहन्ति विलेपादाशु भृङ्गजनित विपमेतद् ॥ २ ॥

ौलिकाभिर्दष्टाना मक्षिकामशकैस्तथा। गोमूत्रेण वरालेप कृष्णवल्मीकमृत्कृत- ॥३॥

अथ श्वानविपचिकित्सा—

ाकोदुम्बरिकामूलं धत्तूरफलसंयुतम् । पीत तण्डुलतोयेन सारमेयविषापहम् ॥ १ ॥

ारस्करफलं नेव्यं क्रमवृद्ध दिने दिने । सारमेयविष हन्ति मासेन नहि संशय ॥२॥

द्वाऽपामार्गमूलन्तु कर्षेकं मधुना लिहेत्।श्वदंष्ट्राजं विष हन्यात् कुमारीदलसैन्धवम्॥३॥

दंशस्थाने वन्धयेत्तु त्रिदिनान्ते सुखावहम् ॥ ४ ॥

कस्तूरीवब्बूलपत्ररसो गोघृतेन पाने देय शुनो विषं नश्यति ।

अथवा शतावरीमूलरसो गोदुग्धेन सह पाने देय शुनो विष नश्यति ।

श्वानदष्ट्राविषं हन्ति लेपात् कुक्कुटविष्टया।गुडतैलार्कदुग्ध वा लेपाच्छ्वानविष हरेत्॥५॥

तैलं तिलाना पलल गुडञ्च क्षीर तथाऽर्क सममेव पीतम् ।
आलर्कमुग्रं विषमाशु हन्ति सद्योभव वायुरिवाभ्रवृन्दम् ॥ ६ ॥

अथ पथ्यापथ्यम्—

शालय षष्टिकाश्चैव कोरदूष्यप्रियगव । मुद्गा हरेणवस्तैल सर्पिश्चापिनवं क्वचित्॥१॥
वार्ताकं कुलक धात्री जीवन्ती तण्डुलीयकम्। भोजनार्थे विषार्ताना हितं पटुषु सैन्धवम् ॥२॥

इति पथ्यानि ।

अथापथ्यानि—

विरुद्धाध्यशनक्रोधक्षुद्भयायासमैथुनम् । वर्जयेद्विषमुक्तोऽपि दिवास्वप्न विशेषत ॥३॥

इति पथ्यापथ्यानि ।

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृताया
गूढार्थसन्दीपिकाव्याख्याया विषचिकित्सा ।



# अथ पञ्चमोऽध्यायः

## अथ रसायनवाजीकरणाधिकारः

### अथ रसायनलक्षणम्—

**स्वस्थस्यौजस्करं किञ्चित् किञ्चिदार्त्तस्य रोगनुत्।**
**यज्जराव्याधिविध्वंसि भेषजं तद्रसायनम् ॥ १ ॥**

भेषजं तावद् द्विविधम्। आतुरहितकरमेकं, द्वितीयं स्वस्थहितकरञ्च। स्वस्थहितकरमपि द्विविधं रसायनवाजीकरणभेदात्। अत्रातुरहितकरं भेषजं तावदुक्तमेव, सम्प्रत्यस्मिन्नधिकारे स्वस्थजनहितकरं भेषजं प्रतिपाद्यते। तत्रापि वाजीकरणापेक्षया रसायनस्य वर्षसहस्रायुष्ट्वात् महाफलत्वाच्च प्रथमतो रसायनलक्षणमाह स्वस्थस्येत्यादि—यद्भेषजं सेवितं स्वस्थजनस्योजोधातुवर्द्धकं तथा रोगपीडितस्य रोगनुत्, तथा यज्जराव्याध्योर्विध्वंसकरं भवति तद्भेषजं रसायनं ज्ञेयम् ॥

रसायनशब्दार्थो यथा—

श्रेष्ठानां रसादिशुक्रान्तानां धातूनामयनमाप्यायनं यत्तद्रसायनम्, अथवा रसानां भेषजाश्रितानां रसवीर्य्यविपाकप्रभवाणामायुर्वर्णवीर्य्यदार्ढ्यवयःस्थैर्यकराणामयनं लाभोपायो रसायनं वर्द्धकं स्थापकमप्राप्तप्रापकञ्चेति रसायनं ज्ञेयम्।

तद्धि द्विविधं कुटिप्रावेशिकं वातातपिकञ्चेति, पुनश्च त्रिविधं काम्यं, नैमित्तिकमाजस्रिकञ्चेति। मेधाकाम श्रीकाम इत्यादि काम्यम्। नैमित्तकं व्याधेर्निमित्तं शिलाजतुभल्लातकतुवरकादिकम्। आजस्रिकं क्षीरघृताभ्यासादिकं ज्ञेयम्।

### कुटीप्रवेशविधिर्यथा—

नृपवैद्यद्विजातीनां साधूनां पुण्यकर्मणाम्। निवासे निर्भये शस्ते प्राप्योपकरणे शुभे ॥ १ ॥
दिशि पूर्वोत्तरस्यान्तु सुभूमौ कारयेत् कुटीम्। विस्तारोत्सेधसम्पन्नां त्रिगर्भां सूक्ष्मलोचनाम् २
घनभित्तिमृतुसुखां सुस्पष्टां मनसः प्रियाम्। शब्दादीनामशस्तानामगम्यां स्त्रीविवर्जिताम् ३
इष्टोपकरणोपेतां सज्जवैद्यौषधद्विजाम्। अथोदगयने शुक्ले तिथिनक्षत्रपूजिते ॥ ४ ॥
मुहूर्त्तकरणोपेते प्रशस्ते कृतवापनः। देवतां पूजयित्वाग्रे द्विजातींश्च प्रदक्षिणम् ॥ ५
देवगोब्राह्मणान् कृत्वा ततस्तां प्रविशेत् कुटीम्। तस्यां संशोधनैः शुद्धः पुनः जातबलः सुखी ६
रसायनं प्रयुञ्जीत ॥ इति ॥ १ ॥

श्रीमन्मथो रस —

रसगन्धकयोर्ग्राह्यं कर्षमेकं सुशोधितम् ।
अभ्रं निश्चन्द्रिकं दद्यात् पलार्द्धं सुविचक्षणः ॥ २ ॥
कर्पूरं शाणक दद्याद्वङ्गञ्च कोलसम्मितम् ।
ताम्रं कोलार्द्धकं तत्र निःशेषमारितं क्षिपेत् ॥ ३ ॥
लौहं कर्षं सुजीर्णञ्च वृद्धदारकवीजकम् ।
विदारी शतमूली च क्षुरवीजं वला तथा ॥ ४ ॥
मर्कट्यातिवला चैव जातीकोषफले तथा ।
लवङ्गं विजयावीजं श्वेतसर्जं यमानिका ॥ ५ ॥
एतेषां चूर्णमादाय प्रक्षिपेत् शाणसम्मितम् ।
गुञ्जाद्वयञ्च भोक्तव्यं कोष्णं क्षीरं पिबेदनु ॥ ६ ॥
गृहे यस्य शतं स्त्रीणां विद्यतेऽतिव्यवायिनः ।
न तस्य लिङ्गशैथिल्यमौषधस्यास्य सेवनात् ॥ ७ ॥
न च शुक्रं क्षयं याति न वलं ह्रासतां व्रजेत् ।
कामरूपी भवेद्दिव्यो वृद्धः षोडशवर्षवत् ॥ ८ ॥
रसायनवरो वल्यो वाजीकरण उत्तमः ।
रस श्रीमन्मथो नाम महेशेन प्रकाशितः ॥ ९ ॥

अथ श्रीमन्मथरसनिर्माणमाह रसेत्यादि—शुद्धपारदस्यैकं कर्षं, शुद्धगन्धकस्यैकं कर्षं, निश्चन्द्रिकमभ्रकभस्म पलार्द्धं, कर्पूर शाणैकमित, वङ्गभस्म कोलमित, ताम्रभस्म कोलार्द्धमित, पुराण लौहभस्म कर्षमित, तथा शुद्धवृद्धदारकवीजचूर्णं, विदारीकन्दचूर्णं, शतमूली–शतावरीचूर्णम्, क्षुरवीज–कोकिलाक्षकवीजचूर्णं, वलाचूर्णं, मर्कटी–शुद्धकपिकच्छुवीजचूर्णम्, अतिवला (कघी) तस्याश्चूर्णं, जातीकोष (जावित्री–चूर्णं), जातिपत्राचूर्णं, जातीफलचूर्णं, लवङ्गचूर्णं, शुद्धविजयावीजचूर्णं, श्वेतसर्जरालचूर्णं, यमानिकाचूर्णञ्च, एतेषा चूर्णाना प्रत्येक शाणमित समादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मिश्र्य सर्वमेकीकृत्य श्लक्ष्णं पिष्ट्वा जलेन सह विमर्द्य द्विगुञ्जाप्रमाणा वटीश्चरेत । अस्य रसस्य प्रत्यहमेकैका वटीं मधुना सह भक्षयित्वा तदुपरि ससित कोष्ण दुग्ध पिबेत् । इत्थ प्रत्यह सेवितोऽय रसो वलादिक वर्द्धयति, सम्भोगशक्तिञ्चोत्कटा करोति । वीर्य्यस्तम्भं च करोति । अस्य रसस्य

सेवनात् पुरुषः कामदेवसमसौन्दर्ययुक्तस्तथा वृद्धोऽपि तरुणो भवति । अयं रस. सर्वश्रेष्ठरसायनो वल्यो वाजीकरणश्च वर्तते ।

वाजीकरणलक्षणं यथा—

येन नारीषु सामर्थ्यं वाजिवल्लभते नरः । येन चाप्याधिकं वीर्यं वाजीकरणमेव तत् ॥ १ ॥ इति चरकः ।

अथ श्रीमन्मथरसो श्रीमहेशेन प्रोक्तः ॥ २—९ ॥

माहेश्वररसः —

रसं भस्मीकृतं कोलं गन्धकं शोधितं समम् ।
लोहं कर्षद्वयं ताम्रमर्द्धकोलकसम्मितम् ॥ १० ॥
सुवर्णं जारितं दद्यात् शाणार्द्धं सुविचक्षणः ।
अभ्रं कर्षद्वयं दद्यात् शाणार्द्धं चन्द्रचूर्णकम् ॥ ११ ॥
श्यामाबीजं वरीञ्चैव बलामतिबलां तथा ।
एलाञ्च शङ्खपुष्पञ्च शाणमानं विनिक्षिपेत् ॥ १२ ॥
जलेन वटिकां कृत्वा गुञ्जामात्रां प्रदापयेत् ।
सेवनादस्य कन्दर्प-रूपो भवति मानवः ॥ १३ ॥
सहस्रं याति नारीणामुत्साहो जायतेऽधिकः ।
नित्यं स्त्रीसेवनाद् यस्तु क्षीणशुक्रो भवेन्नरः ॥ १४ ॥
महाशुक्रो भवेत् सोऽपि सेवनादस्य नान्यथा ।
महाबलो महाबुद्धिर्जायते नात्र संशयः ॥ १५ ॥
स्थूलानां कर्षकः श्रेष्ठः कृशानां पुष्टिकारकः ।
रसो विनाशयेद्रोगान् समसप्ताहभक्षणात् ॥ १६ ॥

अथ माहेश्वररसनिर्माणमाह रसमित्यादि—भस्मीकृतं रसं—रससिन्दूरं कोलमितं ( ८ माषकमितमिति ), शुद्धगन्धकं कोलमितं, लोहभस्म द्विकर्षमितं, ताम्रभस्म अर्द्धकोलमितं (४मा०), जारितं सुवर्णमिति स्वर्णभस्म शाणार्द्धं (२माषकम्), अभ्रकभस्म द्विकर्षमितं, चन्द्रचूर्णं—कर्पूरचूर्णं शाणस्यार्द्धं, तथा श्यामाबीजं—शुद्धवृद्धदारकबीजचूर्णं, वरी—शतावरीचूर्णं, बलाचूर्णम् अतिबलाचूर्णं, सूक्ष्मैलाबीजचूर्णं, शङ्खपुष्पीचूर्णञ्च, प्रत्येकं शाणमितं समादाय पूर्वं पारदगन्धकयोः कज्जलीं कृत्वा शेष-

द्रव्याणि सम्मिश्र्य श्लक्ष्णं विचूर्ण्य जलेन सह पिष्ट्वा गुञ्जाप्रमाणा वटीश्चरेत्। अस्य रसस्य प्रत्यहं गुञ्जामात्रं जीवनीयगणादिचूर्णैस्सह दुग्धानुपानतः सेवितं पुरुषं सर्वशक्तिसम्पन्नं करोति। तथाऽस्य रसस्य सेवनात् पुरुषः कन्दर्परूपो भवति, तथा स्त्रीभोगसमर्थो भवति। अधिकस्त्रीप्रसङ्गेन क्षीणशुक्रो नरो रसस्यास्य सेवनेन महाशुक्रो भवेत्। अयं रसः स्थूलानां कर्षको वृद्धमेदोह्रासकरस्तथा क्षीणानां पुष्टिकारकश्च वर्तते। अयं रसो यथाव्याध्यनुपानेन सह सप्तसप्ताहपर्यन्तं सेवितः सर्वरोगान्निहन्ति ॥ १०-१६ ॥

पूर्णचन्द्रो रसः—

**सूताभ्रलौहं सशिलाजतु स्याद्विडङ्गताप्ये मधुना घृतेन।**
**सम्मर्द्य सर्वं खलु पूर्णचन्द्रो माषोऽस्य वृष्यो भवति प्रयुक्तः॥१७॥**

अथ पूर्णचन्द्ररसनिर्माणमाह सूतेत्यादि—सूत-रससिन्दूरम्, अभ्रमभ्रकभस्म, लोह-लौहभस्म, शुद्धं शिलाजतु, विडङ्गचूर्णं, ताप्य-स्वर्णमाक्षिकभस्म, एतेषां प्रत्येकं समं सममादाय सर्वं खल्वे श्लक्ष्णं पिष्ट्वा काचपात्रे स्थापयेत्। अयं रसः प्रत्यहं द्विरक्तितः प्रारभ्य यथाग्निबलं माषकपर्यन्तं मधुना घृतेन च सह सेवितो वृष्यादिकं रसायनगुणसमूहमुत्पादयति ॥१७॥

कार्श्यहरलौहम्—

**श्वेता-पुनर्नवा दन्ती-वाजिगन्धात्रिकत्रयैः।**
**शतमूलीवलायुक्तैरेभिर्लौहं प्रसाधितम् ॥ १८ ॥**
**हिनस्ति नियतं कार्श्यमपि भृङ्गरसैः सह।**
**नास्त्यनेन समं लौहं सर्वरोगान्तकं मतम्।**
**दीपनं बलवर्णाग्नेर्वृष्यं तच्चोत्तमोत्तमम् ॥ १९ ॥**

अथ कार्श्यहरलौहनिर्माणमाह श्वेतेत्यादि—श्वेतापुनर्नवेति—श्वेतपुनर्नवाचूर्णम्, अथवा श्वेता-वंशरोचनाचूर्णं, पुनर्नवाचूर्णञ्चेति पृथक् २ ग्राह्यम्, दन्तीमूलचूर्णं, वाजिगन्धा-अश्वगन्धाचूर्णं, त्रिकत्रयमिति-हरीतकीचूर्णं, विभीतकचूर्णम्, आमलकचूर्णं, शुण्ठीचूर्णं, मरिचचूर्णं, पिप्पलीचूर्णं, विडङ्गचूर्णं, मुस्तकचूर्णं, चित्रकचूर्णं, शतमूली-शतावरीचूर्णं, बलाचूर्णञ्च प्रत्येकं समं समं ग्राह्यं तथा सर्वचूर्णसमं प्रसाधितं लौह-लोहभस्म समादाय सर्वमेकीकृत्य खल्वे श्लक्ष्णं पिष्ट्वा भृङ्गराजस्वरसेन सम्यगाप्लाव्य दृढं विमर्द्य संशोष्य च काचपात्रे स्थापयेत्। इदं लौहं

प्रत्यह मापकमित यथाग्निबल सेवित कार्श्यं हिनस्ति । अस्मादन्यत् सर्वरोग-नाशनं लौहं नास्ति । तथेदं लौहं बलस्य, पाचकाग्नेश्च वर्द्धकं तथा पुष्पगुण-करञ्च वर्तते ॥ १८-१९ ॥

नारदीय-लक्ष्मीविलासो रसः —

पलं कृष्णाभ्रचूर्णस्य तदर्द्धं रसगन्धकम् ।
कर्पूरस्य तदर्द्धञ्च जातीकोषफले तथा ॥ २० ॥
वृद्धदारकबीजञ्च बीजमुन्मत्तकस्य च ।
त्रैलोक्यविजयाबीज विदारीमूलमेव च ॥ २१ ॥
नारायणी तथा नागबला चातिबला तथा ।
बीज गोक्षुरकस्यापि नैचुलं बीजमेव च ॥ २२ ॥
एतेषां कार्षिकं चूर्णं पर्णपत्ररसेन च ।
निष्पिष्य वटिका कार्या त्रिगुञ्जाफलमानतः ॥ २३ ॥
निहन्ति सन्निपातोत्थान् गदान् घोरान् सुदारुणान् ।
वातोत्थानपि पित्तोत्थान नास्त्यत्र नियमः क्वचित् ॥ २४ ॥
कुष्ठमष्टादशविधं प्रमेहान् विंशतिं तथा ।
नाडीव्रणं व्रणं घोरं गुह्यामयभगन्दरम् ॥ २५ ॥
श्लीपदं कफवातोत्थं चिरजं कुलसम्भवम् ।
गलशोथमन्त्रवृद्धिमतीसारं सुदारुणम् ॥ २६ ॥
कासपीनसयक्ष्मार्शः स्थौल्यं दौर्बल्यमेव च ।
आमवातं सर्वरूपं जिह्वास्तम्भं गलग्रहम् ॥ २७ ॥
अर्दितं गलगण्डञ्च वातशोणितमेव च ।
उदरं कर्णनासाक्षि-मुखवैरस्यमेव च ॥ २८ ॥
सर्वशूलं शिरःशूलं स्त्रीणां गदनिसूदनम् ।
वटिका प्रातरेकैकां खादेन्नित्यं यथाबलम् ॥ २९ ॥
अनुपानमिह प्रोक्तं मांसं पिष्टं पयो दधि ।
वारिभक्तसुरासीधु-सेवनात् कामरूपधृक् ॥ ३० ॥
वृद्धोऽपि तरुणस्पर्द्धी न च शुक्रस्य संक्षयः ।
न च लिङ्गस्य शैथिल्यं न केशा यान्ति पक्वताम् ॥ ३१ ॥

नित्यं स्त्रीणां शतं गच्छेन्मत्तवारणविक्रमः ।
द्विलक्षयोजनी दृष्टिर्जायते पौष्टिकः परः ॥ ३२ ॥
प्रोक्तः प्रयोगराजोऽयं नारदेन महात्मना ।
रसो लक्ष्मीविलासोऽयं वासुदेवो जगत्पतिः ।
अभ्यासादस्य भगवान् ललनासु वल्लभः ॥ ३३ ॥

अथ नारदीयलक्ष्मीविलासरसनिर्माणमाह पलमित्यादि—कृष्णाभ्रचूर्णस्य—कृष्णाभ्रकभस्मन पलैक, तदर्द्ध शुद्धपारद (अर्द्धपलमित.), शुद्धगन्धकञ्च तदर्द्ध (अर्धपलमित ), कर्पूरचूर्णमर्द्धपलमित, जातीकोष—जातीपत्रीचूर्णमर्द्धपलमित, जातीफलचूर्णञ्चार्द्धपलमितं, तथा वृद्धदारकबीजादीना नवद्रव्याणा प्रत्येकं कर्षमितं चूर्णमिति भट्टादिव्यवहार , रोढीयास्तु रसगन्धकयोर्मिलित्वा पलार्द्धं, रसगन्धकार्द्धञ्च कर्पूर तथा तन्मितमेव जातीकोषफलयोर्मिलित चूर्णं, तथा वृद्धदारकादिनयद्रव्याणाञ्च मिलित्वा कर्षमित ग्राह्यमिति वदन्ति । पूर्वं पारदगन्धकयो कज्जला कृत्वा शेषद्रव्याणि सम्मिश्र्य श्लक्ष्ण पिष्ट्वा पर्णपत्राणा—नागवल्लीदलाना स्वरसेन सम्यगाप्लाव्य दृढं विमर्द्य त्रिगुञ्जाफलप्रमाणा वटीश्चरेत् । चन्द्रसञ्ज—कर्पूर, जातीकोषो—जातीपत्रो, फलं जातोफलम्, उन्मत्तकस्य बोजानि—धुस्तूरस्य शुद्धबीजानि, त्रैलोक्यविजयावीज—शुद्धभङ्गावीजचूर्णं, विदारीमूल—विदारीकन्दचूर्ण, नारायणी—शतावरीचूर्णं, नैचुल बीजमिति—समुद्रफलबीजचूर्णम् । अथ रसस्त्रिगुञ्जामितो यथा दोषानुपाने सह सेवित ·सन्निपातोद्भवरोगान् , वातिकरोगान्, पैत्तिकरोगान् , अष्टादशविधकुष्ठानि, विंशतिविधप्रमेहान् , नाडीव्रण, केवल घोरं व्रण, गुदामयमर्श , भगन्दर, चिरज कुलक्रमादागत कफवातोद्भवञ्च श्लीपद, गलशोथम् । अन्त्रवृद्धि, दारुणमतीसार कास, पीनस, यक्ष्म, अर्श , स्थौल्यं, दौर्बल्यम् , आमवात, जिह्वास्तम्भमिति—जिह्वागतसञ्ज्ञावाहकसूत्राणा विकृत्योत्थ जिह्वाया अकर्मण्य, गलग्रह—गलावरोध ( अन्नश्वासप्रणाल्योरवरोधमित्यर्थ ) अर्दितं गणगण्ड, वातशोणित—वातरक्त, हृदररोग, कर्णनासाक्षिमुखवैरस्यमिति तत्तत्सञ्ज्ञावाहकसूत्राणा विकारेणोत्पन्न कर्णादीना वैरूप्य, शिर शूल, सर्वविध शूल, स्त्रीणाञ्च सर्वविधरोगान् तथा मूलपाठोक्तान् सर्वरोगान्निहन्ति । अस्य रसस्य सेवनात् कामशक्तिर्दर्शनशक्तिश्च वर्द्धते । अनुपान—मांसरस , पिष्टक, दुग्ध, दधि, जल, तक्र, सुरा, सीधु चेति सर्वं यथालाभ यथारुचि च प्रयोज्यम् ।

रसेन सम्यगाप्लाव्य दृढ विमर्द्य संशोष्य च स्निग्धमृल्लिप्तवस्त्रै सप्तवारं कृतावरणाया काचकूप्या (कवचीयन्त्रविधिनेत्यर्थ ) कज्जलीं प्रपूर्य तस्या मुखञ्च जलपिष्टचूर्णगुडपङ्केन निरुध्य वालुकायन्त्रमध्ये कूपिका निधाय अहोरात्रं पचेत् । स्वाङ्गशीता कूपिका यत्नतो विभिद्य कूपिकाकण्ठलग्नं दरदेन–हिङ्गुलेन समान रक्तं सोज्ज्वलञ्च रस गृह्णीयात् । अय रस प्रत्यह द्विगुञ्जाप्रमाणत· प्रारभ्य यथाग्निबलं माष कामितो घृतेन मधुना च सह सेवितव्य , तदनन्तर ह्यनुपाने दुग्धं, गुडं, घृत, कृष्णेक्षुं, शर्करा, द्राक्षा, खर्जूर, मधुकप्रभृतीन् यथादोषं विचिन्त्य यथारुचि भक्षयेत् । अय रस त्रिफलाचूर्णमधुभ्या सेवितश्शिरोत्थितं पित्तरोगं विनिहन्ति, तथा निर्गुण्डीपत्रस्वरसेन सहास्य रसस्य सेवनाद् दुर्वारापि वातवेदना प्रशम याति । एवमयं रस प्रत्यहमर्द्धावर्त्तितदुग्धेनेत्यर्द्धक्वथितदुग्धेन सह सेव्यते चेद्वन्ध्यापि चिरायुषं पुत्रमुत्पादयति । अय रस कामेच्छुकाना कामशक्तिवर्द्धकस्तथास्य प्रभावेण पुरुषो बल्यो रम्यश्च भूत्वा स्त्रिय रमते ॥ ३४–४१ ॥

अनङ्गसुन्दरो रस —

शुद्धसूतं समं गन्ध त्र्यहं कह्लारजैर्द्रवैः
मर्दितं वालुकायन्त्रे यामं सम्पुटके पचेत् ॥ ४२ ॥
रक्तागस्त्यद्रवैर्भाव्यं दिनमेक सिताऽम्बुजैः ।
यथेष्टं भक्षयेच्चानु कामयेत् कामिनीशतम् ॥ ४३ ॥

अथ अनङ्गसुन्दररसनिर्माणमाह शुद्धसूतमित्यादि—शुद्धसूत–शुद्धपारदं, शुद्धगन्धकञ्च द्वय सम सममादाय पाषाणखल्वे श्लक्ष्णा कज्जलीं कृत्वा कह्लारजैर्द्रवैरिति रक्तकमलस्वरसं सप्तधा भावयित्वा दृढ विमर्द्य सशोष्य च स्निग्धमृल्लिप्तवस्त्रै सप्तधा कृतावरणाया काचकूप्या ( कवचीयंत्रविधिनेत्यर्थ ) कज्जलीं प्रपूर्य वालुकायन्त्रे यामैकं पक्त्वा स्वाङ्गशीता कूपिका विभिद्य नालिकाकण्ठलग्नमौषधं समादाय खल्वे विचूर्ण्य रक्तागस्त्यपुष्पस्वरसै श्वेतकमलस्वरसैश्च पृथक् २ दिनमेक भावयित्वा दृढं विमर्द्य सशोष्य च काचपात्रे स्थापयेत् । अय रस प्रत्यह द्विरक्तिमितो दुग्धाद्यनुपानै· सेवित कामशक्तिं वर्द्धयति ॥ ४२–४३ ॥

वालुकायन्त्रलक्षणम्—

भाण्डे वितस्तिगम्भीरे मध्ये निहितकूपिके । कूपिकाकण्ठपर्यन्तं वालुकाभिश्च पूरिते॥१॥

भेषजं कूपिकासस्थं वह्निना यत्र पाच्यते। वालुकायन्त्रमेतद्धि यन्त्रं तत्र बुधैः स्मृतम्॥२॥

कवचीयन्त्रनिर्माणं यथा—

नातिह्रस्वां काचकूपीं नचातिमहतीं दृढाम्। वाससा कर्दमाक्तेन परिवृत्य समन्ततः॥१॥
संलिप्य मृदुमृत्स्नाभिः शोषयेद्भानुरश्मिना। निधाय भेषजं तत्र मुखमाच्छादयेत्ततः॥२॥
कठिन्या दृढया वापि पचेद् यन्त्रे विधानतः। कवचीयंत्रमेतद्धि रसादिपचने मतम्॥३॥

हेमसुन्दरो रसः—

मृतसूतस्य पादांशं हेमभस्म प्रकल्पयेत्।
क्षीराज्यदधिसमिश्रं माषैकं कांस्यपात्रके॥ ४४॥
लेहयेन्मासषट्कन्तु जरामरणनाशनम्।
वागुजीचूर्णकर्षैकं धात्रीफलरसाप्लुतम्।
अनुपानं पिबेन्नित्यं स्याद्रसो हेमसुन्दरः॥ ४५॥

अथ हेमसुन्दररसनिर्माणमाह मृतसूतस्येत्यादि—मृतसूत—रससिन्दूरं (१तो०), तस्य पादांशं हेमभस्म—स्वर्णभस्म (३मा०) समादाय शुभे पाषाणखल्वे श्लक्ष्ण पेषणं कृत्वा काचपात्रे स्थापयेत्। अस्य रसस्य प्रत्यहं रक्तिमितमात्रां कांस्यकटोरिकायां निक्षिप्य क्षीराज्यदधिभिः विलोड्य षण्मासपर्यन्तं प्रत्यहं लेहयेत्। अनुपान—कर्षमितं वागुजीचूर्णं धात्रीफलस्वरसेनाप्लुतं कृत्वा नित्यं रसभक्षणानन्तरं भक्षयेत्। एवं सेवितोऽयं रसो जरामरणादिकं नाशयति॥ ४४-४५॥

अमृतार्णवो रसः—

सूतभस्म चतुर्भागं लौहभस्म तथाऽष्टकम्।
अभ्रभस्म च षड्भागं गन्धकस्य च पञ्चकम्॥ ४६॥
भक्षयेत् त्रिफलाक्वाथैस्तत्सर्वं भृङ्गजैर्द्रवैः।
शिग्रुवह्निकटुक्वाथैर्भावयेत् सप्तधा पृथक्॥ ४७॥
सर्वतुल्या कणा याज्या गुडैर्मिश्रा पुरातनैः।
निष्कमात्रं सदा खादेत् जरामृत्युनिवारणम्॥ ४८॥
ब्रह्मायुः स्यात् चतुर्मासे रसोऽयममृतार्णवः।
कौरण्टकस्य पत्राणि गुडेन भक्षयेदनु॥ ४९॥

अथामृतार्णवरसनिर्माणमाह सूतभस्मेत्यादि—सूतभस्म-रससिन्दूरं चतुर्भागं (४तो०), लोहभस्म अष्टभागमित (८तो०), अभ्रकभस्म षड्भागमितं (६तो०), शुद्धगन्धकस्य पञ्चभागं (५तो०) समादाय शुभे पाषाणखल्वे दृढ पेषण कृत्वा त्रिफलाक्वाथेन, भृङ्गराजस्वरसेन, शिग्रु (सहजन) तस्य क्वाथेन, वह्निश्चित्रकस्तस्य क्वाथेन, कटु—कटुकी तस्य क्वाथेन च पृथक् २ सप्तधा भावयित्वा सर्वद्रव्यसमं (२३तो०), वस्त्रसारित कणाचूर्णं (पिप्पलीचूर्णं) निक्षिप्य सम्यग् विमर्द्य काचपात्रे स्थापयेत्। अयममृतार्णवरस प्रत्यह पञ्चरक्तिप्रमाणादारभ्य यथाग्निबलं निष्कमात्रामित (चतुर्भिर्माषकै शाण स निष्कटङ्क एव च) पुरातनगुडेन सह भक्षयेत्। अयं रसो वृष्यगुणकरस्तथा जरामृत्युनाशकश्च ज्ञेय ॥ ४६–४९ ॥

वृहत्पूर्णचन्द्रो रस —

द्विकर्षं शुद्धसूतस्य गन्धकञ्च द्विकार्षिकम्।
लौहभस्म पलञ्चाभ्रं जारितञ्च पलांशिकम् ॥५० ॥
द्वितोलं रजतञ्चैव वङ्गभस्म द्विकार्षिकम्।
सुवर्णं तोलकञ्चैव ताम्रं कांस्यञ्च तत्समम् ॥ ५१ ॥
जातीफलञ्चेन्द्रपुष्पमेला भृङ्गञ्च जीरकम्।
कर्पूरं वनिता मुस्तं कर्षं कर्षं पृथक् पृथक् ॥ ५२ ॥
सर्वं खल्लतले क्षिप्त्वा कन्यारसविमर्दितम्।
भावयित्वा वरातोयैः केवुकानां रसेन च ॥ ५३ ॥
एरण्डपत्रैरावेष्ट्य धान्ये रात्रिदिनोषितम्।
उद्धृत्य मर्दयित्वा तु वटिकां चणसम्मिताम् ॥ ५४ ॥
खादेच्च पर्णखण्डेन संयुक्तां व्याधिनाशिनीम्।
सर्वव्याधिविनाशाय काशीराजेन भाषितः ॥ ५५ ॥
पूर्णचन्द्ररसो नाम सर्वरोगेषु योजयेत्।
बल्यो रसायनो वृष्यो वाजीकरण उत्तमः ॥ ५६ ॥
अयमष्ठीलिकां हन्ति कासश्वासमरोचकम्।
आमशूलं कटीशूलं हृच्छूलं पित्तशूलकम् ॥ ५७ ॥
अग्निमान्द्यमजीर्णञ्च ग्रहणीं चिरजामपि।

आमवातमम्लपित्त भगन्दरमपि द्रुतम् ॥ ५८ ॥
कामलां पाण्डुरोगञ्च प्रमेहं वातशोणितम् ।
नात. परतर श्रेष्ठो विद्यते वाजिकर्मणि ॥ ५९ ॥
रसस्यास्य प्रसादेन नरो भवति निर्गद ।
मेधाञ्च लभते वाग्मी तुष्टिपुष्टिसमन्वितः ॥ ६० ॥
मदनस्य समां कान्ति मदनस्य समं वलम् ।
गीयते मदनेनैव मदनस्य समं वपु· ॥ ६१ ॥
प्रियाञ्च मदनप्रायाः पश्यन्ति मदनाकुलाम् ।
स्त्रीणां तथाऽनपत्यानां दुर्वलानाञ्च देहिनाम् ॥ ६२ ॥
क्षीणानामल्पशुक्राणां वृद्धानां वातरेतसाम् ।
ओजस्तेजस्करश्चाय स्त्रीषु कामविवर्द्धनः ॥ ६३ ॥
अभ्यासेन निहन्ति मृत्युपलित सर्वामयध्वंसक·
वृद्धानां मदनोदयोदयकर प्रौढाङ्गनासङ्गमे ।
नित्यानन्दकरः सुखातिसुखदो भूपै सदा सेव्यते
दृष्टः सिद्धफलो रसायनवर· श्रीपूर्णचन्द्रो रसः ॥ ६४ ॥

अथ बृहत्पूर्णचन्द्ररसनिर्माणमाह द्विकर्षमित्यादि–शुद्धसूतस्य–शुद्धपारदस्य द्विकर्ष, शुद्धगन्धकं द्विकर्षमितं, लोहभस्म (१पलं), जारितमभ्रकमभ्रकभस्म (१पलं), रजतभस्म द्वितोलक, वङ्गभस्म द्विकर्षमितं, सुवर्ण–सुवर्णभस्म (१तोलकं), ताम्रभस्म (१तोलकं), कास्यभस्म (१तोलकं), तथा जातीफलचूर्णम्, इन्द्रपुष्पं–लवङ्गचूर्णम्, एलाबीजचूर्णं, भृङ्गं–गुडत्वक् (सिन्नामन्चार्क ), जीरकचूर्णं, कर्पूर, वनिता–प्रियङ्गुचूर्णं, मुस्तं–शुद्धनागरमुस्तकचूर्णम्, एतेषा प्रत्येक कर्षमितं समादाय पूर्वं पारदगन्धकयो श्लक्ष्णा शास्त्रोक्ता कज्जली कृत्वा शेषद्रव्याणि सम्मिश्र्य श्लक्ष्ण सर्वेषामेकत्र खल्वे पेषण कृत्वा कन्यारसेन–घृतकुमारिकास्वरसेन, वरा–त्रिफला तस्या क्वाथेन, केवुकानामिति–एरण्डमूलक्वाथेन च क्रमश पृथक् २ भावयित्वा गोलकञ्च विधाय एरण्डपत्रैरावेष्ट्य धान्यराशौ रात्रिदिनोषित–एकरात्रिदिनपर्यन्त सस्थाप्य ( अन्यत्र दिनत्रयपर्यन्तं धान्यराशौ स्थापयेदिति व्यवस्था) ततश्चोद्धृत्य खल्वे सम्मर्द्य चणकप्रमाणा वटी श्चरेत् । अस्य रसस्य प्रत्यहमेकैका वटीं पर्णखण्डेन–ताम्बूलपत्रस्वरसेन ( ताम्बूलपत्रवीटिकाया वा निधाय ) सह

भक्षयेत्। अथ सर्वव्याधिनाशक पूर्णचन्द्ररसः काशीराजेन भाषित । अथ रसो यथाव्याध्यनुपाने सेवित कास, श्वासं, अष्ठीलिकावृद्धिम्, अरुचिम्, आमदोषं, शूलं, कटिशूलं, हृच्छूलं, पित्तजशूल, कामलां, पाण्डुरोग, प्रमेहं, किम्बहुना मूलोक्तान् सर्वगदाश्च निहन्ति । अस्य रसस्य प्रभावेण मानव सर्वरोगरहितस्तथा कामस्य समा कान्ति, बलं, वपु, मेधाशक्तिं, कामाधिक्यशक्तिञ्च प्राप्नोति । तथायं रस सन्तानरहितस्त्रीणा सन्तानप्रद, क्षीणाना देहपोषक, अल्परेतसा रेतोवर्द्धक वातरेतसामिति वातप्रकोपकारणाच्छीघ्रवीर्य्यपातरोगजुष्टाना वीर्य्यदार्ढ्यकर, वृद्धाना प्रौढाङ्गनासङ्गमे मदनोदयोदयकर, नित्यानन्दकर, सुखातिसुखद, नृपतिभि सेवनार्हश्च वर्त्तते ।

कर्पूरं सशोध्य प्रक्षेप्यं तच्छोधनविधिर्यथा—

गोदुग्धे त्रिफलाक्वाथे भृङ्गद्रावे समाशके । मर्दयेन् याममात्रन्तु कर्पूरं शुद्धिमाप्नुयात्॥१॥

शुभकज्जलीलक्षण यथा—

गन्धकेन रस प्राज्ञ सुदृढ मर्दयेद्भिषक् । कज्जलाभो यदा सूतो विहाय घनचापलम् ॥
दृश्यतेऽसौ तदा ज्ञेया कज्जली रसकोविदै ॥ १ ॥ ५०–६४ ॥

चन्द्रोदयरस —

**पलं मृदु स्वर्णदलं रसेन्द्रात् पलाष्टकं षोडश गन्धकस्य ।**
**शोणैः सुकार्पासभवप्रसूनैः सर्वं विमर्द्याथ कुमारिकाऽद्भिः ॥ ६५ ॥**
**तत्काचकुम्भे निहित सुगाढ मृत्कर्पटैस्तद्दिवसत्रयञ्च ।**
**पचेत् क्रमाग्नौ सिकताख्ययन्त्रे ततो रसः पल्लवरागरम्यः ॥६६॥**
**संगृह्य चैतस्य पलं पलानि चत्वारि कर्पूररजस्तथैव ।**
**जातीफलं सोषणमिन्द्रपुष्पं कस्तूरिकाया इह शाण एकः ॥६७॥**
**चन्द्रोदयोऽयं कथितोऽस्य वल्लो भुक्तोऽहिवल्लीदलमध्यवर्त्ती ।**
**मदोद्धतानां प्रमदाशनानां गर्वाधिकत्वं श्लथयत्यवश्यम् ॥ ६८ ॥**
**शृतं घनीभूतमतीव दुग्धं गुरूणि मांसानि समण्डकानि ।**
**माषान्नपिष्टानि भवन्ति पथ्यान्यानन्ददायीन्यपराणि चात्र ॥ ६९ ॥**
**रतिकाले रतान्ते वा सेवितोऽयं रसेश्वरः ।**
**मानहानिं करोत्येष प्रमदानां सुनिश्चितः ॥ ७० ॥**
**कृत्रिमं स्थावरञ्चैव जङ्गमञ्चैव यद्विषम् ।**

न विकाराय भवति साधकेन्द्रस्य वत्सरात् ॥ ७१ ॥
यथा मृत्युञ्जयोऽभ्यासात् मृत्युं जयति देहिनाम् ।
तथाऽयं साधकेन्द्रस्य जरामरणनाशनः ॥ ७२ ॥
वलीपलितनाशनस्तनुभृतां वय स्तम्भनः
समस्तगदखण्डनः प्रचुररोगपञ्चाननः ।
गृहे च रसराडयं भवति यस्य चन्द्रोदयः
स पञ्चशरदर्पितो मृगदृशां भवेद्वल्लभः ॥ ७३ ॥
इन्द्रपुष्पं लवङ्गं स्यात् कार्पासकुसुमद्रवैः ।
तन्त्रान्तरे प्रसिद्धोऽयं मकरध्वजनामतः ॥ ७४ ॥

अथ चन्द्रोदयरसनिर्माणमाह पलमित्यादि—शुद्ध मृदुस्वर्णदलं-वण्टकवेध्यं स्वर्णपत्र पलमित, शुद्धपारदादष्टपल, शुद्धगन्धकस्य च षोडशपलानि समादाय पूर्वं स्वर्णदलानि खण्डशः कृत्वा शुभे पाषाणखल्वे पारदेन सह दृढ मर्दयेत् । यदा च स्वर्णदलं सम्यक् पारदेन सह मिश्रीभावमाप्नुयात्तदा पूर्वोक्तमानमितं गन्धकं दत्वा श्लक्ष्णां कज्जलीं कृत्वा शोणे—रक्तवर्णे सुकार्पासपुष्पस्वरसे सम्यगाप्लाव्य दिन-मेकं विमर्दयेत् । ततश्च घृतकुमारीस्वरसेन सह सम्यगाप्लाव्य निरन्तर दिनमेवं दृढ विमर्द्य सशुष्का कज्जलीं मृत्पङ्कलिप्तवस्त्रे सप्तवार कृतावरणाया काचकूप्या (आतसीशीशी) यथाविधि प्रपूर्य (कूपिकायास्त्रिभाग रिक्त स्यात्तथा कज्जलीं पूरये-दिति) कूपिकां वालुकायन्त्रे संस्थाप्य (कूपिकाकण्ठ वालुकाभिरनावृत भवेत्तथा वालुकापूरण कार्यम्) यन्त्र शुभे मेघादिभिरनावृत्ते दिवसे चूल्लिकाया (भट्टीपर) निधाय क्रमाग्नाविति मन्दमध्यतीव्राग्नौ त्रिदिनपर्यन्त पचेत् । ततश्च स्वाङ्गशीतला कूपिका विभिद्य कूपिकाकण्ठलग्न पल्लवरागरम्य रसमाहरेत् । एव सिद्धस्यास्य रसस्यैक पल, शुद्धकर्पूर पलमित, जातीफलचूर्णं पलमितम्, ऊषण-मरिचचूर्णं पल-मितम् तथा इन्द्रपुष्प-लवङ्गचूर्णं पलमितम्, एव चतुर्णां मिलित्वा चत्वारि पलानि ग्राह्याणि, नतु प्रत्येकं चतुष्पलमितं मुख्यरसमात्राहानेन विशिष्टफलाभावात्, तथा भैषज्यरत्नावल्यादिष्वपि कर्पूरस्य पलप्रमाणमेव प्रोक्तं यथा—सगृह्य चैतस्य पलं, सम्यक् पलञ्च कर्पूररजस्तथैवेति । कस्तूरिकायाश्चैकं शाणं समादाय सर्वमेकीकृत्य खल्वे श्लक्ष्णं पेषणं कृत्वा काचपात्रे स्थापयेत् । मात्रा—अस्य रसस्य द्विगुञ्जाप्रमाणा-दारभ्य वल्लमितं प्रत्यह ताम्बूलपत्रवीटिकाया निधाय भक्षयेत् । पथ्यञ्च-कथनेन

प्रचुरघनता गत सशर्कर दुग्धम् । गुरुस्निग्धपदार्थसेवनम् । मासानि, मासरसा , माष-सूपम । गोधूमपिष्टविकारमापूपादिक तथान्यदप्यानन्ददायि फलादिकवस्तुजातञ्च । इत्थं सेवितोऽयं रस कामशक्ति वर्द्धयति । स्त्रीसम्भोगे योषिता मानभङ्गं च कारयति । वर्षपर्यन्तमस्य रसस्य सेवनशीलस्य पुरुपस्य स्थावरजङ्गमकृत्रिमविपाणा भयस्य नास्ति शङ्का । तथा वर्षपर्यन्त सेवितो मृत्युञ्जयरसो मन्त्रो वा देहिना मृत्यु ( अकालमृत्युं ) जयति तथैव रसोऽय वर्षपर्यन्त सेवित साधकेन्द्रस्य नियम-पूर्वकसेवनकर्तु पुरुषस्य जरामरणनाशको भवति, तथाऽय रसो यथान्याध्यनुपानै-स्तनुभृता-देहिना वलीपलितरोगं, समस्तरोगकुलञ्च विनिहन्ति । अस्य रसस्य नि-र्माणार्थमिन्द्रपुष्पशब्देन लवङ्गचूर्णं तथा रक्तकार्पासकुसुमाभावे केवलं कार्पासकुसु-मस्वरसमेव गृह्णीयात् । अय रसस्तन्त्रान्तरेषु मकरध्वजाख्यया प्रसिद्ध ॥६५-७४॥

मकरध्वज —

**स्वर्णभागौ च वङ्गश्च मौक्तिकं कान्तलौहकम् ।**
**जातीकोषफले रूप्यं कांस्यकं रससिन्दुरम् ॥ ७५ ॥**
**प्रवालं कस्तूरी चन्द्रमभ्रकश्चैकभागिकम् ।**
**स्वर्णसिन्दूरतो भागाश्चत्वारः कल्पयेद्बुधः ॥ ७६ ॥**
**नातः परतरः श्रेष्ठः सर्वरोगनिसूदनः ।**
**सर्वलोकहितार्थाय शिवेन परिकीर्त्तितः ॥ ७७ ॥**

अथ मकरध्वजनिर्माणविधिमाह स्वर्णभागाविति—स्वर्णभागौ स्वर्णभस्मनो द्वि-तोलकं, वङ्गभस्म (१तोलक), मौक्तिकं-मुक्ताभस्म (१तो०), कान्तलौहकं-कान्तलौह भस्म (१तो०), जातीफलचूर्णं (१तो०), जातीकोषं-जातीपत्रीचूर्णं (१तो०), रूप्यं-रजतभस्म (१तो०), कांस्यकं-कांस्यभस्म (१तो०), रससिन्दूर (१तो०), प्रवालभस्म (१तो०), कस्तूरीचूर्णं (१तो०), चन्द्रं-शुद्धकर्पूर (१तो०), अभ्रकमभ्र-कभस्म (१तो०), स्वर्णसिन्दूरस्य च (चन्द्रोदयस्य वा) चतुस्तोलकं समादाय सर्व-मेकीकृत्य शुभे पाषाणखल्वे श्लक्ष्ण पिष्ट्वा काचपात्रे स्थापयेत् । मात्रा-अय रस प्रत्यहं रक्तिप्रमाणादारभ्य द्विरक्तिमितो यथाव्याध्यनुपानै. सेवित. सर्वरोगान्निहन्ति। अय रस सर्वलोकहितार्थाय श्रीशिवेन प्रोक्त ॥

अथ मतान्तरेण मकरध्वजनिर्माण यथा—

स्वर्ण तोलकसम्मित मृदुदल युक्त्या विशुद्धीकृतम् ।
स्वर्णादष्टगुणोन्मित रसवर जीर्णाच्छसौगन्धिकम् ॥
सस्कारै र्बहुभि विशोधितमथो सम्मेल्य सम्पेषयेत् ।
गन्ध षोडशतोलक सुविमल कुर्यात्तत कज्जलीम् ॥ १ ॥
शोणै कार्पासपुष्पैरथ मृदुविशदाङ्कोटमूलत्वचाद्भि ।
कन्यानीरैश्च घस्र रसविधिचतुरो भावयेदामयज्ञ ॥
सम्यक् निष्ट सुशुष्क त्वपि च रसवरं काचकूप्या निदध्यात् ।
विल्वाद्दोनाश्च काष्ठै सलिलविरहितैस्तापयेच्चाथ विद्वान् ॥ २ ॥

पूर्व यामद्वयं प्राज्ञ पचेन्मृद्वग्निना रसम् । मध्यमानलयोगाच्च ततो यामद्वय पचेत् ॥ ३ ॥
प्रखरेणानलेनाथ पचेद्यामद्वयं भिषक् । अवशिष्टद्वियामञ्च पुनर्मृद्वग्निना पचेत् ॥ ४ ॥
यन्त्रे सिकतसञ्ज्ञे च स्वाङ्गशीतमथोद्धरेत् । काचकूपीं विभिद्याथ महकारसमप्रभम् ॥ ५ ॥
भङ्गे रक्तप्रतीकाश पिष्टे रक्तोत्पलोपमम् । सौवर्णं मूर्च्छित सूत गृह्णीयाद्भिषजा वर ॥ ६ ॥
नाऽनेन जायते यस्मान्मकरध्वजसन्निभ । रसज्ञै ख्यापितस्तस्मान्नाम्नाऽय मकरध्वज ॥ ७ ॥

अत्र विवौ यथाविधिशुद्धं स्वर्ण तोलकमितं, गन्धकजारित सूतं (रससिन्दूरमिति) अथवा यथाविधिशुद्ध पारद वा अष्टतोलकमित तथा षोडशतोलकमितञ्च शुद्धगन्धक समादाय खल्वे रस सुवर्णञ्च निक्षिप्य दिनैक दृढ विमर्द्य ततश्च गन्धञ्च दत्वा शोभना कज्जलीं विधाय यथोक्तद्रव्यरसैर्भावयित्वा काचकूप्या प्रपूर्य ता वालुकायन्त्रे संस्थाप्याष्टयामपर्यन्त यथाविधि विल्वकाष्ठैरभावे सामान्यकाष्ठै र्वा पक्त्वा गृह्णीयात् । गन्धकजारणानन्तर काचकूप्यामुख जलपिष्टगुडसुधाचूर्णपिष्ट्या निरोधयेत् । मृदुमध्यप्रखरादियथोक्तनियमानुसारेण वह्निज्वालन कर्तव्यम् । अय प्रशस्तोविधि ।

सिद्धमकरध्वजनिर्माणं यथा—

पूर्वोक्तनिजमानाच्च कनकं चेच्चतुर्गुणम् । निर्दिष्टमानप्रमितौ भवतो रसगन्धकौ ॥ १ ॥
पूर्ववद्भावयित्वा च पचेत् सिकतयन्त्रके । एवन्तु षड्गुण गन्ध जारयेत् क्रमशो भिषक् ॥ २ ॥
समर्पितो यतश्चाय सिद्धेभ्य शूलपाणिना । ख्यातस्ततोऽयं जगति श्रीसिद्धमकरध्वज ॥ ३ ॥

अत्र च शुद्धं स्वर्णं चतुस्तोलकं तथा अष्टतोलकमितं रससिन्दूर पारदं वा केवलं, तथा शुद्धगन्धकञ्च षोडशतोलकमित समादाय कज्जलीं कृत्वा पूर्वोक्तविधिना पचेत् । सिद्धं रस निष्काश्य खल्वे विचूर्ण्य षोडशतोलकमित गन्धकञ्च दत्व ।

कज्जलीं कृत्वा पूर्ववत्पचेत्। इत्थं क्रमशः षोडशतोलकमितं गन्धं वारम्वारं निक्षिप्य षट्वार पाक कृत्वा श्रीसिद्धमकरध्वज गृह्णीयादिति रसतरङ्गिणी।

भैषज्यरत्नावल्या मकरध्वजनिर्माणं यथा—

स्वर्णादष्टगुणं सूतं मर्दयेत् त्रिकगन्धकम्। रक्तकार्पासकुसुमैः कुमार्यद्भिर्विमर्दयेत् ॥१॥
शुष्क काचघटीं रुद्ध्वा वालुकायन्त्रक हठात्। भस्म कुर्याद्रसेन्द्रस्य नवार्ककिरणोपमम्॥२॥
भागोऽस्य भागाश्चत्वारः कर्पूरस्य सुशोभना। लवङ्गं मरिचं जातीफलं कर्पूरमात्रया॥३॥
मेलयेन्मृगनाभिश्च गद्याणकमितं ततः। श्लक्ष्णपिष्टो रसो नाम जायते मकरध्वजः॥४॥

सुशुद्धानि मृदूनि स्वर्णदलानि पलैकमितानि, यथाविधिशुद्धपारदश्चाष्टपलमित, त्रिकगन्धकमिति पारदापेक्षया त्रिगुणं (२४पलमित) शुद्धगन्धक समादाय यथाविधि कज्जलीं कृत्वा रक्तकार्पासकुसुमस्वरसै र्भावयित्वा दिनैक विमर्दयेत्। ततश्च कुमारिकास्वरसेनापि भावयित्वा दिनैकं विमर्द्य सशोष्य च सप्तवारं मृल्लिप्तवस्त्रपट्टिकाभि कृतावरणाया काचकूप्या प्रपूर्य तस्या मुखञ्च खटिकयावरुध्य जलपिष्टगुडसुधाचूर्णपिष्ट्या सन्धिवन्धन कृत्वा संशोष्य च वालुकायन्त्रे सस्थाप्य पचेत्। इत्थमन्तर्धूम सिद्धं रस निष्कास्य खल्वे सञ्चूर्ण्य गृह्णीयात्। एव सिद्धस्यास्य रसस्यैकतोलकं शुद्धकर्पूरं चतुस्तोलकमित लवङ्गजातीफलकृष्णमरिचाना चूर्णं प्रत्येकं चतुस्तोलकमित तथा कस्तूरी च गद्याणमिता ( षण्माषकमितेत्यर्थः ) निक्षिप्य सर्वं खल्वे श्लक्ष्णं पिष्ट्वा काचपात्रे स्थापयेत्। इत्थं सिद्धोऽयं रसो मकरध्वजनाम्ना ख्यात। अयमेव रसोऽत्र ग्रन्थे चन्द्रोदयनाम्ना ख्यात। किन्तु चन्द्रोदयरसे शुद्धगन्धक षोडशतोलकमितस्तथा कस्तूरिकायाश्च शाणमितो (४मा०) भागो गृहीत इति मतभेद।

स्वर्णसिन्दूरनिर्माण यथा—

पलं रसेन्द्रस्य च गन्धकस्य हेम्नोऽपि कर्षं परिगृह्य सम्यक्।
वटप्ररोहस्य रसेन यामं यामं विमर्द्याथ कुमारिकायाः ॥ १ ॥
तत् काचकूप्यां निहितं प्रयत्नात् पचेद्विधिज्ञः सिकताख्ययन्त्रे।
ततो रजश्चोर्ध्वगत सुरम्यं प्रगृह्य यत्नादरुणप्रभं यत् ॥ २ ॥
तद्योजयेत्सर्वगदेषु वीक्ष्य धातु वलं वह्निमथो वयश्च।
रसायन वृष्यतरञ्च वल्यं मेधाग्निकान्तिस्मरवर्द्धनञ्च ॥ ३ ॥ ७५-७७॥

वसन्ततिलको रस —

हेम्नो भस्मकतोलकं घनयुगं लौहात् त्रय. पारदात् ।
चत्वारो नियतन्तु वङ्गयुगलञ्चैकीकृतं मर्दयेत् ॥
मुक्ताविद्रुमयो रसेन समता गोक्षूरवासेक्षुणा ।
सर्वं वन्यकरीपकेण सुदृढ तच्चत् पचेत् सप्तधा ॥ ७८ ॥
कस्तूरीघनसारमर्दितरसः पश्चात् सुसिद्धो भवेत्
कासश्वाससपित्तवातकफजित् पाण्डुक्षयादीन् हरेत्
शूलादिग्रहणीं विषादिहरणो मेहांस्तथा विंशतिम्
हृद्रोगादिहरो ज्वरादिशमनो वृष्यो वयोवर्द्धनः ।
श्रेष्ठः पुष्टिकरो वसन्ततिलको मृत्युञ्जयेनोदितः ॥ ७६ ॥

अथ वसन्ततिलकरसनिर्माणविधिमाह हेम्न इत्यादि—हेम्नो भस्मकतोलकं-स्वर्णभस्म (१तो०), घनयुग-घनस्य-अभ्रकभस्मनो युगं द्वितोलकं, लोहाल्लौह-भस्मन त्रितोलकं, पारदादिति-रससिन्दूराच्चत्वारि तोलकानि, वङ्गयुगलमिति वङ्ग-भस्मनो द्वितोलकं, तथा मुक्ताविद्रुमयो रसेन समतेति—मुक्ताभस्म (२तो०), विद्रुम-प्रवालभस्म (२तो०), ( एवमुभयोर्मिलित्वा चत्वारि तोलकानि भवन्त्यतो रसेन समता ) समादाय सर्वमेकीकृत्य खल्वे पिष्ट्वा गोक्षुरकाथेन, वासकपत्राणा स्वरसेन, इक्षुस्वरसेन, क्रमशो भावयित्वा वन्यकरीपकेण-उपलाग्निना सम्पुटस्थ विधाय सप्त २ वार पचेत् । ततश्च खल्वे विचूर्ण्य कस्तूरी (१तोलकमिता), घनसारं-कर्पूर च तोलकमितं प्रक्षिप्य श्लक्ष्ण सञ्चूर्ण्य काचपात्रे स्थापयेत् । अयं मृत्यु-ञ्जयेन-शिवेन प्रोक्तो वसन्ततिलको रसो द्विगुञ्जमित प्रत्यह यथाव्याध्यनुपाने सेवित कास, श्वास, पित्तरोगं, वातरोग, कफरोगं, पाण्डुरोग, क्षयरोगं, शूल, ग्रहणी, विषबाधा, विंशतिप्रमेहान्, हृदयरोगान्, ज्वरञ्च विनाशयति । अय रसो वृष्यगुणकरो वयोवर्द्धक शरीरस्य पुष्टिकरश्च वर्तते । यद्यपि गोक्षुरशब्दे क्षकारो-त्तरवर्त्युकारो ह्रस्वस्तथापि छन्दोभङ्गभिया दीर्घत्वेन पठितस्तथा चोक्तम्—"अपि माषं मष कुर्याच्छन्दो-भङ्गं न कारयेत्" इति ॥ ७८—७९ ॥

वसन्तकुसुमाकरो रस —

द्विभागं हाटकं चन्द्रं त्रयो वङ्गाहिकान्तकाः ।

चतुर्भागं शुद्धमभ्रं प्रवालं मौक्तिकं तथा ॥ ८० ॥
भावयेद् गव्यदुग्धेन भावनेक्षुरसेन च ।
वासालाक्षारसोदीच्यरम्भाकन्दप्रसूनकैः ॥ ८१ ॥
शतपत्ररसेनैव मालत्याः कुङ्कुमोदकैः ।
पश्चान्मृगमदैर्भाव्यं सुगन्धिरससम्भवैः ॥ ८२ ॥
कुसुमाकरविख्यातो वसन्तपदपूर्वकः ।
गुञ्जाद्वयेन संसेव्यः सितामध्वाज्यसंयुतः ॥ ८३ ॥
मेहघ्नः कान्तिदश्चैव कामदः पुष्टिदस्तथा ।
वलीपलितहश्चैव स्मृतिभ्रंशं विनाशयेत् ॥ ८४ ॥
तुष्टिदो बल्यमायुष्यः पुत्रप्रसवकारकः ।
प्रमेहान् विंशतिश्चैव क्षयमेकादशं तथा ।
तथा सोमरुजं हन्ति साध्यासाध्यमथापि वा ॥ ८५ ॥

अथ वसन्तकुसुमाकररसनिर्माणमाह द्विभागमित्यादि—हाटक–स्वर्णभस्म द्वितोलकमितं, चन्द्र–रजतभस्म (३तोलकं), वङ्गभस्म (३तो०), अहिभस्म–नागभस्म (३तो०), कान्तलौहभस्म (३तो०), शुद्धमभ्रमभ्रकभस्म (४तो०), प्रवालभस्म (४तो०), मुक्ताभस्म (४तो०), सर्वमेकीकृत्य खल्वे श्लक्ष्णं सञ्चूर्ण्य गव्यदुग्धेन, इक्षुस्वरसेन, वासकस्वरसेन, लाक्षाक्काथेन, उदीच्यं–बालकं तस्य क्काथेन, रम्भाकन्दप्रसूनकैरिति रम्भामूलरसै स्तथा रम्भापुष्परसैश्च, शतपत्ररसेन–नीलकमलस्वरसेन, तरणीरसेन वा ( गुलावपुष्परस या गुलाबजल से) मालती "चमेली,, तस्या पुष्पस्वरसेन, कुङ्कुमोदकैरिति काश्मीरदेशोद्भवकुङ्कुमजलेन च क्रमश पृथक् २ सप्तधा भावयित्वा तदनु कस्तूरीजलेन भावयेत्। एव सम्यग्भावयित्वा दृढ विमर्द्य द्विरक्तिमिता वटिका कुर्यात्। अयं रस प्रत्यह द्विगुञ्जामित सितया, मधुना, गोघृतेन च सह सेवितो मेहाग्निहन्ति, तथा वलीपलितम्, एकादशविधं क्षय, साध्यमसाध्यञ्च स्त्रीणा सोमरोगं, स्मृतिभ्रंशञ्च विनाशयेत्। अयं रस शरीरस्य ष्टि शोभाञ्च विवर्द्धयति। तथा नराणा वीर्य्यशोधनं स्त्रीणाञ्च रज शोधन कृत्वा पुत्रप्रसवं कारयति।

सोमरोगस्वरूपं यथा—

स्त्रीणामतिप्रसङ्गेन शोकाच्चापि श्रमादपि । अतिसारकयोगाद्वा गरयोगात्तथैव च ॥१॥
आप. सर्वशरीरस्था क्षुभ्यन्ति प्रस्रवन्ति च ।

तस्यास्ता प्रच्युता स्थानान्मूत्रमार्गं व्रजन्ति च ॥ २ ॥
प्रसन्ना विमला शीता निर्गन्धा निरुज सिता ।
स्रवन्ति चातिमात्र ता सा न शक्नोति दुर्बला ॥ ३ ॥
वेग वारयितु तासा न विन्दति सुख क्वचित् ।
शिर -शिथिलता तस्या सुख तालु च शुष्यति ॥ ४ ॥
मूर्च्छा जृम्भा प्रलापश्च त्वग्रूक्षा चातिमात्रत ।भक्ष्यैर्भोज्यैश्च पेयैश्च न तृप्तिं लभते क्वचित्॥५॥
सधारणाच्छरीरस्य ता आप सोमसंज्ञिता ।तत सोमक्षयात् स्त्रीणा सोमरोग इति स्मृत ॥६॥

"शतपत्ररसेन" इत्यत्र "शतपुष्पारसेन" इति केचित्पठन्ति, "मालत्या-कुङ्कुमोदके" इत्यत्र "माल्त्याः कुसुमोदके" इति पाठान्तरम् ॥ ८०-८५ ॥

नीलकण्ठो रस —

सूतकं गन्धकं लोहं विषं चित्रकपद्मकम् ।
वराङ्गरेणुकामुस्तं ग्रन्थ्येलानागकेशरम् ॥ ८६ ॥
त्रिकटु त्रिफला चैव शुल्वभस्म तथैव च ।
एतानि समभागानि द्विगुणो गुड उच्यते ॥ ८७ ॥
समर्द्य वटक कृत्वा भक्षयेत् चणकोन्मितम् ।
कासे श्वासे क्षये गुल्मे प्रमेहे विषमज्वरे ॥ ८८ ॥
हिक्कायां ग्रहणीदोषे शोथे पाण्ड्वामये तथा ।
मूत्रकृच्छ्रे मूढगर्भे वातरोगे च दारुणे ॥ ८९ ॥
नीलकण्ठो रसो नाम ब्रह्मणा निर्मितः पुरा ।
अनुपानविशेषेण सर्वरोगहरो भवेत् ॥ ९० ॥

अथ नीलकण्ठरसनिर्माणमाह सूतकमित्यादि—सूतक—शुद्धपारद, गन्धकं—शुद्धगन्धक, लोह—लोहभस्म, विष—शुद्धवत्सनाभचूर्ण, चित्रकचूर्ण, पद्मक—पद्मकाष्ठचूर्ण, वराङ्ग—त्वक्चूर्ण, रेणुकं—हरेणुकाचूर्णं, शुद्धमुस्तकचूर्ण, ग्रन्थि -ग्रन्थिपर्णचूर्णम्, एलाबीजचूर्ण, नागकेशरचूर्णं, त्रिकटु—शुण्ठीचूर्णं, मरिचचूर्णं, पिप्पलीचूर्णं, त्रिफला—हरीतकीचूर्ण, बिभीतकचूर्णम्, आमलकचूर्णं, शुल्वभस्म—ताम्रभस्म, एतेषा प्रत्येकं समं समं ग्राह्यं तथा सर्वद्रव्यद्विगुणं पुराणं गुड समादाय पूर्वं पारदगन्धकयो कज्जली कृत्वा शेषचूर्णानि सम्मेल्य श्लक्ष्ण विचूर्ण्य गुडञ्च दत्वा सर्वं विमर्द्य चणकप्रमाणानि वटकानि

कृत्वा काचपात्रे स्थापयेत्। अस्य रसस्य प्रत्यहमेकैकं वटकं नै यथाव्याध्यनुपासेवित सर्वरोगान्निहन्ति। विशेषेणाय रस कासे, श्वासे, क्षये, गुल्मे, प्रमेहे, विषमज्वरे, हिक्कायां, ग्रहणीविकारे, शोथे, पाण्डुरोगे, मूत्रकृच्छ्रे, मूढगर्भे, दारुणे वातिकरोगे च हितकर। अयं रस. पूर्वं ब्रह्मणा निर्मित ॥ ८६-९० ॥

महानीलकण्ठो रस —

पलैकं नागभस्माथ भावयेत् तिमिपित्तलः।
तन्नागं सुमृतं स्वर्णं तोलैक चापि मिश्रयेत् ॥ ९१ ॥
द्विपलं भस्मसूतस्य त्रिपलं मृतमभ्रकम्।
त्रिपलं लौहभस्माथ सर्वमेकत्र कारयेत् ॥ ९२ ॥
भावयेच्च पृथक् कन्या ब्राह्मी निर्गुण्डिका शमी।
मुण्डी शतावरी छिन्ना कोकिलाक्षस्य बीजकैः ॥ ९३ ॥
मुषली वृद्धदारोऽग्निः द्रवैरेषां भिषग्वर.।
ततः सञ्चूर्णयेत् सर्वं तुल्यमेकादशाभिधम् ॥ ९४ ॥
वराव्योषाब्दवह्न्येला-जातीफललवङ्गकम्।
पूजयेद् बिल्वपत्राद्यैर्नीलकण्ठ महेश्वरम् ॥ ९५ ॥
द्विगुञ्जं भक्षयेदस्य मृत्युञ्जयमनुस्मरन्।
क्षयमेकादशविधं ग्रहणीं रक्तपित्तकम् ॥ ९६ ॥
विविधान् वातजान् रोगान् चत्वारिंशच्च पैत्तिकान्।
हन्ति सर्वामयानेव कामिनीनां शतं व्रजेत् ॥ ९७ ॥
एकविंशतिरात्राद्धं परिहार्य्यं त्यजेदिह।
यथेष्टाहारचेष्टो हि कन्दर्पसदृशो नरः ॥ ९८ ॥
मेधावी बलवान् प्राज्ञो बह्वाशी भीमविक्रमः।
पुत्रार्थिनी तथा नारी रम्यं पूत्रं प्रसूयते।
अस्य सूतस्य माहात्म्यं वेत्ति शम्भुर्न चापरः ॥ ९९ ॥

अथ महानीलकण्ठरसनिर्माणमाह पलैकमित्यादि—एकपलमितं नागभस्म समादाय तिमिसंज्ञकमत्स्यपित्तेन भावयेत्, (तिमिसंज्ञकं मत्स्यपित्त "काडलीवर ओइल" इति नाम्ना सर्वत्र पाश्चात्यचिकित्सकैर्व्यवह्रियते) ततश्च तस्मिन् तोलकमितं

स्वर्णभस्म, भस्मसूतस्य—रससिन्दूरस्य द्विपल, मृतमभ्रकमभ्रकभस्म त्रिपलमितं, लौहभस्म च त्रिपलमित सम्मिश्र्य सर्वमेकत्र खल्वे दृढं विमर्द्य कन्या-घृतकुमारी, ब्राह्मी ख्याता, निर्गुण्डिका-नीलपुष्पा, शमी-शमीवृक्षत्वक्, मुण्डी-मुण्डिरी, शतावरी-शतमूली, छिन्ना-गुडूची, कोकिलाक्षस्य बीजकै-क्षुरकबीजै, मुषली-तालमूली, वृद्धदार "विधारा" इति प्रसिद्ध, अग्निश्चित्रक, एतेषामेकादशद्रव्याणा स्वरसेन क्वाथेन वा क्रमश पृथक् २ भावयित्वा पूर्वोक्तभावितद्रव्यतुल्यमेतेषामेकादश द्रव्याणा मिलित चूर्णं तथा वरा—त्रिफलाचूर्णं, व्योष—त्रिकटुचूर्णं, अब्दो मुस्तकचूर्णं, वह्निश्चित्रकचूर्णं, सूक्ष्मैलाबीजचूर्णं, जातीफलचूर्णं, लवङ्गचूर्णम्, एतदप्येकादशद्रव्याणा चूर्णं पूर्वोक्तभावितद्रव्यसममेव समादाय सर्वं सम्मेल्य दृढ विमर्द्य द्विगुञ्जामिता वटीश्चरेत्। अस्य रसस्य द्विगुञ्ज प्रत्यह बिल्वपत्रपुष्पादिभि नीलकण्ठं महेश्वर सम्पूज्य मृत्युञ्जयमन्त्रस्य जपञ्च कृत्वा यथाव्याध्यनुपाने भक्षित ग्रहणीरोगम्, एकादशविध क्षय, रक्तपित्तं, विविधान् वातोत्थान् रोगान्, चत्वारिंशच्च पित्तोद्भवान् रोगान्, किम्बहुना सर्वानेव रोगान्निहन्ति। अस्य रसस्य सेवनात्पुरूष कामिनीना शत व्रजेदिति कामशक्तिर्वर्द्धते। अस्य रसस्य सेवनसमये शास्त्रोक्त पथ्यमेकादशदिनपर्यन्तमाचरेद्। द्वादशदिनादूर्ध्वमेन रस सेवयन्नपि पथ्यापथ्यविचारं विहाय यथेष्टाहारचेष्टो भवेत्तथापि न क्षति। एवं सेवितोऽयं रसो नरं कामदेवसमं लावण्ययुक्तं करोति। एन रस पुत्रार्थिनी स्त्री भक्षयन्ती रम्य पुत्रमाप्नोति। अस्य रसस्य माहात्म्य श्रीशम्भुर्जानाति नचापर। यद्यपि एकविंशतिरात्रीणामर्द्धं सार्द्धदशदिनानि भवन्ति। तथाप्यर्द्धरात्रिन्दिवस्य पथ्यापथ्यसेवनं लोकेऽदृष्टत्वात्, तथा "अधिकस्याधिकं फलमिति" न्यायाच्चैकादशदिनानां पथ्याचरणं श्रेष्ठम्। एकादशदिनादूर्ध्वं यथेष्टाहारचेष्टो भवेत् ॥ ९१–९८ ॥

वृहच्छृङ्गाराभ्रम्—

पारदं गन्धकञ्चैव टङ्कणं नागकेशरम्।
कर्पूरं जातीकोषञ्च लवङ्गं तेजपत्रकम् ॥ १०० ॥
एतेषां कर्षभागानि सुवर्णं तत्समं भवेत्।
शुद्धकृष्णाभ्रचूर्णञ्च चतुष्कपिचुभागिकम् ॥ १०१ ॥
तालीशं घनकुष्ठञ्च मांसी पुष्पं वराङ्गकम्।

एलावीजं त्रिकटुकं त्रिफला करिपिप्पली ॥ १०२ ॥
एषां कर्षद्वयञ्चैव पिप्पलीक्वाथभावितम् ।
अनुपानं प्रयोक्तव्यं चोचं क्षौद्रसमायुतम् ॥ १०३ ॥
नानारोगप्रशमनं विशेषात् कासरोगनुत् ।
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् ॥ १०४ ॥
हृच्छूलं पार्श्वशूलञ्च शिरःशूलं विशेषतः ।
स्वरामयं क्षयं कुष्ठं श्लेष्माणं वातशोणितम् ॥ १०५ ॥
बृहच्छृङ्गाराभ्रनाम विष्णुना परिकीर्त्तितम् ।
रक्तपित्तञ्च श्वासञ्च नाशयेन्नात्र संशयः ॥ १०६ ॥

( इति रसेन्द्रसारसंग्रहे रसायन–वाजीकरणाधिकार )

अथ बृहच्छृङ्गाराभ्ररसनिर्माणमाह पारदमित्यादि–शुद्ध पारद, शुद्धगन्धकं, शुद्धटङ्कणं, नागकेशरचूर्णं, शुद्धकर्पूर, जातीकोष ( जावित्रीचूर्णं ) जातीपत्रीचूर्णं, लवङ्गचूर्णं, तेजपत्रचूर्णञ्च, एतेषा प्रत्येक कर्षमित तथा सुवर्णभस्म कर्षमितं, शुद्धकृष्णाभ्रचूर्णमिति कृष्णाभ्रकभस्म चतुष्कपिचुभागिकमिति चतुष्कर्षमित ( "कोलद्वयञ्च कर्ष स्यात् प्रोक्त पाणिश्च माणिका । अक्ष पिचु पाणितल किञ्चित्पाणिश्च तिन्दुकम्, इति ) तथा तालीशपत्रचूर्णं (२क०), घन–शुद्धमुस्तकचूर्णं (२क०), कुष्ठचूर्णं (२क०), मासी–जटामांसीचूर्णं (२क०), पुष्पं–लवङ्गचूर्णं (२क०), वराङ्ग–गुडत्वक् तच्चूर्णं (२क०), सूक्ष्मैलावीजचूर्णं (२क०), त्रिकटुक–व्योषचूर्णं प्रत्येकं द्विकर्षमितं, त्रिफला–वराचूर्णं प्रत्येक द्विकर्षमितं, करिपिप्पली–गजपिप्पलीचूर्णञ्च (२क०) समादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मिश्र्य पिप्पलीक्वाथेन सप्तधा भावयित्वा दृढ विमर्द्य सशोष्य च काचपात्रे स्थापयेत् । अस्य रसस्य प्रत्यहं द्विगुञ्जाप्रमाणादारभ्य यथाग्निवलं माषकपर्यन्तं माषकमितेन चोचचूर्णेन (सिन्नामनवार्क या तज के चूर्ण से) मधुना च सह विलोड्य सेवितं विविधरोग विनिहन्ति । अय रसो विशेषेण कास, वातिकरोग, पैत्तिकरोगं, श्लैष्मिकरोगं सान्निपातिकरोगं, हृदयशूलं, पार्श्वशूलं, शिर शूलं, स्वरभङ्ग, क्षय, कुष्ठं, श्लेष्मकुष्ठं, वातशोणित–वातरक्त, रक्तपित्त, श्वासञ्च विनिहन्ति । इदं बृहच्छृङ्गाराभ्रं रसायनं श्रीविष्णुना परिकीर्तितम् ॥

पिप्पलीक्वाथनिर्माण निम्नपरिभाषया कार्य यथा—

"भाव्यद्रव्यसम क्वाथ्य क्वाथ्यात्तोय चतुर्गुणम्। अष्टांशशेषितं कुर्यात् भाव्याना तेन भावना १

भावनाविधि र्यथा—

दिवा दिवातपे शुष्कं रात्रौ रात्रौ निवासयेत्। श्लक्ष्णं चूर्णीकृत द्रव्य सप्ताहं भावनाविधि ॥१॥

द्रवेण यावता द्रव्यमेकीभूयार्द्रता व्रजेत्। तावत्प्रमाणं कर्तव्य भिषग्भि र्भावनाविधौ ॥२॥

प्राय सर्वेषां रसाना मात्रानिर्देश कृत स्तथापि रोगिणो देहं, बलम्, अग्निं, वयस्च सर्वांस्य भिषग् युक्त्या मात्रा कल्पयेत्। लिखितमात्रासु वृद्धिं ह्रासञ्च यथायोग्यं भवेत्तथा कार्यम् ॥ १००–१०६ ॥

इति मेदपाटदेशान्तर्गतमण्डफियाग्रामनिवासिना गुर्जरगौडविप्रवंशावतंसेन शब्द-न्यायसाहित्यदर्शनादिसर्वतन्त्रस्वतन्त्रेण प्राच्यपाश्चात्यचिकित्साशास्त्रधुरन्धरेण आयुर्वेदोपाध्यायेन श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा कृताया रसेन्द्रसारसंग्रहस्य गूढार्थसन्दीपिकाव्याख्याया रसायनवाजीकरणाधिकार ।



प्राप्तिस्थानम्—

चौखम्बा-संस्कृत-पुस्तकालय,

बनारस सिटी।

# अथ रसेन्द्रसारसंग्रहे परिशिष्टम् ।

सर्वविषज्वरे श्रीप्रतापलङ्केश्वरो रस —

अपामार्गस्य मूलानां चूर्णं चित्रकमूलजैः ।
वल्कलैर्मर्दयित्वाऽथ रस वस्त्रेण गालयेत् ॥ १ ॥
तेन सूतसम गन्धमभ्रकं पारदं विषम् ।
टङ्कणं तालकञ्चैव मर्दयेद्दिनसप्तकम् ॥ २ ॥
त्रिदिनं मुषलीकन्दैर्भावयेद् घर्मरक्षितम् ।
मूषाञ्च गोस्तनाकारामापूर्योपरि ढक्कयेत् ॥ ३
सप्तभिर्मृत्तिकावस्त्रैर्वेष्टयित्वा पुटेल्लघु ।
रसतुल्यं लौहभस्म मृतवङ्गमहिस्तथा ॥ ४ ॥
मधूकसारजलदं रेणुकं गुग्गुलं शिलाम् ।
चाम्पेयञ्च समांशं स्याद्भागार्द्धं शोधितं विषम्
तत्सर्वं मर्दयेत् खल्ले भावयेद्विषनीरतः ।
आतपे सप्तधा तीव्रे मर्दयेद्धटिकाद्वयम् ॥ ६ ॥
कटुकत्रयकषायेण कनकस्य रसेन च ।
फलत्रयकषायेण मुनिपुष्परसेन च ॥ ७ ॥
समुद्रफेननीरेण विजयापत्रवारिणा ।
चित्रकस्य कषायेण ज्वालामुख्या रसेन च ॥ ८
प्रत्येकं सप्तधा भाव्यं तद्वत्पित्तैश्च पञ्चभिः ।
सर्वस्य समभागेन विषेण परिधूपयेत् ॥ ९ ॥
विमर्द्य भक्षयित्वा च रक्षयेत् कूपिकोदरे ।
गुञ्जैकं वह्निनीरेण शृङ्गवेररसेन च ॥ १० ॥
दद्याच्च रोगिणे तीव्रमोह्यविस्मृतिशान्तये ।
क्षुरेण तालुमाहत्य घर्षयेदार्द्रनीरतः ॥ ११ ॥
नोद्धटन्ते यदा दन्तास्तदाकुर्यादमुं विधिम् ।
सेचयेन्मन्त्रविद्वैद्यो वारिकुम्भशतैर्नरम् ॥ १२ ।

भोजनेच्छा यदा तस्य जायते रोगिणः परा ।
दध्योदन सितायुक्त दद्यात्तक्रं सजीरकम् ॥ १३ ॥
पाने पान सिता जात यद्यदिच्छेत् ददाति तत् ।
एवं कृतेन शान्तिः स्यात्तापस्य च रुजस्य च ॥ १४ ॥
सचन्द्रचन्दनरसालेपनं कुरु शीतलम् ।
यूथिकामल्लिकाजातीपुन्नागवकुलावृताम् ॥ १५ ॥
विधाय शय्यां तत्रस्थां लेपनैश्चन्दनैर्मुहुः ।
हावभावविलासोक्तैः कटाक्षचन्दनेक्षणैः ॥ १६ ॥
पीनोत्तुङ्गकुचापोडैः कामिनीपरिरम्भणैः ।
रम्यवीणानिनादोक्तैः गायनैः श्रवणामृतैः ॥ १७ ॥
पुण्यश्लोककथाद्यैश्च सन्तापहरणं कुरु ।
दद्याद्वातेषु सर्वेषु सिन्धुजैः सहवह्निभिः ॥ १८ ॥
दद्यात्कणामाक्षिकाभ्यां कनकाह्वयपाण्डुषु ।
तत्तद्रोगानुपानेन सर्वरोगेषु योजयेत् ॥ १९ ॥
अयं प्रतापलङ्केशः सन्निपातहरः परः ॥ २० ॥

श्रीप्रतापलङ्केश्वररसनिर्माणमाह अपामार्गस्येत्यादि—अपामार्गस्य मूलचूर्णं चित्रकमूलस्य वल्कलानि च पाषाणे जलेन सह पिष्ट्वा तयो स्वरसं गृह्णीयात् । तदनु तेन स्वरसेन सह समभागकल्पितानि शुद्धपारदगन्धकाभ्रकविषटङ्कणतालकानि खल्वे सप्तदिनपर्यन्त मर्दयेत् । मर्दनयोगेन रसे शुष्के पुनरपि तद्रीत्या तयो स्वरस गृहीत्वा प्रक्षिपेत् । ततश्च पारदादीनि त्रिदिन मुषलीरसेन निदाघे भावयेत् । भावनाऽनन्तर सर्वाणि विलोड्य गोलकञ्च कृत्वा गोस्तनोमूषाया निरुध्य सप्तवारं स्निग्धमृल्लिप्तवस्त्रपट्टिकाभि मूषामालिप्य लघुपुटे पचेत् । स्वाङ्गशीत सिद्धमौषधं समादाय खल्वे विचूर्ण्य तस्मिन् लौहभस्म, वङ्गभस्म, नागभस्म, मधूकसारं, शुद्धनागरमुस्तकं, हरेणुकाचूर्णं, शुद्धगुग्गुलु, शुद्धमन शिला, नागकेशरचूर्णञ्चेति प्रत्येकं द्रव्य पारदतुल्यं तथा पारदार्द्धं शुद्धवत्सनाभचूर्णञ्च सम्मेल्य सर्वं दृढ विमर्द्य विषक्काथेन सप्तधा निदाघे भावयित्वा घटिकाद्वयञ्च विमर्द्य त्रिकटुक्काथेन, शुद्धधुस्तूरबीजक्का- त्रिफलाक्काथेन, अगस्त्यपुष्पस्वरसेन, समुद्रफेनजलेन, शुद्धभङ्गाजलेन, चित्रकमूलक्काथेन, शुद्धभल्लातकफलक्काथेन च प्रत्येकेन पृथक् २ सप्तधा भावयित्वा पञ्चपित्तैश्च

पृथक् २ सप्तधा भावयेत् । तदनु सर्वौषधसमेन विषेण परिधूप्य विमर्द्य सशोष्य च काचपात्रे सुरक्षयेत् ।

अयं श्रीप्रतापलङ्केश्वरो रसो गुञ्जामित प्रत्यहमार्द्रकस्वरसेन चित्रकस्वरसेन सह वा सेवित सन्निपातं निहन्ति । अय रसो यथाव्याध्यनुपाने सह सेवित· सर्वरोगान् निहन्ति । पथ्य दध्योदनम् । दाहादिकनिवृत्त्यर्थं यथोक्त शीतलोपचारादिकं कर्तव्यम् ॥ १—२० ॥

अथ जीर्णज्वरे वसन्तमालतीरस —

**स्वर्णं मुक्ता दरदमरिचं भागवृद्ध्या प्रदिष्टम् ,**
**खर्परस्याष्टौ प्रथममखिलं मर्दयेन् म्रक्षणेन ।**
**यावत् स्नेहो व्रजति विलय निम्बुनीरेण तावद्,**
**गुञ्जाद्वन्द्वं मधु चपलया मालती प्राग्वसन्तः ॥ १ ॥**
**सेवितोऽयं हरेत्तूर्णं जीर्णञ्च विषमज्वरम् ।**
**व्याधीनन्यांश्च कासादीन् प्रदीप्तं कुरुतेऽनलम् ॥ २ ॥**

अथ वसन्तमालतीरसनिर्माणमाह स्वर्णमित्यादि—स्वर्णभस्म (१तो०), मुक्ताभस्म (२तो०), दरद-शुद्धहिङ्गुल (३तो०), वस्त्रसारित मरिचचूर्ण (४तो०), खर्परभस्म (८तो०) एतत् सर्वं शुभे खल्वे निक्षिप्य श्लक्ष्णं विचूर्ण्य म्रक्षणेन—नवनीतेन सह दिनैकं विमर्द्य जम्बीरनिम्बुरसेन नवनीतस्नेहविनाश यावद् व्रजति तावन्मर्दयेत् । ततश्च द्विरक्तिप्रमाणा वटी कृत्वा छायाया सशोष्य च काचपात्रे स्थापयेत् । अयं वसन्तमालतीरस प्रत्यहं द्विरक्तिमित पिप्पलीचूर्णमधुभ्या सह सेवितो जीर्णज्वरं निहन्ति । अयं रसो यथाव्याध्यनुपाने· कासादिकान् समस्तान् रोगान्विनिहन्ति तथा मन्दाग्निञ्चोद्दीपयति ॥ १—२ ॥

## अथ कासश्वासक्षयेषु-

च्यवनप्राश —

**बिल्वाग्निमन्थश्योनाककाश्मर्य· पाटला बला ।**
**पर्ण्यश्चतस्रः पिप्पल्य· श्वदंष्ट्रा बृहतीद्वयम् ॥ १ ॥**
**शृङ्गीत्वामलकी द्राक्षा जीवन्ती पुष्करागुरुः ।**
**अभया चामृता ऋद्धिर्जीवकर्षभकौ शटी ॥ २ ॥**

मुस्तं पुनर्नवा मेदा सूक्ष्मैलोत्पलचन्दने ।
विदारी वृषमूलानि काकोली काकनासिका ॥ ३ ॥
एषां पलोन्मितान् भागान् शतान्यामलकस्य च ।
पञ्च दद्यात्तदेकध्य जलद्रोणे विपाचयेत् ॥ ४ ॥
ज्ञात्वा गतरसान्येतान्यौषध्यान्यथ तं रसम् ।
तच्चामलकमुद्धृत्य निष्कुलं तैलसर्पिषो ॥ ५ ॥
पलद्वादशके भृष्ट्वा दत्वा चार्द्धतुलां भिषक् ।
मत्स्यण्डिकायाः पूतायाः लेहवत् साधु साधयेत् ॥ ६ ॥
षट्पलं मधुनश्चात्र सिद्धशीते प्रदापयेत् ।
चतुःपलं तुगाक्षीर्याः पिप्पल्या द्विपलं तथा ॥ ७ ॥
पलमेकं विदध्याच्च त्वगेलापत्रकेशरात् ।
इत्ययं च्यवनप्राशः परमुक्तो रसायने ॥ ८ ॥
कासश्वासहरश्चैव विशेषेणोपदिश्यते ।
क्षीणक्षताना वृद्धानां बालानाञ्चाङ्गवर्द्धनः ॥ ९ ॥
स्वरक्षयमुरोरोगं हृद्रोगं वातशोणितम् ।
पिपासां मूत्रशुक्रस्थान् दोषांश्चैवापकर्षति ॥ १० ॥
अस्य मात्रां प्रयुञ्जीत योपरुन्ध्यान्न भेषजम् ।
अस्य प्रयोगाच्च्यवनः सुवृद्धोऽभूत् पुनर्युवा ॥ ११ ॥
मेधां स्मृतिं कान्तिमनामयत्व-
मायुः प्रकर्षं बलमिन्द्रियाणाम् ।
स्त्रीषु प्रहर्षं परमग्निवृद्धिं
बलप्रसादं पवनानुलोम्यम् ॥ १२ ॥
रसायनस्यास्य नरः प्रयोगा-
ल्लभेत जीर्णोऽपि कुटीप्रवेशात् ।
जराकृतं पूर्वमपास्य रूपं
बिभर्त्ति रूपं नवयौवनस्य ॥ १३ ॥
सितामत्स्यण्ड्यलाभे च धात्र्याश्च मृदुभर्जनम् ।
चतुर्भागजले प्रायो द्रव्यं गतरसं भवेत् ॥ १३ ॥

अथ च्यवनप्राशनिर्माणमाह विल्वेत्यादि—बिल्ववल्कल १ पलम्, अर्थाद् विल्वादिकाकनासिकान्ताना प्रत्येकं पलमितम्, आमलकाना च पञ्चशतानि समादाय मृण्मये वृहद्भाण्डे धातुधवलिते ताम्रभाण्डे ( कलईदार ताम्रभाण्डमे ) वा सर्वद्रव्याणि तथा द्रोणद्वयं जलञ्च निक्षिप्य आमलकानि च दृढे शुद्धवस्त्रे पोट्टलीरूपेण वद्ध्वा दोलायन्त्रं विधाय क्वाथयेत्। चतुर्थांशावशिष्ट जलं ज्ञात्वाऽवतार्य स्विन्नामलकानि च दृढवस्त्रेण ससार्य शुद्धलौहकटाहे षट्पलमितं घृतं षट्पलमितञ्च तिलतैलं निक्षिप्य आमलकक्षौद यथा निर्जलं स्यात्तथा सम्यग् भर्ज्जयित्वा अवतारयेत्। तदनु चतुर्थांशावशिष्टं पूर्वोक्त क्वाथ क्वाथ्यद्रव्येभ्य. पृथक् कृत्वा ससार्य कटाहे निक्षिप्य मत्स्यण्डिकाया मिश्रीतिप्रसिद्धाया सितायाश्चार्द्धतुला निक्षिप्य पचेत्। सिताया ( चाशनीवत् ) पाके जाते भर्जितमामलकचूर्णं निक्षिप्य लेहवत् साधु साधयेत्। सम्यक् पाके सिद्धे सति तुगाक्षीर्या—वशलोचनायाश्चतुष्पलमित सूक्ष्म चूर्णं तथा पिप्पल्याश्च सूक्ष्म वस्त्रसारितं द्विपलमितं चूर्णं, तथा त्वग्दारुसिताचूर्णं १ पलम्, सूक्ष्मैलाचूर्णं १ पल, तेजपत्रचूर्णं १ पलं, नागकेशरचूर्णञ्च १ पलमित निक्षिप्य सम्यग् विलोड्य षट्पलमित मधु दत्वा सर्वमेकीकृत्य स्निग्धे मृण्मयपात्रे काचपात्रे वा स्थापयेत्। इत्थ निर्मितोऽयं च्यवनप्राशरसायन पर श्रेष्ठस्तथा कास श्वास च विशेषेण निहन्ति। अय च्यवनप्राश क्षीणाना वलं वालानाञ्च च वर्द्धयति। अय च्यवनप्राश प्रत्यह प्रभाते अर्द्धतोलकादारभ्य द्वितोलकपर्यन्तं यथाऽग्निवलमधिकम्वा सशर्करकवोष्णदुग्धानुपानेन सेवनीय। वातुसेवनभीतानामल्पवयसा नीरोगाणाञ्च जनाना कृते रसायनार्थं प्रयोक्तव्य. ॥१–१४॥

अथ प्रमेहे वङ्गाष्टकम्—

रसं गन्धं मृतं लौहं मृतरूप्यञ्च खर्परम्।
मृताभ्रकं मृतं ताम्रं सर्वतुल्यञ्च वङ्गकम् ॥ १ ॥
पुटेद् लघुपुटे विद्वान् स्वाङ्गशीतं समुद्धरेत्।
रक्तिद्वयप्रमाणेन मधुना लेहयेन्नरम् ॥ २ ॥
निशाचूर्णं क्षौद्रयुतं पिवेद्धात्रीरसं ह्यनु।
वङ्गाष्टकमिदं ख्यातं महादेवप्रकाशितम् ॥ ३ ॥
प्रमेहान् विंशति हन्ति आमदोषं विसूचिकाम्।
विषमज्वरगुल्मार्शो मूत्रातीसारपित्तजित्।

वीर्य्यवृद्धिं करोत्याशु सोमरोगनिवर्हणम् ॥ ४ ॥

अथ वङ्गाष्टकयोगनिर्माणमाह रसमित्यादि—शुद्धपारदः, शुद्धगन्धकः, लौहभस्म, रजतभस्म, खर्परभस्म, अभ्रकभस्म, ताम्रभस्म च एतेषां प्रत्येकं तोलकैकमितं तथा सर्वतुल्यञ्च (८तोल) वङ्गभस्म समादाय पूर्वं पारदगन्धकयोः कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य सम्यक् विमर्द्य सम्पुटं कृत्वा लघुपुटे पचेत्। स्वाङ्गशीतं समादाय सम्यक् सञ्चूर्ण्य काचपात्रे स्थापयेत्। इदं वङ्गाष्टकं श्रीमहादेवेन प्रकाशितम्। अस्य रसस्य प्रत्यहं रक्तिद्वयं मधुना सह लीढ्वा मधुमिश्रितहरिद्राचूर्णं धात्रीस्वरसञ्च अनुपाने पिबेत्। अस्य प्रत्यहं सेवितोऽयं योगः सर्वप्रमेहान् निहन्ति तथाऽनुपानभेदेन मूत्रसादं सर्वरोगान्नाशयति ॥ १-४ ॥

अथ स्वर्णवङ्गम्—

प्रक्षिपेद्भाजने वङ्गमायसे चापि मृण्मये ।
विद्रुते वह्नितापेन तस्मिन् तन्मानकं रसम् ॥ १ ॥
क्षिप्त्वा सञ्चूर्णयेत्तत्र नरसारञ्च गन्धकम् ।
तनुवालो-मृदालिप्तकाचकूप्यां विधाय च ॥ २ ॥
तत्सर्वं सिकतायन्त्रे पचेद्यामचतुष्टयम् ।
पाकात् सञ्जायते चित्रं कीर्णं स्वर्णकणैरिव ॥ ३ ॥
रमणीयतरं स्वर्णवङ्गं नाम रसायनम् ।
वल्यं मेहहरं कान्तिमेधावीर्याग्निवर्द्धनम् ॥ ४ ॥

अथ स्वर्णवङ्गनिर्माणविधिमाह प्रक्षिपेदित्यादि—साधारणविशेषोभयविधशुद्धिशुद्धं द्विपलमितं वङ्गं समादाय लौहकटाहे मृण्मयहाण्डिकायां वा वह्नौ प्रताप्य शीघ्रमेव पाषाणखल्वे द्विपलमितशुद्धपारदेन सह सम्मेल्य दिनैकं निरन्तरं विमर्दयेत्। पारदवङ्गयोर्मर्दनमध्ये स्वल्पं स्वल्पं लवणं तथा निम्बुकरसञ्च दत्त्वा यावदेकं विमर्द्य जलेन प्रक्षालनं कर्तव्यम्। पुनश्च लवणं निम्बुरसञ्च दत्त्वा विमर्दयेत्। इत्थं पञ्चवारं कर्तव्यम्। तदनन्तरं पारदतुल्यं (द्विपलमितं) शुद्धगन्धकं निक्षिप्य कज्जलीं कृत्वा द्विपलमितमेव शुद्धनवसादरं प्रक्षिप्य सर्वं सम्यक् विमर्द्य संशोष्य च लिप्तमृत्पङ्कलिप्तवस्त्रपट्टिकाभिः सप्तवारं कृतावरणायां काचकूप्यां प्रपूर्य तां कूपीं कण्ठपर्यन्तं वालुकायन्त्रे संस्थाप्य यामचतुष्टयं पचेत्। एवं पाकेन निर्धूमं

जीर्णगन्धकं च ज्ञात्वा वह्निप्रदानं निवारयेत्। ततश्च स्वाङ्गशीतमवतार्य कूपिका मध्यभागे विभिद्य तलस्थ स्वर्णकणैरिव देदीप्यमान सिद्ध स्वर्णवङ्ग गृह्णीयात्। इद स्वर्णवङ्ग द्विरक्तिमित प्रत्यहं मधुना सह सेवित सर्वविधप्रमेहान्निहन्ति। स्वर्णवङ्ग-निर्माणे यामचतुष्टयपर्यन्तं वह्निदानेन कार्यसिद्धिर्नैव भवति, अपि तु गन्धकस्य जारणपर्यन्त वह्निप्रदान कर्तव्यम्। गन्धकस्य सर्वथा जारणञ्चाष्टयामपर्यन्तं तीव्राग्निदानेन भवति। औषधपाकसमये लौहशलाकया शनै शनैश्चालन कर्तव्य, यदा च शलाकाऽग्रभागे स्वर्णकणसदृशदीप्यमानौषधभाग संलग्न भवेत्तदाऽपि सम्यक् सिद्धेर्लक्षणमूह्यम्। अत्र कूपिकामुखनिरोधो नैव कर्तव्य· ॥ १-४ ॥

अथोपसर्गिकमेहे कन्दर्परस —

**रसगन्धौ विद्रुमञ्च स्वर्णं शुद्धञ्च गैरिकम्।**
**तारं शङ्खञ्च वैक्रान्तं मुक्तां सर्वं समं समम्॥ १ ॥**
**वटाङ्कुरकषायेण सप्तवारं विभावयेत्।**
**वटीं गुञ्जाद्वयमितां वराक्वाथेन योजयेत्॥ २ ॥**
**कक्कोलककुभादीनां क्वाथेन वा जलेन वा।**
**पूयमेहविनाशाय प्रत्यहं योजयेद्भिषक्॥ ३ ॥**

अथ कन्दर्परसनिर्माणमाह रसगन्धावित्यादि—शुद्धपारद, शुद्धगन्धक, प्रवालभस्म, स्वर्णभस्म, शुद्धगैरिकं, रजतभस्म, शङ्खभस्म, वैक्रान्तभस्म, मुक्ताभस्म च, एतेषा प्रत्येक सम सममादाय पूर्वं पारदगन्धकयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य वटाङ्कुरक्वाथेन सप्तधा भावयित्वा दृढ विमर्द्य च द्विरक्तिमिता वटीश्चरेत्। अस्य रसस्य प्रत्यहमेकैका वटीं त्रिफलाक्वाथानुपानेन, कक्कोलक्वाथानुपानेन, अर्जुनत्वक्क्वाथानुपानेन सह वा भक्षयेत्। इत्थ सेवितोऽय रस पूयमेह विनिहन्ति॥१-३॥

महाभ्रवटिका—

**त्रिसप्तकृत्वः सम्भाव्य भृङ्गराजाम्भसाऽभ्रकम्।**
**तेन गन्धं रसं लौहं स्वर्णं व्योमार्द्धसंयुतम्॥ १ ॥**
**वरानीरेण सम्मर्द्य वटीं गुञ्जामितां चरेत्।**
**व्रणमेहविनाशाय वराक्वाथेन दापयेत्॥ २ ॥**

द्वितोलकमितमभ्रकभस्म समादाय भृङ्गराजस्वरसेनैकविंशतिवारम्भावयित्वा तस्मिन् तोलकमितशुद्धपारदस्य तोलकमितशुद्धगन्धकस्य च कज्जलीं, तथा तोलक-

खल्वे श्लक्ष्ण सञ्चूर्ण्य शुद्धधुस्तूरबीजक्वाथेन, विजयास्वरसेन, मधुयष्ट्या क्वाथेन, शाल्मलीमूलस्वरसेन, नागवल्लीपत्रस्वरसेन च पृथक् पृथक् सप्तधा भावयित्वा गुञ्जा-मिता वटीश्चरेत् । अस्य रसस्य प्रत्यहमेकैका वटीं घृतमधुशर्कराभ्यां सलिह्य तदु-परि शर्करायुक्त कवोष्ण दुग्ध पिवेत् । इत्थ प्रत्यह सेवितोऽय पुष्पधन्वारसेन्द्र कामशक्ति जनयति तथा दीर्घमायुर्वलञ्च करोति ॥ १ ॥

सिद्धसूत —

मुक्ताफलं शुद्धसूतं सुवर्णं रूप्यमेव च ।
यवक्षारश्च तत्सर्वं तोलकैकं प्रकल्पयेत् ॥ १ ॥
रक्तोत्पलपत्रतोयैर्मर्दयेत्पत्तलीकृतम् ।
मर्दयेच्च पुनर्दत्वा गन्धकं तदनन्तरम् ॥ २ ॥
क्षिप्त्वा काचघटीमध्ये सन्निरुध्य त्रियामकम् ।
सिकताख्ये पचेच्छीते सिद्धसूतन्तु भक्षयेत् ॥ ३ ॥
रक्तिकैकप्रमाणेन मुषलीशर्कराऽन्वितम् ।
शुक्रवृद्धिं करोत्येष ध्वजभङ्गञ्च नाशयेत् ॥ ४ ॥
दुर्वलं वपुरत्यर्थं वलयुक्तं करोत्यसौ
मुद्गगर्भं घृतं क्षीरं शालयः स्निग्धमामिषम् ।
पारावतस्य मांसञ्च तित्तिरश्च सदा हितः ॥ ५ ॥

अथ सिद्धसूतनिर्माणमाह मुक्ताफलमित्यादि—मुक्ताभस्म, शुद्धपारद , सुवर्ण-भस्म, रजतभस्म, यवक्षारश्च, एतेषा प्रत्येकं तोलकैकमित समादाय पूर्व पारदगन्ध-कयो कज्जलीं कृत्वा शेषद्रव्याणि सम्मेल्य रक्तकमलपत्रस्वरसैर्भावयित्वा दृढ विमर्द्य सशोष्य च तदनु तत्र तोलकमित शुद्धगन्धकं निक्षिप्य सम्यक् कज्जलीं कृत्वा सप्त-वारं मृत्कर्पटकैः कृतावरणाया काचकूप्या प्रपूर्य तस्या मुखञ्च खटिकया निरुध्य गुडचूर्णपिष्टया सन्धिबन्धन कृत्वा कण्ठपर्यन्तं वालुकायन्त्रे निधाय चूल्या (भट्या) वालुकायन्त्रमारोप्य त्रियामपर्यन्तं पचेत् । स्वाङ्गशीतयन्त्रमवतार्य कूपिका विभिद्य सिद्ध रसं खल्वे सञ्चूर्ण्य काचपात्रे स्थापयेत् । अथ रस प्रत्यह रक्तिमित शर्करायुक्तमूसलीकन्दचूर्णेन सह सेव्यस्तदुपरि च सशर्कर दुग्ध पिवेत् । इत्थं प्रत्यह सेवितोऽयं रस शुक्रवृद्धिं तथा दुर्वलं शरीरं च वलयुक्तं करोति, ध्वजभङ्गञ्च निवारयति । पथ्ये च घृतसंस्कृतं मुद्गयवागू, दुग्धघृतयुक्त शाल्योदनं, स्निग्ध

मास, विशेषेण पारावततित्तिरमासञ्च हितकर भवति ॥ १—५ ॥

## अथ वृक्करोगे

सर्वतोभद्रा वटी—

स्वर्णाभ्रलौहरौप्याणि गन्ध तार्प्यं शिलाजतु ।
समभाग समादाय मर्दयेद् वरुणाम्भसा ॥ १ ॥
वटीं रक्तिमितां कृत्वा पाशिकाथेन भक्षयेत् ।
वटीयं सर्वतोभद्रा रोगान् वृक्कसमुत्थितान् ।
हरेद्वस्तिसमुत्थांश्च शूलान् रेतश्च वर्धयेत ॥ २ ॥

अथ सर्वतोभद्रावटीनिर्माणमाह स्वर्णेत्यादि—सुवर्णभस्म, अभ्रकभस्म, लौहभस्म, रजतभस्म, शुद्धगन्धक , स्वर्णमाक्षिकभस्म, एतेषा प्रत्येकं सम सममादाय खल्वे श्लक्ष्ण पिष्ट्वा वरुणमूलवल्कलस्वरसेन क्वाथेन वा भावयित्वा विमर्द्य च रक्तिमिता वटीश्चरेत् । अस्य रसस्य प्रत्यहमेकैका वटीं वरुणादिक्वाथानुपानेन सेविता वृक्कसमुत्थितान्, वस्तिसमुत्थिताश्च रोगान्निहन्ति शूलं च निवारयति, तथा शुक्रं वर्द्धयति॥ १–२॥

अथ वृक्करोगस्य लक्षणानि—

रक्तह्रासात्पाण्डुवर्णमास्य वह्नेश्च मन्दता ।
स्वेदाभावस्त्वचि रौक्ष्यं नाडी वेगवती तथा ॥ १ ॥
वृक्कस्थाने तथा कट्यां पीडा तीव्रतरा भवेत् ।
मुहुः सपीडमुष्णञ्च मूत्रं स्रवति बिन्दुशः ॥ २ ॥
वृक्कयोरश्मरीयोगात् कदाचित्तीव्रलक्षणम् ।
मूत्र शोणितयुक्तं स्याच्छैत्यञ्च पाणिपादयोः ॥ ३ ॥
मूत्रकाले ध्वजाग्रे वै किञ्चिद्दाहश्च लक्ष्यते ।
वृक्कयोः कार्यशैथिल्याद्यकृत्प्लीहहृदां तथा ॥ ४ ॥
विकारो दृश्यते घोरः स्वस्वसंवेद्यलक्षणः ।
श्रुतिनादोऽक्षिदोषश्च मूर्च्छा भङ्गो ध्वजस्य च ।
शिरोग्रीवांसपीडा स्यादेवमन्यच्च लक्षयेत् ॥ ५ ॥

वृक्करोगहर साधारणोपदेश —

मूत्रप्रवर्तक यत्स्याद्यच्च शोणितशोधनम् ।

पोषणं यच्च धातूनां यच्च वह्नेश्च दीपनम् ॥ १ ॥
अन्नपानौषध सर्वं वृक्करोगेषु याजयेत् ।
पारदो वर्द्धयेद्रोगमतस्तं नानुशीलयेत् ॥ २ ॥
बद्धकोष्ठे योजयेद्वै वस्तिं स्नेहसमन्वितम् ।
वृक्काश्मरौ प्रयुञ्जीत सर्वामश्महरीं क्रियाम् ॥ ३ ॥

## अथ आमाशयरोगे

त्रिपुरसुन्दरो रस —

सिन्दूरमभ्रं त्वथस्वर्णमाक्षिकं मुक्ताफलं हेम च तुल्यभागकम् ।
विमर्द्य कन्याऽम्बुभिः सप्तवार गुञ्जाप्रमाणां वटिकां विधेहि ॥ १ ॥
रसोत्तमस्यास्य निषेवणान्नरो गदाँस्तथाऽऽमाशयजान्निहत्य ।
प्रजायते काम्यवपुर्मनस्वी धीमान्नरो वीर्यबलादियुक्तः ॥ २ ॥

अथ त्रिपुरसुन्दररसनिर्माणमाह सिन्दूरमित्यादि—रससिन्दूरम्, अभ्रकभस्म, स्वर्णमाक्षिकभस्म, मुक्ताभस्म, हेम—स्वर्णभस्म च, एतेषा प्रत्येकं सम सममादाय खल्वे श्लक्ष्णं सञ्चूर्ण्य घृतकुमारीस्वरसेन सप्तधा भावयित्वा दृढं विमर्द्य च गुञ्जाप्रमाणा वटीश्चरेत् । अस्य रसस्य प्रत्यहमेकैका वटीं भक्षयन् पुरुष आमाशयरोगाद्विमुच्यते ॥ १—२ ॥

आमाशयरोगे पथ्यापथ्यम्—

अन्नपानादिकं सर्वं सुपचं पोषणञ्च यत् । सेव्य मतिमता प्राय हेयं यत्स्याद्धि दुष्पचम् ॥१॥

## अथांशुघातरोगे

रत्नेश्वरो रस —

वज्रं वैक्रान्तमभ्रञ्च सिन्दूरं ताप्यमेव च ।
रजतं मौक्तिकं हेम सर्वमिक्षुरसेन वै ॥ १ ॥
शतमूलीरसेनापि क्षीरशुक्लारसेन च ।
भावयित्वा वटीः कुर्याद् गुञ्जैकप्रमिताः शुभाः ॥ २ ॥
भक्षयित्वा वटीमेकां त्रिफलाऽपः पिबेदनु ।
मस्तिष्कस्नायुदौर्बल्यात् प्रतिघातात्तथैव च ॥ ३ ॥

जातान् व्याधीन् हरेच्चूर्णमंशुघातं तथैव च ।
अयं रत्नेश्वरो नाम रसः परमदुर्लभः ॥ ४ ॥

अथ रत्नेश्वररसनिर्माणमाह वज्रमित्यादि—हीरकभस्म, वैक्रान्तभस्म, अभ्र भस्म, रससिन्दूर, ताप्य–स्वर्णमाक्षिकभस्म, रजतभस्म, मुक्ताभस्म, हेम–स्व भस्म च, एतेषा प्रत्येक समं सममादाय खल्वे श्लक्ष्णं पिष्ट्वा इक्षुस्वरसेन ( इक्षु-पत्रस्वरसेनापि भावनाया व्यवहार ) शतावरीकन्दस्वरसेन, क्षीरशुक्लाया विदार्या कन्दस्वरसेन च पृथक् २ सप्तधा भावयित्वा सम्यग् विमर्द्य रक्तिप्रमाणा वटीश्चरेत्। अस्य रसस्य प्रत्यहमेकैका वटीं भक्षयित्वा त्रिफलाक्काथ ह्यनु पिबेत् । इत्थं प्रत्यह सेवितोऽय रसो मस्तिष्कस्नायुदौर्वल्यात् प्रतिघाताच्च जातान् व्याधींस्तथांशुघातञ्च विनिहन्ति ॥ १—४ ॥

अथांशुघातस्य निदानम्—

चण्डांशोश्चण्डकिरणैस्तप्ते मूर्ध्नि प्रजायते ।
अंशुघाताभिधो व्याधिर्देहिनां देहमर्दन. ॥ १ ॥
पादत्रछत्रहीनानां ग्रीष्मचण्डांशुसेविनाम् ।
कारागारनिरुद्धानां सैनिकानाञ्च जायते ॥ २ ॥

अंशुघातस्य लक्षणानि—

तृष्णा तीव्रतरा मूर्च्छा भ्रमश्चारक्तनेत्रता ।
हृल्लासो वमनं मूत्रवेगोऽथ विषमा धरा ॥ १ ॥
त्वचि रौक्ष्य स्पर्शहानिराक्षेपश्च प्रजायते ।
एवमाद्यानि जायन्ते लक्षणानि विशेषतः ॥ २ ॥

अथांशुघाते पथ्यापथ्यव्यवस्था—

अंशुघाते प्रयोक्तव्यो विधिर्मूर्च्छानिवारण. ।
रक्तपित्तहरो हृद्यः शीतः बल्यश्च तर्पणः ॥ १ ॥
अन्नपानादिकं बल्यं रसं स्निग्धञ्च पोषणम् ।
हितं स्यादंशुघातिभ्यो विपरीतं विवर्जयेत् ॥ २ ॥

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा सङ्कलितो रसेन्द्रसारसंग्रहपरिशिष्टे स्वकृतगूढार्थसन्दीपिकाव्याख्योपेतो विशिष्टरोगचिकित्साधिकार ।

# अथ मूषाप्रकरणम् ।

अथ मूषाया पर्याया—

**मूषा हि क्रौञ्चिका प्रोक्ता कुमुदी करहाटिका ।**
**पाचनी वह्निमित्रा च रसज्ञादिभिरिष्यते ॥ १ ॥**

अथ मूषापर्य्यायानाह मूषेत्यादि—मूषा, क्रौञ्चिका, कुमुदी, करहाटिका, पाचनी, वह्निमित्रा च, एते मूषापर्य्याया ॥ १ ॥

अथ मूषाया निरुक्तिरुपादानञ्च—

**मुष्णाति दोषान् मूषा या सा मूषेति निगद्यते ।**
**उपादानं भवेत्तस्या मृत्तिका लोहमेव च ॥ २ ॥**

अथ मूषाया निरुक्तिमाह मुष्णातीति—रसादिगतनागादिदोषान् मुष्णातीति हेतोर्मूषा निगद्यते । तस्या उपादान मृत्तिका, लोहमिति लौहकिट्टञ्च ज्ञेयम् ॥ २ ॥

अथ मूषोपयोगिमृत्तिका—

**मृत्तिका पाण्डुरस्थूला शर्करा शोणपाण्डुरा ।**
**चिराध्मानसहा सा हि मूषाऽर्थमतिशस्यते ।**
**तदभावे च वाल्मीकी कौलाली वा समीर्यते ॥ १ ॥**

अथ मूषानिर्माणोपयोगिमृत्तिकामाह मृत्तिकेत्यादि—पाण्डुरस्थूला -पाण्डुवर्णा स्थूला च, अथवा शोणपाण्डुरा–रक्तपाण्डुमिश्रितवर्णा तथा चिराध्मानसहा या शर्करा मृत्तिका–बालुकारूपा मृत्तिका सा मूषानिर्माणार्थ श्रेष्ठा । शर्करामृत्तिकाप्राप्तौ तु वाल्मीकी ( दीमकगृहसम्बन्धिनी ) अथवा कौलाली–कुम्भकारानीता कुम्भनिर्माण-मृत्तिकैव ग्राह्या ॥ १ ॥

अथ सामान्यमूषोपयोगिद्रव्याणि—

**श्वेताश्मानस्तुषा दग्धाः शिखित्राः शणखर्परे ।**
**लद्दिः किट्टं कृष्णमृत्स्ना संयोज्या मूषिका मृदा ॥ १ ॥**

अथ सामान्यमूषोपयोगिद्रव्याण्याह श्वेतेत्यादि–श्वेताश्मान स्निग्धा (मृदवः) श्वेतप्रस्तरा, धान्यादेस्तुषा, दग्धाः शिखित्रा –दग्धोपलाना भस्म, शण (सनई) खर्पर–कपालखण्ड, अथवा "शणकर्पटे,, इति पाठे शण (सनई) कर्पट छिन्नभिन्नं पुराणवस्त्रञ्च, लद्दि—हयाना लद्दि, किट्टं–मण्डूर, कृष्णवर्णमृत्तिका च, इमानि द्रव्याणि मूषिका मृदा सहेति मूषिकानिर्माणार्थं ग्राह्यमृत्तिकया सह संयोज्यानि ॥१॥

अथ योगमूषा—

दग्धाङ्गारतुषोपेता मृत्स्ना वल्मीकमृत्तिका ।
तत्तद्विडसमायुक्ता तत्तद्विडविलेपिता ॥ १ ॥
तथा या विहिता मूषा योगमूषेति कथ्यते ।
अनया साधितः सूतो जायते गुणवत्तरः ॥ २ ॥

अथ योगमूषामाह दग्धेत्यादि—दग्धाङ्गारैर्दग्धतुषैश्च युक्ता मृत्स्ना-पाण्डुरस्थूलादिगुणोपेता शर्करा मृत्तिकाम्, अथवा वल्मीकमृत्तिकाम्वा समादाय तस्याञ्च विभिन्नविडानि—लवणानि सम्मेल्य लौहदण्डेन कुट्टयित्वा जलञ्च निक्षिप्य मूषा-निर्माणं कृत्वा ताञ्च विभिन्नविडैर्विलिप्य संशुष्काञ्च कृत्वा सूतादिसिद्धयर्थं प्रयोजयेत्। इयमेव योगमूषा कथ्यते ॥१-२॥

गोस्तनीमूषा—

मूषा या गोस्तनाकारा शिखायुक्तविधानका ।
सत्वानां द्रावणे शुद्धौ मूषा सा गोस्तनो मता ॥ १ ॥

अथ गोस्तनीमूषामाह मूषेत्यादि—शर्करामृत्तिकया वल्मीकमृत्तिकया वा गोस्तनाकारा तथा शिखासमानपिधानेन च युक्ता कृता मूषा गोस्तनो मूषा कथ्यते । इयं मूषा सत्वाना द्रावणार्थं शुद्धयर्थञ्च प्रयुज्यते । इयमेव मूषा रसार्णवे अन्धमूषा ज्ञया प्रतिपादिता । तथा हि—

अन्धमूषा तु कर्तव्या गोस्तनाकारसन्निभा ।
पिधानकसमायुक्ता किञ्चिदुन्नतमस्तका ॥ १ ॥ इति

अथ मल्लमूषा—

निर्दिष्टा मल्लमूषा या मल्लद्वितयसम्पुटात् ।
पर्पट्यादिरसादीनां स्वेदनाय प्रकीर्तिता ॥ १ ॥

अथ मल्लमूषानिर्माणमाह निर्दिष्टेत्यादि—एकस्मिन् मल्ले ( शरावे ) स्वेदनार्हं पर्पटयादिकं रसं निधाय तदुपरि च द्वितीयं मल्लमधोमुखं संस्थाप्य उभयोसन्धिबन्धनं कृत्वा या मूषा निर्माप्यते सा मल्लमूषा प्रोच्यते ॥ १ ॥

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा सङ्कलितो
रसेन्द्रसारसंग्रहपरिशिष्टे स्वकृतगूढार्थसन्दीपिकाख्यापेतो
मूषाप्रकरणाधिकार ।

# अथ पुटप्रकरणम् ।

अथ पुटलक्षणम्—

रसादिद्रव्यपाकानां प्रमाणज्ञापनं पुटम् ।
नेष्टो न्यूनाधिकः पाकः सुपाकं हितमौषधम् ॥ १ ॥

अथ पुटलक्षणमाह रसादीत्यादि—सुपक्वरसोपरसादिद्रव्याणां पाकसिद्धिज्ञापकमेव पुटमुच्यते । पुटादेव रसादीनां सम्यक् पाको भवतीत्यर्थः । रसादीनां न्यूनाधिकः पाको नेष्टः ॥ १ ॥

अथ पुटप्रयोजनम्—

भवेद्यतः पुटादेव दोषहानिर्गुणोदयः ।
रसोपरसलौहानां पुटपाकस्ततः स्मृतः ॥ १ ॥
पुटपाकेन लौहादेर्निरुत्थत्वञ्च दीपनम् ।
भवेद्वारितरत्वञ्च पुटपाकस्ततः स्मृतः ॥ २ ॥
मृतलोहादिकं यस्मादतिशेते मृतं रसम् ।
पुटपाकविधानेन पुटं तस्मात् प्रशस्यते ॥ ३ ॥

अथ पुटप्रयोजनमाह भवेद्यत इत्यादि—रसोपरसलौहानां पुटप्रदानाद्दोषहानिर्गुणानामुदयश्च तस्मात्पुटं श्रेष्ठं । पुटपाककरणेन लौहादीनां निरुत्थं वारितरत्वञ्च भस्म भवति तस्मात् पुटपाकः श्रेष्ठः । पुटपाकविधानेन मृतं—भस्मीभूतं लोहाष्टकादिकं मृतं पारदमपि यस्मादतिशेते तस्मात् पुटं प्रशस्यते ॥ १–३ ॥

महापुटम्—

निम्नविस्तरतः कुण्डे द्विहस्ते चतुरस्रके ।
वनोत्पलसहस्रेण पूरिते पुटनौषधम् ॥ १ ॥
क्रौञ्च्यां रुद्धं प्रयत्नेन पिष्टिकोपरि निक्षिपेत् ।
वनोत्पलसहस्रार्द्धं क्रौञ्चिकोपरि विन्यसेत् ।
वह्निं प्रज्वालयेत्तत्र महापुटमिदं स्मृतम् ॥ २ ॥

अथ महापुटमाह निम्नेत्यादि—द्विहस्तनिम्ने द्विहस्तविस्तृते तथा चतुष्कोणाकारे च भूगर्ते शुष्कारण्योपलसहस्राणि निक्षिप्य तेषामुपरि मध्यभागे च पुटनौषध-

पूरिता क्रौञ्चीं ( मूषा ) सम्स्थाप्य तदुपरि च गर्तस्य शेषावकाशं वनोत्पलसहस्रार्द्धे प्रपूर्य वह्निं प्रज्वालयेत् । इदमेव महापुटं कथ्यते ॥ १-२ ॥

अथ गजपुटम्—

राजहस्तप्रमाणेन चतुरस्रञ्च निम्नकम् ।
पूर्णञ्चोपलसाठीभिः कण्ठावध्यथ विन्यसेत् ॥ १ ॥
विन्यसेत् कुमुदीं तत्र पुटनद्रव्यपूरिताम् ।
पूर्णच्छगणतोऽर्द्धानि गिरिण्डानि विनिक्षिपेत् ॥
एतद्गजपुटं प्रोक्तं महागुणविधायकम् ॥ २ ॥

अथ गजपुटमाह राजहस्तेत्यादि—साधारणजनानां सपादहस्तो राजहस्तः, साधारणजनहस्तश्चतुर्विंशत्यङ्गुलमितस्तेन त्रिंशदङ्गुलिमितो राजहस्तः प्रोच्यते तस्यैव समो गजहस्तः । अथ च भूमौ राजहस्तप्रमाणेन निम्नं चतुरस्रञ्च गर्तं विधाय वनोपलादिभिस्तस्यार्द्धभागं प्रपूर्य पुटनद्रव्यपूरिताञ्च मूषां मध्ये संस्थाप्य तदुपरि गर्तावकाशं वनोपलैरापूर्य वह्निं प्रज्वालयेत् । एतद् महागुणविधायकं गजपुटं प्रोक्तम् ॥१-२॥

अथ वाराहपुटम्—

कुण्डे त्वरत्निमानेन चतुरस्रे तथोच्छ्रिते ।
पुटं यद्दीयते तत्तु वाराहपुटमुच्यते ॥ १ ॥

अथ वाराहपुटमाह कुण्ड इत्यादि—भूमौ अरत्निमानेन निम्ने विस्तृते च कृते कुण्डे वनोपलादिकं प्रपूर्य मध्ये च औषधपूर्णशरावसम्पुटादिकं संस्थाप्य यत्पुटं दीयते तद्वाराहपुटमुच्यते ॥ १ ॥

अथ कुक्कुटपुटम्—

पुटं भूमितले यत्तद्वितस्तिद्वितयोच्छ्रयम् ।
तावच्च तलविस्तीर्णं तत् स्यात् कुक्कुटकं पुटम् ॥ १ ॥

अथ कुक्कुटपुटमाह पुटमित्यादि—भूमितले वितस्तिद्वितयोच्छ्रयमिति हस्तपरिमितमुन्नतं तथा तावन्मितमेव तलेऽधोभागे विस्तृतं गर्तं कृत्वा वनोपलैश्च प्रपूर्य तन्मध्ये पुटनद्रव्यपूरितमूषां शरावसम्पुटं वा संस्थाप्य यत्पुटं दीयते तत् कुक्कुटकं पुटं मतम् ॥ १ ॥

अथ कपोतपुटम्—

यत् पुटं दीयते भूमावष्टसङ्ख्यैर्वनोत्पलैः ।

रुद्ध्वा सूतार्कभस्मार्थं कपोतपुटमुच्यते ॥ १ ॥

अथ कपोतपुटमाह यदित्यादि—पृथिव्यामुपर्येव ( न तु गर्तं कृत्वा ) अष्ट-सख्यकवनोपलानि सस्थाप्य तन्मध्ये च पारदताम्रादिभस्मार्थं पारदताम्रपूरितमूषा निधाय यत्पुटं दीयते तत्कपोतपुटमुच्यते । यत्र च लघुपुटे भेषजपाककरणनिर्देश-स्तत्रानेनैव कपोतपुटेन पाक कर्तव्य. ॥ १ ॥

अथ गोवरपुटम्—

गोवरैर्वा तुषैर्वाऽपि पुट यत्र प्रदीयते ।
तद्गोवरपुटं प्रोक्तं रसभस्मप्रसिद्धये ॥ १ ॥

अथ गोवरपुटमाह गोवरैरित्यादि—एकस्मिन् मृण्मयभाण्डे शुष्क गोवर धान्य-तुषादिकम्वा प्रपूर्य तन्मध्यभागे च पुटनद्रव्यपूरिता मूषा निधाय वह्निञ्च प्रज्वाल्य यत् पुट दीयते तद्गोवर पुटमुच्यते । अस्य पुटस्य रसभस्मार्थमुपयोगो भवति ॥१॥

अथ गोवरस्वरूपम्—

गोष्ठान्तर्गोक्षुरक्षुण्णं शुष्क चूर्णितगोमयम् ।
गोवरं तत् समादिष्टं वरिष्ठ रससाधने ॥ १ ॥

गोवरपुट प्रोक्त,तत्र च किं गोवरमिलाकाक्षानिरासार्थं गोवरस्वरूपमाह गोष्ठान्तरि त्यादि—गावो यत्र तिष्ठन्ति तद्गोष्ट (गोशाला) प्रोच्यते । तत्र, च गवा क्षुरैश्चूर्णितं गोमयं यदा शुष्यति तदा तस्य गोवरमिति सञ्ज्ञा, तच्च रसादिसिद्धयर्थं श्रेष्ठ प्रदिष्टम् ॥१॥

अथ भाण्डपुटम्—

स्थूलभाण्डे तुषापूर्णे मध्ये मूषासमन्विते ।
वह्निना विहिते पाके तद्भाण्डपुटमुच्यते ॥ १ ॥

अथ भाण्डपुटमाह स्थूलेत्यादि—मृण्मये विस्तृतमुखे वृहद्भाण्डे तुषादिकं प्रपूर्य तन्मध्ये च पुटनद्रव्यपूरिता मूषा निधाय वह्निं प्रज्वाल्य यत् पुटं प्रदीयते तद्भाण्डपुट वुधै. प्रोच्यते । भाण्डार्द्धभागं पूर्वं तुषै. प्रपूर्य तत्र च मूषा सस्थाप्य शेषं भाण्डावकाश तुषै प्रपूर्य वह्निज्वालन कर्तव्यम् ॥ १ ॥

अथ वालुकापुटम्—

अधस्तादुपरिष्टाच्च क्रौञ्चिकाऽऽच्छाद्यते खलु ।
वालुकाभिः प्रतप्ताभिर्यत्र तद्वालुकापुटम् ॥ १ ॥

अथ वालुकापुटमाह अधस्तादित्यादि—विस्तृतमुखमृण्मयपात्रस्यार्द्धं भागं

वालुकाभि प्रपूर्य तदुपरि च औषधपूरितशरावसम्पुटं कौप्रिकां वा निधाय शेषं भागं वालुकाभिः प्रपूर्य शरावेण मुखमवरुध्य तच्च पात्रं चूल्यामुपरि संस्थाप्य वह्निं प्रज्वालयेत् । इदमेव वालुकापुटमुच्यते ॥ १ ॥

अथ भूधरपुटम्—

वह्निमित्रां क्षितौ सम्यङ् निखन्याद् द्व्यङ्गुलादधः ।
उपरिष्टात् पुटं यत्र पुटं तद्भूधराह्वयम् ॥ १ ॥

अथ भूधरपुटमाह वह्निमित्रामित्यादि—पुटनद्रव्यपूरितां वह्निमित्रां ( मूषां ) भूमौ द्व्यङ्गुलादधः प्रदेशे गर्तं कृत्वा तत्र च तां निधाय तदुपरि च वनोपलानि प्रस्तार्य वह्निं प्रज्वालयेत । इदं भूधरसंज्ञकं पुटं प्रोच्यते ॥ १ ॥

अथ लावकपुटम्—

गोवरैर्वा तुषैर्वाऽपि वितस्त्यूर्द्ध्वं पुटन्तु यत् ।
मृदुद्रव्यप्रसिद्ध्यर्थं तल्लावकपुटं मतम् ॥ १ ॥

अथ लावकपुटमाह गोवरैरित्यादि—गोवरैस्तुषैर्वाऽपि भूमौ वितस्त्यूर्द्ध्वं यत्पुटं प्रदीयते तल्लावकं पुटं प्रोक्तम् ॥ १ ॥

अथानुक्तपुटमाने कर्तव्यनिर्देशः—

अनुक्तपुटमाने तु साध्यद्रव्यबलाबलम् ।
पुटं विज्ञाय दातव्यमूहापोहविचक्षणैः ॥ १ ॥

अथानुक्तपुटमाने कर्तव्यनिर्देशमाह अनुक्तेत्यादि—यत्र रसादिसिद्ध्यर्थं केवलं पाककरणं निर्दिष्टं पुटमानं च नोक्तं भवेत्तत्रौषधबलाबलं विचार्य प्रोक्तपुटेष्वन्यतमं पुटं यथोग्यं भवेत्तेन पाकः कर्तव्यम् ॥ १ ॥

अथ उपलनामानि—

उपलं चोत्पलं साठी गिरिण्डं पिष्टकं तथा ।
वराटी छगणं छाणं करीषञ्च निगद्यते ॥ १ ॥

अथोपलनामान्याह उपलमित्यादि—उपलम्, उत्पलं, साठी, गिरिण्डं, पिष्टकं, वराटी, छगणं, छाणं, करीषञ्चेत्युपलस्य पर्य्याया ॥ १ ॥

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा सङ्कलितो
रसेन्द्रसारसंग्रहपरिशिष्टे स्वकृतगूढार्थसन्दीपिका-
व्याख्योपेतः पुटप्रकरणाधिकारः ।

# अथ मान-परिभाषा ।

मान-प्रयोजनम्—

न मानेन विना युक्तिर्द्रव्याणां जायते क्वचित् ।
अतः प्रयोगकार्यार्थं मानमत्रोच्यते मया ॥ १ ॥

धातुरसादिद्रव्याणा मानेन मात्रया विना क्वचिदपि युक्तिर्योजना फलदा नैव भवति, तस्मात्तेषा प्रयोगकार्यार्थं मानमावश्यकमत प्रोच्यते ॥ १ ॥

षड्भिस्तु सर्षपैर्गौरैर्यवस्त्वेकः प्रकीर्तितः ।
त्रिभिर्यवैश्च गुञ्जैका मता सैवेह रक्तिका ॥ २ ॥
दशभिस्तु रक्तिकाभिः स्यान्माषको हेमधामकौ ।
माषैश्चतुर्भिः शाणः स्याद्धरण तन्निगद्यते ॥ ३ ॥
टङ्कः स एव कथितस्तद्द्वयं कोल उच्यते ।
क्षुद्रमोरटकश्चापि द्रंक्षणं स निगद्यते ॥ ४ ॥
कोलद्वयञ्च कर्षः स्यात् स प्रोक्तः पाणिमानिकः ।
अक्षः पिचुःपाणितलं किञ्चित्पाणिश्च तिन्दुकम् ॥ ५ ॥
बिडालपदकं चैव तथा षोडशिका मता ।
करमध्यं हंसपदं सुवर्णं कवलग्रहम् ॥ ६ ॥
उडुम्बरश्च पर्यायैः कर्ष एव निगद्यते ।
स्यात्कर्षाभ्यामर्द्धपलं शुक्तिरष्टमिका तथा ॥ ७ ॥
शुक्तिभ्याञ्च पल ज्ञेयं मुष्टिमात्रञ्चतुर्थिकाः ।
प्रकुञ्चः षोडशी बिल्वं पलमेवात्र कीर्त्यते ॥ ८ ॥
पलाभ्यां प्रसृतिर्ज्ञेया प्रसृतञ्च निगद्यते ।
प्रसृतिभ्यामञ्जलि. स्यात्कुडवाऽर्द्धशरावकः ॥ ९ ॥
अष्टमानञ्च स ज्ञेयः कुडवाभ्याञ्च मानिका ।
शरावोऽष्टपलं तद्वज्ज्ञेयमत्र विचक्षणैः ॥ १० ॥
शरावाभ्यां भवेत्प्रस्थश्चतुःप्रस्थैस्तथाऽऽढकम् ।
भाजनं कंसपात्रञ्च चतुःषष्टिपलञ्च तत् ॥ ११ ॥
चतुर्भिराढकैर्द्रोणः कलशो नल्वणोऽर्म्मणः ।

उन्मानश्च घटो राशिर्द्रोणपर्यायसंज्ञकाः ॥ १२ ॥
द्रोणाभ्यां शूर्पकुम्भौ च चतुःषष्टिशरावकाः ।
शूर्पाभ्याञ्च भवेद्द्रोणी वृह(१)द् द्रोणी च सा स्मृता ॥१३॥
द्रोणीचतुष्टयं खारी कथिता सूक्ष्मबुद्धिभिः ।
चतुःसहस्रपलिका षण्णवत्यधिका च सा ॥ १४ ॥
पलानां द्विसहस्रञ्च भार एकः प्रकीर्तितः ।
तुला पलशतं ज्ञेया सर्वत्रैव विनिश्चयः ॥ १५ ॥

षड्भिस्त्विति—षड्गौरसर्षपैस्तुल्य एको यव , त्रिभिर्यवैश्च तुल्या एका गुञ्जा सैवेह शास्त्रे रक्तिका बुधैर्मता । दशरक्तिकाभिस्तुल्यो माषको मतस्तस्य च हेम-धान्यकौ ( हेमधामकाविति पाठान्तरम् ) पर्यायौ प्रोक्तौ । चतुर्भिर्माषकैस्तुल्य शाणस्तस्य च धरण टङ्कश्चेति द्वौ पर्यायौ । शाणद्वय कोल प्रोच्यते तस्य क्षुद्रक , मोरटक ( वटक ) द्रक्षणश्चेति नामान्तरं विद्धि । कोलद्वय कर्षस्तस्य च पाणिमा-निक ( पाणिका ), अक्ष , पिचु , पाणितल, पाणि , तिन्दुक, विडालपदक, षोड-शिका, करमध्य, हसपद, सुवर्ण, कवलग्रहम् , उडुम्बरश्च, एते पर्य्याया । द्वाभ्या कर्षाभ्यामर्द्धपल भवति तस्य च शुक्ति, अष्टमिका चेति द्वौ पर्य्यायौ । द्वाभ्या शुक्तिभ्याश्चैकं पल तस्य च मुष्टिमात्रम् ( अथवा मुष्टि , पात्रश्चेति पृथक्ज्ञेयमथवा मुष्टि , आम्रञ्चेति, ) चतुर्थिका, प्रकुञ्च , षोडशी, विल्वञ्चेति पर्य्यायवाचका इमे शब्दा । पलाभ्यामिति द्वाभ्या पलाभ्यमेका प्रसृति प्रसृतञ्च । प्रसृतिभ्यामेकाऽञ्ज-लिस्तस्या च कुडव , अर्द्धशरावक , अष्टमानञ्चेति नामान्तराणि । द्वाभ्या कुड-वाभ्यामेका मानिका ( माणिकेति पाठान्तरम् ) तस्याश्च शराव , अष्टपलश्चेति द्वौ पर्य्यायौ । शरावाभ्यामेक प्रस्थस्तथा चतु प्रस्थैश्चैकमाढक भवति तस्य च भाजन, कंसपात्र, चतु षष्टिपलश्चेति नामान्तरम् । चतुर्भिराढकैस्तुल्यो द्रोणस्तस्य च कलश ,नल्वण , अर्म्मण , उन्मान , घट , राशिश्चेते पञ्च पर्य्याया । द्रोणाभ्या-मेकं शूर्पं भवति तथा कुम्भ , चतु षष्टिशरावकश्च तस्यैव नामान्तरम् । द्वाभ्या शूर्पाभ्यामेका द्रोणी सा च वृहद्द्रोणी स्मृता । द्रोणीचतुष्टयमेका खारी, सा च चतुः सहस्रपलाधिकषण्णवतिपलपरिमिता ज्ञेया । पलाना द्विसहस्र ( २००० ) चैको भार प्रकीर्तित , तथा शतपलमिता चैका तुला ज्ञेयेति दिक् ॥ २–१५ ॥

( १ ) वाहो गोणी च सा स्मृता, इति पाठान्तरम् ।

| | |
|---|---|
| षट्सर्षपैस्तुल्य· | १ यव |
| त्रियवैस्तुल्या | १ गुञ्जा |
| १० दशगुञ्जाभिस्तुल्य | १ माषक |
| तूर्यमाषकैस्तुल्य | १ शाण |
| द्विशाणाभ्या तुल्य | १ कोल |
| द्विकोलाभ्या तुल्य | १ कर्ष |
| द्विकर्षाभ्या तुल्या | १ शुक्ति |
| द्विशुक्तिभ्या तुल्यं | १ पलम् |
| द्विपलाभ्या तुल्या | १ प्रसृति |
| द्विप्रसृतिभ्या तुल्या | १ अञ्जलि |

| | |
|---|---|
| २ द्व्यञ्जलिभ्या तुल्य· | १ शराव: |
| २ द्विशरावाभ्या तुल्य | १ प्रस्थ: |
| ४ तूर्यप्रस्थैस्तुल्यम् | १ आढकम् |
| ४ तूर्याढकैस्तुल्य | १ द्रोण: |
| २ द्विद्रोणाभ्या तुल्य | १ शूर्प: |
| २ द्विशूर्पाभ्या तुल्या | १ द्रोणी |
| ४ तूर्यद्रोणीभिस्तुल्या | १ खारी |
| २ द्विसहस्रपलाना तुल्य | १ भार |
| १ एकशतपलमिता | १ तुला |

इति श्रीकृष्णात्मजेन पण्डितप्रवरेण श्रीअम्बिकादत्तशास्त्रिणा सङ्कलितो रसेन्द्रसारसंग्रहपरिशिष्टे स्वकृतगूढार्थसन्दीपिकाव्याख्योपेतो मानपरिभाषाधिकार ।



# अथ रसेन्द्रसारसङ्ग्रहस्थकाष्ठाद्यौषधीनां हिन्दी-भाषायामकाराद्यनुक्रमणिका, तदनुक्रमेण बंगलासंस्कृतादिभाषायां वैदेशिकभाषायां च तेषां नामानि ।

## अ

हि०—अङ्कोल, ढेरा, टेरा, ढेला । व०–आकोड, आकड । स०–अङ्कोट, दीर्घकील, अङ्कोल, निकोचक । ले०–एलाग्युम लामार्काई Alangium Lamarckii ।

हि०—अकरकरा । व०–अकोरकोरा । मे०–अकलखोरा । सं०–आकारकरभ, अकल्लक । ले०–एनेसाई क्लसपेरेथम Anacy Cluspere thrum अ०–पेलेटरोरुट Pallatory Root उपयोग–जड़ । मात्रा–१–४ माशे ।

हि०—अखरोट । स०–अक्षोट । अ०–Walnut ( वाल्नट् ) or Belgaum walnut ( बेलगाम वाल्नट् ) । ले०–Juglans Regia ( जगलेन्स रेजिया ) । व्यवहार–फलकी गूदी । मात्रा–१–२ तोले ।

हि०—अगर, काली अगर । व०–अगुरुकाष्ठ, अगुरुचन्दन । स०–अगुरु, प्रवर लोह, योगजं, वंशिकं, कृमिजं, कृमिजग्धम्, अनार्य्यकम् । अ०–कालम्बक तथा इगल वुड Calambac and Egla wood. ले०–एकीलरिया एगेलोचा Aquilaria Agallocha उपयोग–लकड़ी । मात्रा–६ रत्ती से ३ माशे ।

हि०—अगस्त, हथिया, अगथिया, अगस्तिया । स०–अगस्त्याह्व, वङ्गसेन, मुनिपुष्प, मुनिद्रुम । व०–वक, वकफुलेरगाछ । ले०–सिस्बेनिया ग्रेण्डीफ्लोरा Sesbania Graendiflora

हि०—अजमोद, अजमोत, अजमोदा । व०–वनयमानी, रान्धुनी, अजमूव । स०–अजमोदा, खराश्वा, मायूर, दीप्यक, ब्रह्मकुशा, कारवी, लोचमस्तका । अ०–Celery Seeds ( सिलेरी सीडस् ) । ले०–Carum Roxburg-

hianum. or Apium Involucratam or Ptychotis Roxburdhina. ( कारम राक्सवर्धियानम्, या एपयम् इन्वोल्युक्रेटम्, या पिचोटिस राक्स वर्धियाना )। व्यवहार–बीज, मात्रा २–८ माशे।

हि०—अजवाईन, अजवायन, अजमायन, अजमा, अजवा, अजोवा। स०–यवानिका, उग्रगन्धा, ब्रह्मदर्भा, अजमोदिका, दीप्यका, दीप्या, यवानी, दीपनी। अ०–The Bishops wed ( दी बिशोप्स वेड ), Ajwa Seeds. ( अजवा सीडस् )। ले०–Carum Copticum or Ligusticum Ajowan or otychotis Ajowan ( कारम कोप्टिकम्, लिगस्टिकम् अजोवा या ओटिचोटिस अजोवा ) उपयोग–बीज। मात्रा–२–६ माशे।

हि०—अडूसा, अडुस, अरुस, रुसा, अरुशा। स०–वासक, वासिका, वासा भिषङ्माता, सिंहिका, सिंहास्य, वाजिदन्त, आटरुषक, सिंहपर्ण, वृषनामा च। ले०—आधाटोडा वासिका Adhatoda Vasika. उपयोग-पञ्चाङ्ग तथा विशेषकर पत्रस्वरस। मात्रा–२–८ माशे।

हि०—अतीस। बं० आतइच। स०—विषा, अतिविषा, विश्वा, शृङ्गी, प्रतिविषा, अरुणा, शुक्लकन्दा उपविषा, भङ्गुरा, घुणवल्लभा। ले०–एकोनाइटम हिटरोफाइलम या एकोनाइटम कार्डेटम (Aconitum heterophyllum or Aeouitum Cordatum.)। उपयोग–जड़। मात्रा ६ रत्ती से १॥ माशे।

हि०—अदरख, आदी, आदा। स०–आर्द्रकम्, शृङ्गबेरम्। अ०–Ginger Root ( जिञ्जेर रुट )। ले०–Gingeber Root. ( जिजिबेर रुट )। उपयोग–कन्द स्वरस। मात्रा २ माशे से १ तोला तक।

हि०—अपराजिता, कोयल, विष्णुक्रान्ता, कौआठोडी। स०–आस्फोता, गिरिकर्णी, विष्णुक्रान्ता, श्वेतपुष्पा, नीलपुष्पाऽपराजिता। ले०—क्लीटोरिया टरनेटिया Clitoria Teinetea. उपयोग–जड़, बीज या पञ्चाङ्ग। मात्रा—३–६ रत्ती।

हि०—अपामार्ग, आधीजाड़ा, ओंधा, लटजीरा, चिचिर्रा, चिटचिटा। सं०–अपामार्ग, शिखरी, अध शल्य, मयूरक मर्कटी, दुर्ग्रहा, किणही, खरमञ्जरी। अ०—दी प्रीकली चौफ फ्लावर The piiekly cheaff Flower. ले०—एचिरेन्थस एसपीरा Achyianthas Aspera।

